त्यादौ च पित्त्वादिधर्मवत एव यप्रत्ययस्य निपातनमभ्युपगम्यते, फलमुखत्वाच्चैतद्गौरवं न दोषावहमिति ॥ न च निष्ठेति विहितयोः क्तक्तवतोः निरुक्तोपदेशविषयत्वाभावात्तद्घटकस्येत्त्वानापत्तिरिति वाच्यम् ॥ यत्र निष्ठापदं तत्र क्तक्तवत्वोरुपस्थितिरित्यर्थकतया परिभाषात्वस्वीकारेण स्वरूपत एव तयोर्विधानादुपस्थितयोरप्यनुवृत्तयोरिवोपदेशविषयत्वे बाधकाभावाच्च न दोष इत्याशयात् ॥ नचैवं रदाभ्यामित्यत्र संज्ञाविधित्वाभावात्तदन्तविधिप्रसंग इति वाच्यम् । प्रत्ययग्रहणे चापञ्चम्या इत्यनेनैव तन्निषेधसंभवात् । नचैवमपि लोपश्चेत्यत्र प्रश्लिष्यमाणस्य शकारस्याक्षरसमाम्नायेऽज्ञातत्वान्निरुक्तोपदेशविषयत्वाभावेनेत्त्वानापत्त्या भाष्यासंगतिरिति वाच्यम् । विधेयगतसर्वादेशत्वरूपविशेषसमर्पकत्वेन तदुच्चारणस्यापूर्वत्वेनोपदिश्यमानत्वमक्षतमित्याशयात् ॥ न च भवतः ठक्छसावित्यादौ ठक्छसुभयसंघातादिरूपद्वन्द्वस्यैवोपदेशविषयतापर्याप्त्यधिकरणत्वात् ककारादेरनन्त्यत्वेनेत्त्वानापत्तिरिति वाच्यम् ॥ अज्ञातस्वस्वरूपज्ञापनतात्पर्यकोच्चारणस्यैवोपदेशपदार्थतया द्वन्द्वस्थले पृथग्विधेयत्वानुपपत्त्या प्रत्येकमेव तात्पर्यकल्पनया तथाविधतात्पर्यविषयीभूतोच्चारणगोचरसमुदायत्वपर्याप्तेष्ठगादावपि द्वन्द्वघटके निर्विवादत्वेन दोषाभावात् । अत एव पिष्लृ संञ्चूर्णन इत्यादौ षकारादेरित्त्वाभावः । तदन्तोपदेशे शास्त्रकृतां तात्पर्याभावात् । अत एव इदमस्थमुरिति मकारेत्संज्ञापरित्राणार्थस्थमोरुकारश्चरितार्थः । चिक्लिडित्यस्याप्यनुबन्धघटितं रूपमज्ञातमेवेति नास्ति तत्रेत्संज्ञाप्रवृत्तेर्विरोध इति वदन्ति[1] ॥

---

१. वदन्तीति ॥ आद्योच्चारणार्थकस्य भावघञन्तस्य सत्त्वे विवादाभावेपि अत्र तस्य ग्रहणे दोषस्य दुर्वारतया भाष्यप्रामाण्यात्करणघञन्तस्यैव ग्रहणमिति दिगर्थवर्णनमुचितम् । तथाहि ॥ तौग्रहणेन इत्संज्ञकशकारादिविशिष्टस्य सामर्थ्यात्परामर्शो न युक्तः । लट्स्थानिकत्वादिविशिष्टस्यापि तुल्ययुक्त्या परामर्शापत्तौ बहूपप्लवापत्तेः । अत एव तौग्रहणमसम्बन्धार्थमिति वार्तिककृता, शतृशानचौ रूपमात्रं परामृश्येते इति कैयटेन चोक्तं संगच्छते । एवमन्यार्थमावश्यककरणघञन्तेनैवोपपत्तौ राजसूयेत्यादौ गौरवाश्रयणं निर्मूलकमेव । निष्ठासूत्रस्य परिभाषात्वकल्पनमनुचितम् । सर्वत्र तथाकल्पनापत्तौ संज्ञासूत्रत्वविलयापत्तिः । किञ्च सूत्रानन्वय्यर्थकपरिभाषालिङ्गभूतपदस्य निवेशनं न क्वापि दृश्यते, येन विधिसूत्रघटकनिष्ठापदस्य परिभाषोपस्थापकत्वं सिध्येत् । तावन्मात्रफलकत्वे च तत्र तत्र विधिसूत्रेषु विभिन्नविभक्तिकनिष्ठापदप्रयोगस्य वैयर्थ्यापत्तिः । भवतष्ठक्छसावित्यादौ सर्वत्र द्वन्द्वनिर्देशे प्रत्येकं विधेयतालाभार्थं प्रत्येकतात्पर्यस्य सत्त्वेपि न तद्द्वन्द्वोच्चारणस्य तद्घटकोच्चारणस्य वा प्रयोजकम् । अन्यथा पौर्वापर्यव्यत्यासेनाप्युच्चारणप्रसङ्गस्य दुर्वारत्वात् । तात्पर्यद्वयस्य तत्त्वकल्पने गौरवाच्च । किन्तु विशिष्टतात्पर्यमेव ।

**नासिकामभिहत्येति** ॥ नासिकाशब्देन काकलकोपान्तभागः । तदभिघातिना मुखवायुना प्रकाशित इत्यर्थः । ततश्चाभिव्यञ्जकवायुधर्मेण वर्णो व्यवह्रियत इति भावः ॥ अत्राभिव्यञ्जित इत्यनेन वर्णानामभिव्यक्तिरेव न तूत्पत्तिरिति नित्यत्वं सूचितम् ॥ **आवश्यकमिति** ॥ तत्र संज्ञाया अनुक्तेरिति भावः ॥ अत एवेत्यस्य व्युत्पत्तिवशादेवेत्यर्थः । मुखग्रहणप्रत्याख्यानं च प्रासादवासिन्यायेनेति बोध्यम् ॥ **पशुरपत्यमित्यादि** ॥ हरतेःदृतिनाथयोःपशौ, तस्यापत्यमित्यादौ यथा पशुरपत्यमित्यादिरर्थः प्रतीयते तथा यरोनुनासिक इत्यादौ स्वरूपग्रहणस्याभावो यस्मिंस्तथाभूतोऽर्थः स्वरितत्वप्रतिज्ञानात्स्वं रूपमित्यस्य प्रत्याख्यानाद्वा प्रतीयत इति तदर्थः । आन्महत इत्यादिनिर्देशश्चात्र स्वरूपविधिनिवर्तक इत्याशयः ॥ **सप्रयोजनमिति** ॥ परमकारुणिको भगवानाचार्यः प्रकृतसंज्ञां मन्दाधिकारिण उपलालयितुमुपक्रान्तवानिति न शास्त्रवैयर्थ्यशंकावकाश इति भावः ॥ **इदिति वक्तव्ये इति** ॥ आङि च्छंदसीति न्यासे यद्यपि पदलाघवाभावस्तथापि मात्रालाघवं प्रक्रियालाघवं चालोच्येदमुक्तम् । न च तस्य लोप इत्यत्र तच्छब्दस्य पूर्वपरामर्शकतया प्रकरणान्तरप्रणीतसंज्ञाविशिष्टस्याङो ग्रहणानौचित्याल्लोपाप्रवृत्तौ फलवैजात्यापत्तिरिति वाच्यम् ॥ संज्ञाविधानसामर्थ्यात् प्रकरणान्तरस्थसंज्ञोपहितस्यापि लोपविधाने बाधकाभावात् ॥ **इति पक्षे इति** ॥ नन्वनेकान्तपक्षे आदितश्चेत्यस्येत्संज्ञावदाकारसंनिहितोपस्थाप्यस्य धातोरिट्प्रतिषेध इत्यर्थः, प्रकृते च इत्संज्ञकेनाकारेण सन्निहितो न तु तदुपस्थाप्य इति कथं निषेधप्रसंग इति चेन्मैवम् । उपस्थाप्योपस्थापकयोस्सादृश्यमूलकाभेदाध्यवसायेन प्रदेशस्थस्यापि तादृशसंज्ञाविशिष्टाकारादिसन्निहितत्वमविरुद्धमितीत्संज्ञकाकारसमीपवर्तिनो धातोरिट्प्रतिषेध इत्यर्थे प्रकृतेऽपि तत्प्रसक्तिरित्याशयात् ॥ **मुख्यावयवैर्नाति** ॥ इदमेवास्य पक्षस्य मुख्यत्वबीजम् । अनेकान्तत्वपक्षे हि समासोपपत्त्यर्थमन्यपदार्थे सामीप्यमूलकमध्यारोपितमवयवित्वमिति गौणत्वमिति भावः ॥ **असंगत्यापत्तेरिति** ॥ विरोधापत्तेरित्यर्थः। न केवलमस्मच्छास्त्रीयसिद्धान्तविरोध एव, किंतर्हि तंत्रान्तरीयव्यवहारविरोधश्चेत्याह ॥ **व्याकरणस्येति** ॥ अभियुक्तत्वं च सकलतन्त्रसिद्धान्तपरिज्ञानजन्यव्यवहारप्रवर्तकत्वम् ॥ **अन्यत्रोक्तमिति**॥

---

एवञ्च कादेरित्वानापत्तिर्दुर्वारैव । अतः करणवलन्तत्वमेव युक्तम् । निरूपितं चेदं विस्तरेण शेखरव्याख्याने गुरुप्रसादे इति ॥

शब्देन्दुशेखरे रप्रत्याहारसंपादकतया लण्सूत्रस्थावर्णस्यानुनासिकत्वादिकमप्रामाणिकमुरण्रपर इत्यत्र च लग्रहणं कर्तव्यमेवेत्युक्तमित्यर्थः ॥ युक्तं चैतत् ॥ अन्यथा कृत्रिमाकृतिमन्यायेन रषाभ्यामित्यत्रापि रप्रत्याहारग्रहणापत्तौ लकारात्परस्यापि णत्वप्रसंगः ॥ न च तत्र रेफोत्तरमनुनासिकाकाराभावान्न प्रत्याहारग्रहणमनुनासिकाकारविशिष्टो हि प्रत्याहार इति वाच्यम् ॥ एवमपि रोऽसुपि रऋतो हलादेर्लघोरिति सूत्रयोर्विधेयांशे विनेत्संज्ञामकारस्य निवृत्त्युपायाभावेनानुनासिकत्वस्यावश्यकतया प्रत्याहारग्रहणस्य दुर्वारत्वात् ॥ न च प्रत्याहारग्रहणे रोऽसुपीत्यनेनाहर्भातीत्यादौ नकारस्यान्तरतम्याल्लकार एव स्यात्तथा रऋत इत्यनेन द्रढिमेत्यादौ रेफ एव स्यादिति सामर्थ्यात् प्रत्याहारग्रहणाभाव इति वाच्यम् ॥ तत्सामर्थ्यादुपसंजातविरोधन्यायेनान्तरतमपरिभाषाबाधस्यैव न्याय्यत्वात् ॥ न चातो ऌन्तस्येत्यत्र लकारग्रहणादनित्यत्वमस्य प्रत्याहारस्येति वाच्यम् ॥ तत्रानुनासिकोच्चारणे प्रमाणाभावेन प्रत्याहारग्रहणस्य दुर्वचतया लकारस्यावश्यकत्वेन ज्ञापनायोगात् ॥ न च तत्रानुनासिकोच्चारणेन सिद्धे लकारग्रहणमुक्तार्थज्ञापकमिति वाच्यम् ॥ तत्सामर्थ्येन रप्रत्याहाराभावस्यैव लाघवोपहितस्य ज्ञापयितुमौचित्यात् ॥ लण्सूत्रस्थावर्णस्यानुनासिकत्वकल्पनापुरस्कारेण प्रत्याहारमवलंब्य लक्ष्यानुसारादनित्यत्वकल्पने गौरवं स्पष्टमेव ॥ किं च योऽचीत्यादौ प्रत्याहारग्रहणाभावाय संयोगादेर्धातोर्यण्वत इत्यत्र णकारोच्चारणेन रप्रत्याहारातिरिक्तः प्रत्याहारो लण्सूत्रस्थावर्णेन न भवतीति कल्पनायां सुतरां गौरवमतो वरमुरण्रपर इत्यत्रार्धमात्रिकस्य लकारस्य ग्रहणमित्याहुः ॥ **बाहुलकादविशिष्टमिति** ॥ तत्रापि वृत्तिद्वयकल्पनाप्रयुक्तगौरवसद्भावादिति भावः॥

**न तु शास्त्रीयेति** ॥ शास्त्रेणैव शास्त्रं बाधनीयमिति शास्त्रीयबाधे वचनं कल्प्यम् । लोकव्यवहारबाधने तु तस्यानियतत्वान्न वचनकल्पनापेक्षेति तत्त्वम् ॥ **जात्याख्यायामिति** ॥ महाकालगतमेकद्रव्यनिवेशित्वान्न जातिरौपाधिकभेदोपहितेषु खण्डकालेष्वनुगतं कालत्वं क्षणत्वादिवज्जातिरेवेति भावः ॥

**इदं चेति** ॥ अत्रायं मूलकृदाशयः ॥ ह्रस्वशब्दस्य संकेतविषयमात्राकालिकाज्वर्णपरत्वेन कर्मधारये लक्ष्यासंभवः ॥ एकदेशिसमासे च ह्रस्वस्वरित एवाद्यखण्डस्योदात्तत्वमन्यत्र नेति लक्ष्यासिद्धिः । सूत्रे तस्येति षष्ठीनिर्देशानुपपत्तिश्च तथाहिं

सति तत्रेति वक्तव्यं स्यात् । अर्थान्तरपरत्वं तु न युक्तं कृत्रिमाकृत्रिमन्यायविरोधादतोऽत्र ह्रस्वग्रहणमदृष्टार्थमिति ॥ लक्ष्यविसंवादादिदमयुक्तमित्याह ॥ **तच्छाखास्थेति** ॥ अयं भावः, सामर्थ्यादिह कृत्रिमाकृत्रिमन्यायो बाध्यतां संभवति दृष्टफलकत्वे अदृष्टफलकल्पनाया अन्याय्यत्वात्॥ ततश्च लोकप्रसिद्ध्या मात्राकालपरोऽत्र ह्रस्वशब्दः कर्मधारयाश्रयणे शास्त्रस्य दीर्घमात्रविषयत्वापत्तौ षष्ठीनिर्देशानुपपत्तेस्तदग्रस्ततया स्वीक्रियतामेकदेशिसमासः ॥ इत्थं चार्धह्रस्वशब्देनार्धमात्रा बोध्यत इति ह्रस्वादित्रिके तावन्मात्रस्य प्राथमिकखण्डस्योदात्तत्वप्रतिपादनेन बहुतरवैदिकोदाहरणसंग्रहो लोकव्यवहारोपपत्तिश्चेति ॥ **संहितवद्वेत्यर्थ इति** ॥ अत्र जात्यवद्वा तथावेति वाक्यद्वयम् ॥ उभाभ्यां विकल्पाभ्यामुभयविलक्षणस्य तृतीयस्याक्षेपात्रितयविधानं पर्यवस्यति संहितशब्दस्य धर्मिपरत्वाद्ध्रस्वनिर्देशो नानुपपन्नः ॥ **केवलमनुदात्तत्वमिति** ॥ संहितायां नोदात्तस्वरितोदयमगार्ग्यकाश्यपगालवानामिति स्वरितनिषेधादिति भावः॥ **स्वरित इत्यर्थ इति** ॥ उदात्तानुदात्तयोः पूर्वमुपक्रान्तत्वादिह तद्भिन्नस्वरितो ग्राह्य इति भावः ॥ **स्वार्थेऽणिति** ॥ द्वारादीनां चेति ऐज्भावस्स्वार्थिके न प्रवर्तते ॥ अनुगतस्स्वारमिति विग्रहकस्यानुस्वारशब्दस्य तत्र तत्र पाणिनिना निर्देशात् ञित्साहचर्याच्चेत्याशयः ॥

केचित्तु स्वरशब्दपर्यायस्स्वारशब्दोऽपि कृदन्त एव न तु तद्धितान्तः। स्वार्थिकेप्यैज्भावो भवत्येव ॥ स्फैयकृतस्येति प्रयोगदर्शनात् । तत्र हि स्फ्यकृदेव स्फैयकृत इति विग्रहमभियुक्ताः प्रदर्शयन्तीत्याहुः ॥

**अनुपात्तमपीत्यादि** ॥ प्रकृतशास्त्रीयसंकेतविषयत्वेनागृहीतमप्यर्धमात्रारूपं प्रमाणमेव ह्रस्वादित्रिकसाधारणमर्धह्रस्वशब्देन बोध्यते न तु तादृशसंकेतविषयस्य मात्राकालपरिच्छिन्नस्याज्वर्णस्यार्धभाग इति तदभिप्रायः ॥

**अव्यवहितप्राक्कालिकत्वरूप इति** ॥ ननु जन्यजनकभावरूपसम्बन्धस्य षष्ठ्यर्थतायां जनकस्यान्यपदार्थत्वात्तस्य च कार्यपूर्ववर्तित्वनियमादभीष्टस्य यत्नस्य ग्रहणसिद्धेः व्यर्थ एवायं प्रशब्दः, न च हेताविति तृतीयानुशासनात् जन्यजनकभावरूपसम्बन्धे षष्ठी दुर्लभा, सर्वनाम्नस्तृतीया चेति विधीयमानाया वैकल्पिकषष्ठ्यास्तु नायं विषयः तस्यास्सामानाधिकरण्येन कारणपर्यायप्रयोगसापेक्षत्वादिति वाच्यम् ।

हेतुबोधकाज्जन्यत्वे तृतीयाविधान एवानुशासनतात्पर्यात् । अत एव घटेन दण्ड इत्यादयो न प्रयोगा इति चेन्न । एकस्यैव यत्नस्य वर्णोत्पत्तेर्विवारादीनां च जनकत्वमिति मते वर्णोत्पत्त्यव्यवहितप्राक्कालिकत्वरूपप्रकर्षाभावदशायामनुवर्तमानस्य बाह्यत्वेन व्यवह्रियमाणस्य तस्य व्यावृत्तेः प्रशब्दाधीनत्वात् । न च यावत्प्रयत्नग्रहणे झरो झरि सवर्ण इति सूत्रस्थस्य सवर्णग्रहणस्य वैयर्थ्यादिह बाह्यप्रयत्नव्यावृत्तिरिति वाच्यम् ॥ तत्सामर्थ्याद्विनिगमनाविरहेणाभ्यन्तरव्यावृत्तावनिष्टापत्तेरिति दिक् ॥

**अन्यत्र निरूपितमिति** ॥ ङकारादीनां नासिका स्थानमानुनासिक्यरहितस्वरूपानुपलम्भात् । अकारादीनामनुनासिकानां च तद्रहितस्वरूपोपलब्ध्या न सा स्थानमिति शब्देन्दुशेखरादावुक्तमित्यर्थः ॥

केचित्तु ङकारादीनामिवाकारादीनामप्यनुनासिकानां नासिका स्थानमेव तद्रहितस्वरूपोपलंभे मानाभावात् । यश्च तद्रहितश्शुद्ध उपलभ्यते स त्वतिरिक्त एव । यदि च प्रथमं द्रव्यं निर्गुणमेवोत्पद्यते पश्चाच्च समवेता गुणा उत्पद्यन्त इति तन्त्रान्तरीयसमयादनुनासिकानामकारादीनां प्रथममानुनासिक्यरहितस्वरूपोपलंभः पश्चाच्च तद्गुणोत्पत्तिरित्युच्यते तर्हि ङकारादीनामप्यानुनासिक्यं गुण एवेति कथं तत्साहित्येनोत्पत्तिरिति विभावनीयमित्याहुः[1] ॥

**घत्वजस्त्वानुनासिकेष्विति** ॥ गोदुह् मत् इत्यस्यामवस्थायां पदान्ते घत्वस्य जश्त्वापवादत्वात् पूर्वं घत्वे ततो जस्त्वम् । न च भष्भावस्यापि पदान्ते जश्त्वापवादत्वात् जश्त्वे कृते भष्भाव इत्ययुक्तमिति वाच्यम् ॥ भुदित्यादौ समकालप्राप्तजश्त्वबाधनेन कृतार्थस्य भष्भावस्य पूर्वोपस्थितिनिमित्तकत्वमूलकेनांतरंगत्वेन जश्त्वमपवादोऽपीति न्यायात्प्रकृते प्राथमिकप्रवृत्तिप्रतिबन्धकमित्याशयात् ॥ न चानुनासिकस्यापि जश्त्वापवादतया जश्त्वोत्तरमनुनासिक इत्यनुचितमिति वाच्यम् ॥ कुमार्योश्चिनोषीत्यादावञ्झलि कृतार्थस्यानुनासिकस्य तदपवादत्वायोगात् ॥ न च तावन्मात्रफलकत्वे यणित्येव सिद्धे यर्ग्रहणात् झल्यपि प्रवृत्त्यनुमानेन तदपवादत्वं

---

१. आहुरिति ॥ इदमयुक्तम् । अनुनासिकाकारस्य नासिकास्थानत्वे सामग्रीवैलक्षण्येन निरनुनासिकसानुनासिकयोः कङयोरिव स्वरूपभेदापत्तौ गुणाभेदकत्वपक्षेऽपि निरनुनासिकेन सानुनासिकग्रहणानापत्त्या वृद्धिसूत्रस्थभाष्यविरोधात् । स्पष्टंचेदं प्रकृतसूत्रोद्योते । विवेचितं चेदमस्मत्कृतगुरुप्रसादे इति बोध्यम् ॥

सुस्थमिति वाच्यम् ॥ अचो रहाभ्यामित्यादावनुवृत्त्यर्थस्य यर्ग्रहणस्य सामर्थ्योपक्षयेणोक्तार्थासिद्धेस्तस्मादिह युक्त एव षत्वादीनां प्रवृत्तिक्रम इति वदन्ति ॥ वस्तुतः त्रिपाद्यां पूर्वं प्रति परस्यासिद्धत्वाभावेपि सापादिकविप्रतिषेधशास्त्रबहिरंगपरिभाषोभयदृष्ट्या तदसिद्धत्वस्य निर्विवादतया ताभ्यां जश्त्वानुनासिकयोर्व्यवस्थापयितुमशक्यत्वादष्टाध्यायीपाठक्रमेण प्रथममेव भष्भावे नायं दोषः ॥ परं तु षत्वे कृते तस्येदानीमसिद्धत्वाभावाज्झय इति वत्वापत्तिर्दोषः ॥ अत एवाकरे वत्वमेवापादितं न तु भष्भाव इति दिक् ॥ **त्रिपाद्यामपीति** ॥ [1]अपिरवधारणे निपातानामनेकार्थत्वात् ॥ तदुक्तम् ॥ निपाताश्चोपसर्गाश्च धातवश्चेति ते त्रयः । अनेकार्थास्स्मृतास्सर्वे पाठस्तेषां निदर्शनमिति ॥ त्रिपाद्यामेवेति तदर्थः ॥ **सिद्धे असिद्धत्वारोपादिति** ॥ कार्याणां सिद्धिश्च लक्ष्यसमवायित्वमेव नान्यदिति भावः ॥ **उपपादक-हेतोरिति** ॥ परशास्त्रतद्बोध्यकार्यान्यतराभावरूपस्येत्यर्थः ॥ ननु शास्त्रजन्यलक्ष्यसंस्कारकमहावाक्यार्थबोधविषयत्वमेव कार्याणां सिद्धिस्तथा च लक्ष्यसमवायात्प्रागेव तेषामसिद्धत्वमिति नास्ति मूलोक्तदोष इत्याशयेन शङ्कते ॥ **नचेति** ॥ **लक्षणायामिति** ॥ अष्टाध्यायीपाठकृतपूर्वत्वपरत्वयोः कार्येषु बाधात्तदसिद्धत्वे पूर्वपरशब्दयोर्लक्षणाश्रयणमावश्यकमिति भावः ॥ ननु शास्त्रासिद्धत्वमपि प्रवृत्तिनिवृत्त्यन्यतरसाधकतया कार्यार्थमेवेति प्राधान्यात्कार्यासिद्धताया औचित्यमेव लक्षणायां मानमत आह ॥ **फलाभावादिति** ॥ ननु प्रधानाप्रधानयोरिति न्यायपरिपालनमेव फलं तत्राह ॥ **गौरवादिति** ॥ यद्यपि शास्त्रासिद्धत्ववादेऽपि पूर्वशास्त्रे कर्तव्ये परमसिद्धमित्यर्थे शास्त्रस्येदानीं कर्तव्यताबाधात् कार्यद्वारिकायास्तस्याः शास्त्रे आरोपे गौरवमस्त्येव तथापि कार्यासिद्धत्वे पूर्वपरशब्दयोर्द्वयोरपि तद्बोध्यकार्यलक्षणाश्रयणं, शास्त्रासिद्धत्वे तु कर्तव्यशब्दस्यैकस्यैव तद्बोधके लक्षणेति लाघवम् । यदि च कार्यासिद्धत्वे पूर्वशब्दस्यैव लक्षणा परशास्त्रजन्यबोधविषयकार्यस्य चाध्याहारतो लाभ इत्युच्यते तर्हि शास्त्रासिद्धत्वेऽपि कर्तव्यविषयकबोधजनकस्याध्याहारेणैव लाभ इति लक्षणाया

---

१. अपिरवधारण इति ॥ इदमयुक्तम् । तथाहि । एवं व्याख्याने सपादायां पूर्वं प्रति परासिद्धत्वमवधारणेनाभ्यनुज्ञातमिति लभ्यते । तत्तु न घटते । विनिगमनाविरहेण उभयत्र प्रवृत्तिरप्रवृत्तिर्वा निर्णेतुं शक्यते । नत्वेकत्र । अतः सामर्थ्यादिना यथा सपादायां न प्रवृत्तिः, तथा त्रिपाद्यामपीत्यर्थकतया यथाश्रुतमेव साधु । सूत्रं तु सपादसप्ताध्यायीं प्रति त्रिपाद्यसिद्धत्वमात्रबोधनेन चरितार्थमित्याहुः ।

अनुपयोगाच्छास्त्रासिद्धत्व एव लाघवम् ॥ किं च कारकविभक्तेर्न्याय्यतया पूर्वत्रेति विषयसप्तमी शास्त्रेषु च चेतनत्वारोपः इत्थं च परशास्त्रं पूर्वशास्त्रीयबुद्धिगोचरत्वाभाववदित्यर्थान्न लक्षणा नाप्यध्याहार इति लाघवम् । एतेन विषयसप्तमीत्वे गोमान् धीमान् इत्यादौ नलोपशास्त्रविषयतया संयोगान्तलोपशास्त्रस्य प्रथममप्रवृत्तिप्रसंग इत्यपास्तम् ॥ कार्यासिद्धत्वमुक्तरीत्या चेतनत्वारोपेण विषयसप्तमीत्वेऽपि पूर्वपरशब्दयोर्लक्षणां न मुञ्चतीति गौरवमित्याशयः ॥ ननु शास्त्रासिद्धत्वपक्षे शास्त्रेषु चेतनत्वारोपेण सापादिकानि त्रैपादिकमसिद्धत्वान्न जानंतीति नादिन्याक्रोशे इत्यस्येको यणचीत्यनेन साधुत्वं न स्यात्तथा हशिचेत्यनेन रोरीत्यस्य साधुत्वं न स्यादिति चेदत्राहुः ॥ पूर्वत्रासिद्धमित्येतच्छास्त्रघटकस्यासिद्धमित्यस्य न केवलमविद्यमानवदित्यर्थः, किन्तु प्रवृत्तिनिवृत्त्यन्यतरप्रयोजकविशेषवाक्यार्थसमर्पकत्वेनाविद्यमानवदित्यर्थः ॥ तथा च हशि चेको यणचीत्यादीनां त्रैपादिकशास्त्रगतलक्ष्यसंस्कारकमहावाक्यार्थबोधविषयतत्तत्कार्यप्रवृत्तिनिवृत्त्यन्यतरसमर्पकत्वापरिज्ञानेपि सामान्यवाक्यार्थबोधकत्वज्ञाने स्वरूपज्ञाने च बाधकाभावादन्यत्रेव तत्रापि साधुत्वमप्रत्यूह मिति ॥ एतेन अतिदेशशास्त्रगतस्यासिद्धमित्यस्यार्थबोधकत्वेनाविद्यमानवदित्यर्थेऽपि रोरर्थबोधनाय प्रसक्तावुर्भवतीत्यादिक्रमेण हशि चेत्यादीनामर्थादर्थबोधापेक्षत्वेनासिद्धत्वस्य दुर्वारतया त्रैपादिकशास्त्रनिर्देशेषु साधुत्वानापत्तिस्तदवस्थैवेति परास्तमिति दिक् ॥ **दर्शनाभावरूपे इति** ॥ अयंभावः ॥ अपवाद उत्सर्गस्य प्रवृत्तिपर्यवसायिनीं प्रसक्तिं वारयति ॥ अपवादविषयं परित्यज्योत्सर्गप्रवृत्तेः ॥ निषेधोऽपि उत्सर्गस्य प्रवृत्तिं संभाव्य प्रसक्तिं निवर्तयति ॥ आदेशस्तु प्रसक्तस्य फलभूतमर्थबोधं स्वयमेव संपादयन् प्रयोगं निवर्तयति न तु प्रसक्तिमित्यस्ति लोपादेशस्याभावबुद्धौ रोः प्रसंग इति ॥ एतेनाभावाभावस्य भावरूपत्वेप्यादेशेन निवर्तितस्योच्चारणप्रसंगाभावान्नोत्वप्रवृत्तिरिति परास्तम् ॥ न चात्र परत्वात् ढ्रलोपदीर्घे ह्रस्वाकाराभावादुत्वाप्रवृत्तिरिति वाच्यम् ॥ पूर्वोपस्थितिनिमित्तकत्वमूलकेनांतरंगत्वेन दीर्घात् पूर्वं मुत्वप्रवृत्तिरित्याशयात् ॥ यदि तु पूर्वोपस्थितिनिमित्तकत्वेपि अतिदेशसापेक्षत्वेन विलंबोपस्थितिकत्वादुत्वस्य बहिरंगत्वमेवेत्युच्यते तदा नात्रारुचिः, किंत्वयमपि दोष एवेत्याहुः ॥ **निषेधसामर्थ्यादिति** ॥ एतद्विषये देवदत्तहन्तृहतन्यायप्रवृत्तौ च मुत्वासिद्धत्वेन पूर्ववदाकाराभावात् पररूपाप्रवृत्तावकारान्तस्यैवांगसंज्ञोपहितत्वान्नाभावकर्तव्यताया असंभवेन निषेधस्यासांगत्याद्वैयर्थ्यम् ॥ न्यायाप्रवृत्तौ मुत्वासिद्ध-

त्वेनाकारोत्पत्तौ पररूपे पुनर्मुत्वे घ्यन्तस्यांगत्वान्नाभावप्रसक्त्या निषेधोपपत्तिरिति भावः ॥ ननु न्यायप्रवृत्तावप्यमु अ टा इत्यस्यामवस्थायां पररूपमन्तरैवादन्तांगत्वनिबन्धने टाया इनादेशे गुणे परादिवद्भावेन टात्वादेकदेशविकृतन्यायेन मुशब्दान्तस्यांगत्वान्नाभावकर्तव्यतायास्सुवचत्वेन निषेधस्य सार्थक्यादुक्तार्थासिद्धिरिति चेत्सत्यम् ॥ मुशब्दान्तस्यैकदेशविकृतन्यायेनांगसंज्ञायामेकादेशस्याचः परस्मिन्निति स्थानिवत्त्वं प्रतिबन्धकम् । अत एव श्रेयस इमौ श्रायसावित्यत्र सान्तस्यानेन न्यायेनोगिदन्तांगतया नुममाशंक्याचः परस्मिन्निति एकादेशस्य स्थानिवत्त्वेनांगत्वानुपपत्त्या परिहृतमाकरे ॥ अत एव धनेनेत्यादावेकादेशोत्तरमनेन न्यायेनांगत्वं भत्वं चाश्रित्याल्लोपो न प्रवर्तत इति विभाव्यताम् ।

केचित्तु अमु अ औ इत्यादौ मुत्वस्यासिद्धत्वेनाप्रवृत्तत्वबुद्ध्या तत्कृतदकाराकारोभयनिवृत्तिबुद्धेरसंभवेन नायं देवदत्तहन्तृहतन्यायविषय इति पररूपे वृद्धौ मुत्वे च कार्यासिद्धत्वेपि सिद्धममू इत्यादि ॥ न च पररूपस्योकारनिवर्तकत्वमयुक्तम्, तस्याकारनिवर्तकत्वात् । तथा च वृध्युत्तरममु औ इत्यादिरूपे पुनर्मुत्वाप्रवृत्त्या रूपासिद्धिरेवेति वाच्यम् ॥ नहि रजतत्वभ्रमप्रयुक्ता प्रवृत्तिः शुक्तिं न गोचरयतीति न्यायेनाकारबुद्ध्यैवोकारनिवृत्तावभीष्टसिद्धेः ॥ न चोकारनिवृत्तावपि मकारस्य सत्त्वाद्दात्परत्वाभावादूकाराप्रवृत्तिरिति वाच्यम् ॥ सन्नियोगशिष्टन्यायेनोकारेण सह मकारस्यापि निवृत्त्या दात्परत्वस्य सुवचत्वात् । न च लक्ष्ये लक्षणस्येति न्यायेन पुनर्मकाराप्रवृत्तौ तत्सन्नियुक्तत्वादूकारस्यापि अप्रवृत्तौ रूपासिद्धिरेवेति वाच्यम् । उकारसन्नियुक्तमकारविधायकादूकारसन्नियुक्तद्विधायकलक्षणस्य भिन्नत्वेनादोषात् ॥ किं च सन्नियोगशिष्टन्यायस्यान्यतरापाये संभाविते द्वयोरप्यप्रवृत्तिरित्यर्थः ॥ अत एव पञ्चेन्द्राण्यो देवता अस्य पञ्चेन्द्र इत्यत्र ङीषो लुकि अकारश्रवणसिद्धिरन्यथा सवर्णदीर्घोत्तरमानुकस्तत्सन्नियुक्तस्य निवृत्तावकारश्रवणं दुर्लभमेवेति नेदं कार्यासिद्धत्वस्य दूषणमित्याहुः ॥

---

१. नेदं कार्यासिद्धत्वस्य दूषणमिति ॥ वस्तुतस्तु अदसोसेरिति सूत्रे उ ऊ इति प्रश्लेषवादिभिः यथाकथञ्चिल्लक्षणान्तरत्वस्योपपादनेऽपि भाव्यमानोप्युकार इति परिभाषया ऊकारग्रहणमित्यस्यैव सिद्धान्तितत्वेन वाक्यभेदानावश्यकत्वेन लक्षणान्तरत्वायोगाल्लक्ष्ये लक्षणस्येतिन्यायेन दोषस्तदवस्थ एव । किञ्च सन्नियोगशिष्टन्यायस्य कार्या-

**शास्त्रासिद्धत्वमेवेति** ॥ ननु शास्त्रासिद्धत्वपक्षे पिपठीरौजिढदित्यादौ षत्वढत्वादिरूपकार्यस्यासिद्धत्वाभावाद्रुत्वाद्यनुपपत्तिः । न च शास्त्रस्याविद्यमानत्वबुद्धौ तद्‌बोध्यलक्ष्यगतकार्यस्याविद्यमानताबुद्धिरार्थसमाजग्रस्तेति वाच्यम् ॥ असिद्धमित्यस्य लक्ष्यसंस्कारकमहावाक्यार्थबोधजनकत्वेनाविद्यमानवदित्यर्थकतायास्त्रैपादिकशास्त्रगतप्रयोगसाधुत्वसंपत्त्यर्थमवश्यमत्र पक्षे स्वीकरणीयत्वात्तथाविधबोधजनकत्वेनाविद्यमानत्वरूपस्यासिद्धत्वस्य शास्त्रमात्रविश्रान्ततया शास्त्रासिद्धत्ववादिभिरुक्तरीत्या कार्यासिद्धत्वस्य दुर्वचत्वात् ॥ कार्यस्यैवासिद्धत्वमिति पक्षे तु जातस्याप्रवृत्तत्वबुद्ध्या सर्वकार्यनिर्वाहः । न चातिदेशशास्त्रस्य पूर्वशास्त्रप्रवृत्तौ संभावितायां तत्प्रतिबन्धकतया परशास्त्रं न प्रवर्तत इत्यर्थादुक्तस्थले षत्वादीनामप्रवृत्त्या निर्वाह इति वाच्यम् ॥ संभावनाया अव्यवस्थितत्वादक्षरमर्यादया तत उक्तार्थालाभाद्गौरवाच्च । तस्मात् कार्यासिद्धत्वमेवाद्रियतां मनोरथसिद्धेस्तु रोरीत्यादि निर्देशबलाद्विप्रतिषेधशास्त्रस्याप्रवृत्त्या परशब्दस्येष्टवाचकत्वोपपत्त्या वा निर्वाहोऽस्तु, मास्तु शास्त्रासिद्धत्वमिति चेदत्राहुः ॥ पूर्वशास्त्रविषये परशास्त्रमविद्यमानवदित्यतिदेशशास्त्रस्याक्षरमर्यादालभ्योऽर्थः । अविद्यमानसादृश्यं च कार्यविशेषप्रवृत्तिनिवृत्त्यन्यतरानुपयोगित्वेन । तदनुपयोगित्वं त्वर्थबोधानौपयिकत्वेनैवाश्रयणीयत्वाच्छास्त्रेषु चेतनत्वारोपाच्च पूर्वशास्त्रबुध्या परशास्त्रं कार्यप्रवृत्तिनिवृत्त्यन्यतरोपयोगिलक्ष्यसंस्कारकमहावाक्यार्थबोधजनकत्वाभाववदित्यर्थस्य पर्यवसानात्परशास्त्रगतकार्यप्रवर्तकबोधजनकत्वपरिज्ञानाभाववतः पूर्वशास्त्रस्य तथाविधबोधविषयषत्वादिरूपकार्यस्य लक्ष्यसमवायित्वबुद्धेः सकारादिनिवृत्तिबुद्धेश्च दुरुपपादतया रुत्वादिप्रवृत्तिरव्याहतैव ॥ यौगपद्येन पूर्वपरशास्त्रयोः प्रवृत्तिविषये तु परशास्त्रगतकार्यप्रवर्तकत्वपरिज्ञानाभावे कार्यद्वारकविरोधिज्ञानस्य दुर्लभत्वान्निरशंकमेव प्रथमतः पूर्वशास्त्रं प्रवर्तत इति न काप्यनुपपत्तिः॥ कार्यासिद्धत्ववादिनामतिदेशवाक्यार्थोपपत्तये लक्षणा, मनोरथसिद्धये च विप्रतिषेधशास्त्रबाधकल्पनेत्युपेक्षणीयोऽयं कार्यासिद्धत्ववाद इति शास्त्रासिद्धत्ववादिनां निष्कर्ष इति ॥ यत्तु गङ्गा आरतीत्यादौ ढूलोपदीर्घदृष्ट्या सामर्थ्यात् ढूलोपस्यासिद्धत्वाभावेपि सवर्णदीर्घदृष्ट्या तस्यासिद्धत्वात्सवर्णदीर्घेण रेफद्वयवत एव साधुत्वं स्यादिति पक्षद्वयसाधारणं दूषणमाहुस्तदसत् ॥ ढूलोपदीर्घेणैकरेफेवतस्सा-

---

-सिद्धत्ववादेऽप्रवृत्तिपरतया व्याख्यानमत्र न घटते । तन्मते लक्ष्ये प्रवृत्तिमन्तरा अपायसम्भावनाया एवाभावादिदमपि दूषणं सुस्थमेव । विस्तरस्तु गुरुप्रसादतोऽवसेयः ।

धुत्वबोधनेन तदनुसंधानात्सवर्णदीर्घेणापि तथाभूतस्यैव साधुत्वकल्पनायां बाधकाभावात् ॥ नहि रजतत्वभ्रमप्रयुक्तेति न्यायेनैकरेफवतोऽपि रेफद्वयवत्ताबुध्या साधुत्वबोधनसंभवाच्च ॥ यदपि षट्त्सन्तीत्यादौ धुडागमस्यासिद्धत्वेपि व्यवधायकस्य तदीयोच्चारणकालस्यासिद्धत्वाभावात्तिङतिङ इति निघातो न स्यादिति, तदपि न ॥ वर्णानामविद्यमानत्वे तदीयोच्चारणप्रयोजनकस्य कालस्य तत्र दुर्ज्ञेयतया व्यवधायकत्वायोगात् ॥ अत एव धिन्विकृण्व्योरचेत्यकारविधानमुपपद्यते । अन्यथा वकारलोपेऽपि तदीयोच्चारणकालेन व्यवधानाद्गुणाप्रवृत्तौ स्थानिवत्त्वेन व्यवधानसंपादकमकारविधानमनर्थकमेव स्यात् ॥ अत एव इमं मे गंगे यमुन इति मन्त्रे मेशब्दमाश्रित्य सर्वेषां निघात इत्यलम् ॥ **एत ईदिति सूत्रमिति** ॥ इदमुपजनिष्यमाणन्यायमनादृत्योक्तम्[1] ॥ **न्यायशरीरमिति** ॥ अत्र शास्त्रे प्रकृतन्यायप्रयोजनं भवेत्यादौ हेर्लुकि सेरनुन्मज्जनमित्याद्यूह्यम् ॥ त्रिभिश्च मध्यमैर्वर्गैर्लैशसैश्च व्यवाये नेति वक्तव्यमित्यट्कुप्वाङिति सूत्रस्थं भाष्यम् ॥

**प्रकृतिभावेनेति** ॥ न च वार्णादांगं बलीय इति न्यायात्सवर्णदीर्घं बाधित्वा गुणप्रवृत्त्या निर्वाहे प्रकृतिभावोपपादनमयुक्तमिति वाच्यम् ॥ सुबुत्पत्तिप्राक्कालप्रवृत्तिकस्य वार्णस्य सवर्णदीर्घस्य तदुत्पत्त्युत्तरप्रवृत्तिकेनांगेन गुणेन भिन्नकालतया बाधानुपपत्तिरित्याशयात् ॥ प्रकृतिभावस्य तु कार्यिभेदान्न बाधः ॥ अयं च न्यायो यत्र वार्णस्यांगस्य च समानकार्यित्वं तत्रैव प्रवर्तते धर्मिग्राहकसाजात्यादिति वक्ष्यते । गुणोत्तरमचः परस्मिन्निति स्थानिवत्त्वेन ऌकारबुध्या न प्रकृतिभावः; न पदान्तेतिनिषेधात् ॥ तदाह ॥ **यणीति** ॥ **भाष्योदाहृतविषय इति** ॥ गोर्धेनोरित्यादावेवेति भावः ॥ **परमे कारक इत्यादि** ॥ एवमादिविग्रहके कर्मधारये तृतीयादिस्वरस्यातिप्रसंगमाशंक्येत्यर्थः ॥ **प्रतिपदोक्तपरिभाषयेति** ॥ तृतीयादिपदघटितशास्त्रबोधितस्यैव तत्पुरुषस्य ग्रहणादिति भावः ॥

अत्र चेत्यस्य व्यवहितेन प्रश्लोष इत्यनेनान्वयो न तु सन्निहितेनापि निर्देशा

---

१. अनादृत्येति ॥ उपसञ्जनिष्यमाणन्यायस्यापि अपवादशास्त्रवैयर्थ्यमूलकत्वेनापवादशास्त्रवैयर्थ्येनापवादशास्त्रनिमित्तसम्पादकशास्त्रस्य बाधकत्वकल्पनापेक्षया तेन शास्त्रासिद्धत्वबोधनमेव लघ्वित्याशयेन तन्न्यायानादरः, अत एव मूले **अत्रैवेत्येवकार** उपपद्यते इति बोध्यम् । एतेनास्य ग्रन्थस्य चिन्त्यत्वं वदन्तः परास्ताः ।

इत्यनेन बाधितत्वादित्याशयेनाह ॥ **इत्यन्वय[1] इति** ॥ **शीङोभावादिति** ॥ ततो निष्ठायास्सेट्कत्वान्निष्ठा शीङिति किंत्त्वनिषेधाच्च शयितमित्येव भवितव्यमिति भावः॥ **पठ्यत इति** ॥ ननु श्यैङ्प्रकृतिक एवास्तु शीतशब्दश्शकारस्येकारे सवर्णदीर्घाभावो गणपाठबलादित्यत आह ॥ **किंचेति** ॥

**तपरसूत्रेणेति** ॥ तच्च सूत्रमनणि विध्यर्थं नाणि नियामकमणूग्रहणं च तत्र नानुवर्तत इति भावः ॥ **फलाभावादिति** ॥ न च तपरत्वसामर्थ्यादन्तरतमपरिभाषाया निवृत्तिद्वारेण ऋकारस्य पाक्षिकऌकारविधिरिति वाच्यम् ॥ शास्त्रबाधकल्पनापेक्षया प्रकृतार्थसाधनस्यैवौचित्यात् ॥ **अपूर्वबोध्यत्वाभावेनेति** ॥ अयं भावः॥ परेणाणूग्रहणे ज्ञापिते स्थान्यंश इवादेशांशेपि दीर्घग्रहणे स्थानेऽन्तरतमपरिभाषया ह्रस्वस्य ह्रस्वो दीर्घस्य दीर्घ इति व्यवस्थापनादपूर्वत्वाभावः ॥ भाव्यमानपरिभाषा तु तया विधेयांशे दीर्घनिवृत्तावपूर्वबोध्यत्वेन भाव्यमानत्वं, तस्मिंश्च सति परिभाषाप्रवृत्तिरित्यन्योन्याश्रयान्न प्रवर्तते ॥ इत्थं च विधेयांशे दीर्घस्य निवृत्तेस्तपरत्वैकसाध्यत्वादक्षतमेव तस्य स्वांशे चारितार्थ्यमिति ॥ यत्तु परणकारेण प्रत्याहाराभावे ऋकारऌकारयोः परस्परग्राहकत्वाभावेन तयोस्सावर्ण्यविधानं व्यर्थम् ॥ न च होतृ ऌकार इत्यादौ सवर्णदीर्घो गमॄनित्यादौ पूर्वसवर्णदीर्घश्च तत्फलमिति वाच्यम् ॥ आद्ये निपातानामनेकार्थत्वात् वाशब्देन[2] विवृतदीर्घस्यापि समुच्चयादिष्टसिद्धेः ॥ अन्त्यस्य न पदान्ताः परेऽणस्सन्तीति प्रत्याहाराह्निकस्थभाष्यबलेनानभिधानाच्च ॥ तस्माद्दॢवर्णयोर्मिथस्सावर्ण्यमिति वार्तिकस्यैवोक्तार्थज्ञापकत्वमित्याहुस्तदसत् ॥ सूत्रेणैव विवृतेषत्स्पृष्टदीर्घयोर्विधानमाश्रित्य ऋति ऌ वेत्यस्य प्रत्याख्याने सावर्ण्यविधानमन्तरेण होतृ ऌकार इत्यादौ दीर्घाप्रवृत्तेः ॥ उपदर्शितभाष्यप्रामाण्येन गमुल् शकुल् इत्यादेः पदान्तपराणंतस्यानभिधानेपि गमॄनित्यादेरनभिधाने मानाभावाच्चेति दिक् ॥ **वाक्यापरिसमाप्तिन्यायादिति** ॥ नन्वात्माश्रयोऽन्योन्याश्रयो वा

---

१. **इत्यन्वय इतीति** ॥ क्वचित्पुस्तके समाहितमिति भावः इत्यनन्तरं "अत्र चेति । सूत्रे इत्यर्थः । आकारप्रश्लेषे निर्देशा लिङ्गमित्यन्वयः । निर्देशेन आकारहकारयोस्सावर्ण्याभावबोधकानुमानिकवचनकल्पनापेक्षया प्रश्लेष एव तात्पर्यकल्पनं लघीय इति भावः" इत्याधिकः पाठः संदृश्यते । तदनुरोधेनायं ग्रन्थः । परन्त्वयं ग्रन्थो नेदानीन्तनपुस्तकेषु दृश्यते ।

२. **वाशब्देनेति** ॥ अस्य ऌति ऌ वेत्यत्रेत्यादिः ।

प्रकृतन्यायबीजम् ॥ तत्र स्वस्मिन् प्रवृत्तावात्माश्रयस्स्वाङ्गे प्रवृत्तावन्योन्याश्रयः, नाज्झलावित्येतच्छास्त्रं तु तदुभयविलक्षणम् ॥ नहि ग्राहकसूत्रघटकमेतत् ॥ नवा तदीयवाक्यार्थबोधवेलायामिदमपेक्ष्यते येन तदन्यतररूपता स्यात् ॥ ततश्च कथमत्र ग्राहकशास्त्राप्रवृत्तिरित्यतो नाज्झलावित्यस्य ग्राहकशास्त्रांगत्वमुपपादयति ॥ **अयं भाव इति ॥ तन्निश्चय इति ॥** इत्थं च ग्राहकसूत्रेण स्वघटकसवर्णपदबोध्यनिश्चयसंपादनायैतच्छास्त्रापेक्षणादत्रत्यस्याच्पदस्य सवर्णग्रहणाय तदपेक्षणे चान्योन्याश्रयान्नात्र ग्राहकशास्त्रप्रवृत्तिरिति भावः ॥ यदि तु ग्राहकशास्त्रगतसवर्णपदबोध्यनिश्चयो न साक्षात्सावर्ण्यनिषेधेन, किन्तु सावर्ण्यविधिनैव निषेधस्तु विधिशास्त्रीयविशिष्टवाक्यार्थगताप्रामाण्यसन्देहनिवर्तक एवेत्युच्यते तदा नाज्झलावित्यस्य सवर्णग्रहणाय ग्राहकशास्त्रापेक्षा तस्य स्वघटकसवर्णपदार्थपरिज्ञानाय सावर्ण्यविध्यपेक्षा तस्य च बाधकविषयपरिहारेण विशिष्टवाक्यार्थसंपत्तये निषेधापेक्षेत्येवं चक्रकापत्तिरत्र ग्राहकशास्त्रप्रवृत्तौ दोष इति बोध्यम् ॥ **यत्त्वित्यादि ॥** वाक्यार्थबोध एवेत्येवकारेण बोधसामान्याभावनिषेधप्रतिपादनात्सामान्यवाक्यार्थबोधोऽपि निरस्तः ॥ तच्चायुक्तमिति भावः ॥ तदाह ॥ **पदपदार्थोपस्थिताविति ॥** यदि तु निषेधवाक्यार्थात्पूर्वमुत्सर्गस्य महावाक्यार्थो न भवति बाधकशास्त्रीयविशिष्टवाक्यार्थज्ञानपूर्वकविषयपरिहारमन्तरेण तदयोगादित्युच्यते तदा सम्यगेवेति तत्त्वम् ॥ **न्यायानादरेणेति ॥** दोषापादन एव तात्पर्यं, नत्वापाद्यमानेषु असिद्धासिद्धिभावानुसन्धाने इति भावः ॥

**वासादृश्यं चेति ॥** सहविवक्षाया अभावेपि सौत्रत्वाद्भूवादय इति द्वन्द्वगर्भो बहुव्रीहिरिति भावः ॥ यद्यपि भ्वादय इत्यस्यावृत्तिन्र्याय्या वाशब्दो मध्ये मंगलार्थ इति भाष्यस्वारस्यात् । सादृश्यप्रतियोगिसमर्पकश्च भूशब्दः क्रियावाचक एव वाशब्दवत् , तथापि समासमध्ये वाशब्दप्रवेशस्य सौत्रत्वमावृत्तिश्चेति क्लेशाधिक्यादेवमुक्तम् ॥ **असिद्धत्वमिति ॥** एवं चाकाराभावाल्लोपाप्रवृत्तौ फलाभावेन धातुत्वाप्रसंग इति भावः ॥ नाजानन्तर्यपरिभाषायास्सिद्धान्ते अभावादाह ॥ **ततोऽपीति ॥** ननु विभक्तिनिमित्तकत्वं भसंज्ञाया एव न तु लोपस्य परंपरानिमित्तस्य बहिरंगपरिभाषायामंगशब्देन ग्रहणे मानाभावश्चेति कथं लोपस्य बहिरंगत्वमत आह ॥ **अर्थकृतनिमित्तकस्येति ॥** अत्र शास्त्रे शब्दस्य प्राधान्यात्तस्यैव निमित्तत्वेन ग्रहणं न त्वर्थसंज्ञयोरित्यन्यत्र विस्तरः ॥ **भ्वादिषु लाक्षणिकानामिति ॥**

ष्ठा गतिनिवृत्तौ कुञ्च क्रुञ्च गतिकौटिल्याल्पीभावयोरित्यादौ ॥ अयं भावः । प्रयोगस्थानामनुकरणं, प्रयुक्तानामिदमन्वाख्यानमिति भाष्योक्तेः । प्रयोगे च लाक्षणिकमेव रूपमेतेषां नहि ष्ठा क्रुन् चेत्यादिप्रयोगो दृश्यते येन लक्षणवशनिष्पन्न-ष्टुत्वादिविरहितस्यानुकरणं स्यात् ॥ यत्र तु लाक्षणिकं प्रतिपदोक्तं चेत्युभयविधं रूपमुपलभ्यते तत्रैतस्याः परिभाषायाः प्रवृत्तिर्यथा सख्युरसंबुद्धावित्यादौ, यत्राप्युपदेशे प्रतिपदोक्तं रूपं प्रयोगे च लाक्षणिकं तत्राप्यस्याः परिभाषायाः प्रवृत्तिर्यथा ऊञ्च च-पदे इत्यादौ, इह तु न तथा प्रतिपदोक्तस्य प्रयोग उपदेशांतरं वेति नास्ति परिभाषायाः प्रवृत्तिसंभवः ॥ न च ष्टुत्वादेरसिद्धत्वात्तद्विरहितत्वबुध्यैव तदनुकरणमतः कथं लाक्षणिकत्वमिति वाच्यम् ॥ अनुकरणस्य लौकिकतया तद्बुध्या ष्टुत्वादेरसिद्ध-त्वायोगात् ॥ तद्धि पूर्वस्मिन् शास्त्रे तद्बोध्यकार्ये वा ॥ न चेदं शास्त्रं नापि तद्बोध्यं कार्यं ॥ अन्यथा ह्यूर्णुनावेत्यादाविव यद्बुध्या तस्यानुकरणप्रसंगस्तथाभूतस्यैव धातुगणे प्रयोगापत्तौ ष्टुत्वादिसहितस्य ष्ठा इत्यादेरसांगत्यापत्तिः ॥ अत एव ऋऌक्सूत्रे ऌकारोपदेशप्रयोजनप्रस्तावे क्लृपिस्थस्य ऌकारस्यानुकरणे साध्वॢ-कारमधीत इत्यादौ यणादिकं प्रयोजनत्वेनोपपादितम् । प्रकृतिवदनुकरणमित्यतिदेशे-नाच्कार्यं प्रत्यसिद्धत्वमाश्रित्य परिहृतमित्यन्यत् ॥ नचैवं प्रकृतेऽपि धातुसंज्ञायां ष्टुत्वादेरसिद्धतया तद्विशिष्टे तदनापत्तिरिति वाच्यम् ॥ ष्टुत्वादिविरहितत्वबुध्यैव तद्विशिष्टे नहि रजतत्वभ्रमप्रयुक्तेति न्यायेन संज्ञाप्रवृत्तौ बाधकाभावात् ॥ एतेन ष्ठा इत्यादिकृतष्टुत्वादेरनुकरणमुत लक्षणवशसंपन्नमत्र ष्टुत्वादिकमिति विप्रतिपत्तावस्ति लक्षणप्रतिपदोक्तपरिभाषायाः प्रसंग इति परास्तम् ॥ प्रायोगिकस्य ष्टुत्वादिविरहि-तस्याप्रसिद्धत्वादुपदेशान्तराभावाच्चेति दिक् ॥ **वक्तुमप्यशक्यमिति** ॥ अनित्य-त्वेन परिभाषायाः प्रवृत्त्यभाव इति तत्त्वम् ॥ **दोष इति** ॥ वा करोतीत्यादौ पदत्वाभावप्रयुक्तस्तिङतिङ इति निघाताभावो दोष इत्यर्थः ॥ ननु वाशब्दोऽयं विकल्पवाची स च विपूर्वस्य क्लृपेरर्थान्न भिद्यते ॥ ततश्च क्रियावाचकत्वात्तद्विशेष-णेन कथं व्यावृत्तिरत आह ॥ **क्रियात्वं चेति** ॥ साध्यत्वमसत्त्वभूतत्वं चेद्वाशब्दार्थ-स्यापि लिङ्गाद्यनन्वयितया तद्रूपेण प्रतीयमानत्वाविशेषात्स्यादेव क्रियात्वमित्यालो-च्याह ॥ **उत्पाद्यमानत्वमेवेति** ॥ तत्र विपूर्वस्य क्लृपेरर्थो विकल्प उत्पाद्यत्वेन प्रतीयते वाशब्दार्थस्तु नेत्यत्र शब्दशक्तीनां वैचित्र्यमेव शरणम् ॥ **अकृजर्थ इति** ॥ शास्त्रबाधकल्पनापेक्षया प्रकरणबाधनमेव युक्तं श्रुत्यपेक्षया प्रकरणस्य

दुर्बलत्वादिति भावः ॥ **क्रियाकांक्षादर्शनेनेति** ॥ क्रियान्तराकांक्षानुत्थापकतावच्छेदकधर्मवत्त्वमेव हि क्रियालक्षणमिति भावः ॥ **कालोपि धात्वर्थ एवेति** ॥ एवं चानिर्दिष्टार्थास्स्वार्थे इति सिद्धं क्रियावाचकत्वम् ॥ क्रियात्वक्रियाकालसंख्याकारकात्मकं पञ्चकं धातोरेवार्थ इति हि निष्कर्ष इति भावः ॥ **प्रत्ययस्यैवेति** ॥ मूले तिङ्चासावन्तश्चेति कर्मधारयो न बहुव्रीहिरिति बोध्यम् ॥ **षष्ठे प्रकृतसूत्रे इति** ॥ तत्र हि भाष्ये प्रातिपदिकानां प्रतिषेध इति वार्तिकखण्डनाय लिटि धातोरित्यतो धातुग्रहणमनुवर्त्य उक्तम्, अथापि निवृत्तम्, उपदेश इत्युच्यते उद्देशश्च प्रातिपदिकानां नोपदेश इति ॥ एतेन धातुग्रहणासंबन्धस्स्पष्टमेवोक्त इति भावः । नन्वेवं सिद्धान्ते का गतिरत आह ॥ **किंचेति** ॥ **शित्परत्वयोग्यस्यैवेति** ॥ नन्विदं चिन्त्यम्, अनचीत्यत्र प्रसज्यप्रतिषेधेप्यच्परत्वयोग्यस्यैव यरो द्वित्वप्रवृत्तौ विसर्जनीयस्य द्वित्वानापत्तेः ॥ तस्माद्धातुग्रहणेनैव भावार्थकस्यैश आत्वव्यावृत्तिः ॥ भाष्यन्तु प्रातिपदिकव्यावृत्तये धातुग्रहणस्यानावश्यकत्वबोधनपरमित्यत आह ॥ **अपि चेति** ॥ वस्तुतः पञ्चकं धात्वर्थ इति निष्कर्षात्कर्तृकर्मवाचिनामपि क्रियावाचकत्वमाख्यातानामतो लिटस्तझयोरित्येकारोच्चारणादात्वाप्राप्तिरिति वदन्ति ॥ **आणवयति वट्टयति इति** ॥ आज्ञापनं वर्तनं च तयोरर्थः ॥ **उपलक्षणमिति** ॥ उदित्त्वं तु प्रातिपदिकत्वेपि नुमाद्यर्थं स्यादिति भावः ॥ **बोध्यमिति** ॥ प्रत्येकमेतेषां धातुत्वसंपादकत्वेनानुमानिकानेकवचनानां कल्पने क्लेश इत्यालोच्याह ॥ **एतैश्च स्थितस्येत्यादि** ॥ आचार्योपदेशकाले स्थितस्य तत्पाठस्याद्यत्वे पाठकप्रमादात्परिभ्रंश इत्यर्थो लाघवेन ज्ञाप्यत इत्यर्थः ॥ ननु बहुलमेतन्निदर्शनमिति गणसूत्रस्य दशगणीपाठ उपलक्षणमित्यर्थकतया लौकिकानां चुलुम्पादीनामिव सौत्राणामपि संग्रहे किमर्थोऽयं प्रयास इत्यत आह ॥ **मैत्रेयाद्यन्यसम्मतमिति** ॥ यदा तु गणसूत्रस्य चुराद्यन्तर्गतानामदन्तानां पाठो बहुलं चुरादिपाठो वा बहुलमित्यर्थस्तदा ज्ञापकानुसरणं सौत्रसंग्रहार्थमावश्यकं प्रागुक्तार्थे तु नेति भावः ॥

**मानाभावादिति** ॥ द्रव्यवाचित्वे फिट्स्वरेणान्तोदात्तत्वं स्यादसत्त्वबोधकतया निपातत्वे तु श्रुतौ पठ्यमानस्याद्युदात्तत्वस्याभीष्टस्य सिद्धिरित्यपि वदन्ति ॥

॥ **इति संज्ञाप्रकरणम्** ॥



## ॥ अथ परिभाषाप्रकरणम् ॥

**सामर्थ्यादिति** ॥ न च पूर्वसूत्राभ्यां गुणवृद्धिशब्दयोरनुवृत्तावर्थाधिकारस्य न्याय्यतया शब्दपरत्वे यत्र गुणवृद्धी पदे तत्रेक इत्युपतिष्ठत इत्यर्थेन प्राप्तमनुवादविषयत्वं वारयितुमत्र सूत्रे गुणवृद्धिग्रहणस्यावश्यकतया कथं सामर्थ्यमिति वाच्यम् ॥ अत्र सूत्रे गुणवृद्धिग्रहणाभावे न धातुलोप इत्यादौ पूर्वसूत्रघटकयोरेवानुवर्तनीयतया तत्रार्थाधिकारस्य बाधात्तदनुरोधेनात्रापि सूत्रे शब्दाधिकाराश्रयणे प्रदेशेषु तयोरर्थपरत्वाद्विधिक्रियाध्याहाराच्च यत्रादैजादयो विधीयन्ते तत्रेक इत्युपतिष्ठत इत्यर्थेनानुवादविषयत्वाप्रसक्त्या सूत्रस्थयोस्सामर्थ्यं सुस्थमित्याशयात् ॥ **शब्दव्यापाराश्रयणेनेति** ॥ गुणवृद्धिशब्दयोस्स्वोच्चारणप्रयोज्यप्रतीतिविषयत्वोपहिततत्तदर्थलक्षाणया शब्दोच्चारणस्य प्रतिपाद्यकोटावाश्रयणेनेत्यर्थः ॥ **मन्दबुद्धिसाधारण्येनेति** ॥ मूलकारस्तु यत्र न धातुलोप इत्यादावर्थाधिकारस्य बाधस्तत्र तत्परित्यागेऽप्यन्यत्र तत्परित्यागे मानाभावादनुवर्तमानयोश्शब्दपरताया औचित्येन सामर्थ्यायोगात्सिद्धान्ते तदनुवृत्तिरेवाभीष्टार्थसिद्धये शरणमिति मन्यते[1] ॥ **अत्र नैव स्यादिति** ॥ वस्तुतः स इमं यज्ञमिति मन्त्रैकदेशोऽयमिममित्यत्र परिष्कृतस्यार्थस्य प्रयोजनं दर्शयितुमुपन्यस्तो न तु स इममित्यनयोः प्रत्येकमुदाहरणत्वे तात्पर्यम् ॥ अन्यथा स इति व्यर्थमेव स्यात् ॥ इममित्यत्रैवातिव्याप्त्यव्याप्त्युभयसंभवादित्याहुः[2] ॥ **इकारस्यैवेति** ॥ इदं बहूदाहरणसंग्रहानुरोधिना वैयधिकरण्ये-

---

१. मन्यत इति ॥ शब्दरत्नकृत्तु उक्तरीत्याश्रयणेऽर्धजरतीयतापत्तिरिति सामर्थ्येनैवोक्तार्थसम्पादन मुचितमिति मन्यते ॥

२. आहुरिति ॥ वस्तुतस्तु परममूलस्यैतादृशाशयकत्वेऽपि स इति व्यर्थमेव । न च मन्त्रघटकत्वस्फोरणार्थं तदिति वाच्यम् । लौकिकेऽपि दोषसाम्येन तत्स्फोरणस्यानुपयोगात् । अतो गणपाठे प्राथमिकत्वात्तच्छब्दे दोषमुद्भाव्यातिव्याप्तिमपि दर्शयितुमिममिति निर्देश इत्येव युक्तम् । लौकिकस्योदाहरणप्रत्युदाहरणत्वसम्भवे छान्दसप्रयोगपर्यन्तानुधावनस्य शैलीविरुद्धत्वाच्च । त्यदः परित्यागस्तु अप्रसिद्धत्वाभिप्रायेण । तस्य छान्दसत्ववादिमतसाधारणलौकिकोदाहरणप्रदर्शनाभिप्रायेण वेति बोध्यम् ।

नोक्तम्। सामानाधिकरण्ये तु द्विशब्द एव तत्प्रवृत्त्या नायं दोष इति बोध्यम् ॥ **अत एव दीर्घो नेति** ॥ अनुकरणस्वरूपभंगभीतिस्तु न शास्त्रं वारयितुं समर्थेति भावः ॥ नन्वचो ञ्णितीत्यत्रैतत्परिभाषोपस्थिताविग्रूपस्याच इति सामानाधिकरण्यविवक्षायामज्ग्रहणवैयर्थ्यादजन्ताङ्गस्येक इत्यर्थे सुसखायावित्यादावनन्त्यस्योवर्णस्य वृद्धिप्रसङ्गः ॥ न च गोतो णिदिति व्यर्थमिति वाच्यम् ॥ सुगौरित्यादावनन्त्यस्योकारस्य वृद्धिसाधनार्थमुपयोगादत आह ॥ **नास्याः प्रवृत्तिरिति** ॥ ओर्गुण इत्यत्र तत्प्रवृत्तावुवर्णान्तस्यांगस्येको गुण इत्यर्थे शरीरावयवादिति ऊरुशब्दाद्यति प्राथमिकस्याप्यूकारस्य गुणप्रसंग इति बोध्यम् ॥ **लिङ्गस्य श्रुत्यपेक्षया दुर्बलत्वेनेति** ॥ श्रुतिलिङ्गवाक्यप्रकरणस्थानसमाख्यानां पारदौर्बल्यमर्थविप्रकर्षादिति जैमिनीयो न्यायः ॥ अत्र अच इत्यादि साक्षाच्छ्रुतमिक इति तु वृद्ध्यादिपदवत्त्वेनानुमीयमानत्वाल्लिङ्गाधीनमित्याशयः ॥ **अनन्वयादिति** ॥ यथा कदाचनस्तरीरसि नेंद्र सश्चसि दाशुष इति मन्त्रस्य विनियोगाकांक्षायामैन्द्र्या गार्हपत्यमुपतिष्ठत इति प्रत्यक्षश्रुत्या गार्हपत्योपस्थाने लब्धविनियोगस्य मन्त्रगतलिङ्गानुमितेन्द्रोपस्थाने विनियोगाभावस्तथा गुणवृद्धिविधेस्स्थान्याकांक्षायामच इत्यादिना साक्षाच्छ्रुतेन लब्धान्वयस्याकांक्षानिवृत्त्या पुनरनुमितेनेग्ग्रहणेनान्वयाभाव इति भावः ॥ ननु सति विरोधे बलिष्ठेन दुर्बलो बाध्यते, प्रकृते तु न विरोधो द्वयोरप्येकत्र विधावन्वयसंभवात् ॥ किं च प्रकृते तन्न्यायाश्रयणेन निर्दिष्टस्थानिकेषु परिभाषाप्रवृत्तिवारणे मृजेर्वृद्धिर्मिदेर्गुण इत्यादावपि साक्षाच्छ्रुतेन मिदिमृज्यादिना गुणवृद्ध्योस्संबन्धस्य दुर्वारतया परिभाषाया अप्रसंग इति चेदत्राहुः ॥ यत्र श्रुत्यादीनां साजात्यं तत्रैव पूर्वपूर्वेणोत्तरोत्तरबाधो न्यायविषयः, सजातीयनिवर्तकताया औचित्यात् ॥ स्पष्टा चेयं रीतिः प्रत्याहाराह्निके भाष्ये । साक्षात् स्थानित्वेन श्रुतोऽजादिरचो ञ्णितीत्यादौ लिङ्गेन स्थानितया प्रसक्तस्येकस्सजातीयस्य निवर्तक इति युक्तम् ॥ मृजेर्वृद्धिरित्यादौ साक्षाच्छ्रुतो धातुः तदवयवतया स्थानित्वेन प्राप्तं विजातीयमिकं कथं वारयेत् विरोधोपि फलवैजात्यप्रयुक्तो वर्तत एव, एतादृश एव हि विरोधस्तन्न्यायविषयस्ततो युक्त एवायं निर्दिष्टस्थानिकेषु परिभाषाप्रवृत्तेः परिहार इति ॥ यत्तु नातः परस्येत्यर्थशब्दात्परस्य परिमाणवाचकोत्तरपदस्यादेरतो वृद्धिनिषेधारंभः

---

१. **नायं दोष इति** ॥ वस्तुतस्सामानाधिकरण्येनान्वये नैकमुदाहरणमिति न्यायविषयत्वप्रसक्त्या वैयधिकरण्यान्वयस्यापरिहार्यतया अत्र दोषः सुस्थ एवेति बोध्यम् ।

स्थानिनिर्देशप्रयुक्तयोर्गुणवृध्द्योः प्रकृतपरिभाषाया अप्रवृत्तेर्ज्ञापकः, अन्यथा प्रकृतपरिभाषोपस्थाप्यस्येग्ग्रहणस्यार्थात्परिमाणस्येत्यत्राप्युपस्थितावुत्तरपदादेरिक एव वृद्धिप्रसक्त्या तदसंगतिस्स्पष्टैव ॥ ततश्च तन्त्रान्तरीयन्यायाश्रयणेन परिहारोक्तिरयुक्तैवेति वदन्ति ॥ तदसत् ॥ स्थूलदूरेति सूत्रे परिभाषाया अप्रवृत्तौ क्षेपिष्ठक्षोदिष्ठयोर्व्यञ्जनस्य गुणापत्तेः ॥ तदारंभस्यापूर्ववचनज्ञापकत्वापेक्षया तन्त्रान्तरीयन्यायाश्रयणज्ञापकताया एव लघुत्वाच्च ॥ अस्थ्याद्यनङ्विधौ नपुंसकग्रहणमस्थ्यादीनामेव विशेषणं, न त्वंगस्येत्यादिव्यवस्थासिद्ध्ये न्यायाश्रयणस्य सर्वसम्मतत्वाच्चेति दिक् ॥ **अन्तरङ्गेति** ॥ विधेयबोधकगुणवृद्धिपदश्रवणं लिङ्गमेतत्परिभाषायाः ॥ विधेयबोधकत्वं च प्रथमान्तपदान्तराभावविशिष्टप्रथमान्तत्वेनापि ज्ञातुं शक्यमतो न तत्र वाक्यार्थबोधापेक्षा, ततश्च वाक्यार्थात्पूर्वभावित्वादियमन्तरंगा, तदनन्तरभावित्वाच्चालोन्त्यपरिभाषा बहिरंगा, विभिन्नकालप्राप्तिकत्वेनानयोः परस्परसंबन्धो नेति बोधयितुमयमन्तरंगबहिरंगभावः ॥ न चायमन्तरंगपरिभाषाप्रवृत्त्युपयोगी, तस्याश्च यत्र जातं समकालंप्राप्तं वा बहिरंगं तद्विषयत्वात् ॥ एतेनार्थकृतबहिरंगत्वस्यानाश्रयणादलोन्त्यपरिभाषायाः प्रकृते वाक्यार्थसापेक्षत्वेन बहिरंगत्वोपपादनं स्वोक्तिविरुद्धत्वादयुक्तमित्यपास्तमिति दिक् ॥ **स्थानषष्ठीत्वाभावनिर्णयेनेति** । अस्य वर्णसमुदायबोधकशब्दप्रकृतिकेत्यादिः ॥ ननु तच्छेषपक्षो भाष्ये दूषितः । अयं तु पृथक् नियामकत्वपक्ष इति कथमत्र भाष्यविरोध इत्यत आह ॥ **द्वयोर्नियमयोरित्यादि** ॥ **गुणापत्त्येति** ॥ एवं च तच्छेषपक्ष एवायं नियामकत्वपक्षो नामान्तरेण व्यवहारमात्रं भवतां । न तु विशेष इति भावः ॥ **दूषणोद्धार इति** ॥ एवं मृजेर्वृद्धिरित्यत्रोत्तरसूत्रादच इत्यस्यापकर्ष स्थूलदूरेति सूत्रे यण आदिः यणादिस्ततः परं लुप्यते पूर्वस्य गुण इत्येवं व्याख्यानमृदृशोऽङि गुण इत्यत्रोरङि गुणो दृशश्चेति न्यासान्तरं, ऋच्छत्यृतामित्यत्र ऋकारान्तरप्रश्लोषश्च तदुद्धारप्रकार इति बोध्यम् ॥ **अत एव क्ष्मापयतीति** ॥ गुणोत्तरं वृद्धिप्रवृत्तेरेवेत्यर्थः ॥ **यापनायामिति** ॥ ननु सन्निपातपरिभाषया गुणाप्राप्तेर्नेदमुदाहरणं गुणोत्तरं वृद्धिप्राप्तौ निदर्शनं स्यादिति चेन्न ॥ अयीयपदित्यादौ ह्रस्वविषये परिभाषाया अनित्यत्वादप्रवृत्तेरावश्यकतया गुणोऽपि ह्रस्व एवेति प्रकृते तदप्रवृत्तिरित्याशयात् ॥ अत एवा-

---

२. अत एवक्ष्मापयतीतीति ॥ इदन्तु न कुत्रापि दृश्यते ।

परितोषात्पूर्वत्र गुणोत्तरं वृद्ध्या अदोषाच्चेत्युक्तमिति बोध्यम् ॥ आदिना कुह विस्मापन इति धातुगणस्थोऽर्थनिर्देशः

**निषेधारंभेणेति** ॥ ननु तासवयवस्येटस्तन्मध्यपतितन्यायेनैव सिद्धमंगावयवत्वमतो नायमारंभः प्रकृतार्थसाधक इत्यत आह ॥ **लोकव्यवहारेणेति** ॥ हस्तपादावयवांगुल्यादेर्विशिष्टशरीरावयवत्वं लोकप्रसिद्धमिति भावः ॥ **पञ्चारत्नीनीति** ॥ पञ्च, अरत्नयः प्रमाणं येषां तानि पञ्चारत्नीनि कुण्डानि प्रमाणार्थकस्य मात्रचः प्रमाणे लो द्विगोर्नित्यमिति लुक् ॥ नन्वत्र समासमात्रनिमित्तकस्वरस्तत्प्रकृतिकसुब्निमित्तकनुमागमप्रवृत्तिं किमिति प्रतीक्षते तत्राह ॥ **विभज्यान्वाख्याने इति** ॥ इत्थं च स्वरनुमागमयोर्यौगपद्ये परत्वात् पूर्वं नुमागम इति भावः ॥ यदि तु विभज्यान्वाख्यानेपि बहिर्भूतसुब्निमित्तकस्य नुमो बहिरंगत्वेन सिद्ध एवाभीष्टस्वरः॥ किंच यदागमन्यायेनेग्वर्णावयवत्वेन विहितो नुमागमस्तद्ग्रहणेन गृह्यते, वर्णग्रहणे यदागमन्यायाप्रवृत्तिरिति तु भाष्यविरोधेन दूषितमेवेत्युत्तरपदस्य सुवचमिगन्तत्वमित्युच्यते, तदा नेदं दूषणमिति सूचयन्नाह ॥ **भाष्यादौ स्पष्टमिति** ॥ तत्रोक्तपरिभाषाद्वयानादरणेनेदं समुदायावयवत्वे प्रयोजनत्वेन प्रदर्शितमिति भावः॥ वस्तुतः पूर्वविषमपापाणीत्यत्र त्रिपदे बहुव्रीहौ णत्वानुपपत्तिरन्त्याजवयवत्ववादिनां दोषः ॥ तत्र नुमागमस्यावयवावयवन्यायेन पापशब्दावयवत्वापत्त्या निमित्तानधिकरणनिमित्तिमत्पदाघटितपदत्वरूपलक्षणानाक्रान्तत्वेन समानपदत्वस्य दुर्वचत्वात् ॥ न चोत्तरपदत्वे चेति निषेधेन पापानित्यस्य पदत्वाभावादस्त्येव समानपदत्वमिति वाच्यम्॥ गन्धर्वगानमित्यादौ णत्ववारणाय लक्षणघटकस्य पदशब्दस्यार्थवदुपलक्षकत्वात् ॥ न च प्रातिपदिकान्तनुम्विभक्तिषु चेत्यनेन तत्सिद्धिरिति वाच्यम् ॥ मध्यमस्य पूर्वपदत्वाभावात्, पूर्वपदस्य मध्यमेन व्यवहिततया पदव्यवायेपीति निषेधविषयत्वादड्व्यतिरिक्तषकारव्यवहितत्वाच्च ॥ यत्तु ज्ञानानीत्यादौ नुम्विशिष्टस्याकारग्रहणेन ग्रहणादाद्गुणप्रसक्तिरत्र पक्षे दोष इति तन्न ॥ नुम्विधानसामर्थ्येन तन्निवृत्तिसंभवात् ॥ यद्यपि त्रपूणीत्यादौ नुमश्चरमाजवयवत्वपक्षे लोकन्यायेन समुदायावयवत्वाभावेपि कार्यकालपक्षे पुनरंगसंज्ञाप्रवृत्तेस्तदादिग्रहणाच्च नांतस्यांगतया सिद्धो दीर्घस्तथापि यथोद्देशे दोषमापादयतामवयवावयवन्यायेन परिहार इति बोध्यम् ॥ त्रपूणीत्यत्र नुमः पूर्वसूत्रादन्तग्रहणमपहायादिग्रहणानुवृत्त्या परादित्वेपि

यदागमन्यायानित्यत्वेन कथंचित् प्रत्ययग्रहणेनाग्रहणे सिद्धो दीर्घ इत्यस्वरसादाह ॥ **उपलक्षणमिति** ॥ **शेर्लोप इति** ॥ निर्दिश्यमानपरिभाषया नुम्रहितस्य लोपे नकारस्य पूर्वान्तत्वाभावेन प्रातिपदिकान्तत्वाभावान्न लोपो न स्यादिति भावः। न चान्तरंगत्वाच्छिलोपे नुमागमाप्रवृत्त्या दीर्घासिद्धिरेव दोष इति वाच्यम् ॥ अनित्यत्वेन कथंचित् परिभाषाया अनाश्रयणेप्यत्र दोष इत्याशयात् ॥

**स्थाननिरूपितसंबन्ध इति** ॥ स्थानपदाध्याहारेण तदर्थान्वितस्योद्देश्यस्य विधेयेन निवर्त्यनिवर्तकभावाख्यो यस्संबन्धविशेषो भवति स इह शास्त्रे संबन्धविशेषप्रतिपत्तिविहीनायाः षष्ठ्याः प्रतिपाद्यः, समभिहारस्यैव हि संबन्धविशेषप्रतिपत्तिनियामकत्वमिति तदर्थः ॥ प्रदेशेषु षष्ठ्यर्थसंबन्धस्य विशेषपर्यवसानाय स्थानशब्दाध्याहार इत्यत्र तात्पर्यम् ॥ **बहुव्रीहिरपीति** ॥ मूले इति विग्रह इति बहुव्रीह्यन्यपदार्थको बहुव्रीहिर्देहलीदीपन्यायेन निपातनादित्यस्योभयत्रापि संबन्ध इति भावः॥ इदन्तु बोध्यम् ॥ प्रदेशेषु स्थानपदाध्याहारादिकः प्रसक्ताविग्निवर्तको यणित्यादिक्रमेणार्थः ॥ एकस्याप्युद्देश्यभूतस्येगादिपदार्थस्य विधेये शाब्दः, प्रसक्तावार्थस्संबन्धः ॥ यद्वा विद्यतिक्रियानुषंगेण प्रसक्तिविषयसत्ताश्रयेग्निवर्तको यणित्यादिरर्थः ॥ अथवा प्रसक्तस्येत्यध्याहारो लाघवात् प्रसक्तिविषयीभूतेग्निवर्तको यणित्यादिरूपो वाक्यार्थ इति पक्षत्रयमत्र संभवति, युक्तमत्र विचार्यमार्यैरिति ॥ यद्यपि स्थाने इत्यस्य सप्तम्यन्तानुकरणत्वमाश्रित्य बहुव्रीह्युपपादने यत्र षष्ठी तत्र स्थानेशब्द उपतिष्ठत इत्यर्थकतया लभ्यते मूलोक्तार्थः, एत्वनिपातनक्लेशोपि नापेक्ष्यते, तथापि तथा न व्याख्यातम्, ऊदुपधाया गोह इत्यादावपि तत्संबन्धापत्तेः । सिद्धान्ते स्थानपदार्थनिरूपितसंबन्धविशेषबोधिका षष्ठीत्युक्त्या यत्र संबन्धविशेषनिर्णयाभाव इको यणचीत्यादौ, तत्रैतस्याः परिभाषाया उपस्थितिः, ऊदुपधाया इत्यादौ तूपधापदसन्निधानादवयवावयविभावरूपसंबन्धविशेषस्य निश्चिततया नास्ति परिभाषायाः प्रवृत्तिः । इत्थं च संबन्धविशेषोपपादकसमभिव्याहाराभावविशिष्टषष्ठीश्रवणमेतत्परिभाषालिंगमिति नानिष्टप्रसक्तिरिति दिक् ॥ **अनान्तर्यमेवेति** ॥ तच्च प्रकृतस्थान्यादेशभावातिरिक्तस्थान्यादेशभावसमर्पकसादृश्यनियामकधर्मराहित्यरूपं, तदाह ॥ **अन्तरतमाभाव इति** ॥

**व्याख्यानादिति** ॥ किं तद्व्याख्यानबीजं तत्राह ॥ **बहुलक्ष्यसंस्कारा-**

**नुरोधाच्चेति** ।। चो हेतौ ।। इदमेव व्याख्यानबीजमथवा तस्मिन्नणि च युष्माकास्माकावित्येतत्सूत्रमात्रविषयकत्वे तत्रैवाव्यवहितत्वपूर्वत्वांशयोर्निवेशेन सिद्धौ परिभाषारंभवैफल्यरूपस्य हेत्वंतरस्य समुच्चायकोऽयं चकार इति भावः ।। **तद्बोध्यार्थस्येति** ।। इतिशब्दबलेन गम्यमानस्य सप्तम्यन्तार्थस्येत्यर्थः ।। ततश्च स्वाव्यवहितोच्चारणविषयसप्तम्यन्तार्थोपश्लिष्टपूर्वसंबन्ध्यौपश्लेषिकाधिकरणसप्तम्यन्तघटितशास्त्रविधेयमिति परिभाषार्थः ।। औपश्लेषिकाधिकरणसप्तमी चास्याः परिभाषाया लिङ्गं, न तु सति सप्तमी, कारकविभक्तेर्बलीयस्त्वात् ।। अत एव कर्तृकर्मणोः कृतीत्यादौ नास्याः परिभाषायाः प्रवृत्तिः ।। इयं च पदैकवाक्यतया विध्युपकारिका, प्रदेशेषु पूर्वत्वाव्यवहितत्वांशयोः अध्याहारो लक्षणा वा पूर्वत्वाव्यवहितत्वोभयविशिष्टे स्वार्थे प्रादेशिकपदस्येत्यन्यदेतत् ।। **व्यवहार इति** ।। गौण इति भावः । प्रदेशेष्वचीत्यादेस्सति सप्तम्यन्तत्वभ्रमनिरासायाह । **अनुपश्लिष्टस्येति** ।। **अव्यवहित एवेति** ।। तुल्यवित्तिवेद्यत्वादिति भावः ।।

ननु आदेः परस्येत्यत्र तस्मादित्युत्तरस्यादेरिति न्यासे कथमनेकाल् शिदित्यस्य परत्वभंगस्तत्राह ।। **स्वं रूपमित्यतः प्रागिति** ।। निर्दिष्टपदानुवृत्त्यर्थमावश्यकस्तत्र सन्निवेश इति भावः ।। नन्वत्र न्यासे दिग्योगपञ्चम्यन्तघटितशास्त्रविधेयं पञ्चम्यन्तार्थावधिकपरत्वविशिष्टस्याव्यवहितस्यादेरित्यर्थेनागमविषयेप्यादेरित्यंशस्य प्रवृत्त्यापत्तौ क्वो यगित्यादिः क्वाप्रभृतेरादेरन्तावयवस्स्यात् ।। तथाविधपरत्वविशिष्टस्याव्यवहितस्य स्थाने विधीयमानमादेरित्यर्थे त्वव्यवहितत्वपरत्वांशयोरादेशातिरिक्तप्रदेशेष्वप्रवृत्त्यापत्तिरित्युभयथापि दोषसंभवात्सर्वादेशबाधकतामात्रदूषणोपवर्णनमकिंचित्करमत आह ।। **पृथक्वाक्यमिति** ।। **क्वचिदिति** ।। आदेशव्यतिरिक्तविषयेप्यव्यवहितत्वपरत्वांशयोः प्रवृत्तिरिति न गाङ्कुटादिभ्य इत्यादौ दोष इत्याशयः ।। **नित्यं ङित इति** ।। तिङ् शित् सार्वधातुकमित्यादाववश्यमाश्रयणीयस्य धात्वधिकारस्य संबन्धेपि विकरणव्यवधानेऽपि प्रवृत्तये विहितविशेषणमाश्रीयत इति भावः ।। आदिशब्देनेतश्च लोप इत्यस्य संग्रहः ।। **आज्जसेरसुगिति** ।। ननु तत्रादेरित्यंशोपस्थितावकारोत्तरमसुकि पररूपे संयोगान्तलोपे विधानवैयर्थ्यादेवाप्रवृत्तिः ।। न च ये पूर्वासो य अपरास इत्यत्र निर्दिश्यमानपरिभाषया शीभावाप्रवृत्त्यर्थमसुग्विधानमावश्यकमिति वाच्यम् ।। तन्मध्यपतितन्यायविषयस्य निर्दिश्य-

मानपरिभाषाव्यावर्त्यताया अनिष्टत्वात्। शीभावस्यासुगपवाद इति त्वयुक्तमेव, ब्राह्मणास इत्यादावसर्वनामविषये चारितार्थ्यात् ॥ न च विधानसामर्थ्यात्पररूपबाधनेन चारितार्थ्यमिति वाच्यम् ॥ प्रधानभूतपररूपबाधकल्पनापेक्षया गुणभूतस्यादेरित्यंशस्य बाधकल्पनाया औचित्यादत आह ॥ **आदीति** ॥ आदिशब्देन क्वो यगित्यस्य संग्रहः ॥ यद्यपि नानेकाल् शिदित्यत्र सर्वस्येति स्थानषष्ठी, नापि षष्ठी स्थाने इत्यस्यानुवृत्तिरित्यभ्युपगमे शिदनेकाल्च विधेयं सर्वसंबन्धीत्यर्थादागमविषयेप्यादेरित्यंशस्य परत्वादनेन बाधनोपपत्तौ तस्मादित्युत्तरस्यादेरित्यनेकाल् शिदित्यतः पूर्वं न्यासे नास्ति क्वो यगित्यादौ दोषः ॥ न चानेकाल् शिदित्यस्यागमविषये चरितार्थत्वादादेशमात्रविषयस्यालोन्त्यस्येत्यस्यापवादत्वेन बाधानुपपत्तिरिति वाच्यम् ॥ अशिदनेकालादेशे चरितार्तस्य तस्य परत्वादेवानेन बाधोपपत्तेः ॥ षष्ठी स्थान इत्यस्यालोन्त्यस्येत्यत्राप्यसंबन्ध इति तु न युक्तम् ॥ लुङ्लङित्यादिना विधीयमानस्याडागमस्यान्त्यवर्णस्यैवाद्यवयवत्वप्रसंगात् , तथापि परस्येत्यस्य परत्वबोधकशब्देन विहितस्येत्यर्थलाभाय पृथक् परशब्दघटितो यथाश्रुतो न्यास इति तत्त्वम् ॥ तद्ध्वनयन्नाह ॥ **इति दिगिति** ॥

**प्रत्ययाधिकारे पाठे इति** ॥ इदं णल्विषयम् । डादेशस्य प्रत्ययाधिकारादन्यत्र पाठादित्याहुः ॥

**वाचनिकपूर्वविप्रतिषेधाश्रयणे इति** ॥ प्रियसखीनि ब्राह्मणकुलानीत्यत्राप्युक्तरीत्या नित्यत्वेनैव सिद्धौ वृद्धिविषये नुमः पूर्वविप्रतिषेधाश्रयणं नापूर्वमिति चिन्त्यमेतत् ॥ **अभिसन्धिरभिप्रायः** ॥ **इत्यभिमानादिति**[1] ॥ वस्तुतोऽयमयुक्तः ॥ अन्तरंगं बहिरंगाद्बलीय इत्यस्यांतरंगसमानकालप्राप्तबहिरंगविषयत्वात् ॥ अत

---

१. **इत्यभिमानादितीति** ॥ क्वचित्पुस्तके अन्तरङ्गत्वादितीतिप्रतीकानन्तरमयं पाठः परिदृश्यते । तथाहि ॥ "ननु किं कार्यकालपक्षे इदमुच्यते यथोद्देशे वा । नाद्यः, सर्वादीनीत्यस्यापि जशश्शीत्यनेनैकवाक्यतापन्नतया विभक्तिसापेक्षत्वात् । नान्त्यः । तथाहि ॥ विभक्त्युत्पत्तेः प्रागेव भविष्यति किञ्चिदनया कार्यमित्यभिसन्धिमात्रात्तत्प्रवृत्तौ जातायां ततो विभक्त्युत्पत्तौ विकल्पस्यैव प्राप्त्या युगपदुभयप्राप्त्यभावेनैतन्न्यायविषयाभावादिति चेत्सत्यम् । पूर्वं प्रवृत्तमप्यन्तरङ्गं पश्चात्प्रवर्तमानबहिरङ्गाद्बलीयस्तस्य निवर्तकमित्यपि परिभाषार्थ इत्यभिमानादिति ।" एतदनुसारेणेदम् । इदानीन्तनपुस्तकेष्वयं पाठो नैव दृश्यते ।

एवान्तादिवत्सूत्रे भाष्ये असिद्धं बहिरंगमन्तरंग इति परिभाषामवलंब्येदं प्रत्याख्यातम् ।। तस्याश्चांतरंगे कर्तव्ये जातं समकालप्राप्तं च बहिरंगमसिद्धमित्यर्थो धर्मिग्राहकमानसिद्धः तच्छ्रुनयन्नाह ।। **ज्ञापकमन्यत्रेति** ।। ओमाङोश्चेत्याङ्ग्रहणं समकालप्राप्तबहिरंगविषये वाह ऊठित्यूठ्ग्रहणं जातबहिरंगविषये चांतरंगस्य बलीयस्त्वे ज्ञापकमन्यत्रोक्तमित्यर्थः ।। **निरवकाशत्वरूपेत्यादि** ।। सवर्णदीर्घस्य समकालप्राप्तसमानाश्रयान्तरंगबाधनेन चारितार्थ्यम् ।। तस्यैव नाप्राप्तत्वादिति भावः ।।

बहिरंगतयैवेति[१] ।। वलि लोपे बहिरंगपरिभाषा न प्रवर्तत इति प्राचीनानामुद्घोषो भाष्यविरुद्धत्वादुपेक्षितः ।। नन्वेवमपि अक्षद्यूरित्यादौ यलोपवारणाय नाजानन्तर्ये परिभाषाया अजानन्तर्यनिमित्तकेऽन्तरंगे कर्तव्ये यद्बहिरंगं न तस्यासिद्धत्वम् । यच्च तथाविधांतरंगप्रवृत्त्युत्तरकालिकेऽन्तरंगे कर्तव्ये बहिरंगं तस्यापि नासिद्धत्वमित्यर्थस्यावश्यकतया कथं वलि लोपे संप्रसारणस्य बहिरंगासिद्धत्वमिति चेन्न ।। लक्ष्यानुरोधिना बहिरंगपरिभाषाया अनित्यत्वेन प्रकृतपरिभाषायाः प्रत्याख्यानादीदृशे विषये कार्यानुसारेणैकस्मिन्नपि लक्ष्ये बहिरंगपरिभाषायाः प्रवृत्त्यप्रवृत्तिभ्यां निर्वाह इत्याशयात् ।। क्वचित्तु पदावधिकेऽन्वाख्याने सेद् वस् अस् इति स्थिते इट्संप्रसारणयोः प्राप्तौ प्रतिपदविधित्वेन संप्रसारणे वलादित्वाभावादिडागमाप्राप्त्या तत्सिद्धिरिति पाठः ।। नन्वत्र संप्रसारणस्य प्रतिपदविधित्वं नापवादत्वेन बाधप्रयोजकं, तस्य निरवकाशविषयत्वात् ।। नापि शीघ्रोपस्थितिकत्वेनांतरंगतया तत्प्रयोजकं, नियमशास्त्राणां विधिमुखेन प्रवृत्त्या वस्वेकाजिति विधीयमानस्येडागमस्यापि प्रतिपदविधित्वेन तुल्यत्वादतः कथमिह संप्रसारणस्य प्रथमं प्रवृत्तौ प्रतिपदविधित्वं नियामकं स्यादिति चेन्न ।। संप्रसारणस्यापि प्रतिपदविधित्वादिडागमस्य तत्प्रयुक्तांतरंगत्वस्य दुर्वचतया नित्यत्वेन पूर्वं संप्रसारणमित्याशयात् ।। ननु निमित्तविनाशसंभावनया निमित्तिनः पूर्वमप्रवृत्तिरिति परिभाषार्थः ।। ततश्च प्रतीच इत्यादावच

---

१. बहिरङ्गतयैवेतीति ।। "यदि तु सेदुषीत्यादौ पूर्वमिटि ततस्सम्प्रसारणे नाजानन्तर्य इतिनिषेधाद्बहिरङ्गपरिभाषाया अप्रवृत्त्या यणि बहिरङ्गतयैव सम्प्रसारणासिद्धत्वेन वलपरत्वाद्यस्य लोपे तत्सिद्धिरित्युच्यते, तदैषा परिभाषा निष्फलेति बोध्यम् । अत एव भाष्ये न क्वापि व्यवहृतेत्यन्यत्र निरूपितम् ।" इत्ययं पाठः क्वचिद्दृश्यते । तदनुसारेणायं ग्रन्थः । इदानीन्तनपुस्तकेष्वन्यथा दृश्यते ।

इत्यल्लोपेन निमित्तविनाशसंभावनया प्रथममच्कार्याप्रवृत्तिरेतत्परिभाषाप्रयोजनमस्तीति कथं नैष्फल्यमिति चेन्न ॥ चाविति दीर्घारंभसामर्थ्येन तद्विषये पूर्वमच्कार्याप्रवृत्तिज्ञापनेनादोषात् ॥ तदुक्तं भाष्ये "इहान्ये आचार्याश्चौ प्रत्यंगस्य प्रतिषेधमाहुः ॥ तदिहापि साध्यं नैष दोषः ॥ एतदेव ज्ञापयत्याचार्यः । न चौ प्रत्यंगं भवतीति । यदयं चौ दीर्घत्वं शास्तीति" न च पञ्चेन्द्राण्यो देवता अस्य पञ्चेन्द्र इत्यादौ द्विगोर्लुगनपत्य इति लुकि लुक्तद्धितलुकीति स्त्रीप्रत्ययनिवृत्त्या तत्संनियुक्तस्यानुको निवृत्तौ संभावितायां पूर्वमेकादेशाप्रवृत्तिरेतत्प्रयोजनमन्यथा दुर्लभमेव श्रवणमिन्द्रशब्दादेरकारस्येति वाच्यम् ॥ अन्तरंगानपि विधीन् बहिरंगो लुग्बाधत इत्यनया लुक्प्रयोजकसमासादीनामिव तत्प्रयोज्याया आनुङ्निवृत्तेरपि प्राबल्यबोधनेनादोषात् ॥ न चाकृतव्यूहपरिभाषामेवाश्रित्येयं परिभाषा त्यज्यतामिति वाच्यम् ॥ बहिरंगकृतनिमित्तविनाशसंभावनाया एव तत्परिभाषाविषयतया त्यद् तद् इत्यादौ लुकस्त्यदादिकार्यापेक्षया बहिरंगत्वाभावेन तया परिभाषया निर्वोढुमशक्यत्वेनांन्तरंगानपीत्यस्यावश्यकत्वात् ॥ न च इयाय इयेषेत्यादौ गुणवृद्धिभ्यां निमित्तविनाशमुद्भाव्य प्रथमं सवर्णदीर्घाप्रवृत्तिरेतत्प्रयोजनमिति वाच्यम् ॥ वार्णपरिभाषया गतार्थत्वात् ॥ सा च नानया परिभाषया गतार्था, ऊवे ऊवाते इत्यादौ बहिरंगभूतोवङादेशप्रवृत्त्यनन्तरं निमित्तविनाशाभावात् ॥ नचैतत्परिभाषाया अभावे तद्धितविधौ समर्थानामिति व्यर्थमन्तरंगत्वादेव संधिकार्यप्रवृत्तेरिति वाच्यम् ॥ विभिन्नकालप्राप्तिकस्यापि वार्णस्योत्तरकालप्राप्तिकमांगं निवर्तकमित्येवमात्मकस्य वार्णपरिभाषागतस्यांशान्तरस्य ज्ञापनेन चारितार्थ्यात् । अत एवाध्यैयातामित्यत्र लावस्थायामट्युत्तरकालप्राप्तिकेनेयङादेशेनांतरंगस्याटश्चेत्यस्य निवृत्तिः ॥ अकृतव्यूहपरिभाषया तु नात्र निर्वाहः ॥ उत्तरकालप्राप्तिकेयङादेशेन वृद्धिनिमित्तविनाशाभावात् ॥ दीर्घारंभेण चौ प्रत्यंगस्य प्रतिषेध इत्येतद्वचनं प्रत्याचक्षाणस्य भगवतो भाष्यकारस्याप्ययमेवाशय इति युक्तम् ॥ न च विपूर्वादनितेर्विचि भसंज्ञाविषये विन इत्यादावल्लोपप्रयुक्तनिमित्तविनाशसंभावनया पूर्वं यणादेशाप्रवृत्तिरेतत्प्रयोजनमिति वाच्यम् ॥ विचोऽसार्वत्रिकत्वात्तदभिधाने दृढतरमानाभावाच्च । न च वागाशीर्दत्तो वाचिक इत्यत्र संज्ञायामिति ठच् प्रत्यये एकाक्षरपूर्वपदानामुत्तरपदलोपो वक्तव्य इति लोपेन निमित्तभूतपदत्वविनाशं संभाव्य प्रथमतः कुत्वाप्रवृत्तिरेतत्प्रयोजनमिति वाच्यम् ॥ पदावधिकान्वाख्याने त्रैपादिकासिद्धत्वेन लोपात्पूर्वं कुत्वाप्रवृत्त्या निर्वाहात् ॥

एतेन स्रग्विणमाचष्टे स्रजयतीत्यपि व्याख्यातमिति दिक् ॥ नन्वन्तरंगानपि विधीन् बहिरंगो ल्यप् बाधते, पूर्वोत्तरपदनिमित्तकार्यात्पूर्वमन्तरंगोप्येकादेशो नेति परिभाषाद्वयानाश्रयणलाघवानुरोधादकृतव्यूहा इत्येव परिभाषा स्वीक्रियताम् ॥ अस्ति च प्रधाय प्रस्थायेत्यादौ ल्यबादेशप्रयुक्ततकारादित्वरूपहित्वादिनिमित्तविनाशसंभावना, तथा आग्नेन्द्र इत्यादावानङादेशेन स्वप्रवृत्त्यभावसंभावनाप्रयुक्तसवर्णाच्परकात्त्वरूपनिमित्तविनाशसंभावना च, ततश्च तद्विषये प्रकृतपरिभाषया हित्वादिरूपांतरंगनिवृत्तिस्सुकरैवेति कोऽसावस्यां परिभाषायां द्वेष इत्यत आह ॥ **अत एवेति** ॥ पदावधिकेऽन्वाख्याने बहिरंगपरिभाषाया अनित्यत्वादेवाभीष्टसिद्धौ न तयोः परिभाषयोरुपयोगो, नापि प्रकृतपरिभाषाया इति परमार्थः ॥

**॥ इति परिभाषाप्रकरणम् ॥**



## ॥ अथ स्वरसन्धिः ॥

श्री गणाधिपतये नमः ॥ नन्विक्पदोपस्थाप्यानामिकारादीनामण्त्वाविशेषात् सवर्णग्रहणेनैवोपपत्तौ मूलकृतस्तद्वाच्यवाच्यलक्षणायाः क उपयोग इत्यतस्तदावश्यकतायां बीजमाह ॥ **ननु व्यक्तिपक्षे इति** ॥ जातिपक्षे तु सकलसवर्णानुगतायास्तत्तत्सामान्यजातेरक्षरसमाम्नाये निर्देशात्प्रत्याहारग्रहणेषु जात्युपस्थितौ कार्यविरोधादविशेषेण तदवच्छिन्ननिखिलव्यक्तिलाभ इति नाणुदित्सूत्रस्योपयोगो न लक्षणाया इति भावः ॥ **उच्चारित एवेति** ॥ उच्चारणेन श्रावणप्रत्यक्षविषयीकृत एव, न तु तदुपस्थाप्य इत्यर्थः ॥ अत एव ऋगित्युक्ते संपाठमात्रं गम्यते, न तु तदर्थ इति येनविधिसूत्रस्थं भाष्यमपि संगच्छत इत्यपि बोध्यम् ॥ **स्वीयसूक्ष्मोच्चारणेति** ॥ सूक्ष्मत्वं चोच्चारणे स्वेतरश्रावणानुपयोगित्वम् ॥ **[१]अध्याहारस्थलेपीति** ॥ कस्मात्त्वं नद्या इत्यादावागमनादिक्रियायाश्शब्दतोऽध्याहारे चैतत् ॥ अपिशब्दादावृत्तिस्थलपरिग्रहः ॥ यद्यपि अपभ्रंशेषु गाव्यादिषु सादृश्यवशेनोपस्थापितानां साधूनामर्थोपस्थापकता दृश्यते, तथाप्यन्यत्र न तथाविधश्शिष्टानामनुभव इति तात्पर्यम् ॥ **अनन्वय इति** ॥ अयं भावः ॥ प्रत्ययानां प्रकृतिगतवृत्तिजन्योपस्थितिविषयतत्तदर्थान्वितस्वार्थबोधकत्वनियमस्तावदावश्यकः, अन्यथा भूतलादिशब्दात्समवायेनोपस्थितस्याकाशस्यापि तत्प्रकृतिकविभक्त्यर्थान्वयादाकाशे चन्द्र इत्यर्थे भूतले चन्द्र इत्यादिप्रयोगप्रसंगः ॥ प्रत्याहारग्रहणेषु स्वादिभ्य इत्यादिनिर्देशान्यथानुपपत्तिसहकृतेन ग्राहकशास्त्रेणानुच्चारितानामपि प्रत्याहारोपस्थापितानां स्वस्वसवर्णप्रत्यायकतामाश्रित्य विभक्त्यर्थान्वये प्रागुक्तनियमभंगः ॥ लक्षणाश्रयणे तु वृत्त्यात्मकत्वात्तस्याः प्रकृते नान्वयानुपपत्तिः। अत एव द्विरेफशब्दस्य भ्रमरशब्दवाच्ये लक्षणेत्यभियुक्तानां प्रवाद इति ॥ **वृत्तिप्रयोज्येति** ॥ तत्त्वं च वृत्तिजन्योपस्थितिविषयो-

---

१. **अध्याहारस्थलेऽपीतीति** ॥ पुस्तकान्तरे "तत्रापि पुस्तकद्रष्टुः स्वीयसूक्ष्मोच्चारणसत्त्वात् । अध्याहारस्थलेऽप्येवमेवेत्यत आह ॥ प्रत्याहारग्रहणेष्विति ॥" इत्ययं पाठः परिदृश्यते तद्रीत्येदं प्रतीकम् । अधुनातनपुस्तकेषु "तत्रापि पुस्तकद्रष्टुः स्वीयसूक्ष्मोच्चारणसत्त्वादित्यत आह ॥ प्रत्याहारग्रहणेष्विति" इत्येव पाठ उपलभ्यते ।

पस्थाप्यत्वम्[1] ॥ इदन्तु चिन्त्यम् ॥ घटमानयेत्यादौ वृत्तिजन्योपस्थितिविषयघटादिजनकत्वेनोपस्थितकुलालादेरपि समभिव्याहृतक्रियाकर्मत्वाद्यन्वयप्रसंगात् ॥ यदि तु वृत्तीतरसंबन्धजन्योपस्थितिविषयताशून्यत्वं वृत्तिप्रयोज्योपस्थितिविषयत्वमित्युच्यते, तर्हि गगने घनसन्दोह इत्यादावाकाशोपस्थितेर्गगनपदीयवृत्तिजन्यत्वमिव तत्पदीयसमवायजन्यत्वमपीत्यन्वयानुपपत्तिप्रसंग इत्याहुः ॥ **आद्यवर्णेष्विति** ॥ ककारादिचिह्नैराक्षरसमाम्नायिकत्वप्रत्यभिज्ञोपहितैरुच्चारितैः प्रत्याहाराद्यवर्णैस्सादृश्यवशादभेदेन गृहीतेषु तदुपस्थाप्येष्वित्यर्थः ॥ **लक्ष्यतावच्छेदकज्ञानार्थमिति** ॥ स्ववाच्याक्षरसमाम्नायिकवाच्यत्वं च लक्ष्यतावच्छेदकं, तच्च ग्राहकशास्त्रेणाकारादिषु आक्षरसमाम्नायिकवाच्यत्वनिर्णयमन्तरेण दुर्बोधमिति भावः ॥ **स्वसदृशवाच्येष्विति** ॥ एवं च प्रत्याहारग्रहणेषु स्ववाच्यवाच्यलक्षणा प्रातिस्विकग्रहणेषु स्वसदृशवाच्यलक्षणेत्येवं व्यक्तिवादिनामुभयविधा लक्षणेति भावः ॥ नन्वेवं स्वोपस्थाप्यसावर्ण्यमवच्छेदकमाश्रित्यैकैवोभयसाधारणी लक्षणा स्वीक्रियताम् । इत्थं सत्यणुदित्सूत्रमपि लक्ष्यतावच्छेदकज्ञापनाय नापेक्ष्यत इत्यपरमनुकूलमतो लक्षणाद्वैविध्यमयुक्तम् ॥ न चैवं यू स्त्र्याख्यावित्यत्र स्वोपस्थाप्येकारसवर्णस्य शवर्णस्य ग्रहणेन नदीसंज्ञायां दिशे दृशे इत्यादौ आण्णद्या इत्याडागमप्रसंग इति वाच्यम् ॥ नाज्झलावित्यस्य प्रत्याख्यानाय भाष्ये प्रयत्नभेदेनाज्झलोः सावर्ण्याभावबोधनेनादोषात् ॥ न च रदाभ्यामित्यादौ दकाराद्युपस्थाप्यसवर्णानां तत्तद्वर्गीयवर्णानां पंचानामपि परिग्रहे बद्धो बुद्ध इत्यादौ निष्ठानत्वाद्यापत्तिरिति वाच्यम् ॥ कुचुटुतुपूनामुदित्त्वेन सवर्णग्राहकत्वविधानसामर्थ्याद्वर्गपंचकांतर्गतस्य निरुक्तलक्षणागम्यत्वाभावकल्पनेनादोषात् ॥ न च जातिपक्षप्राप्तस्येव लक्षणालब्धस्याप्यप्रत्यय इति विधेयांशे निषेधस्याभीष्टतया तदंशे लक्षणाया अभावादुदित्त्वेन सवर्णग्राहकत्वविधानं सार्थकमिति वाच्यम् ॥ एवमप्युद्देश्यांशे चोः कुरित्यादावुदित्करणेनोक्तार्थकल्पनायां

---

१. **उपस्थाप्यत्वमिति** ॥ इदमयुक्तम् । एतादृशस्योपस्थितावन्वयायोगात् । अतो वृत्तिजन्योपस्थितिविषयज्ञानजन्यत्वमिति निर्वचनीयम् । यदि तु वृत्तिजन्योपस्थितिविषयनिष्ठवृत्तिजन्यत्वं वृत्तिप्रयोज्यत्वमिति विवक्षितं, तदा नोक्तदोषावकाश इति अस्य ग्रन्थस्य चिन्त्यत्वोक्तिरेव चिन्त्या । नचैवं घटशब्दो द्रव्यमिति प्रयोगापत्तिः । कम्बुग्रीवादिमदुपस्थितेः घटशब्दशब्दनिष्ठवृत्तिजन्योपस्थितिविषयघटशब्दनिष्ठवृत्तिजन्यत्वादिति वाच्यम् । तादृशाशयकत्वे शब्दशब्दप्रयोगस्य वैयर्थ्यापत्त्या घटशब्दशब्दप्रयोक्तुः कम्बुग्रीवादिमति तात्पर्याभावकल्पनया दोषाभावादित्यलं विस्तरेण ॥

बाधकाभावादिति चेन्न ॥ ज्ञापकादपूर्ववचनकल्पनापेक्षया लक्षणाभेदे **गौरवाभावात्** ॥ ईदृशार्थकल्पकतया ग्राहकशास्त्रस्य सार्थक्यसंभवे सर्वथा वैयर्थ्यकल्पनाया अयुक्तत्वाच्चेति दिक् ॥ **नादिचीत्येव सिद्धमिति** ॥ नन्वस्यामवस्थायामकारेण नादिचीत्यत्र दीर्घानुपस्थापनात्कथं विश्वपावित्यादौ निषेधसिद्धिरिति चेन्न ॥ अश्च आश्चेति समाहारद्वन्द्वेन दीर्घस्यपि तत्र प्रश्लेष इत्याशयात् ॥ यद्वा विश्वपा इत्यादौ सत्यपि पूर्वसवर्णदीर्घे क्षत्यभावेन नादिचीत्यत्रैव दीर्घग्रहणेन सिद्धे पृथक्सूत्रारंभः प्रकृतार्थज्ञापक इति भावः ॥ स्वसदृशवाच्यलक्षणायां त्वेरनेकाच ओस्सुपीत्याभ्यां प्राप्तस्य यणो न भूसुधियोरिति निषेधो ज्ञापक इति बोध्यम् ॥ **अण्ग्रहणादिति** ॥ अन्यथा ह्यजित्येव ब्रूयात् ॥ **पुनर्वाक्यार्थबोध इति** ॥ अगत्या वाक्यार्थद्वयमेवंविधेष्वभ्युपगन्तव्यमित्याशयः ॥ **स्ववाचकान्वयिनीति** ॥ प्रत्यासत्तेरिति शेषः ॥ **व्यक्तिपक्ष इत्यादि** ॥ संख्याज्ञानाभावो यथासंख्यासम्भवदोषे हेतुः ॥ लक्ष्यासिद्धिश्च दोषान्तरमिति बोध्यम् ॥ लक्षणाश्रयणमूलकपरिक्लेशावहत्वात्सर्वनिर्वाहकत्वाभावाद्भाष्यकारानभिमतत्वाच्च व्यक्तिवादो न युक्त इत्याशयेनाह ॥ **परे त्विति** ॥ **सर्वझकारादीनामिति** ॥ व्यक्तिपक्षे सकलव्यक्त्यनुकरणस्यानंत्यादशक्यत्वेन कस्याश्चिदेव व्यक्तेरनुकर्तव्यतया तथाभूतैकैकव्यक्तिबोधकझलादिपदेन झलो झलीत्यादौ निमित्तनिमित्तिभावेन तकारद्वयाद्युपस्थापनायोगादवात्तामित्यादौ सलोपाद्यनापत्तिरिति भावः ॥ **लक्ष्यतावच्छेदकाग्रहादिति** ॥ नहि तत्र स्ववाच्यवाच्यत्वं स्वसदृशवाच्यत्वं वा संभवत्यणुदित्सूत्रविषयत्वाभावादित्याशयः॥**अर्धजरतीयस्येति**॥ ननु झलादिप्रत्याहारविषयेऽपि स्ववाच्यसदृशलक्षणया सर्वझकारादीनां ग्रहणोपपत्तौ नास्ति जातिनिर्देशावश्यकता, हलो यमामिति यथासंख्येन लोपारंभश्चैतल्लक्षणायां बीजमतः कथमर्धजरतीयत्वम् ॥ न च व्यक्तिवादिनां प्रातिस्विकग्रहणे कस्य च द इत्यादावेकैककाकारादिव्यक्तेस्स्थानित्वेन ग्रहणे व्यक्त्यन्तरे दकाराद्यादेशानुपपत्त्या जातिनिर्देश आवश्यक इति वाच्यम् ॥ विनिगमनाविरहादावृत्त्या तत्तल्लक्ष्यविषयकत्वेन परिकल्पितेषु लक्षणेषु पृथग्विभिन्नानेकव्यक्तिप्रतिपत्त्या निर्वाहादत आह ॥ **अत एवेति** ॥ **जात्याश्रयणमेवेति** ॥ न तु लक्षणाश्रयणमतो भाष्यविरुद्धकल्पना न युक्तेति भावः ॥ ननु जातिपक्षेपि व्यक्त्यानन्त्यस्य तदवस्थतया कथं प्रकृतविषये यथासंख्यमादाय स्थानेन्तरतमसूत्रस्थभाष्यकारोक्ता स्थान्यादेशभावव्यवस्था संगता स्यादत आह ॥ **यथासंख्यसूत्रमिति** ॥ **ऌलुटोरिति** ॥

ऌङ्ऌङुभयसाधारणमनुबन्धविनिर्मुक्तखण्डगतं ऌत्वमेकमिति धर्मसाम्योपपत्तिः ॥ समूलाकृतजीवेष्वित्यादौ तु तत्तद्धर्मानुगतानां व्यक्तीनां साम्यं द्रष्टव्यम् ॥ **ऌत्वादिजातेरिति** ॥ अत्रादिपदप्रयोजनं चिन्त्यम्[1] ॥ ऋवदिति षष्ठ्यन्ताद्वतिः, उपमेये षष्ठीदर्शनात् ॥ ऋकारस्य यथा ऋत्वजातिप्रयुक्तं कार्यं भवति तद्वद्ऌकारजातीयस्यापीति तदर्थः ॥ सत्यपि सावर्ण्यवचने ऋकारस्य ऌकारसावर्ण्यप्रयुक्तं कार्यमनित्यत्वादनिष्टमिति भावः ॥ **अनित्यत्वावश्यकत्वादिति** ॥ यद्यपि ऌकारस्य ऌकार इति तद्विषयकत्वेनोपप्लुतलक्षणस्यानवकाशत्वादातिदेशिको रेफादेशो बाध्यत इति वक्तुं शक्यम्, तथाप्युपायान्तरमिदं बोध्यम् ॥ **वाक्यभेदेनेति** ॥ उदिदंशे तदसंबन्धः । विधेये चोः कुरित्यादौ उदित्करणवैयर्थ्यात् ॥ प्रसज्यप्रतिषेधश्चायं प्रत्ययादिर्भाव्यमानस्सवर्णग्राहको नेति तदर्थः ॥ इदं व्यक्तिवादिनामप्यावश्यकं, गुणाभेदकत्वप्राप्तसवर्णग्रहणवारणार्थमिति बोध्यम् ॥ ननु विधेयांशे जातिग्रहणनिषेधे यण्ग्रहणस्यैकैकयकारादिव्यक्तिबोधकत्वादेकैकेनैव यकाराद्यादेशेनैकत्र प्रवृत्तेन रमा रोपधयोरिव सर्वस्याच्परकेत्वादिजात्यवच्छिन्नस्य निवृत्तिप्रसंगः ॥ न च तत्तल्लक्ष्यव्यक्त्यनुरोधादुपप्लुतेषु विभिन्नेषु लक्षणेषु पृथग्यकाराद्युपस्थितौ प्रत्येकमादेशप्रवृत्त्या निर्वाह इति वाच्यम् ॥ संग्राहकवाक्यगतस्य यण्पदस्याक्षरसमाम्नायगृहीतैकैकयकारादिव्यक्त्युपस्थापकतया तदुपप्लुतेषु लक्षणेषु तदितरव्यक्त्युपस्थितेरनौचित्यात् ॥ अत्राहुः ॥ अप्रत्यय इत्यनेन विसदृशानेकव्यक्त्यनुगतसामान्यजातेरेव निषेधो न तु वर्णसमाम्नायगृहीतव्यक्तिसदृशानेकव्यक्तिगतविशेषजातेरन्यथा विधेयभूतानामादेशानामसति बाधके स्थानिसदेशत्वनियमादेकैकस्य यकराद्यादेशस्यानेकलक्ष्यसमवायासंभवाच्छास्त्रानर्थक्यमेव स्यात् ॥ व्यक्तिवादिनामपि विभिन्नश्रुतिकसवर्णग्रहणस्यैव निषेधो, न तु समानश्रुतिकस्येत्यभ्युपेयमेवेति नेदमपूर्वमिति जातिवादिनः ॥ **फलाविशेष इति** ॥ गुणाभेदकत्वेन जातिपक्षेण वा विधेयांशे सानुनासिकस्य ग्रहणे स्थानेन्तरतमपरिभाषया स्वौजसमौडित्यादौ सानुनासिकोकारादेस्तत्प्रवृत्त्या यथासंख्यसूत्रेण तन्नियमाप्रवृत्त्या च तयोः परिभाषयोः फलविशेषे भाष्यासंगतिरिति भावः ॥ **नव्यानामिति** ॥ किम्वितीत्यत्र सानुनासिकदीर्घोकारादेशपक्षे स्थानिवद्भावात् उन्त्वमादाय मय उञो वो वेति सानुनासिको वकार

१. **चिन्त्यमिति** ॥ अस्य ग्रन्थस्य परममूलोक्तदूषणोद्धारपरतया ऋत्वजातेः ऌकारे अभावबोधनार्थमादिग्रहणस्यावश्यकतया चिन्त्यतोक्तिरेव चिन्त्येति बोध्यम् ।

इत्याचक्षाणानां दीक्षितादीनामुक्तरीत्या प्रमाद एवेत्यर्थः ॥ ननु व्यक्तिपक्षेऽपि सादृश्यवशेन तिरस्कृतभेदानामनेकव्यक्तीनामेकरूपेणानुकरणे भवति झलादिप्रत्याहारेषु बोद्धॄणां सकलझकारादिप्रतिपत्तिरिति किं जातिपक्षावलंबेनेत्याशयेन शंकते ॥ **नचेति** ॥ **युक्तत्वादिति** ॥ ननु भवतु जातिपक्षवदणुदित्सूत्रगतस्याण्ग्रहणस्य वैयर्थ्यम्, लक्षणानाश्रयणं च, का क्षतिरत आह ॥ **तदप्युक्तमिति** ॥ पक्षान्तरत्वेन भाष्यकारैरिदमुपक्षिप्तमेवेति नापूर्वमिति तात्पर्यम् ॥ नन्वित्थं जातिव्यक्तिपक्षयोरुभयोरपि वैयर्थ्यादण्ग्रहणं कुर्वतस्सूत्रकारस्याभिप्रायो दुर्निरूप इत्यत आह ॥ **अण्ग्रहणं त्विति** ॥ **इदमेवाभिप्रेत्येति** ॥ केचित्तु वर्णसमाम्नाये जातिनिर्देशे रूपसामान्यानुकरणे वा तात्पर्यग्राहकमाचार्यस्याणुदित्सूत्रस्थमण्ग्रहणम्, अन्यथा तात्पर्यापरिज्ञानात्तदुभयमप्ययुक्तमेव स्यात् ॥ अणुदित्सूत्रस्थादण्ग्रहणाच्च न जातिरूपसामान्ययोः प्रतिपत्तिः ॥ तत्काले तात्पर्यग्राहकाभावेन वाक्यापरिसमाप्तिन्यायात् ॥ न चैवमादिरन्त्येनेत्येतच्छास्त्रीयवाक्यार्थकालेपि तात्पर्यग्राहकाभावादुक्तन्यायेन जात्यादिनिर्देशस्यदुर्ज्ञेयतया सकलव्यक्तिषु शक्तिग्रहविरोध इति वाच्यम् ॥ अणुदित्सूत्रैकवाक्यतापन्नस्यादिरन्त्येनेत्यस्य वाक्यार्थवेलायां तात्पर्यग्राहकाभावेन जातिरूपसामान्यावच्छिन्नयोरण्पदीयशक्तिग्रहस्य दुर्वचत्वेप्यन्यत्र इको यणचीत्यादिशास्त्रैकवाक्यतापन्नतदीयवाक्यार्थवेलायां तात्पर्यग्राहकस्य सुलभतया तत्तज्जात्यादिविशिष्टस्य सकलव्यक्तिष्वभीष्टस्य शक्तिग्रहस्य सुवचत्वात् ॥ तस्मादुक्तार्थतात्पर्यग्राहकमण्ग्रहणं न तूपायान्तरपरमिति प्रत्याचक्षाणस्य भाष्यकारस्यात्र तात्पर्यमुन्नेतुं युक्तमित्याहुः ॥

**नित्यनिषेध इति** ॥ दीर्घादाचार्याणामित्यनेनेति शेषः ॥ पूर्वत्र प्रसज्यप्रतिषेधपरस्यानुवृत्तस्य पर्युदासपरत्वे शब्दाधिकाराश्रयणं क्लेशः ॥ **इदमपीति** ॥ अनचीत्यादिसूत्रबोधितद्वित्वविकल्पघटकस्याभावांशस्य यथा सर्वत्र शाकल्यस्येति प्रपञ्चस्तथा दीर्घादाचार्याणामित्येतदपीति तदर्थः ॥ दीर्घादाचार्याणामित्यस्य निषे-

---

२. **आहुरिति** ॥ परे तु जातिनिर्देशे तात्पर्यग्राहकापेक्षायामादिषट्सूत्र्यां तादृशस्याण्ग्रहणस्य सत्त्वेऽप्यन्यत्र तात्पर्यग्राहकाभावात्तत्र जात्याश्रयसकलव्यक्तिप्रतिपत्तिर्न स्यात्। यदि तत्र तात्पर्यग्राहकमन्यत्कल्प्यते तदा स्वादिभ्य इत्यादिनिर्देशा एवात्रापि तात्पर्यग्राहकत्वेन गृह्यन्तामिति किमण्ग्रहणेन। किञ्चाण्ग्रहणस्यैतत्र जातिनिर्देशे तात्पर्यं नास्तीत्यस्याप्यापत्त्या महदनिष्टं स्यात्। तस्मादण्ग्रहणाकरण एव भाष्यतात्पर्यं न तु तात्पर्यग्राहकत्व इति युक्तमुत्पश्यन्तु। विस्तरस्तु गुरुप्रसादतोऽवसेय इत्याहुः।

धपरत्वे प्रमाणत्वेन प्राचीनोद्भावितं हरदत्तग्रन्थतात्पर्यमयुक्तमिति खण्डन्नाह ॥ **यत्त्वित्यादि ॥ आवश्यकत्वादिति ॥** प्राप्तिपूर्वकत्वान्निषेधस्य वैकल्पिके नित्ये वा तस्मिन् प्राप्त्याकांक्षाया नियतत्वात्त्रिप्रभृतिषु सर्वत्रेत्यनयोरपि सूत्रयोस्संदंशन्यायेन प्राप्त्युद्भावनतात्पर्यस्य कल्पनीयतया न त्वदभीष्टसाधकतात्पर्यकल्पनावकाश इति भावः ॥ ननु प्रकरणोच्छेदेन नञस्संबन्धाभाव एव तात्पर्यं किं न स्यादत आह ॥ **मध्ये नञ् इत्यादि ॥** किंच सर्वत्रेत्यत्र तदनुद्भावनस्याभिप्रायान्तरमित्याह ॥ **सर्वत्रेति ॥ द्वित्वमात्रेति ॥** प्राप्तिविशेषविवक्षायामाकांक्षावशात्तदुद्भावनापेक्षा, तदविवक्षायां तु निषेधेन निर्ज्ञातायाः प्राप्तेरनाकांक्षितत्वादनुद्भावनमेवोचितमित्याशयः ॥ **द्विर्वचनाभाव इति ॥** नकारषकारयोरनचीत्यनेनैव हि द्वित्वप्राप्तिरिति तदुद्भावनं ध्वनितमिति तात्पर्यम्। मिश्रग्रन्थेनेत्यस्य हरदत्तग्रन्थेनेत्यर्थः ॥ वस्तुतस्त्वदुक्ततात्पर्यमलीकमेव मूलशैथिल्यादित्याह ॥ **अनुपलंभाच्चेति ॥ दिगिति ॥** तदर्थस्तु भाष्योदाहरणोपपत्त्यर्थं दीर्घादाचार्याणामित्यत्रानचीत्यस्य पर्युदासपरतया संबन्धे सर्वत्रेत्यत्रापि तत्संबन्धापत्तिः ॥ इष्टापत्तौ चार्कौ ब्रह्मेति वृत्तिकारोक्ततदीयोदाहरणासंगतिः ॥ असंबन्धे मण्डूकप्लुत्यापत्तिः। स्वरितत्वे मानाभावादनुवृत्त्यसंगतिश्चेति ॥

**अत्रादिपातामिति ॥** वाद संशब्दन इति चुरादेस्स्वरितत्वबलाद्विकल्पितणिचो णिजभावे लुङ्यातांप्रत्यये रूपं द्रष्टव्यम् ॥ अत्रार्धधातुकत्वानतिदेशादिडागमो न स्यात् ॥ **मा हि दर्शदिति ॥** अङः प्रत्ययत्वानतिदेशे दृशेस्तन्निरूपितांगत्वाभावेन गुणानुपपत्तिः। गुणविधिश्च भिदाद्यङि चरितार्थो दर्शादृष्टेति दर्शनात् ॥ **असंग्रह इति ॥** ईट इट्त्वमिट ईटीति सलोपार्थम् ॥ नन्वर्थवतामादेशानामिदं परिगणनमिति तदाशयः, अत एव विसर्गादेशस्य रुस्थानिकस्य परिगणनाभावस्संगच्छत इत्यत आह ॥ **इदमुपलक्षणमिति ॥** यत्तु सर्वनामस्थानविवक्षायां पुंसो विधीयमानेनासुङादेशेन कल्पितस्य प्रातिपदिकादेशस्यानुमानिकस्यासंग्रहोऽत्र पक्षे दोष इत्याहुस्तत्पाक्षिकं, व्युत्पत्तिपक्षे कृदादेशेन गतार्थत्वात् ॥ कथमन्यथा बहुपुंसीत्यत्र ङीप् स्यात् ॥ नन्वव्ययस्य पदात् पृथग्ग्रहणवैयर्थ्यस्य पक्षद्वयसाधारणस्योदाहरणपक्षैकविषयत्वेन तदापादनं नोचितमित्याशंक्याह ॥ **अत्रास्यैवेति ॥** परिगणनपक्षे दोषांतरसमुच्चितोयं दोषः ॥ इह त्वयमेवेति विशेषादेवमापादनमिति

भावः ॥ लुका लुप्तत्वेन चेति ॥ इदमंगसंज्ञायामपि न लुमतेति निषेधप्रवृत्तिरित्यभिमानेन ॥ वस्तुतस्तृज्वत्सूत्रे भाष्ये स्त्रियां चेत्यस्य स्त्रीप्रत्यये परत इत्यर्थे पञ्चभिः क्रोष्ट्रीभिः क्रीतैः रथैः पञ्चक्रोष्टृभिरित्यत्र आर्हीयस्य ठकोऽध्यर्धेत्यादिना निर्वृत्तं लुकमाश्रित्य लुक्तद्धितलुकीति स्त्रीप्रत्ययलुकि न लुमतेतिनिषेधात्प्रत्ययलक्षणाप्रवृत्तौ तृज्वत्त्वाप्रवृत्तिरित्याशंक्याभिहितम् ॥ एवं तर्हि न चापरं निमित्तमाश्रीयते अस्मिन्परतः क्रोष्टुः तृज्वदिति, किं तर्हि, अङ्गं क्रोष्टुस्तृज्वत् अंगसंज्ञा च भवति प्रत्ययलक्षणेनेति ॥ क्रोष्ट्रीत्यत्र गौरादिङीष्यंगत्वे तृज्वत्वमिति तदाशयः ॥ एवं चोक्तनिषेधस्यांगसंज्ञायां प्रवृत्तिरयुक्ता ॥ न लुमतेत्यस्य च लुमच्छब्दप्रयोज्यलोपविषयीभूतप्रत्ययनिरूपितांगसंज्ञावदुद्देश्यकं तथाविधप्रत्ययनिमित्तकं कार्यमांगमनांगं वा नेत्यर्थः॥ स्पष्टं चेदं तत्रैव सूत्रे कैयटे। ततश्चाव्ययानामंगत्वाप्राप्तौ न प्रत्ययलक्षणाभावो हेतुरपि तु फलाभाव एव॥ इदं च कार्यकालपक्षानुरोधेन, यदि त्वाकडारीयसंज्ञासु कार्यकालत्वायोगाद्यथोद्देशे भविष्यति किंचित् प्रयोजनमित्यभिसंधिना प्राक्प्रवृत्तायास्संज्ञायास्सुब्लुगुत्तरमनुवृत्तेरव्याघाताच्च भवत्यंगग्रहणेनाव्ययानां संग्रहः। किंचाङ्गग्रहणेनाव्ययसंग्रहाभावे प्राचीनानामपदिशमपदिशेनेत्यादौ टाङिप्रत्ययप्रग्वर्त्यदन्तभागस्य पदत्वाभावादलौकिकवाक्यादेशस्य सुब्लुग्घ्रस्वविधानाभ्यां कल्पितस्य स्थानित्वेनाव्ययीभावत्वमादायोपपादनीयस्य तृतीयासप्तम्योर्बहुलमित्यस्याप्रवृत्तेरव्ययग्रहणस्यावश्यकतया पदग्रहणेन तद्वैयर्थ्यापादनमयुक्तमेव ॥ अलौकिकवाक्यस्यांगत्वं तु पदावधिकमन्वाख्यानमाश्रित्य समर्थयितुं शक्यमतो नात्रारुचिसंभव इत्याहुः ॥ निघातार्थमिति ॥ उपर्युपरिगच्छति परिपरिवर्षतीत्यादौ ॥ यदि च द्विष्प्रयोगद्विर्वचनपक्षेणेदं गतार्थं, स्थानेद्विर्वचनपक्षेपि सर्वस्य द्वे इति द्विवचननिर्देशबलादनस्तमितावयवधर्मकस्यैवादेशत्वमत एवाधोऽध इत्यादावेङः पदान्तादित्यादेः प्रवृत्तिरित्यवयवपदत्वेन निर्वाह इत्युच्यते, तर्हि उच्चै नीचैरित्यादौ र्वन्तस्य विसर्गार्थमिति बोध्यम् ॥

---

१. वस्तुत इति ॥ अत्रेदं तत्त्वम्। न लुमता तस्मिन्निति वार्तिककृतन्यासान्तरेऽङ्गसंज्ञाया अपि निषेधलाभेन तदेकवाक्यतया तत्प्रत्याख्याने फलैक्याय च सूत्रमतेऽपि अङ्गसंज्ञाया अपि तन्निषेध इष्ट एव। स्पष्टं चेदमुद्योते। अङ्गसंज्ञाया न निषेध इत्यन्यत्रोक्तिस्तु प्राचामनुरोधेनैवेत्यादि भावप्रकाशोक्तसरण्याश्रयणे तु नात्राभिमानोद्भावनप्रसक्तिरिति ॥

मानाभावादिति ॥ इदं तु चिन्त्यम्[1] ॥ अर्थवत्त्वमानुमानिकस्थान्यादेशभावप्रतिपादने मानं तच्चात्र क्त्वाया इव विशिष्टस्यापि अक्षतमेवेति तत्कल्पने बाधकाभावात् ॥ आवश्यकं चेदमानुमानिकस्थान्यादेशभावकल्पनमर्थवदव्ययकसंघातस्यापि ॥ अन्यथा वाप्यामश्वो वाप्यश्व इत्यादौ सुब्लुगुत्तरं विशिष्टस्य समासत्वानुपपत्त्या शाकल-प्रतिषेधानापत्तेः ॥ वीवधशब्दे विवधशब्दत्वानुपपत्तौ विभाषा विवधादिति ठन्वि-कल्पानुपपत्तेश्च समो वा हिततत्तयोरिति लुप्तमकारकस्य सहितशब्दस्य सूत्रस्थेन संहितशब्देन ग्रहणमास्थाय सहितसहाभ्यामिति वार्तिकस्थस्य तस्य प्रयोजनान्तरोप-पादनपरसकलग्रन्थोच्छेदापत्तेश्च । तस्मात् क्त्वान्तस्य सगतिकस्य प्रस्तुत्येतिविशिष्टा-देशकल्पनं प्राचीनानां युक्तमेव, परं तु सुब्लुगर्थमपेक्षितमव्ययत्वमंगादेशत्वेनैव सिद्ध्यतीति नेदमव्ययादेशग्रहणप्रयोजनमिति वक्तुं युक्तमित्याहुः ॥ **विशिष्टं किमर्थ-मिति प्रश्न इति** ॥ एवं हि सति अतिदेशस्य कार्यार्थित्वेन विधावित्यस्याक्षेपतो लाभादल इत्युक्तावप्यल्संबन्धिनि विधौ नेत्यर्थो लभ्यत इति व्यर्थं विधिग्रहणमित्या-शयकस्य प्रश्नस्य षष्ठीनिर्देशे स्थानेयोगत्वस्य न्याय्यत्वादल इत्युक्ते तत्स्थानिके विधावित्येवार्थस्स्यात् ॥ विधिग्रहणे तु सामर्थ्यात्समासचतुष्टयलभ्यार्थनिर्वाहकसंबन्ध-सामान्यषष्ठ्या समासस्य मध्यमपदलोपिनो वा तस्य लाभेनाभीष्टसिद्धिरित्याशयकं वक्ष्यमाणमुत्तरमुपपद्यते ॥ यथाश्रुते तु प्रश्ने कस्मिन्नपि विधौ निषेधाभावादनेकेषु विधिषु निषेधार्थमित्युत्तरमयुक्तमेव स्यादित्याशयः ॥ **निषेधादिति** ॥ अड्व्यवाये णत्वे अन्यव्यवाये प्रतिषेध इति वार्तिकप्रत्याख्यानोपायतया व्यवाय इति पृथग्विधिस्वी-कारादविशेषतः प्राप्तस्य णत्वस्य अट्कुप्वाङ्नुमित्यनेन नियम इति भाष्यकारोप-वर्णितपक्षान्तराभिप्रायकमेतत् ॥ **विशेषधर्म इति** ॥ ततश्च सामान्यधर्मातिदेशसंभवे विशेषधर्मो नातिदेष्टव्य इत्यर्थकेन सामान्यातिदेशे विशेषानतिदेश इत्यनेन स्थानिगतं हल्त्वादिकमपहाय वत्वातिदेशस्यायुक्तत्वादिदमुदाहरणं न युक्तमिति भावः ॥ **उपात्तधर्मापेक्षयेति** ॥ अतिदेशविधिगृहीततद्व्यापकैतदुभयधर्मातिदेशेन कृतार्थस्य

---

१. **चिन्त्यमिति** ॥ वस्तुतः प्राचीनग्रन्थस्य स्थानिवद्भावप्रयोज्यशास्त्रविहित-कार्यप्रयोजकादेशप्रदर्शनपरतया प्रकृते विशिष्टादेशकल्पनामन्तरापि तुगर्थमावश्यकेन श्रौतस्थान्यादेशभावप्रयुक्तस्थानिवद्भावेन कृत्त्ववत् क्त्वान्तस्यापि लाभेन क्त्वान्तत्वेनैवाव्य-यत्वस्य सिद्धौ विशिष्टस्थान्यादेशभावकल्पने मानाभाव इति मूलकारस्याशयेन अस्य चिन्त्यतोक्तिरनुचिता । एतत् ध्वननायैव मूले “ अत एवात्र तुगित्युक्तमित्यवधेयम् ।

विधेरनुपस्थितव्याप्यधर्मातिदेशे न प्रवृत्तिरिति न्यायशरीरम् ॥ इह च स्थानिताया अतिदेशे प्रयोजनाभावाद्विशेषपरतया कल्पितेन लक्षणेन तत्तदादेशविधिगृहीतानां स्थानितावच्छेदकीभूतानां तद्व्यापकीभूतानां च धर्माणामतिदेशो यथा हन्वद्वधिरित्यनेन वधादेशे हन्त्वधातुत्वयोः। इत्थं च द्युकाम इत्येतल्लक्ष्यानुरोधेन कल्पिताद्वकारवदुकार इति लक्षणाद्वत्युकारे वत्वातिदेशो, न चायं गृहीतधर्माद्विशेषधर्म इति भावः॥ ननु सत्यपि लक्षणोपप्लवे हल्वदुकार इत्येव किं न स्यादत आह॥ सूत्रक्लृप्तेति ॥ यद्विषयकत्वेनातिदेशलक्षणोपप्लवकल्पनेच्छा तद्विषयकत्वेनोपप्लुतादेशविधायकशास्त्रीयलक्षणगृहीतस्थानितावच्छेदकधर्मपुरस्कारेणैव प्रत्यासत्त्या तत्कल्पनमिति भावः ॥ यद्यपि स्थानिवद्भावविषये न ल्यपीति ज्ञापकसिद्धया प्रदीव्येत्यादौ क्त्वातिदेशनिमित्तकस्य गुणनिषेधादेः प्रवृत्त्यर्थमावश्यक्या न्यायाप्रवृत्त्या प्रकृतोदाहरणोपपत्तिः, तथापि स्वत एव न्यायाप्रवृत्त्युपायसंभवे ज्ञापकसिद्धतदप्रवृत्तिपर्यन्तानुधावनमयुक्तमिति तात्पर्यम् ॥ कविष्ट इति स्यादिति ॥ न चास्यामवस्थायां हलि सर्वेषामित्यस्य प्रवृत्त्या वकारघटितमपि दुर्लभमिति वाच्यम्॥ भो इत्यादिपूर्वकस्य वकारस्यासंभवात्तत्साहचर्येणावर्णपूर्वकस्यापि यकारस्यैव तेन लोपो न वकारस्येत्याशयात् ॥ स्थानिरूपोपीति ॥ ननु जग्धिविधौ ल्यब्ग्रहणान्निषेध्यकोटिघटकस्यालः स्थान्यवयवरूपत्वेन भवतु विवक्षा, स्थानिरूपत्वेन तद्विवक्षायां किं प्रमाणमत आह ॥ अत एवेति ॥ आदेशिन्यलीति ॥ तत्र ह्यवयविनोऽधिकरणत्वविवक्षया वृक्षे शाखेतिवत् या सप्तमी तदन्तस्य समानाधिकरणस्य सप्तम्यन्तस्य च तन्त्रेण निर्देशः ॥ स्थानी चादेशशब्दप्रकृतिकमत्वर्थीयेनोच्यते ॥ ततश्च स्थानिभूते स्थान्यवयवभूते वा वर्णे स्वीक्रियमाणे यो विधिस्तत्र प्रतिषेधः स्थानिवद्भावस्येति तदर्थः ॥ अत एव तुक्यसिद्धवचनं चरितार्थम् ॥ स्थानिभूतालाश्रयविधौ प्रतिषेधाभावे च सवर्णदीर्घोत्तरमधीत्येत्यादौ स्थानिवत्त्वेन ह्रस्वत्वमाश्रित्य तुको निर्बाधत्वात्तद्वैयर्थ्यं स्पष्टमेव ॥ यदि तु स्थान्यवयव इत्यत्र व्यपदेशिवद्भावेन स्थानिरूपोऽपि विवक्ष्यत इत्युच्यते, तर्हि उपलक्षणतया व्याख्यानं नातीवोपयुज्यत इति बोध्यम् ॥ अतः प्रत्ययत्वमिति ॥ तद्व्याप्यमुप्तमित्यर्थः ॥

अत्र प्राञ्चः॥ अनल्विधावित्यत्राल्पदमल्वृत्तिधर्मपरं विधिग्रहणबलाच्च अलाश्रयो विधिरल्विधिरिति मध्यमपदलोपी समास आश्रितो भाष्ये, तेन साक्षात् परंपर-

या वा तदाश्रयणे निषेधः ॥ अल्वृत्तिधर्मश्च प्रत्यासत्त्या स्थानिवद्भावप्रयोज्यः अल्मात्रवृत्तिश्च विवक्षितः ॥ ततश्च स्थानिवद्भावप्रयोज्याल्मात्रवृत्तितद्घटितैतदन्यतरधर्मनिमित्तकविधौ प्रतिषेध इति निष्कर्षः ॥ स्थानिवद्भावप्रयोज्याल्मात्रवृत्त्यच्त्वनिमित्तकस्सुध्युपास्य इत्यादौ द्वित्वनिषेधः ॥ प्रपठ्येत्यादौ च तथाविधोऽल्मात्रवृत्तिवल्त्वघटितो वलादित्वरूपो यो धर्मस्तन्निमित्तक इड्विधिरिति निषेधसिद्धिः ॥ तत्र स्थानिवद्भावप्रयोज्यत्वविशेषणाद्धातोर्द्वित्वे ह्रस्वोत्तरमुरदत्त्वे स्थानिवद्भावादभ्यासत्वम् ॥ बभूविवेत्यादौ वसाद्यादेशानां वलादित्वप्रयुक्तेडागमविधौ निमित्तभूतमार्धधातुकत्वं च सिध्यति॥ अल्मात्रवृत्तित्वविशेषणं तु तत्रैवाभ्यासत्वार्धधातुकत्वयोः क्वचिदल्वृत्तित्वेप्यतिदेशसंपत्त्यर्थम् । न चातिदिश्यमानधर्मेष्वल्मात्रवृत्तित्वनिवेशे भोभगो इति सूत्रस्थभाष्यविरोधः॥ तत्र ह्यश्ग्रहणस्य प्रयोजनप्रतिपादनावसरे वृक्षस्तत्रेत्यादौ यत्वस्यासिद्धत्वात् पूर्वं विसर्गप्रवृत्तावपि स्थानिवत्त्वेन रुत्वमाश्रित्य प्रवृत्तस्य यत्वस्य निवृत्तिस्तत्प्रयोजनमित्युपन्यस्य अल्विधित्वेन स्थानिवत्त्वाप्रवृत्तेर्नैतत् प्रयोजनमित्युक्तम् । रुत्वात्मकस्य संघातधर्मस्यानुबन्धविनिर्मुक्ते रेफेप्युपलंभेनाल्वृत्तित्वेपि तन्मात्रवृत्तित्वाभावात्तदसंगतिरिति वाच्यम् ॥ तादृशभाष्यस्यैकदेश्युक्तित्वेन तद्विरोधस्याकिंचित्करत्वात् ॥ अत एवातो लोप इति सूत्रे भाष्ये ण्यल्लोपावियङ्यण्गुणवृद्धिदीर्घेभ्यः पूर्वविप्रतिषेधेनेति वार्तिकमुपक्रम्य णिलोपांशे फलीभूतान्युदाहरणान्युपन्यस्य स तर्हि पूर्वविप्रतिषेधो वक्तव्यो न वक्तव्यः, सन्त्वत्रैते विधयः ॥ एतेषु कृतेषु स्थानिवद्भावाण्णिग्रहणेन ग्रहणाल्लोपो भविष्यतीत्युक्तम् ॥ को हि रुत्वणित्वयोर्भेदः ? । येन रुत्वनिमित्तकयत्वस्याल्विधित्वं णित्वनिमित्तकलोपस्यानल्विधित्वं च व्यवस्थाप्येत ॥ किं च स्थानिवद्भावप्रयोज्यधर्मेऽल्मात्रवृत्तित्वनिवेशाभावे धातुत्वांगत्वादीनामपि क्वचिदल्वृत्तित्वेन प्रकृतनिषेधादतिदेशाप्रवृत्तावस्त्यादेशे बभूवेत्यादौ धातुत्वनिबन्धनो द्वित्वादिः, किमादेशे काभ्यामित्यादावङ्गत्वनिबन्धनस्सुपि चेति दीर्घश्च न स्यादिति महदनिष्टमापद्येत॥ तस्मादतिदिश्यमानधर्मस्याल्मात्रवृत्तित्वविशेषणमावश्यकमेवेत्याहुः ॥

अत्रेदं वक्तव्यम् ॥ भोभगो इति सूत्रस्थस्य सिद्धान्तिसम्मतभाष्यस्यैकदेश्युक्तित्वं तावदयुक्तम्, विना विरोधमृषिवाक्यानामेकदेश्युक्तित्वकल्पनाया अनौचित्यात्॥ न च णित्वप्रयुक्तलोपस्याल्विधित्वाभावोपपादनपरनिरुक्तषाष्ठभाष्यविरोधस्त-

त्कल्पक इति वाच्यम् ॥ कारणा कारक इत्यादौ गुणवृद्ध्योः कृतयोरंगत्वादच्कार्यापेक्षया प्रथमं णिलोपप्रवृत्त्या निर्वाहेऽप्यततक्षदित्यादौ णेरियङादेशोत्तरं स्थानिवद्भावेन णित्व-बुद्ध्या प्रवर्तिष्यमाणस्य लोपस्यालोन्त्यपरिभाषया यकारमात्रस्य प्रवृत्तौ फलविरोधेन णिलोपांशे पूर्वविप्रतिषेधारंभप्रत्याख्यानपरस्य तादृशभाष्यस्यैकदेशयुक्तिताया निर्वि-वादत्वेन तद्विरोधस्य तत्कल्पकत्वायोगात् ॥ न च निर्दिश्यमानपरिभाषया ण्यन्तांगावयवस्य निर्दिश्यमानस्य णेरित्यर्थे णिशब्दस्येत्संज्ञकणकारवदिकार-बोधकत्वेन तदुत्तरषष्ठ्यास्समुदायबोधकशब्दोत्तरत्वाभावेन प्रवृत्तिबीजाभावादलोन्त्य-परिभाषाया अप्रवृत्त्या निर्वाह इति वाच्यम् ॥ अततक्षदित्यादिलक्ष्यविषयकत्वेनोप-प्लुतलक्षणघटकणिशब्दस्यारोपविषयीभूतणित्वविशिष्टसंघातबोधकतया तदुत्तरषष्ठ्या वस्तुतस्समुदायबोधकशब्दोत्तरत्वेन निरुक्तपरिभाषाप्रवर्तकत्वे बाधकाभावात् ॥ न च तद्भाष्यस्येयङ्व्यतिरिक्ते णिलोपांशे पूर्वविप्रतिषेधवचनप्रत्याख्यानपरतया नास्त्यनु-पपत्तिरिति वाच्यम् ॥ ईदृशसंकोचस्य तत्रत्यभाष्याक्षराननुगुणत्वात् ॥ किं चावि-शेषेणातिदिश्यमानधर्मस्याल्मात्रवृत्तित्वविवक्षायां धिन्वंतीत्यादावुप्रत्ययस्थानिकस्य वकारस्य स्थानिवद्भावादार्धधातुकत्वं स्वतो वलादित्वं चाश्रित्येडागमापत्तिर्दुर्वारा ॥ चिकीर्ष्वोरित्यादावुक्तरीत्या तदापत्तिस्तु नापाद्या, नेड्वशीति निषेधात् ॥ न च धिन्वन्तीत्यादावप्यचः परस्मिन्नपरविधाविति न्यासेन स्वविधावपि स्थानिवद्भावादि-डागमाभावो भाष्ये साधित एवेति नायमापत्तिविषय इति वाच्यम् ॥ तद्भाष्यस्या-यन्नासन्नित्यसिद्धवत्सूत्रसिद्धलक्ष्यसमर्थनोपायान्वेषणपरत्वात्, बेभिदि ब्राह्मणकुला-नीत्यादौ स्थानिवत्त्वेनाजन्तलक्षणस्य नुमो दुर्वारत्वाच्च पूर्वपक्ष्युक्तित्वेन लक्ष्यसाध-कत्वायोगात् ॥ न च कैयटोक्तरीत्या पंचमीसमासमाश्रित्य स्थानिवद्भावादिडागमा-भावस्सुकर इति वाच्यम् ॥ षष्ठीसमासपक्षैकवाक्यतया पंचमीसमासपक्षेपि स्वाति-रिक्तविधावेव स्थानिवत्त्वस्य न्याय्यतया तत्पक्षावलंबेन कैयटस्योक्तदोषनिवारणा-संभवात् ॥ अत एव धिन्वन्तीत्यादावपरविधाविति न्यासांतरेणायं दोषः परिहृतो भाष्ये, न तु पंचमीसमासपक्षेण ॥ किं च पञ्चमीसमासेन स्वविधावपि स्थानिवत्त्वाभ्युप-गमे एतीति यन् न यन् अयन्नित्यत्र इणश्शतरि यणि स्थानिवत्त्वेन तस्मान्नुडचीति नुट्प्रसंगः ॥ ततश्च प्रमाणवैकल्याल्लक्ष्यविसंवादाच्च सोऽयमनुचितः पन्थाः ॥ किन्तु तन्त्रन्यायेन अल्मात्रवृत्तिधर्मावच्छिन्नस्थानिता (वद्वृत्तिः स्थानिसंबन्ध्यल्वृत्तिः तद्घटितो वा स्थानिवद्भावप्रयोज्यो यो धर्मस्तद्धर्मावच्छिन्ननिमित्तताकविधौ स्थानि-

वद्भावो नेत्युभयथा तदर्थोऽत्रावश्यमभ्युपगन्तव्यः ॥ स्थानितायामल्मात्रवृत्तिधर्मावच्छिन्नत्वं च एकत्वमात्रावच्छिन्नाल्त्वावच्छिन्नपर्याप्तिकाधारतानिरूपकधर्मावच्छिन्नत्वं, न तु अलितरावृत्तित्वे सत्यल्वृत्तियों धर्मस्तद्धर्मावच्छिन्नत्वम् ॥ तेन जराया जरस् हनो वध लिङीत्यादौ स्थानितावच्छेदकीभूतजरात्वहन्त्वादेरानुपूर्वीविशेषात्मकस्याल्मात्रवृत्तित्वेपि स्थानिवत्त्वेनाङ्गत्वधातुत्वादेरतिदेशस्य नानुपपत्तिः ।) इत्थं च वृक्षस्त-

१. उभयथा तदर्थ इति ॥ वस्तुतस्तु अत्र तन्त्रेणोभयथार्थवर्णनं न नवीनसम्मतम् । किन्तु एकधैव । तथाहि । प्रकृतसूत्रे "आदेशिन्यल्याश्रीयमाणे" इति भाष्यविवरणावसरे उद्योते आदेशिनीति व्यधिकरणविशेषणमेव । स्थानिसम्बन्ध्यलाश्रय इत्येवार्थः । अत एव स्थानित्वे तु स्थानिसम्बन्धित्वं व्यपदेशिवद्भावेन बोध्यमित्युक्तम् । एवञ्च भाष्ये तन्त्रमन्तराप्यभीष्टार्थसिद्धिरिति तद्भावः । तत्रैवान्यत्राप्युद्योते यत्र शास्त्रे विशेषणतया विशेष्यतया वा आदेशस्थानिरूपो योऽल् तत्स्थानिसम्बन्धी च योऽल् तन्मात्रवृत्तिधर्माश्रयण तादृशे विधौ हि निषेध इत्युक्तम् । अत्र तन्मात्र इत्यत्र तत्पदेन स्थानिरूपस्य स्थानिसम्बन्धिनश्च अलः परामर्शेन अतिदिदिक्षितधर्मे उभयत्र तन्मात्रवृत्तित्वनिवेशलाभेन एकत्र तन्निवेशोऽन्यत्र तन्नास्तीत्येवंरूपोऽर्थो वक्तुमशक्य एव । शब्देन्दुशेखरेऽपि स्थानिरूपो योऽल्, स्थानिसम्बन्धी च योऽल् तद्वृत्तिर्यो धर्म इत्याद्यर्थमुपवर्ण्य तदुत्तरग्रन्थे तस्य धर्मस्य स्थान्यत्रसाधारणधर्मत्व एव निषेधप्रवृत्तेरित्युक्तम् । अत्रापि तत्पदेन अतिदिदिक्षितधर्म एव ग्राह्य इति स्पष्टं तद्विदाम् । एतद्ग्रन्थस्य सङ्कोचेन अन्यतरार्थपरतया व्याख्यानं तु न युक्तं, सङ्कोचे मानाभावात् । अत्र यथाकथञ्चित्सङ्कोचेन व्याख्यानसम्भवेऽपि उद्योतग्रन्थे तदसम्भवाच्च । तस्माद्विना तन्त्रमादेशस्य स्थानिसम्बन्धी योऽल् तन्मात्रवृत्तिर्यो धर्मस्तद्घटितधर्माश्रये विधौ न स्थानिवदित्येक एवार्थः । यत्र स्थानिरूपो योऽल्, तत्र स्थानिसम्बन्धित्वं व्यपदेशिवद्भावेन । अर्थभेदव्यवहारोऽपि व्यपदेशिवद्भावार्थलभ्यार्थपृथक्करणेनोपपादनीयः । तन्मात्रवृत्तित्वं च तद्वृत्तित्वे सति तदितरावृत्तित्वमेव । तदितरश्च तद्घटितप्रकृतस्थान्येव विवक्ष्यते, प्रत्यासत्तिन्यायात् । अत्र तद्घटितत्वं च व्यपदेशिवद्भावानतिदिष्टमेव गृह्यते । एवं च प्रदीव्येत्यादौ स्थानिसम्बन्धितकारवृत्तिवल्त्वघटितवलादित्वाश्रये इटि स्थानिवत्त्वनिषेधः । धिन्वन्तीत्यत्र स्थानिसम्बन्धी योऽल् व्यपदेशिवद्भावेनोकारः तद्वृत्त्यार्धधातुकत्वरूपे तदितरस्य व्यपदेशिवद्भावानतिदिष्टतद्घटितत्ववतः प्रकृतस्थानिनोऽभावेन तद्वृत्तित्वस्याप्रसिद्धत्वेन वैयाकरणनये बौद्धपदार्थानुरोधेन अप्रसिद्धप्रतियोगिकाभावस्याप्यङ्गीकारेण तदभावस्सुलभ इति तादृशाल्मात्रवृत्त्यार्धधातुकत्वाश्रये इटि न स्थानिवत्त्वमित्यादि विस्तरेणास्मत्कृतगुरुप्रसादतोऽवगन्तव्यम् । एवं सत्युद्योतादिविरोधेन उभयथार्थवर्णनं कृत्वा तस्य नवीनमतपरिष्कारत्वेनोपसंहारे कथनं सर्वथानुचितमिति सुधीभिराकलनीयमित्याहुः ॥

२. अत्र धनुराकाररेखाद्वयमध्यगतग्रन्थस्थाने "कादेशनिष्ठस्थानिवद्भावप्रयोज्य-

त्रेत्यादिलक्ष्यघटकविसर्गादेशबोधके खरवसानयोरित्यत्र स्थानिनो रेफस्य रत्वेन गृहीततया वर्णमात्रवृत्तिधर्मावच्छिन्नस्थानिताकोऽयमादेश इति तद्वृत्तिस्थानिवद्भावप्रयोज्यरुत्वनिमित्तकयत्वविधौ स्थानिवत्त्वस्याप्रसंगान्नास्ति भोभगो इति सूत्रस्थभाष्यव्याकोपः ॥ नापि यशस्स्वित्यादिलक्ष्यघटकविसर्गनिष्ठस्थानिवद्भावप्रयुक्तरुत्वनिमित्तकयत्वनिवृत्तेस्तत्रत्याश्ग्रहणप्रयोजनत्वोपवर्णनपरस्य तदग्रिमभाष्यस्य स्वारस्यभंगः ॥ तादृशविसर्गादेशबोधके रोस्सुपीतिसूत्रे स्थानिनो रेफस्य रुत्वेन गृहीततया तस्य वर्णमात्रवृत्तिधर्मावच्छिन्नस्थानिताकादेशत्वाभावेन स्थानिवद्भावे प्रतिबन्धकाभावात् ॥ धिन्वन्तीत्यादौ तु वकारादेशस्थानिन उकारस्येको यणचीति यण्विधाविक्त्वेनोपात्तत्वादल्मात्रवृत्तिधर्मावच्छिन्नस्थानिताक एवादेश इति नास्ति स्थानिवद्भावप्रयोज्यार्धधातुकत्वनिमित्तक इडागमप्रसंगः ॥ न चैवमृधातोर्द्वित्वे स्थानिवद्भावादुरदत्त्वोत्तरमभ्यासत्वमाश्रित्य प्रवर्तमानो हलादिश्शेषो न स्यादुरदत्त्वस्याल्मात्रवृत्तिधर्मावच्छिन्नस्थानिताकादेशत्वादिति वाच्यम् ॥ द्विरुक्तिविषयधातुसंबन्धित्वे सति पूर्वोच्चारणविषयत्वमभ्याससंज्ञायां निमित्तं, तच्च कृतेप्युरदत्त्वे तद्विशिष्टस्य निर्बाधमेवेति पुनरभ्याससंज्ञाप्रवृत्त्या निर्वाहात् ॥ न चैवमप्यनुयन्तीत्यादाविणो यणिति विधीयमानस्य यणादेशस्याल्मात्रवृत्तिधर्मावच्छिन्नस्थानिताकत्वाभावेन निषेधाप्रसक्त्या स्थानिवद्भावेन यकारस्याच्त्वमाश्रित्य उपसर्गसंबन्धिन उकारस्य यणादेशप्रसंग इति वाच्यम् ॥ आयन्नित्यादौ परादिवद्भावादिण्त्वमादाय वृध्युत्तरमिणो यणित्यस्य प्रवृत्तिवारणार्थमेरनेकाच इत्यतस्तत्रेकारसंबन्धस्याकराभिमततया तस्याप्यल्मात्रवृत्तिधर्मावच्छिन्नस्थानिताकत्वेनादोषात् ॥ नन्वेवमपि मा भवाननुगादित्यादाविणो गा लुङीति विहितस्य गादेशस्याप्यतथात्वेन निषेधाप्रसक्त्या स्थानिवद्भावादच्त्वमाश्रित्य पूर्वस्य यणादेशो दुर्वारः ॥ अचः परस्मिन्निति तु न प्रवर्तते, न पदान्तेति पदान्तविधौ निषेधात्, लुङीत्यस्य विषयसप्तमीत्वेनादेशस्य परनिमित्तकत्वाभावाच्चेति चेत्तर्हि द्वितीयकोटौ स्थानितावच्छेदकीभूतानुपूर्वीघटकवर्णवृत्तिस्थानिवद्भावप्रयोज्यधर्मनिमित्तके तद्घटितधर्मनिमित्तके च विधौ स्थानिवद्भावो नेति निष्कर्षाभ्यु-

---

धर्मनिमित्तके स्थानिवद्भावप्रयोज्याल्वृत्तिधर्मघटितधर्मनिमित्तके च विधौ स्थानिवद्भावो नेत्येवमुभयथा तदर्थोऽत्रावश्यमाश्रयितव्यः ।" इत्येतावन्मात्र एव ग्रन्थः क्वचित्पुस्तके दृश्यते, परन्तु विसर्गसन्धिस्थैतद्ग्रन्थसन्दर्भपर्यालोचनायां तु उपरितनपाठ एव तद्ग्रन्थसंवादीति स एवादृतः पाठः ।

पगमाद्दोषः ॥ भवति हि गादेशे स्थानिवद्भावप्रयोज्यमच्त्वं स्थानितावच्छेदकी-
भूतानुपूर्वीघटकेकारवृत्ति, प्रपठ्येत्यादावपि ल्यबादेशस्थानितावच्छेदकीभूतक्त्वा-
प्रत्ययगतानुपूर्वीघटकतकारनिष्ठवल्त्वघटितवलादित्वं स्थानिवद्भावप्रयोज्यमिति नास्ति
तन्निमित्तकत्वेनेडागमप्रसक्तिरतो न काप्यनुपपत्तिरिति नव्यमतपरिष्कारः ॥ तदेत-
त्सकलमभिप्रेत्याह ॥ इट एव दीर्घविधानादिति ॥ इट्त्वमेव संघातधर्मः
स्थानितावच्छेदकं, न तु वर्णमात्रनिष्ठमच्त्वमिति स्थानिवद्भावो निर्बाध
इत्याशयः ॥ न च दीर्घविधावचश्चेति परिभाषाया जागरूकत्वादिडागमस्याचो
दीर्घ इत्यर्थस्यावश्यकतया भवत्येवाल्मात्रनिष्ठमच्त्वं स्थानितावच्छेदकमिति वा-
च्यम् ॥ परिभाषाशास्त्राणां अनियमे नियमकारित्वस्वाभाव्यादिह तत्प्रवृत्तिमन्तरा-
पीडागमसंबन्धिन इकारस्यैव दीर्घो भविष्यतीति प्रवृत्तिबीजाभावेन तत्प्रवृत्त्ययो-
गात् ॥ न चैवमपीट्त्वमित्संज्ञकटकारवदिकारत्वं, तच्चाल्मात्रनिष्ठमेवेति कथमिह
स्थानिवद्भाव इति वाच्यम् ॥ तस्यानुपूर्वीरूपत्वेनाल्मात्रवृत्तिधर्मत्वायोगात्तस्य लोप
इति टकारलोपोत्तरं दीर्घप्रवृत्तिकाले स्थानिवद्भावेनानुमानिकेन तदध्यासो भूतपूर्व-
गत्या वा तल्लाभ इत्यन्यत् ॥ कथमन्यथा वधादेशे हकाराकारवन्नकारत्वरूपं हन्त्व-
मनेनातिदिष्टं स्यात् ॥ यदि तु तत्र हन्त्वमखिलहन्पदानुस्यूतं जातिरूपमित्युच्यते,
तर्हि प्रकृतेपीकारटकारसंघातगतमिट्त्वमपि तथाभूतमेव टकारविरहिते स्थानि-
वद्भावादध्यस्तं स्थानितावच्छेदकमिति नास्ति विप्रतिपत्तिः ॥ स्यादेतत् ॥ अल्मात्र-
वृत्तिधर्मावच्छिन्नस्थानिताकादेशनिष्ठस्थानिवद्भावप्रयोज्यधर्मनिमित्तकविधौ स्थानि-
वद्भावो नेति निष्कर्षे प्रत्ययलक्षणसूत्रस्य नियामकत्वपक्षोपवर्णनपरभाष्यविरोधः ॥
तथाहि । तृणह इमित्यत्र हलीति निवर्त्य नाभ्यस्तस्येतिसूत्रादचि नेत्यनु-
वर्त्य पिति सार्वधातुके इमागमो न त्वचीति व्याख्यानादंतरंगत्वाद्धल्ङ्या-
दिलोपेपि हलादित्वानपेक्षणादतृणेडित्यत्रेमागममुपपाद्य विशेषणत्वेनालाश्रयणे
विध्यर्थमिति वार्तिककृन्मतमपाकृत्यायं पक्षः प्रवृत्तः ॥ हल्ङ्यादिलो-
पस्य हल्त्वरूपाल्मात्रवृत्तिधर्मावच्छिन्नस्थानिताकत्वेनोक्तरीत्या सार्वधातुकत्वस्ये-
डागमनिमित्तस्य दुर्लभतया विधायकत्वसंभवे तदसंगत्या तद्विरोध इति
चेदत्राहुः ॥ हल्ङ्यादिसूत्रे लोपादेशस्थानितावच्छेदकं सुत्वादिकमेव, न तु
हल्त्वमपृक्तत्वं वा, सुतिसीत्येवंरूपस्य हलो लोपविधानात् ॥ यद्रूपावच्छेदेन यस्य
स्थानिता, तस्यैव तन्निष्ठस्थानितावच्छेदकताया औचित्यात् ॥ एवं वेरपृक्तलोपेपि

वित्वमेव स्थानितावच्छेदकमिति दधिसेचावित्यादौ नित्यत्वादंतरंगत्वाच्च पूर्वमपृक्त-लोपेपि स्थानिवद्भावादार्धधातुकत्वमाश्रित्य विज्निमित्तो लघूपधगुणो भवत्येवातो न तदर्थमपि प्रत्ययलक्षणसूत्रस्योपयोग इति युक्तमेव भाष्यकारोक्तं नियामकत्व-मुक्तनिष्कर्षेपि, तस्मान्नास्ति तद्विरोधशंकावकाश इति। यत्तु धिन्वन्तीत्यादौ यणो बहिरंगासिद्धत्वादिडागमाभावस्य सुवचतया व्यर्थमेव तदर्थमुपायान्तरान्वेषणमिति कौस्तुभकारादयस्तद्भ्रमसात् ॥ अङ्गात्परस्य वलादेरार्धधातुकस्येडागम इत्यर्थेनार्ध-धातुकसंज्ञांगसंज्ञोभयसापेक्षस्येडागमस्य यणमपेक्ष्यांतरंगत्वस्य दुर्वचत्वात् ॥ संज्ञा-कृतबहिरंगत्वानाश्रयणेपि वर्णद्वयापेक्षस्य यणः प्रकृतिप्रत्ययसंघातसापेक्षादिडाग-माद्बहिरंगत्वायोगाच्च ॥ पूर्वं पूर्वमन्तरंगं परंपरं बहिरंगमिति प्रवादस्य पूर्वोपस्थिति-निमित्तकमन्तरंगमित्याशयकतया यणादेशात्प्रागिडागमनिमित्तस्य वलादित्वस्यानु-पस्थितेर्नास्त्येव संभवः ॥ यदपि कृतेपीडागमे नाजानन्तर्यपरिभाषाया अनित्यत्वेन वकारस्य बहिरंगासिद्धत्वाद्यणि यलोपे बहिरंगपरिभाषाया अप्रवृत्त्या वलि लोपे सिद्धमिष्टमिति, तदप्यरिरिय्यादित्येतद्रूपसंपत्तये यलोपे बहिरंगपरिभाषाप्रवृत्त्या-वश्यकताया अन्यत्र स्पष्टत्वात्सहृदयानामुद्वेगावहत्वाच्च चिन्त्यमेवेत्यास्तां वक्र-मार्गानुसरणप्रयास इति दिक् ॥

**विस्तरस्त्विति** ॥ इः इयानित्यादौ अङ्गमन्तरेण प्रत्ययोपलंभाल्लिट् धुगित्यादौ प्रत्ययमन्तरेणांगोपलंभाच्च तयोः परस्पराक्षेपकत्वायोगादत्रांगेन प्रत्ययाक्षेपो दुर्लभः ॥ आक्षिप्तस्य वा शाब्दान्वयप्रतियोगित्वमनुपपन्नं वृत्तिजन्यपदार्थोपस्थितेरेव शाब्दबुद्धिनियामकत्वादत उरदत्त्वस्यांगसंज्ञाद्वारकं परनिमित्तकत्वमेतादृशस्यापि तस्य स्थानिवद्भावोपयोगित्वमस्मादेव भाष्यादवगम्यत इति उरत्सूत्रे शब्देन्दुशेखरे स्पष्टमिति तत एवावगन्तव्यमित्यर्थः॥ एतद्भाष्यप्रामाण्यादाक्षिप्तस्यापि शाब्दान्वय-प्रतियोगित्वमनुकरणस्थले सादृश्याख्यसंबन्धेनोपस्थितानुकार्यवत् आक्षेपोप्यंगसंज्ञया निमित्तभूतस्य प्रत्ययस्य नापूर्वः ॥ कार्येण कारणाक्षेपस्यानुभविकत्वादिति तु प्राञ्चः प्रवदन्ति[1] ॥ **स्थानिनि सतीति** ॥ नन्वादेश इत्युपमेये प्रथमादर्शनादिह तेन तुल्य-

---

१. **प्रवदन्तीति** ॥ इदमयुक्तम्। अनुकार्यानुकरणयोर्भेदविवक्षापक्षस्यैवान्यत्र सिद्धान्तितत्वेन निरुक्तदृष्टान्तशैथिल्यम्। अभेदपक्षाङ्गीकारेऽपि उपस्थितौ वृत्तिजन्यत्वा-निवेशेऽप्युपस्थितिविषयस्य वृत्तिविशिष्टस्य शाब्दे भानमित्यङ्गीकारेण घटपदसमवाये-

मित्येव वतिः ॥ ततश्च सप्तम्यन्तत्वेन तद्विवरणं न युक्तमत आह ॥ **अजादेश इत्यादि ॥ लभते न लभते चेति** ॥ स्थानिभूताज्वर्णनिमित्तकं कार्यं लभते तत्प्रतिबद्धन्तु न लभत इति तदर्थः ॥ **वाच्योऽर्थ इति** ॥ प्रागुक्तार्थस्तु फलित इत्याशयः ॥ अत्र भवतिक्रियाया एवाध्याहारः ॥ स्थानिभूताजपेक्षया पूर्वत्वेन दृष्टस्य कार्ये स्थानिवदजादेशो भवतीति संबन्धे प्रकृतशास्त्रे स्थानिनः कार्यसंपादकस्य तत्प्रतिबन्धकस्य च दृष्टचरत्वात्तत्तल्लक्ष्यानुसारेण स्थानिप्रयुक्तं लभते तत्प्रतिबद्धं च न लभते इति तदर्थः प्रतीयते ॥ पितृवदधीत इत्यत्र पित्रध्ययनतदभावाभ्यामधीते नाधीत इति यथा, तद्वदिति निष्कर्षः ॥ **वैचित्र्यायेति** ॥ यलोपादीत्येतन्मात्रोक्तौ लाघवेन षष्ठीतत्पुरुषमाश्रित्य यलोपप्राग्वर्तिनां ग्रहणमित्यमपि प्रतीयेत ॥ लोहितादिसूत्रे कण्वादिभ्यो गोत्र इत्येतद्धटककण्वादिपदेनोक्तरीत्या कण्वशब्दप्राग्वर्तिनश्शकलशब्दस्यापि ग्रहणमित्यर्थस्याकरे स्पष्टत्वात् ॥ ततश्च वरनिमित्तकविधौ भावातिदेशासंभवेपि द्विर्वचने तत्संभवादनुपपत्तिस्स्पष्टैव ॥ दीर्घादिग्रहणे तु ये दीर्घस्यादिभूता ये च दीर्घादिकास्तथाभूता यलोपादय इत्येव प्रतियत इति नास्त्यनुपपत्तिशंकावकाश इत्येवमात्मकतात्पर्यपरिपूर्णत्वादस्यामुक्तौ विचित्रतेति द्रष्टव्यम् ॥ **प्रत्ययविधावेवेति** ॥ परिखया निर्वृत्तं पारिखमित्यादौ चातुरर्थिकाण्णंतात्तत्र भव इत्यर्थे वृद्धादकेकांतखोपधादिति छप्रत्ययप्रवृत्तौ निमित्तभूतस्य खोपधत्वस्य प्रतिबन्धकतया यस्येतिलुप्तस्य खकाराकारस्य प्रसक्तं स्थानिवत्त्वं क्विलुगुपधात्वेत्यादिना वार्तिककृता वार्यत इत्याशयः ॥ अत एव चङ्परनिर्ह्रासस्य पृथग्वार्तिके प्रतिपादनमिति द्रष्टव्यम् ॥ **स्वरे निषेधादिति** ॥ अन्यथा चिकीर्षक इत्यादौ ककारेकारादेः स्वरप्रवृत्तिविषयस्य स्थानिभूतात् सन्प्रत्ययाकारादव्यवहितपूर्वत्वाभावेन स्थानिवत्त्वाप्रसत्त्या निषेधारंभो निरर्थक एव स्यात् ॥ फलं तु कथयति गणयतीत्यादौ अकारलोपस्य ककाराकारादेरुपधात्वप्रयुक्तायां वृद्धौ स्थानिवद्भाव इति भावः ॥

**कर्तव्ये इति** ॥ चरमावयवकर्मके विधान इत्येवमर्थे फलितमेतत् ॥ **ऊठ् स्यादिति** ॥ क्विनिमित्तके विधौ स्थानिवत्त्वनिषेधादियमापत्तिः ॥ ननु मूले

नोपस्थिताकाशस्यान्वयवारणसम्भवात्प्रकृते विषयस्य कारणत्वेन शब्दप्रत्यक्षस्य शब्दजन्यत्वेन तद्विषयस्य शब्दस्य वृत्तिविशिष्टत्वेन च तज्ज्ञानस्य भूषणसारे उपपादितत्वेन तद्दृष्टान्तेनाङ्गसंज्ञानुमितप्रत्ययस्य शाब्दान्वयाभ्युपगमो न युक्त इति ।

न च प्रत्ययलक्षणमित्याक्षेपो वार्तिकमते उत भाष्यमते वा ? ॥ नाद्यः ॥ तन्मते प्रत्ययलक्षणसूत्रस्य विशेषणतया वर्णाश्रयणे विध्यर्थतया समाधानग्रन्थविरोधात् ॥ न द्वितीयः ॥ तन्मते तस्यान्यार्थकतया स्थानिवद्भावस्यैवापत्तिविषयत्वात् ॥ अतो नेदं युक्तमित्याशंकां परिहर्तुं प्रत्ययलक्षणपदमन्यार्थकमित्माह ॥ **स्थानिवत्त्वेनेत्यादि** ॥ ननु प्राधान्यात्कार्यातिदेशे भत्वमनेनातिदेष्टव्यं, तच्च णिज्मात्रनिमित्तकमेवेति कथं वर्णाश्रयत्वम्, तत्राह ॥ **शास्त्रस्यैवेति** ॥ इष्ठनि परतो यच्छास्त्रं प्रकृतेः कार्यानुसंधायकत्वेन प्रवर्तते तदिहापीति तदर्थः ॥ शास्त्रेण प्रत्यासत्त्या शास्त्रस्यैवातिदेष्टुमौचित्यमस्मिन्नतिदेशे बीजम् ॥ यदि च प्राधान्यावष्टब्धः कार्यातिदेश एवात्राश्रीयते तथापि वर्णाश्रयता भसंज्ञां न विमुञ्चतीत्याह ॥ **कार्यातिदेश इति** ॥ अत्र पक्षे कार्याविनाभावादुपस्थितानां निमित्तभूतानां धर्माणां यद्धर्मवैकल्यात्कार्याप्रवृत्तावतिदेशारंभस्तद्धर्मसंबन्धस्य बाधितत्वेन परित्यागेपि तदितरेषामतिदेशनिमित्ते विशेषणत्वेन संबन्धोपपत्तौ त्यागायोगादजादौ णाविष्ठनीव भत्वमित्यादिक्रमेणातिदेशवाक्यार्थ इत्याशयः ॥ यत्तु लक्ष्यानुरोधादिह निमित्तातिदेश आश्रयितव्यः । लघुभूतश्च कार्यातिदेशादिह निमित्तातिदेशः । कार्यबाहुल्यस्य निमित्तालपतायाश्च विस्पष्टत्वात् । अन्यथा प्रस्थस्फादय आदेशा अन्येषामपि स्थानिनामापद्येरन् ॥ न च स्थान्यर्थाभिधानसमर्थस्यैवादेशतया पादादीनां पदादय इव स्वसमानार्थकानां स्वसमानवर्णघटितानां प्रियादीनामेव ते आदेशा भविष्यन्तीति वाच्यम् ॥ पद्दन्न इत्यादेः प्रयोगनियामकतया फलाभावादिको यणचीत्यादौ दोषाच्च स्थानेन्तरतम इत्यत्र सप्तम्यन्तपाठस्य भाष्ये प्रत्याख्याततत्वेनोक्तार्थालाभात् ॥ स्थितस्फीतादीनामपि तदादेशप्रसंगाच्च ॥ यदि तु यस्य यत्कार्यमिष्ठनि तस्य तत्कार्यं णावपीति प्रत्यासत्तिगर्भोऽयमतिदेश इत्युच्यते, तर्हि द्रव्यवाचकाण्णिचि गुणवचनमात्रविषयस्येष्ठनस्तत्राप्रसक्त्या तन्निमित्तकस्य टिलोपादेरप्रवृत्तिप्रसंगः ॥ तस्माण्णाविष्ठनि ये धर्मास्ते भवन्तीत्येव तदर्थ इति स्वादित्वातिदेशे स्वत एवाजादित्वात्संज्ञाशास्त्रेणैव भत्वप्रवृत्त्या स्पष्टं वर्णाश्रयत्वमित्याकरमतमित्याहुः ॥ तदसत् ॥ निमित्तस्यैवातिदेशे तद्धितत्वातिदेशेन कृदुत्पत्तिमन्तरापि णिजन्तात्प्रातिपदिकत्वनिबन्धनानां स्वादीनामापत्तेः ॥ न च ण्यन्ताभिधेयस्यासत्त्वभूतक्रियारूपत्वेन संख्यासंबन्धाभावात्तदनापत्तिरिति वाच्यम् ॥ एवमप्यौत्सर्गिकैकवचनस्य पचति रूपमित्यादाविव दुर्वारतापत्तेः ॥ पटयतीत्यादौ

तद्धितेष्वचामादेरित्यादिवृद्धिप्रसंगाच्च ॥ न च वृद्धिविधौ ञित्साहचर्याद्धातुसंज्ञानुपधायकस्यैव तद्धितस्य णितो ग्रहणान्नेदं दूषणमिति वाच्यम् ॥ विनिगमनाविरहात्तत्साहचर्येण प्रकृतिभावानुपधायकस्यापि तादृशस्य णितस्स्वीकारापत्तौ सौत्वन इत्यादौ वृद्ध्यभावप्रसक्त्या साहचर्यस्येह व्यवस्थापकत्वायोगात् ॥ श्वानमाचष्टे शुनयतीत्यादावतद्धित इति विधीयमानस्य श्वयुवमघोनामिति संप्रसारणस्यानुपपत्तेश्च ॥ प्रत्यासत्त्याश्रयणेपि कार्यातिदेशे तत्तत्कार्यविधायकशास्त्रगृहीतत्वादुपस्थितेन टिस्थानिकत्वादिना तदतिदेशाभ्युपगमेपि अनुपस्थितगुणवचनसंबन्धित्वेन तदभ्युपगमस्यायुक्तत्वाद्भवन्त्येव गुणवचनव्यतिरिक्तस्यापि णौ टिलोपादयः, प्रस्थादयश्च प्रियादीनामेवेत्यनुपपत्तिविरहाच्चेति दिक् ॥ **टिलोपस्यापीति** ॥ एकस्याप्यतिदेशशास्त्रस्य लक्ष्यभेदाद्भिद्यमानस्य बाध्यत्वं बाधकत्वं[1] च न विरुद्धमित्याशयः॥ **पदत्वानिवृत्तेरिति** ॥ नंनु[2] कार्यातिदेशे भत्वस्यानाकडारीयतया सत्यपि स्थानिवत्त्वे कथं तेन पदत्वनिवृत्तिः ॥ आकडारसूत्रारंभेण ह्यन्यत्र संज्ञानां विरोधाभावो बोध्यते ॥ अत एव कृत्कृत्यादिसंज्ञानां समावेश इति चेन्न ॥ इष्ठवदित्यनेन यादृशमिष्ठनि भत्वमाकडारीयत्वोपहितं, तथाविधमेव णिचि प्रकृतेर्भत्वमित्यर्थस्य प्रत्यासत्त्या सुवचत्वात्तत्त्वोपहितस्यैव तस्यातिदेश इति भवत्येव स्थानिवत्त्वेन तदतिदेशे पदत्वनिवृत्तिरित्याशयात् ॥ अत एवात्र पक्षे शुनयतीत्यादौ नलोपाभाव इति बोध्यम् ॥ नन्वेवं वान्ते पदत्वस्यापि कुतो न टिलोपस्थानिवत्त्वेन प्रतिबन्धः । न च निषेधारंभसामर्थ्यात्पदान्तविधिप्रयोजकपदत्वप्रतिबन्धकतया स्थानिवद्भावस्याप्रवृत्तिरिति वाच्यम् ॥ कानि सन्तीत्यादौ स्थानिवद्भावानवरुद्धपदत्वप्रयोज्ये पदान्तविधौ निषेधोपपादनेन कृतार्थतया सामर्थ्यायोगात् ॥ किं च टिलोपापेक्षया णिलोपस्य बहिरंगत्वात्तत्प्रयुक्तस्थानिवद्भावोपि टिलोपप्रयुक्तात्तस्माद्बहिरंग इत्युचितम् ॥ ततश्च णिलोपप्रयुक्तस्थानिवद्भावलभ्यस्य वान्तगतभत्वातिदेशस्य स्वापेक्षया बहिरंगासिद्धस्य कथमन्तरंगभूतष्टिलोपस्थानिवद्भावो निवर्तकस्स्यादत आह ॥ **प्रकल्प्ये-**

---

१ **बाधकत्वं चेति** ॥ अत्र वान्ते अजादिप्रत्ययाव्यवहितपूर्वत्वरूपोद्देश्यतावच्छेदकानाक्रान्तत्वसम्पादनमेव बाधकत्वमिति बोध्यम्.

२. **नन्विति** ॥ अस्य ग्रन्थस्य भत्वं सुलभमिति प्रतीकमुपादाय प्रवृत्तिरुचिता । यद्वा अत्रैव समावेश इत्यनन्तरं "एवं च व्यर्थ एवायं पदत्वानिवृत्तिसम्पादनप्रयासः" इति पूरयित्वा लेखनमुचितम् ।

त्यादि ॥ अत एव वेतस्वानित्यादौ अनेन निषेधेन स्थानिवत्त्वाप्रवृत्त्या प्रसक्तस्य रुत्वाद्यात्मकस्य पदान्तविधेर्निवर्तनाय सप्तमीसमास आश्रितः प्रकृतसूत्रे भाष्ये ॥ यदि च पदान्तविधिप्रयोजके पदत्वे स्थानिवद्भावेन प्रतिबन्धस्स्यात्तदा षष्ठीसमासेप्युपपत्तौ सप्तमीसमासपर्यन्तानुधावनपरिक्लेशो भाष्यकाराणां विफल एव स्यात् ॥ एतेनाचःपरस्मिन्नित्यस्य भावाभावोभयातिदेशपरतया तन्निषेधस्यापि तथाविधत्वौचित्यात्पदान्तविधौ कर्तव्ये तत्प्रापकस्तत्प्रतिबन्धकश्च स्थानिवद्भावो न भवतीत्यर्थे पदान्तविधिप्रयोजकपदत्वनिवर्तकटिलोपस्थानिवद्भाव इव पदत्वनिवर्तकभत्वसंपादकणिलोपस्थानिवद्भावोपि पदान्तविधेः प्रतिबन्धक एवेति वृक्षवादौ निषेधशास्त्रेणैव भत्वनिवृत्तिसंभवात् व्यर्थ एवायं प्रयास इत्यपास्तम् ॥ गोचेत्यादौ साक्षात्पदान्तविधेः प्रापकस्य मरुतो यन्त्वित्यादौ साक्षात् तत्प्रतिबन्धकस्य च निवर्तनेन कृतार्थस्य स्थानिवत्त्वनिषेधस्य परंपरया तन्निवर्तकत्वे मानाभावात्, वेतस्वानित्यादौ भत्वप्रतिबन्धकस्थानिवद्भावस्यापि पदान्तविधेः प्रापकतया निषेधे भत्वेन पदत्वनिवृत्त्या रुत्वाप्रसक्तेस्तस्य सप्तमीसमासप्रयोजनत्वोपवर्णनपरभाष्यासंगत्यापत्तेश्चेत्यलम् ॥ **न सूत्रवार्तिकेत्यादि** ॥ त्रैपादिकेऽन्तरङ्गे बहिरंगपरिभाषाया अप्रवृत्तेः कार्यकालयथोद्देशपक्षोभयसाधारणतया विसर्जनीयसूत्रे भाष्यकारैर्व्यवस्थापनात्पटित इत्यादौ जस्त्वाद्यापत्तिरप्यत्र पक्षे दोषः ॥ पूर्वत्रासिद्धीये न स्थानिवदित्यवष्टभ्य निषेधशास्त्रे त्रैपादिकविधिप्रत्याख्यानमपि भाष्यकृतां पदचरमावयवस्थानिककार्यातिरिक्तपरम् ॥ अत एव वेतस्वानित्यत्र रुत्वं महिष्मानित्यत्र जस्त्वं च न भवति ॥ पिपठीरित्यादौ तु क्वौ लुप्तं न स्थानिवदिति निषेधेन रुत्वसिद्धिरिति तत्त्वम् ॥ **एषो यन्निति** ॥ उदाहरणप्रसिद्धिबोधनोपायतया क्वचिदयं दृश्यते प्रयोग इति सूचयितुं हसतीत्यस्य प्रयोगः ॥ **वाक्यसंस्कारपक्षे इति** ॥ इदमेषो यन्नित्यत्रापि बोध्यम् ॥ **इति दिगिति** ॥ वरे ग्रहणादेव समुदायधर्मैरवयवानां व्यपदेशः स्थानिवत्त्वनिषेधविषये यातिरित्यादिसिध्यर्थमाश्रयितव्य इति केचित् ॥ **बाधादिति** ॥ वासरूपविधिश्चास्त्रियामित्युक्तेः स्त्र्यधिकारोक्तप्रत्ययातिरिक्तपरः॥ इदं तु बोध्यम्॥ यातिरित्यादौ यलोपे स्थानिवत्त्वनिषेधारंभाद्वर्णमात्राश्रयत्वेनान्तरंगे यलोपे विशिष्टप्रत्ययाश्रयस्य लोपस्य बहिरंगासिद्धत्वं नेत्याहुः ॥ **फलाभावादिति** ॥ ननु भुङ्क्त इत्यादौ परसवर्णप्रवृत्तिः फलं, किं च स्थानिवत्सूत्रेणाशास्त्रीयधर्मस्यानतिदेशे प्रकृतिप्रत्ययसंघातादेशेषु वस्नसादिषु कार्यकालपक्षे सुबन्त-

त्वातिदेशनिबन्धनं पदत्वमनुपपन्नं स्यात् ॥ नहि यस्माद्विहितस्तदादितदन्तत्वरूपं सुबन्तत्वं शास्त्रीयो धर्मः । किं चैवं प्रत्ययलक्षणसूत्रस्य प्रत्ययमात्रवृत्तिधर्मनिमित्तककार्यमात्रविषयकतया नियामकत्वमिति भाष्यकारीयसिद्धान्तासंगतिः ॥ स्थानिवत्त्वेनाशास्त्रीयधर्मानुपपादने स्वःकाम्यतीत्यादावन्तरंगत्वादव्ययादाप्सुप इति लुगुत्तरं स्थानिवत्त्वेन सुबन्तत्वस्य दुर्वचतया सुप इत्यधिकृत्य विधीयमानस्य काम्यचः प्रवृत्त्ययोगे विध्यर्थमावश्यकस्य प्रत्ययलक्षणसूत्रस्य नियामकत्वायोगात् ॥ न चैकदेशविकृतन्यायेन स्वरित्यादेस्सुबन्तत्वं सुवचमिति वाच्यम् ॥ विकृतावयवघटितधर्मस्य छिन्नपुच्छे शनि पुच्छवत्त्वस्यैव तेन न्यायेनातिदेष्टुमशक्यत्वात् ॥ यदि तु दर्भाणां स्थाने शरैः प्रस्तरितव्यमित्यादिव्यवहारसिद्धस्य तत्स्थानापन्नस्तद्धर्मं लभत इति लोकन्यायस्य स्वं रूपमित्येतच्छास्त्रारंभबलेन तद्विषये शास्त्रे प्रवृत्त्यभावेपि तदविषये लौकिकेन तेन न्यायेनाशास्त्रीयधर्मस्याप्यतिदेश इत्युच्यते, तर्हि प्रकृतेपि समम् ॥ न चात्र शास्त्रे तेन न्यायेनाशास्त्रीयधर्मातिदेशे प्रकृतसूत्रस्थब्राह्मणकण्डूतिरित्येवमात्मकभाष्यकारीयप्रयोगविरोधस्तत्र हि कण्डूयतेः क्तिच्यल्लोपयलोपयोरल्लोपस्य स्थानिवत्त्वादुवङि क्तिज्निमित्तके वकारस्योठि सवर्णदीर्घे रूपसिद्धिः ॥ अनेन न्यायेन स्थानिभूतादचः पूर्वत्वस्य अशास्त्रीयधर्मस्यातिदेशे स्थानिवद्भावेन अकारव्यवधानादूठोऽप्रसक्त्या तदसंगतिरिति वाच्यम् ॥ तेन न्यायेन स्थानिन्यूकारे वर्तमानस्य स्थानिभूतादकारात्पूर्वत्वस्य तदादेशस्योवङो विशिष्टस्यातिदेशतो लाभेऽपि वकारमात्रस्य दुर्लभतया स्थानिवद्भावेनोठ्यल्लोपस्य प्रतिबन्धकत्वायोगात् प्रयोगस्य निर्बाधत्वेन भाष्यविरोधाभावात् ॥ किंचैतादृशभाष्यस्वारस्यादिह तन्न्यायस्याप्रवृत्तावपि प्रागुपदर्शितप्रमाणबलादत्र शास्त्रे तत्प्रवृत्तिरौत्सर्गिकीति युक्तमेव मूलोक्तमत आह ॥ **तद्घटितसन्निवेशेत्यादि** ॥ स्थानिभूताज्घटितो यस्सन्निवेशो वर्णानुपूर्वी तदपेक्षस्येत्यर्थः ॥ अयं भावः ॥ ततः पूर्वत्वं च तदधिकरणक्षणप्रागभावाधिकरणक्षणवृत्तित्वम् ॥ तच्च परवर्णोच्चारणसमनियतत्वात्तदभावे दुर्लभम् । विशिष्टानुपूर्वी तु नातिदेशतो लभ्या, स्थानिधर्मत्वाभावात् ॥ अतः स्थानिभूतादचः पूर्वत्वं नातिदेशसाध्यमिति ॥ ननु अतिदेशोऽयमाहार्यारोपः । स च बाधितस्यापि भवति ॥ यथा ह्रदो वह्निमानिति ॥ कार्यप्रवृत्तिनियामकत्वं च तस्य शास्त्रे वचनारंभादवसीयते । तथा च परवर्णाभावेऽपि तद्घटितानुपूर्वीप्रयुक्तस्य तदवधिकपूर्वत्वस्यातिदेशे बाधकाभावः ॥ अन्यथा तद्घटितोभयसन्निवेशापेक्षं तदादित्वं रामाभ्यामित्यादौ प्रकृते-

रंगत्वे व्यपदेशिवद्भावेन केवले तस्मिन् कथमतिदिष्टं स्यात् ॥ किंचातिदेशविषये पूर्वत्वादिकं वास्तविकवर्णान्तरसत्तानपेक्षमेवार्थसमाजग्रस्तया विशिष्टानुपूर्वीबुध्या लभ्यते, यथा यातिरित्यादावल्लोपस्य स्थानिवद्भावादच्त्वे ततः पूर्वत्वमातो लोपप्रयोजकमाकारे, ततो नायं दोष इत्यत आह ॥ **भोभगो इत्यादि** ॥ ननु भोभगो इति सूत्रस्थं भाष्यं न सिद्धान्तिसम्मतमिति मूलकृन्मतमतस्तदवलंबेन तन्मते दूषणापादनं न समंजसमत आह ॥ **विशेषणतयेति** ॥ स्थानिभूताजवधिकपूर्वत्वे विशेषणत्वेनाच्त्वमुपनिबद्धमिति भावः ॥ यदि तु स्थान्यवधिकपूर्वत्वेन दृष्टस्येत्येवात्र विवक्षितोऽर्थः स्थानी च अर्थादत्राजेव संपद्यत इति स्थानिभूतादचः पूर्वत्वेन दृष्टस्येत्युल्लेख इत्यतो नात्र विशेषणत्वेनालाश्रयणमित्युच्यते, तदा नेदं दूषणमित्यरुचेराह ॥ **भाष्ये पूर्वत्रासिद्धे इत्यादि** ॥ पूर्वत्रासिद्धे न स्थानिवदित्यस्याश्रयणेनेत्यर्थः ॥ **स्वरभिन्नानामिति** ॥ यद्यपि भाष्ये वरेयलोपस्वरवर्जं द्विर्वचनादीनि न कर्तव्यानीत्येवोक्तम्, तथापि तत्र दीर्घोऽप्युपलक्षणीयः ॥ अन्यथा शंशम्यतिप्रभृतिभ्यो यङन्तेभ्यो णिच्चिणोरशंशामीत्यादौ चिण्णमुलोरिति दीर्घविकल्पे स्थानिवत्त्वनिषेधानुपपत्तेः ॥ न च णिज्व्यवेतानां यङ्लोपे चोपसंख्यानमिति चिण्णमुलोरिति सूत्रस्थवार्तिकेन निर्वाह इति वाच्यम् ॥ अपूर्ववचनारंभेण सिद्धवचनप्रत्याख्यानस्यानौचित्यात् ॥ कर्मेर्णिङितिसूत्रे तत्सूत्रे च दीर्घविधौ स्थानिवत्त्वनिषेधमवष्टभ्य भाष्ये तादृशवार्तिकप्रत्याख्यानदर्शनाच्च ॥ तस्मादिह न पदान्तवरेयलोपस्वरदीर्घविधिष्वितिसूत्रन्यासे भगवदाशय इत्याहुः ॥

केचित्तु ण्यन्ताण्णौ णिज्व्यवधाने ण्याकृतिनिर्देशेन दीर्घविधौ निर्वाहः ॥ यङन्तप्रकृतिकण्यन्ताण्णिचि णमुलि स्थानिवत्त्वेन व्यवधानाद्दीर्घाप्रवृत्तावपि यङ्लुगन्तप्रकृतिकण्यन्तात्तयोर्दीर्घो भवत्येवेति न वार्तिकस्योपयोगो नापि स्थानिवत्त्वनिषेधे दीर्घग्रहणस्य यङन्ताद्यङ्लुगन्ताद्वा णिचि चिण्णमुलोर्नास्ति कश्चित् स्वरादिकृतो विशेष इति तदाशयाद्यथाश्रुतमेव भाष्यं रमणीयम्, न तु स्थानिवत्त्वनिषेधस्य दीर्घोपलक्षकत्वमिति वदन्ति ॥

---

१. वदन्तीति ॥ परे तु ण्याकृतिनिर्देशस्य हेतुमाण्यन्तप्रकरणे शेखरे दूषितत्वेन न तेन निर्वाहः । आशंसायां यङ्लुगन्तात्सिद्धिरिति तु न युक्तम् । यङ्लुकः छान्दसत्वात् । लोके क्वचित्तस्याङ्गीकारोऽपि बेभिदि चेच्छिदीत्युदाहरणद्वयविषय एवेति

**प्रतिप्रसवेनेति** ॥ बाधकविषयेसामान्यशास्त्रबोधितकार्यप्रवृत्त्यभ्यनुज्ञा-प्रतिप्रसवः ॥ **परसवर्णाभावस्यैवेति** ॥ सूत्रमते स्थानिवत्त्वनिषेधेन शिण्ढी-त्यादौ परसवर्णात्मकणत्वप्रवृत्तौ प्रत्याख्याने तदभावे चारंभप्रत्याख्यानयोः फल-भेदात्प्रत्याख्यानमयुक्तमेव स्यादतस्सूत्रे सवर्णशब्देन णत्वातिरिक्तस्यैव ग्रहणेन सूत्र-कृन्मतेप्यत्र स्थानिवत्त्वेन परसवर्णाप्रवृत्तिरेवोचितेत्याशयः ॥ ननु प्रत्याख्यानपर-भाष्यप्रामाण्यात् प्रतिप्रसववार्तिके प्रतिपदोक्तपरिभाषया रषाभ्यामिति णत्वस्यैव ग्रहणमिति किं न स्यादत आह ॥ **णत्वग्रहणे चेति** ॥ **उपपादयिष्यत इति** ॥ अष्टाम्य औशितिसूत्रे प्रियाष्ट् न इतिप्रतीकमुपादाय मूलकृतैव वार्तिके प्रतिपदोक्त-परिभाषाया अप्रवृत्तेरुपपादयिष्यमाणत्वात्तद्विरोधेन प्रकृते स्थानिवत्त्वनिषेधोपपादन-मयुक्तमित्याशयः ॥ वस्तुतोऽत्र सत्यपि स्थानिवत्त्वनिषेधे परसवर्णो दुर्लभ इत्याशयेनाह ॥ **किंचेति** ॥ **भाष्यसंमताष्टाध्यायीपाठ इति** ॥ भाष्ये उदस्स्थास्तम्भोरिति सूत्रव्याख्यानोत्तरमभ्यासे चर्चेतिसूत्रस्य व्याख्यानादत्र पाठे भाष्यसंमतिरनुमीयते ॥ यद्यपि तयोरेव सूत्रयोर्द्वयोर्व्यत्यासे भाष्यमुपपद्यते, तथा-प्यनुवृत्त्यनुरोधात्सूत्रगणस्य व्यत्यास इति बोध्यम् ॥ **यय्परत्वाभावादिति** ॥ षकारपरत्वादिति भावः।

केचित्तु प्रतिप्रसववार्तिके संयोगादिलोपलत्वयोस्साहचर्यादच्त्वानुपहि-तवर्णस्थानिकस्यैव णत्वस्य ग्रहणमनुस्वारस्थानिकः परसवर्णस्तु न तथाभूत इति प्रत्याख्यानेऽपि स्थानिवत्त्वनिषेधः ॥ किं च अभ्यासे चर्चेत्यस्योदस्थादितिसूत्रोत्तरं व्याख्यानमात्रेणानादिवैदिकसंप्रदायसिद्धस्याष्टाध्या-यीपाठस्यान्यथात्वकल्पनमनुचितम् ॥ सिंहावलोकनन्यायेनापि भाष्यसामं-जस्यात् ॥ इत्थं च झलां जशित्यस्यासिद्धत्वमपि दुर्वचम् ॥ न च यथा-श्रुताष्टाध्यायीपाठे उदस्कन्दे रोगे उपसंख्यानमित्युदस्स्थास्तम्भोरितिसूत्रस्थवार्तिक-निष्पन्ने उत्कंदशब्दे सकारस्थानिकस्य पूर्वसवर्णथकारस्य त्रैपादिकासिद्धत्वेन चर्त्वानुपपत्तिरिति वाच्यम् ॥ न मुन इत्यत्र नेति योगं विभज्य क्वचिदसिद्धत्वा-

---

हुश्नुवोरितिसूत्रभाष्यस्वरस इति यङ्लुगन्तशेखरे स्पष्टम्। एवं च वर्ज्यकोटौ दीर्घग्रह-णमुपलक्षणीयमित्याहुः।

भावोपपादनेनादोषात् ॥ अन्यत्र लोपाभावे थकारश्रवणमभीष्टमेवेति दीक्षिताशयमुत्प्रेक्षमाणा उपाध्यायोक्तं नातीवाद्रियन्ते ॥

**विषय एव नेति** ॥ पूर्वोदाहरणं क्वौ लुप्तं न स्थानिवदित्यस्यासार्वत्रिकत्वमभ्युपगम्योपन्यस्तम् ॥ इह तु क्विनिमित्तकत्वाभावादल्लोपस्य तदप्रवृत्तिरेवेति विशेषान्नैतदुदाहरणोपन्यासवैफल्यमित्याशयः ॥ पञ्चमीसमासपक्षमनंगीकुर्वतामपि प्रयोजनमस्तीत्याह ॥ **हरिन्नमतीति** ॥ इदन्तु चिन्त्यम् ॥ न पदान्तसूत्रघटकद्विर्वचनादिग्रहणप्रत्याख्यानसाधकत्वेन स्वीकृतस्य पूर्वत्रासिद्धीये न स्थानिवदित्यस्य वेतस्वान् महिष्मानित्यादौ रुत्वाद्यभावाय पदचरमावयवविधायकातिरिक्तपरताया आवश्यकत्वस्योद्योतादौ स्पष्टत्वादिह स्थानिवत्त्वेनानुनासिकाभावस्यैव न्याय्यत्वात् ॥ तस्मान्निरुक्तहरिच्छब्दस्य लकारयोगे हरिल्लुनातीत्यादौ तोर्लीति परसवर्णः पञ्चमीसमासाभावपक्षे सवर्णविधौ स्थानिवद्भावनिषेधस्य प्रयोजनम् ॥ नहि तोर्लीत्यस्य पूर्वत्रासिद्धीये न स्थानिवदित्येतन्निषेधाप्रवृत्तिविषयभूतपदचरमावयवविधायकत्वं वक्तुं शक्यम् ॥ पदान्तत्वप्रयुक्तपदचरमावयवविधायकस्यैव तथाविधनिषेधाप्रवृत्तिविषयत्वात् ॥ न च प्रत्याख्यानपक्षे प्रतिप्रसववार्तिकेन लत्वे स्थानिवद्भावाभ्यनुज्ञानात्तदप्रवृत्त्या सूत्रमतेपि तत्र तदभाव एवोचितः, अन्यथा ह्यारंभप्रत्याख्यानयोः समफलकता न सिध्येदिति वाच्यम् ॥ तद्वार्तिकघटकणत्वांशे भाष्यप्रामाण्यात् प्रतिपदोक्तपरिभाषाया अप्रवृत्तावप्यन्यत्र तदप्रवृत्तौ मानाभावेन लत्वस्य प्रतिपदोक्तस्य ग्रहणे परसवर्णनिष्पन्नलकारस्य लाक्षणिकतया निषेधाप्रवृत्तेर्बाधकाभावादित्याहुः ॥ **सहस्य सादेश इति** ॥ सहस्य सस्संज्ञायामित्यत्र सहस्य स इति योगविभागानभ्युपगमे छान्दसत्वमेवात्र शरणम् ॥ **धिचेति सूत्रे भाष्ये इति** ॥ तत्र हि धिसकारे सिचो लोपश्चकाद्धीति प्रयोजन-

---

१. **नातीवाद्रियन्ते इति** ॥ वस्तुतः सिंहावलोकनन्यायेन परित्यक्तसूत्रव्याख्यानस्य क्वाप्यदृष्टचरत्वेन सूत्रपाठव्यत्यास एव भाष्यतात्पर्यकल्पनमुचितम् । तत्र तत्र पाणिनीयन्यासस्यादृष्टमात्रफलकतायाः सर्वसम्मतत्वेन प्रकृतेऽप्यनादिवैदिकसम्प्रदायसिद्धपाठस्याप्यदृष्टमात्रफलकत्वमेव युक्तम् । लक्ष्यनिर्वाहस्तु भाष्योन्नीतपाठादेव । अत एवोत्कन्दसिद्धिः । योगविभागेन तत्साधनं त्वयुक्तम् । भाष्यानुक्तयोगविभागानामप्रामाणिकत्वस्यान्यत्र प्रतिपादनात् । एवं चाप्रसिद्धसाहचर्यानुसरणप्रयासो विफल एव । अत उपाध्यायोक्तमेवादरणीयमिति सुधियो विभावयन्तु ॥

मित्युक्तमित्याशयः ॥ असाध्वेवेति ॥ षघ हिंसायामित्यस्य स्वादौ पठितस्य धातूनामनेकार्थत्वेन स्त्रीसाहित्यविशिष्टभोजनवृत्तित्वमाश्रित्य क्तिन् प्रत्यये सग्धिरिति भाष्योक्तपक्षान्तररीत्या सत्यभिधाने लोकेपि साध्वेति बोध्यम् ॥

अक्षरस्वारस्यविरोधेनेति ॥ अयं भावः ॥ लोके गर्गाश्शतं दण्ड्यन्तामित्यादौ दण्डनादिक्रियाकर्मत्वं समुदाये पर्याप्नोति, ब्राह्मणा भोज्यन्तामित्यादौ भोजनादिक्रियाकर्मत्वं तु प्रत्येकमेवेत्युभयथा वाक्यार्थबोधीयोद्देश्यतापरिसमाप्तिर्दृश्यते ॥ शास्त्रे च सह सुपेत्यादौ समुदाये वाक्यार्थबोधीयोद्देश्यतापरिसमाप्तये सहग्रहणादिरूपप्रयत्नाचरणात् ब्राह्मणभोजनन्यायेन प्रत्येकपर्याप्तिरौत्सर्गिकीति संभवन्नपि प्रत्येकसंयोगसंज्ञापक्षो नाभ्युपगन्तुं शक्यः ॥ संज्ञानिमित्तत्वेन गृहीतस्यानन्तर्यस्य विशेषणत्वे संभवत्युपलक्षणताया अनौचित्यात् ॥ आनन्तर्यं हि प्रकृते मध्यगतविजातीयवर्णनिष्ठपूर्वत्वपरत्वोभयनिरूपकतानवच्छेदकीभूतो व्यासज्यवृत्तिर्धर्मः ॥ ततश्च समुदायसंयोगसंज्ञापक्ष एव स्थित इति ॥ महासंज्ञाकरणेन संयुज्यन्ते वर्णा यत्रेति व्युत्पत्त्या समुदायप्रतीतेस्समुदितस्यैव संयोगसंज्ञा न तु प्रत्येकमिति कैयटः ॥ भाष्ये ध्वनिततयेति ॥ तत्र हि वृद्ध्यादिसंज्ञानां प्रत्येकमित्यनुक्तावपि ब्राह्मणभोजनन्यायेन यथा प्रत्येकं प्रवृत्तिस्तथा विनापि सहग्रहणं गर्गदण्डनन्यायात्समुदाये संयोगसंज्ञा प्रवर्तेत इति संयोगसंज्ञायां सहवचनमिति वार्तिकं प्रत्याख्यातमिति भावः ॥ लक्ष्याभावादिति ॥ संयोगान्तस्य सतः पदान्तस्येत्येवमात्मकव्याख्यानैकसाध्यस्य प्रयोगस्यादर्शनादित्यर्थः ॥ ननु कशब्दादाचारक्विबन्तात्कर्तृक्विपि निष्पन्नस्य क् इत्येतस्य हलन्तपदान्तरसमवहितस्य वाक्ये लोपप्रवृत्तिरेतद्व्याख्यानप्रयोजनं स्यात्तत्राह ॥ अत एवेति ॥ लोपश्चेति द्विशकारको निर्देश इत्यलोन्त्यात्सूत्रे भाष्योक्तेरिदं व्याख्यानमयुक्तम् ॥ सत्यभिधाने लोपस्याप्रवृत्तिरेव निरुक्तोदाहरणे ॥ पारायणप्रयुक्तधर्मसंपादकमेवान्तग्रहणमिति निष्कर्षः ॥ मद्वयात्मकमिति ॥ शित्त्वं हि सर्वादेशत्वसंपत्तये, तदनेकाल्त्वेनैव सिद्ध्यति ॥ उच्चारणार्थकवर्णस्येत्संज्ञालोपयोश्चानपेक्षणाल्लाघवमित्याशयः ॥ संयोगान्तलोप इति ॥ शास्त्रे वधीमित्यादौ तदुदाहरणे चेत्यर्थः ॥ अत्र यद्वक्तव्यं तदतोमित्यत्र वक्ष्यते ॥ व्यावर्त्येत इति ॥ तत्र यदि नाजानन्तर्यपरिभाषया बहिरङ्गासिद्धत्वं निषिध्येत तदा यणादेशस्य दुर्वारत्वात् स एव निर्देशोऽस्याः परिभाषा-

या अनित्यत्वं ज्ञापयतीति भावः ॥ ननु जातबहिरङ्गस्यासिद्धत्वोपपादकबहिरङ्गपरिभाषाविषयणी नाजानन्तर्यपरिभाषा केण इत्यत्र तु समकालप्राप्तान्तरङ्गस्य बहिरङ्गापेक्षया प्रथमप्रवृत्तिप्रयोजकप्राबल्यबोधकेन परिभाषान्तरेण यणादेशनिवृत्तिरिति कथमयं निर्देशस्तदनित्यत्वे प्रमाणं स्यात्तत्राह ॥ **परिभाषान्तरं नास्त्येवेति ॥** अन्तरङ्गे कर्तव्ये जातं समकालप्राप्तं च बहिरङ्गमसिद्धमित्यर्थेन बहिरङ्गपरिभाषयैव तदर्थः क्रोडीक्रियते ॥ अत एवान्तादिवत्सूत्रे भाष्ये बहिरङ्गपरिभाषामाश्रित्य परिभाषान्तरमन्तरङ्गं बहिरङ्गात्बलीय इत्येतत्प्रत्याख्यातमिति भावः ॥ शास्त्रनिर्देशानुपपत्त्यपेक्षया शास्त्रस्यैवानुपपत्तिरधिकं प्रमाणं, निर्देशस्य सौत्रत्वेनाप्युपपत्तेः अत आह ॥ **वस्तुत इति ॥** परिभाषायामुत्तरकालप्रवृत्तिकेऽन्तरङ्गे इत्यप्यनित्यत्वबललब्धमेवेति तात्पर्यम् ॥ परिभाषैवेयमन्तरङ्ग परिभाषानित्यत्वेन सिद्धा नातिरिक्तेत्यन्यत्र विस्तरः ॥ **न च भाष्यसम्मत इति ॥** ननु कर्त्र्यौ हर्त्र्यौ इत्यादौ प्रथमं पूर्वयणादेशप्रवृत्तेरन्तरङ्गत्वोपपादनेनाचः परस्मिन्निति सूत्रे भाष्ये स्वीकृत एवायमर्थ इति कुतो न भाष्यसम्मत इति चेन्न ॥ पूर्वोपस्थितनिमित्तकमन्तरङ्गं परोपस्थितनिमित्तकं बहिरङ्गमित्याशयकतयैवैतादृशभाष्यसामञ्जस्ये निरुक्तार्थकल्पनाया निर्मूलत्वात् ॥ अस्ति हि कर्त्र्यौत्यादौ प्रयोगक्रमाधीनपूर्वोपस्थितनिमित्तकत्वं पूर्वयणादेशस्य ॥ अत एव स्रजिष्ठ इत्यादौ टिलोपवारणाय प्रकृत्यैकाजित्यस्य प्रत्याख्याने विन्मतोर्लुकष्टित्त्वजातिलोपापवादत्वमित्युपाय उपपादितः ॥ पूर्वस्थानिकस्यान्तरङ्गत्वे तु तदसंगतिरेव ॥ किं च पूर्वं पूर्वमन्तरङ्गं परंपरं बहिरङ्गमिति लोकन्यायसिद्धम् ॥ तदुक्तं भाष्ये, मनुष्योऽयं प्रातरुत्थाय प्रथमं शरीरकार्याणि करोति ततस्सुहृदां ततस्संबन्धिनामिति ॥ ततश्च युगपत्प्राप्तौ प्रथमप्रवृत्तिनियामकत्वमेवैतादृशान्तरङ्गत्वस्य, न तु जातबहिरङ्गस्यासिद्धत्वसंपादकत्वमित्याद्यन्यत्र प्रपञ्चितमिति भावः ॥ ननु अस्तु वा त्वदुक्तरीत्या संयोगान्तलोपस्यान्तरङ्गत्वं बहिर्भूतसुब्निमित्तकत्वेन बहिरङ्गत्वमप्यस्तीति विनिगमनाविरहेण नेह परिभाषा व्यवस्थापिका स्यादित्याशयेनाह ॥ **किंचेति ॥ क्वौ स्थानिवत्त्वनिषेधादिति ॥** क्विनिमित्तके कार्ये कर्तव्ये कार्यान्तरं प्रत्यपि स्थानिवत्त्वनिषेध

---

१. **क्वौ स्थानिवत्त्वनिषेधादितीति** ॥ काव्ये क्वौ स्थानिवत्त्वनिषेधादिति क्वचित्पुस्तके दृश्यते, तत्पाठानुरोधेनेदं प्रतीकम् । अयं तु पाठ इदानीन्तनपुस्तकेषु न दृश्यते, परन्तु काव्ये यलोपे स्थानिवत्त्वनिषेधादित्येव पाठस्संदृश्यते ।

इत्याशयः ॥ यलोपे स्थानिवत्त्वनिषेधाच्चेत्यपि बोध्यम् ॥ **कृते वान्तत्वमिति** ॥ ऊडादेशो वलोपविषय एव लोपोव्योर्वलीत्यस्यापवादो न तु यलोपविषयेपीति भावः॥ **इति शेष इति** ॥ संयोगान्तलोपाप्रवृत्तिप्रतिपादनमात्रे तात्पर्यमत्र मूलव्याख्याकारयोः, न तु परिनिष्ठितरूपापादने, मोनो धातोरित्यस्य प्रवृत्त्या नान्तमेव हि परिनिष्ठितं स्यादिति बोध्यम् ॥ **संयोगान्तलोपो झलो लोप इति** ॥ प्रत्याख्यानस्योभयलोपविषयकत्वे हि झलन्तस्य संयोगस्य लोप इत्येव ब्रूयादिति तात्पर्यम् ॥ **व्याख्यानेनेति** ॥ यत्र यणादेशस्य बहिरङ्गत्वाभावस्तथाभूतोदाहरणानामभिधाने तृतीयवार्तिकस्योक्तव्याख्यानेन प्रवृत्त्ययोगात्पक्षयोः फलभेदेन प्रत्याख्यानमसंबद्धं स्यात् ॥ तत ईदृशानामनभिधानमित्याशयः ॥ **संभवमात्रेणेति** ॥ एवं च लोपविकल्पोपपादनं स्वरूपगणनावसरे निष्फलमित्याशयः ॥

**एकवाक्यतयैवेत्यादि** ॥ पूलयोरित्येकशेषनिर्देशात्साहित्यावच्छेदेनैव पदार्थान्तरान्वयस्य न्याय्यतया पूलकद्वयपर्याप्तसाहित्यरूपैकधर्मावच्छिन्नोद्देश्यताकत्वेन बोधाद्विनापि प्रकरणमेकस्यैव कटस्य यथा विधेयत्वेन प्रतीतिस्तथा पूर्वपरयोरित्यत्रापि द्वन्द्वनिर्देशस्वारस्यात् पूर्वपरोभयपर्याप्तैकधर्मेण साहित्येन विधेयभूतगुणादिसंबन्धस्यावश्यकत्वादेकस्यैव विनाप्येकग्रहणं विधेयत्वेन संप्रत्ययो भविष्यत्यतो नास्ति पूर्वपरयोः पृथग्विधेयप्रसङ्ग इति तदर्थः ॥ तदुक्तं भाष्ये ॥ एकवाक्यभाबात् द्वयोरेकस्याभिनिर्वृत्तिर्भवतीति ॥ तत्रैकवाक्यभावादित्यस्यैकधर्मावच्छिन्नोद्देश्यताकत्वादित्यर्थः ॥ तन्मूलकत्वादेकवाक्यतायाः कार्यत्वेन कारणस्य व्यपदेश, आयुर्घृतं इन्द्रियं दधीतिवत् ॥ यद्वा एकवाक्यं भावयत्युत्पादयतीति कर्मण्यण् ॥ सहविवक्षायामेव द्वन्द्वैकशेषयोस्साधुत्वं, सहविवक्षा चानेकस्यैकस्मिन्धर्मिणि साहित्येन योन्वयस्तद्विषयिणी प्रयोक्तुरिच्छा, साहित्यं पुनरेकमनेकपर्याप्तम् ॥ एवं चोद्देश्यतावच्छेदकभेदप्रयुक्तस्य वाक्यभेदस्य दुर्वचतया कथं विधेयभेदस्स्यात् ॥ यत्र तूद्देश्यतावच्छेदकभेदो रदाभ्यां निष्ठातो न इत्यादौ भवत्येव तत्र विधेयभेदप्रापको वाक्यभेदः ॥ न चैवं ज्वरत्वरेत्यत्रापि उद्देश्यभेदप्रयुक्तेन वाक्यभेदेन द्वावूठौ स्यातामिति वाच्यम् ॥ द्वयोरप्यूठोस्सवर्णदीर्घेणाभीष्टरूपसिद्धेः ॥ ननु सहविवक्षाविषयेऽपि साहित्यावच्छेदेन साहित्यावच्छिन्नानेकविधेयसंबन्धाद्विधेयनानात्वं दृश्यते ॥ सुट्तिथोस्तुह्योस्तातङाशिष्य-

न्यतरस्यामित्यादौ लोकेप्यनयोस्सुवर्णपिण्डयोः कर्णकुण्डलाभरणं कुर्वित्यादौ विधेयनानात्वमानुभविकम् । तस्मान्न केवलं सहविवक्षैव विधेयभेदनिवर्तनोपायः किन्तु प्रकरणादिकं तात्पर्यग्राहकमपीति प्रकृते तात्पर्यग्रहजनकत्वेनैकग्रहणस्यावश्यकतया कथमुक्तरीत्या भाष्यकृतस्तत्प्रत्याख्यानमिति चेत्तर्हि एकवाक्यभावादित्यस्य भाष्ये एकविधेयबोधकवाक्यत्वादित्यप्यर्थ इत्याशयेनाह ॥ **ऐकत्वसंख्याविवक्षणाच्चेति** ॥ अत एव पशुनायजेतेत्यत्र प्रमाणान्तरसिद्धे यागे करणत्वेन विधीयमानस्य पशोरेकत्वविवक्षणान्नानेकपशुकरणकयागादपूर्वोत्पत्तिरिति जैमिनीयाः ॥ सूत्रे लिङ्गवचनमतन्त्रमिति त्वनुवादविषय एवेति निष्कर्षः ॥ तुह्योस्तातङित्यादावादेशानां स्थानिसदेशत्वनियमादेकस्योभयदेशवृत्तित्वविरोधेन सुट्तिथोरित्यादावेकस्यानेकावयवत्वविरोधेन च तद्विवक्षाया असम्भवः ॥ अस्जो रोपधयोरित्यत्र तु मित्त्वसामर्थ्येन स्थानिसदेशत्वबाधादेकत्वविवक्षायां न क्षतिः । पूर्वपरयोरित्यत्राप्येक एव द्वयोस्स्थानिनोरुच्चारणावकाश इति विरोधाभावेनैकत्वविवक्षयैव निर्वाहान्मास्त्वेकग्रहणमिति प्रत्याख्यातुराशयः ॥ **व्याकरणशास्त्रस्येत्यादि** ॥ लोके संस्कारबोधकानि शब्दान्युभयथा दृश्यन्ते, सकृत्प्रवर्तकानि पुनःपुनः प्रवर्तकानि च ॥ तत्र वसन्ते ब्राह्मणोऽग्नीनादधीत गर्भाष्टमेषु ब्राह्मणमुपनयीतेत्यादीनि सकृत्प्रवर्त्य पुनर्न प्रवर्तयन्ति ॥ वसन्ते ज्योतिषा यजेत, सन्ध्यामुपासीतेत्यादीनि पुनःपुनः प्रवर्तयन्ति, तत्रेयं व्यवस्था । अवान्तरसंस्कारकाणां सकृत्प्रवर्तकत्वं, प्रधानसंस्कारकाणां च पुनःपुनः प्रवर्तकत्वम् ॥ आधानसंस्कारेण ह्यग्निषु यज्ञकर्माधिकारस्साध्यते, एवमुपनयनसंस्कारेण वटोर्वेदाध्ययनाधिकारः, स च सकृत्कृतेनैव निष्पद्यत इति युक्तमवान्तरसंस्कारकाणां सकृत्प्रवर्तकत्वम् ॥ प्रधानभूतज्योतिष्टोमादिसंस्कारेण स्वर्गकामो यजेतेति फलवाक्यबलात्पुरुषस्य रम्भासंभोगाद्यात्मकसुखविशेषाधिगमस्साध्यस्तदविच्छित्तये तदाधिक्याय च नवै कामानां तृप्तिरस्तीति पुनःपुनः प्रवृत्तिः ॥ तथा सन्ध्योपासनादिकमपि दैनंदिनदुरितक्षयार्थम्, यद्यदा नानुष्ठीयते तदा दुरितक्षयो न भवेदिति प्रतिदिनमनुष्ठानम् ॥ एवं प्रधानसंस्कारकाणां पुनःप्रवर्तकत्वमिति ॥ व्याकरणस्मृतेश्च वाच्यवृत्त्या लक्ष्यसंस्कारकत्वेनावान्तरसंस्कारकतया पुनःपुनराधानादिवदप्रवृत्तौ तच्छेषभूतस्य प्रयोगविधेरपि तदनुसारितया

---

१. **एकत्वसंख्याविवक्षणाच्चेतीति** ॥ विनाप्येकग्रहणमेकत्वसंख्याविवक्षणाच्चेति शब्दरत्नपाठाभिप्रयेणेदं प्रतीकम् । इदानीन्तनपुस्तकेष्वन्यथा दृश्यते ।

तत्तच्छास्त्रविषयस्य प्रयोगस्य यस्य कस्य चिदेकैकस्य प्रयोगविधिविषयत्वमितरेषां च तथाविधानां तदभाव इत्यनिष्टप्रसक्तौ तत्तल्लक्ष्यविषयकलक्षणोपप्लवेन यावल्लक्ष्यसंस्कारकत्वेन तत्तच्छास्त्रविषयाणां सर्वेषामपि लक्ष्याणां प्रयोगविधिविषयत्वज्ञापकतया सार्थकमेकग्रहणमिति कथं प्रत्याख्यानमित्याशङ्काभिप्रायः ॥ **ततस्सिद्धान्तितमिति** ॥ अयं भावः ॥ इह च शास्त्रतात्पर्यविषयः प्रयोगविधिः प्रधानभूतो नित्यकाम्यः, तस्य च प्रत्यवायपरिहाराय फलाय च वाक्योपप्लवेन पुनःपुनः प्रवृत्तिस्स्वाभाविकी ॥ तदनुसारी च लक्ष्यसंस्कारस्तदङ्गत्वात्, अतो व्यर्थमेकग्रहणमिति ॥ ननु कथमस्य नित्यकाम्यत्वमत आह ॥ **प्रत्यवायश्रवणादिति** ॥ न म्लेच्छितवै नापभाषितवै म्लेच्छोह वा एष यदपशब्द इति वाजसनेये पठ्यते, तत्र न म्लेच्छितवा इत्यस्य नापभाषितवा इति विवरणं, नापभाषितव्यमिति तदर्थः ॥ इत्थं च सुरापानादिवद्वेदनिषिद्धत्वादपशब्दोच्चारणं प्रत्यवायोत्पादकमिति तात्पर्यम् ॥ **नित्यसमत्वमिति** ॥ न केवलं नित्यत्वं नित्यकाम्यत्वादिति भावः ॥ **काम्यत्वं चेति** ॥ ततश्चायं प्रयोगविधिर्न केवलं संध्योपासनादिवच्छुद्धनित्यो नापि कारीर्यादिवत्केवलकाम्यः, किन्तु ज्योतिष्टोमादिवन्नित्यकाम्यत्वोपहित इत्यर्थः ॥ **शुद्धसंस्कारकत्वमिति** ॥ गुणीभूतसंस्कारकत्वमित्यर्थः ॥ ननु प्रयोगैक्येपि लक्ष्यभेदे लक्षणोपप्लवेन लक्ष्यसंस्कारकाणां पृथग्विधेयसमर्पकता दृश्यते, यथा भवेतामेयातामित्यादौ लिङस्सलोपोऽनन्त्यस्येत्यस्य लक्षणभेदेन सकारद्वयनिवर्तकता । एवं च खट्वेन्द्र इत्यादावपि पूर्वपरयोः पृथग्लक्षणोपप्लवेन गुणादिकार्यप्रवृत्तिर्दुर्वारेति चेत्सत्यम्; लक्ष्यभेदे लक्षणभेदः, द्वन्द्वनिर्देशबलात् प्रकृते साहित्यस्य लक्ष्यतावच्छेदकत्वात्पूर्वपरोभयसंघात एकं लक्ष्यम् ॥ यत्र सहविवक्षाविषये प्रतीयमानस्य साहित्यस्य लक्ष्यतावच्छेदकत्वे तुह्योस्तातङस्थिदधीत्यादौ आदेशानां स्थानिसदेशत्वविरोधस्तत्र भवतु साहित्यस्योपलक्षणता प्रत्येकवृत्तिधर्माणां च लक्ष्यतावच्छेदकता, अन्यत्र तथा स्वीकारे मानाभावः ॥ ततश्च लक्ष्यभेदाभावाल्लक्षणभेदाभावस्संस्कारकशास्त्राणाम् ॥ न ह्येकस्मिन् लक्ष्ये लक्षणभेदेन तेषामसकृत्प्रवृत्तिर्भवति, लक्ष्ये लक्षणस्येतिन्यायविरोधात्, या पूर्वपरयोरपि पृथग्विधेयलाभमापादयेदतो व्यर्थमेवैकग्रहणमिति सिद्धान्तिनो भाष्यकारस्याशयः, तदाह ॥ **नावृत्तिरिति** । **पूर्वपक्षसिद्धान्तयोरिति** ॥ मालेन्द्रादिप्रयोगो न स्यादित्यनेन लक्षणस्यावृत्तेरनभ्युपगमात्पूर्वपक्षिणोप्यभीष्ट एवायं

न्याय इति निष्कर्षः ॥ **संप्रसारणाच्चेति सूत्रे भाष्ये इति** ॥ तत्र हि शकह्वर्थमित्यादौ संप्रसारणाच्चेति पूर्वरूपवारणार्थमारब्धस्य संप्रसारणपूर्वत्वे समानाङ्गग्रहणमिति वार्तिकमनेन न्यायेन प्रत्याख्यातमित्याशयः ॥

**अप्रवृत्तेत्यादि** ॥ तिङतिङ इति निघातोत्तरमप्युद्देश्यतावच्छेदकाक्रान्तत्वेन तिङन्तस्य निहतस्य परिनिष्ठितत्वं न स्यादित्यप्रवृत्तत्वम् ॥ षिधूप्रभृतीनां वैकल्पिकेट्कानामिडागमाभावे सेद्धेत्यादेः परिनिष्ठितत्वं न स्यादिति नित्यत्वं च विधिविशेषणमिति द्रष्टव्यम् ॥ **मर्यादाभङ्गापत्तेरिति** ॥ नव रूपाणीति नियमतस्त्रित्वाधिकसंख्याविशिष्टधकारादिघटितदशमादिरूपव्यवच्छेदः खल्वभीष्टः ॥ स च पञ्चमादिरूपोपपत्तये द्वित्वानामसकृत्प्रवृत्तिमभ्युपगच्छतस्तस्य कथं न भज्येतेत्याशयः ॥ नन्वानन्त्यापत्तिप्रयुक्तः परिनिष्ठितत्वाभावः प्रकृतन्यायबीजं, प्रकृते च द्वित्वस्य वैकल्पिकतया यत्किंचिद्द्वित्वघटितस्य पाक्षिकस्य परिनिष्ठितत्वसंभवात्कथं न्यायप्रवृत्तिरत आह ॥ **एतन्न्यायबीजमिति तु न युक्तमिति** ॥ **पुनर्वृद्धिर्नेति** ॥ सिचि वृद्धिरित्यनेन तु न तत्प्रवृत्तिः ढलोपस्यासिद्धत्वादिति बोध्यम्। **तन्नाभावादिति** ॥ यद्यपि पुनः पुनर्वृद्धिप्रवृत्तौ तत्राप्यस्त्येवानन्त्यापत्तिस्तथापि फलाभावेन वृद्धेरोकारस्य प्रवृत्त्युत्तरं पुनरप्रवृत्तिरिति नास्त्यानन्त्यापत्तिरिति भावः ॥ नन्वेवमपि सुद्ध्युपास्य इत्यत्र द्वित्वोत्तरं प्राथमिकधकारस्य पूर्वत्रासिद्धीयमद्विर्वचन इतिन्यायेन जश्त्वे कृते लक्ष्यभेदात्पुनर्द्वित्वे रूपद्वयाधिक्यमपरिहार्यमिति चेत्तत्राह ॥ **एतद्भाष्यप्रामाण्यादिति** ॥ **विकार** आदेशः ॥ **न लक्ष्यभेदाश्रयणमिति** ॥ किंतु तल्लक्ष्यमेवेत्यर्थः ॥ तल्लक्ष्यत्वं च स्वप्रथमप्राप्तावुद्देश्यत्वेन गृहीतसमुदायघटकवर्णविधीयमानैतदुभयव्यतिरिक्ताघटितत्वे सति, स्वप्रथमप्राप्तिकालिकप्राप्तियोग्यताराहित्यम् ॥ एधेतेत्यादौ सार्वधातुकलिङ्प्रत्ययावयवयोर्द्वयोस्सकारयोरेकस्य लोपे द्वितीयस्य तल्लक्ष्यत्वेन लोपो न स्यादिति विशेष्यदलम् ॥ राजपुरुष इत्यादौ समासान्तोदात्ते कृते पदान्तरेण समासे परमराजपुरुष इत्यादौ पुनस्समासान्तोदात्तत्वं तल्लक्ष्यत्वेन न स्यादिति सत्यन्तं विशेषणदलम् ॥ उदवोढामित्यादावादेशघटितस्य तल्लक्ष्यत्वेनोक्तन्यायविषयतासंपत्तये विशेषणदले विधीयमानव्यतिरिक्तत्वम् ॥ सर्वत्रैव विधीयमानातिरिक्तोद्देश्यतावच्छेदकीभूतानुपूर्वीघटकवर्णघटितत्वादसंभव इति प्रथमप्राप्तावुद्देश्य-

त्वेन गृहीतसमुदायघटकवर्णव्यतिरिक्तत्वं तत्रेत्यादि स्वयमूह्यम् ॥ **तद्वैयर्थ्यमिति** ॥ न च सूत्रकारो वार्तिकं न जानातीति कथं वैयर्थ्यमिति वाच्यम् ॥ सूत्रेष्वेव हि तत्सर्वं यद्वृत्तौ यच्च वार्तिक इत्यभियुक्तव्यवहारबलेन वार्तिकस्यापि सूत्रकारतात्पर्यविषयत्वावगत्या वैयर्थ्यस्य सुवचत्वेन ज्ञापनोपपत्तेः ॥ यत्तु इरयोरे इति सूत्रस्थं द्विवचनमेतन्न्यायज्ञापकं, तद्धि दध्र इत्यादौ क्रादिनियमादिरेचो रेभावस्येडागमे पुनश्च रेभावार्थम् ॥ न्यायानभ्युपगमे द्विवचनमन्तरैव रेभावस्य पुनःप्रवृत्तेरानन्त्यापत्तिवशात्पुनरिडागमाप्रवृत्तेश्च रूपसिद्धौ तद्वैयर्थ्यं स्पष्टमेव ॥ न च विधानसामर्थ्यादेव रेभावोत्तरमिडागमाप्रवृत्त्या ज्ञापितेपि चारितार्थ्याभाव इति वाच्यम् ॥ क्रादिसूत्रगृहीतेषु स्वत एवेडागमाप्रवृत्त्या रेभावस्य चारितार्थ्येन सामर्थ्यायोगादतो युक्तमेव द्विवचनस्य ज्ञापकत्वमिति वदन्ति, तन्निराकर्तुमाह ॥ **इरयोर इत्यादि** ॥ **उद्देश्यत्वाप्राप्त्येति** ॥ सतो हि कार्यिणः कार्येण भवितव्यमिति वृद्धिसूत्रस्थभाष्यबलात्सिद्धस्योद्देश्यत्वं साध्यस्य च विधेयत्वमिति तु निर्विवादम् ॥ न चायं रेभाव इडागमविशिष्टस्तच्छास्त्रीयवाक्यार्थबोधकाले सिद्धः ॥ ततो नास्ति तस्योद्देश्यताप्रसक्तिरतो वाक्यभेदादेकेन विहितस्यापरेणोद्देश्यत्वमिति बोधनाय द्विवचनमावश्यकम् ॥ यद्वा द्विवचनाभवे प्रथममिरेचो रेभावे तस्येडागमे पुनश्च रेभावे तस्येडागमो न भवत्यानन्त्यापत्तेरानन्त्यापत्तौ हि शास्त्राणि न प्रवर्तन्ते व्यवस्थाकारिणा शास्त्रेण भवितव्यमिति तत्र तत्राकरे निरूपितत्वादित्यवश्यमभ्युपेयम् । तथा च 'अन्ते रण्डाविवाहश्चेदादावेव कुतो न स ' इति प्रथममिरेचो रेभाव एव न स्यात् ॥ शास्त्रं तु चक्र इत्यादौ चरितार्थमेव । द्विवचने तु इरेचस्तत्स्थानिकस्येडागमविशिष्टरेभावस्य च रेभावे पुनरिडागमो न भवत्यानन्त्यापत्तेरित्यभीष्टं सिद्ध्यतीत्यावश्यकं द्विवचनम् ॥ अथवा रेभावस्येडागमो लाक्षणिकत्वादिरेग्रहणेन ग्रहणायोगादावश्यकं द्विवचनमित्याशयः ॥ एतेनेत्यस्य विकारकृतलक्ष्यभेदानाश्रयणेनेत्यर्थः ॥ इत्थं च विकारान्यानुपूर्वीप्रयुक्त एव भेदः प्रकृतन्यायप्रवृत्तिविरोधी स चेह दुर्निरूप इत्युपसंहरति॥ **विकारान्येति** ॥ **इति दिगिति** ॥ दिगर्थस्तु सिचि वृद्धिरितिसूत्रस्थभाष्यप्रामाण्यात् तत्स्थानिकविकारविशिष्टस्य तल्लक्ष्यत्वेपि तस्य तदन्यस्य च स्थाने यो विकारस्तद्विशिष्टस्यापि तल्लक्ष्यत्वे मानाभावः ॥ यदि च शकह्वर्थमित्यादावनेन न्यायेन पूर्वनिष्पन्नस्योकारादेः पुनरन्येन पूर्वरूपं नेति संप्रसारणाच्चेति सूत्रस्थभाष्यप्रामाण्यादेवंविधस्यापि तल्लक्ष्यत्वमभ्युपेयते, तदा चिकीर्षन्तीत्यादौ शबकारेण पररूपोत्तरमन्त्यकारेण तन्न

स्यात् । तस्मात् ऊकालोजिति निर्देशादनित्यत्वेन क्वचिन्न्यायाप्रवृत्त्या सकलेष्ट-सिद्धिरिति नव्यानां निष्कर्ष इति ॥

**आष्टमिकद्वित्वमिति** ॥ वर्णद्वित्वं पदद्वित्वं चेत्यर्थः ॥ **अभ्यासप्रति-षेधानर्थक्यमिति** ॥ नोनावेत्यत्र सन्यङोरिति द्वित्वोत्तरं लिटि धातोरिति द्वित्वं छन्दसि सर्वविधीनां वैकल्पिकत्वान्न भवति ॥ लोके तु तथा-विधादाम्प्रत्यय एव मन्त्रत्वाच्च नायमाम् प्रत्ययविषयः ॥ कृष्णो नोनाव वृषभो यदीदमिति हि मन्त्रकाण्डे पठ्यते ॥ पिपठिषतीत्यादौ पुनःपुनरेकेनैव लक्षणेन द्वित्वप्रवृत्तिस्तूक्तन्यायेन वार्यते, ततो व्यर्थमनभ्यासग्रहणमिति प्रत्याख्यातुराशयः ॥ ननु पिपठिषतीत्यादौ पिशब्दादेस्तल्लक्ष्यत्वेऽपि उत्तरखण्डीयव्यञ्जनान्तरोपहितस्य पिप् इत्यादेर्विकारान्यानुपूर्वीघटिततया तल्लक्ष्यत्वे मानाभावेन प्रसक्तस्य द्वित्वस्य व्यावृत्तये आवश्यकत्वात्कथमभ्यासग्रहणस्य प्रत्याख्यानमत आह ॥ **एकस्यैकाच इत्यादि** ॥ **अचो द्विरुक्तत्वादिति** ॥ यत्र तल्लक्ष्यस्य कार्यानुभवस्तत्र तद्घटित-स्यापि तल्लक्ष्यत्वम् , अत एव शकह्वर्थमित्यादावनेन न्यायेन संप्रसारणस्थानिकस्य पूर्वरूपस्य वर्णान्तरेण सह पूर्वरूपं नेत्युपपादितं भाष्ये, ततोत्र न किंचिद्वैलक्षण्यमिति भावः ॥ सूत्रमतेऽप्यनभ्यासस्येत्यस्य न विद्यते अभ्यासो यस्येत्यर्थकस्य धातुविशे-षणत्वाददोषः ॥

**आहुरिति** ॥ केचित्तु[2] लिटि धातोरित्यत्रानभ्यासग्रहणमनावश्यकमुत्तरत्र सन्यङोरित्यादौ च तदावश्यकमेवेत्येवं कैयटाद्युत्प्रेक्षितमेव प्रत्याख्या-

---

१. **अभ्यासप्रतिषेधानर्थक्यमितीति** ॥ अयं तु पाठः क्वचित्पुस्तके दृश्यते । इदानीन्तनपुस्तकेषु “ अनभ्यासप्रतिषेधोऽनर्थकः छन्दसि वा वचनादित्येव दृश्यते ॥

२. **केचित्त्विति** ॥ परे तु अनभ्यासग्रहणप्रत्याख्यानस्य लिटि धातोरिति सूत्र-मात्रविषयकत्वकथनमनुचितम् । तत्प्रत्याख्यानोपायस्य छन्दसि वा वचनादित्यस्य प्रक-रणमात्रविषयकतया प्रत्याख्यानस्यापि प्रकरणमात्रविषयकताया एवौचित्यात् । छन्दसि वा वचनादितिपरिहारस्य यङन्तप्रकृतिकसन्नन्ते सोषुपिषत इत्यत्र द्वित्वाप्रवृत्तिं फलत्वे-नाप्रदर्श्य नोनावेत्यत्र द्वित्वाप्रवृत्तेरेव प्रयोजनत्वकथनं लिटि धातोरिति सूत्रमात्रविषयकत्वे नियामकमिति हेतुकथनमप्यसङ्गतम् । न चोदाहरणमादरणीयमिति न्यायविरोधात् । नोनावेत्यस्यैव तत्रोपक्रमाच्च । सन्यत इति तपरकरणमपि प्रत्याख्यानस्य सूत्रमात्रविष-

तृभाष्यकृत्तात्पर्यं युक्तम् ॥ अत एव छन्दसि वा वचनादिति परिहारस्य नोनावेत्यत्र यङन्तप्रकृतिकलिडन्ते लिटि धातोरित्यस्याप्रवृत्तिरेव प्रयोजनत्वेनोपदर्शिता भाष्ये, न तु सोषुप्यतेः सोषुपिषत इत्यत्र यङन्तप्रकृतिकसन्नन्ते सन्यङोरित्यस्याप्रवृत्तिः ॥ प्रत्याख्यानस्य प्रकरणमात्रविषयकत्वे सोषुपिषत इति प्रयोगस्य छान्दसत्वे च इयमेव तत्प्रयोजनत्वेनोपदर्शिता स्यात् ॥ किञ्च अनभिधानब्रह्मास्त्रमाश्रित्य प्रत्याख्यानस्य प्रकरणमात्रपरत्वकल्पनापेक्षया तत्रत्योपक्रमोपसंहारस्वारस्येन तस्य सङ्कोचकल्पनैव न्याय्यत्वेन प्रतीयते ॥ अत एव सन्यत इति सूत्रस्थं तपरकरणं संगच्छते ॥ तद्धि यङन्तात्सनि पापचिषत इत्यादावभ्यासीयदीर्घाकारस्येत्त्ववारणाय कृतद्वित्वप्रकृतिकद्वित्वोपपादकप्रत्ययान्तानामनभिधाने च तदसंगतिरेव ॥ न च प्रत्यासत्त्या सन्प्रत्ययनिमित्तकद्वित्वप्रयुक्ताभ्याससंबन्ध्यकारस्येत्त्वमित्यर्थान्नैतादृशेषु तत्प्रवृत्तिरिति वाच्यम् ॥ तथासति प्रतीषिषतीत्यादौ नहि कार्यी निमित्तत्वेनाश्रीयत इति न्यायेन द्वित्वस्य सन्प्रत्ययनिमित्तकत्वाभावादित्त्वानापत्तेः ॥ न च सन्प्रत्ययपरकस्याभ्यासस्येत्त्वमित्यर्थे प्रतीषिषतीत्यादावव्यवहितस्य तस्य संभवात् पिपठिषतीत्यादौ तदनापत्त्या सन इत्येव सन्रूपाभ्यासस्येत्त्वमित्यर्थेन सिद्धे सन्यत इति गुरुनिर्देशेन द्वित्वप्रयोजकातिरिक्तकृतव्यवधानेपि तस्य प्रवृत्तिरित्यर्थस्य कल्पनया पापचिषत इत्यादौ यङो-

---

यकत्वं कल्पयितुं नेष्टे । पापचिषत इत्यादेरङ्गीकारेऽपि प्रत्यासत्त्या सन्प्रत्ययनिमित्तकद्वित्वप्रयुक्ताभ्याससम्बन्ध्यकारस्यैवेत्त्वप्रवृत्त्या अन्तत उच्चारणार्थताया एव तस्यौचित्यात् । कार्यमनुभवन्निति न्यायेन निमित्तकारणत्वस्य बाधेपि द्वित्वहेतुताया बाधाभावेन प्रतीषिषतीत्यादौ दोषाभावेन प्रत्यासत्त्याश्रयणे बाधकाभावात् । किञ्च सन इत्येव सिद्धे सन्यत इति सूत्रकरणेन व्यवहितेऽपि इत्त्वप्रवृत्त्यङ्गीकारेऽपि येन नाव्यवधानमिति न्यायेन अभ्यासोत्तरखण्डमात्रव्यवधान एवेत्त्वप्रवृत्तिलाभेन पापचिषत इत्यत्र यङोऽल्लोपस्य स्थानिवत्त्वेनातिरिक्तवर्णेन व्यवधानादित्त्वाप्रसक्त्या तपरकरणफलं दुर्वचमेव । एवं च यङन्तात्सनोऽङ्गीकारेऽपि जञ्जपिषत इत्यादावित्त्वाप्रसक्त्या गडुभूतेत्त्वाङ्गीकारोऽपि मुधैव । अतो भाष्ये प्रत्याख्यानं प्रकरणमात्रविषयकमित्येव युक्तम् । अत एव भाष्येऽनभ्यासग्रहणवद्धातुग्रहणमपि प्रत्याख्याय धातुग्रहणस्य सान्यासिकत्वमिवास्य तत्रोक्तम् । सान्यासिकत्वं नाम उत्तरार्थत्वमिति भागवृत्तिरिति हरदत्तग्रन्थे स्पष्टम् । किञ्च ग्रन्थकृता स्वसिद्धान्तप्रदर्शनायोद्योते परेत्वित्यादिना सिद्धान्तितस्यैवार्थस्यात्र लेखनेन एतद्ग्रन्थस्थस्याहुरित्यस्यारुचिबोधकत्ववर्णनं ग्रन्थकर्तुर्मूलग्रन्थस्यान्याशयकतया नयनचातुरीमेव प्रकटयतीत्याहुः ।

ऽल्लोपस्य स्थानिवद्भावेन द्वित्वप्रयोजकव्यवधानान्नास्ति तत्प्रवृत्तिरिति वाच्यम् ॥ निर्दिष्टपरिभाषाधीनस्याव्यवहितत्वांशस्य बाधापूर्वकं व्यवधानेऽपि प्रवृत्तिरित्यर्थस्य कल्पनेनोपपत्तौ व्यवधायकविशेषविवक्षायां प्रमाणाभावात् ॥ न चैवमभ्यासस्येत्यस्य चिच्छादयिषतीत्यादौ तुगागमोत्तरमित्त्वसिद्ध्यर्थमावश्यकेन वैयधिकरण्येन जञ्जपिषतीत्यादावपि तदापत्तिरिति वाच्यम् ॥ इत्त्वविरहितप्रामाणिकप्रयोगस्यानुपलम्भेन तत्प्रवृत्तेरभीष्टत्वे बाधकाभावात् ॥ तदेतदाहुरित्यनेन सूचिताया अरुचेर्निदानमिति वदन्ति ॥

**यत्त्वावच्छिन्नमिति** ॥ लक्ष्यतावच्छेदकीभूतयत्त्वोपहितासु सकलव्यक्तिषु प्रत्येकं लक्ष्यताविश्रान्तिरिति तदर्थः ॥ **स्थाने जातस्येति** ॥ संप्रसारणस्थानिकपूर्वरूपस्थाने जातस्य हल इति दीर्घस्येत्यर्थः ॥ **पूर्वरूपादेरिति** ॥ अत्रादिग्रहणप्रयोजनं मृग्यम् । साक्षात्संप्रसारणस्थानिकस्य पूर्वरूपातिरिक्तस्य दीर्घस्थानिनः प्रसिद्धिविरहात् ॥ **आरम्भसामर्थ्यादिति** ॥ संप्रसारणस्थानिकमात्रस्थानिककार्यप्रयोजकस्थानिवद्भावप्रयोज्यसंप्रसारणत्वस्यानल्विधाविति प्रतिषेधो न प्रतिबन्धकः ॥ यद्वा संप्रसारणस्थानिकस्य स्थानिवद्भावेन संप्रसारणत्वमाश्रित्य तस्यान्यस्य वा पूर्वरूपातिरिक्तकार्यकर्तव्यतायामनल्विधाविति निषेधो न प्रवर्तते ॥ अथवा संप्रसारणस्थानिकस्य तत्स्थानिकस्य वा स्थानिवद्भावेन संप्रसारणत्वमादाय पूर्वरूपातिरिक्ते यत्किंचित्कार्ये कर्तव्ये नास्त्यनल्विधाविति प्रतिषेध इत्येवमनेकधात्र ज्ञाप्यांशः ॥ तत्राद्ये शकहूरित्यादौ संप्रसारणस्थानिकस्य पूर्वरूपस्य स्थानिवद्भावेन संप्रसारणतया हल इति दीर्घः ॥ द्वितीये यून इत्यादौ संप्रसारणस्थानिकपूर्वरूपे संप्रसारणत्वातिदेशेन न संप्रसारण इति निषेधसिद्धेर्निषेधारम्भसामर्थ्यानुसरणं निष्फलम् ॥ तृतीये संप्रसारणस्थानिकपूर्वरूपस्थानिकस्योरदत्त्वस्य स्थानिवत्त्वेन संप्रसारणत्वस्य सुवचतया वव्रश्चेत्यादौ वस्य संप्रसारणनिषेधो निर्बाध इत्यचः परस्मिन्निति स्थानिवद्भावानुसरणप्रयासो नापेक्ष्यत इत्याहुः ॥ अत्रोक्तरीत्या-

---

१. **आहुरिति** ॥ अत्रारुचिबीजन्तु एकेन ज्ञापकेन त्रिविधार्थज्ञापनमनुचितम् । एकार्थज्ञापनेन चरितार्थस्यान्यार्थज्ञापकत्वायोगात् । विनिगमनाविरहादर्थत्रयज्ञापनन्तु न युक्तम् । ज्ञाप्यांशे लाघवस्य विनिगमकत्वात् । किञ्च येनार्थेन ज्ञापितेन चारितार्थ्यं तस्यार्थस्यैव ज्ञापनमुचितम् । स चार्थः सामान्यधर्मावच्छिन्नो भवतु, विशेषधर्मावच्छिन्नो

शकह्वर्थमित्यादौ पूर्वरूपवारणं युक्तम् ॥ दीर्घारम्भबलेन सामान्यतस्संप्रसारणत्वातिदेशे स्थानिवत्त्वनिषेधाप्रवृत्तिकल्पनया संप्रसारणपूर्वत्वे समानाङ्गग्रहणमिति वार्तिकारम्भे च यजेर्लिटि ईजतुरित्यादौ पूर्वरूपं दुर्वारं, समानाङ्गत्वं हि संप्रसारणप्रयोजकप्रत्ययनिरूपिताङ्गत्वानवरुद्धसमुदायघटकवर्णाघटितत्वमिति बोध्यम् ॥ **सवर्णा न सन्तीति** ॥ यरोनुनासिक इत्यत्रापि सवर्णग्रहणापकर्षणादनुनासिकपरसवर्णयोर्द्वयोरप्ययं परिहारः ॥ **अन्यथा** नेमौ रहाविति भाष्यबोधितरेफगतद्वित्वकार्यित्वमात्रबाधकत्वाभावे । विशेषशब्दबोधितेनेत्यस्य व्याप्यधर्मबोधकशब्दबोधितेनेत्यर्थः ॥ **सामान्यत एवेति** ॥ यद्यप्यपवाद उत्सर्गस्य स्वविषये निवर्तको न तु स्वविषयादन्यत्र, मानाभावात् ॥ निरवकाशत्वमेव हि तन्मानम् ॥ ततश्च हर्यनुभव इत्यादौ यत्र रेफस्य निमित्तता भवतु तत्र कार्यित्वस्य निवृत्तिः, धात्रंश इत्यादौ च तदप्राप्त्या कार्यित्वनिवृत्तेरयोगः, तथापि मद्रह्रद इत्यादौ निमित्तत्वाप्राप्तविषये कार्यित्वनिवर्तनपरभाष्यप्रामाण्याद्रहाभ्यामित्यस्य जातिपरत्वाभ्युपगमेन रत्वजातेस्सर्वत्र निरवकाशेन निमित्तत्वेन द्वित्वकार्यित्वं बाध्यत इत्याशयः ॥ ननु जातिपक्षे निरवकाशयणादेशकार्यित्वोपहिताया एवेक्जातेस्सुद्ध्युपास्य इत्याद्युकारादौ सामान्यभूतनिमित्तत्वाक्रान्ताच्त्वजात्याश्रयेऽपि सुवचतया संभवेत्कार्यित्वेन निमित्तत्वबाधः, व्यक्तिपक्षे तु यस्यां व्यक्तौ निमित्तत्वं तत्र कार्यित्वाप्राप्त्या कथं निमित्तत्वनिवृत्तिः, व्यवस्थितौ चेमौ पक्षावतो निर्देशाश्रयणं निष्फलमित्याशङ्क्याह ॥ **इदं चेति** ॥ निर्देशेन निमित्तत्वाभावकल्पनं चेत्यर्थः ॥ **संग्राहकवाक्ये इति** ॥ लक्ष्यसंस्कारकमहावाक्ये निरवकाशेन स्थानित्वेन इकारादीनां निमित्तत्वबाधे तदनुरोधेन तत्तल्लक्ष्यविषयकतया कल्पितेषु लक्षणेषु कथं तेषां निमित्तत्वं स्यादित्याशयः ॥ **चारितार्थ्यादिति** ॥ नहि रेफस्य निमित्तत्ववदिकः स्थानित्वं निरवकाशमिति भावः ॥ **तद**-

---

वा, न तु तच्चारितार्थ्याप्रयोजकार्थान्तरघटितस्य, अन्यथा उदासीनार्थान्तरघटितस्य तत्तज्ज्ञाप्यांशस्यापि तत्र तत्र ज्ञापनप्रसङ्गात् । एवं च तृतीयार्थे तत्स्थानिकस्येत्यंशस्य चारितार्थ्याप्रयोजकतया तदंशज्ञापनमयुक्तम् । अत एव वव्रश्चेति सिद्धये आसप्तमपरिसमाप्तेरङ्गाधिकार इति पक्षाश्रयणं भाष्यकृतस्सङ्गच्छते । तदंशस्यापि ज्ञापने तदसङ्गतिस्स्पष्टैव । किञ्च द्वितीयार्थज्ञापनस्य फलाभावः । निरुक्तज्ञापनेन सवर्णदीर्घे सम्प्रसारणत्वानतिदेशादचःपरस्मिन्नित्यस्यैवाश्रयणीयतया तेनोकारव्यवधानस्य गले पतितत्वेन तद्व्यवधानेऽपि प्रवृत्त्यर्थं निषेधारम्भसामर्थ्यस्याश्रयणीयतया भक्षितेऽपि लशुने इति न्यायावतारादित्यलं भाष्यविरुद्धकल्पनयेति ॥

**प्राप्तियोग्येति ॥** तच्चोत्सर्गाप्राप्तिविषयस्वप्रथमप्राप्तिकालिकप्राप्तियोग्यलक्ष्यशून्यत्वं, तेनोत्सर्गप्रवृत्त्युत्तरं चारितार्थ्येऽपि न क्षतिः ॥ सर्वथा निरवकाशत्वमेव तु नापवादस्य बाधकताप्रयोजकम्। तक्रकौण्डिन्यन्यायोपपादनपरभाष्यस्वारस्यभङ्गापत्तेरिति ध्येयम् ॥ **न हि निमित्तवदिति ॥** निमित्तानि वर्णास्ते चाक्षरसमाम्नायाल्लोकतो वा निर्ज्ञातुं शक्याः लोके दण्डादेर्घटादिकं प्रति निमित्तत्वमन्वयव्यतिरेकाभ्यामवगम्यते, शास्त्रे तु तदसंभवादपूर्वबोध्यं निमित्तत्वमिति परमार्थः ॥ **इति दिगिति ॥**

अत्र केचित् ॥ रेफस्य द्वित्वनिमित्तत्वेन कार्यित्वं बाध्यत इत्ययुक्तं, हर्यनुभव इत्यादौ रेफस्यानचीति द्वित्वविधेर्वैकल्पिकतया पक्षे तदीयकार्यित्वाभावे निमित्तत्वस्य चारितार्थ्यात् ॥ न च पाक्षिकीं नाप्राप्तिमाश्रित्य निमित्तत्वस्य निरवकाशत्वमिति वाच्यम् ॥ कपो वैकल्पिकत्वेन पक्षे सावकाशतया विशेषविहितानां समासान्तानां नापवादत्वमिति शेषाद्विभाषेति सूत्रस्थभाष्यासांगत्यप्रसङ्गात् ॥ पादोऽन्यतरस्यामिति ङीपो वैकल्पिकतया पक्षे सावकाशस्य टाबृचीत्यस्य नापवादत्वमिति स्त्रीप्रत्ययप्रकरणस्थशेखरविरोधाच्च ॥ किंच शास्त्रेण शब्दतः प्रतिपाद्यते कार्यित्वं, निमित्तत्वं तु तद्भावभावित्वेन पार्ष्णिकमनुमीयते, ततश्चान्तरङ्गस्य कार्यित्वस्य कथं बहिरङ्गेण निमित्तत्वेन बाधः ॥ न चोपजनिष्यमाणन्यायेन भविष्यत्कालिकबुद्धिगोचरेणापि निमित्तत्वेन कार्यित्वबाध इति वाच्यम् ॥ अपवादत्वनिर्णयाभावात् ॥ किं चोक्तन्यायेन घटे गुणवत्तया ज्ञातस्य द्रव्यत्वस्य कम्बुग्रीवादिमत्तया ज्ञातेन घटत्वेन बाधापत्तौ घटो न द्रव्यमित्यापत्तेः, तस्मादनचीत्यत्र रहाभ्यामित्यनुवर्त्य नादिचीत्यतो नेत्यपकृष्य षष्ठ्या विपरिणम्य रहयोर्द्वित्वं नेति व्याख्येयमिति भाष्यतात्पर्यम् ॥ तत्र रेफांशे द्वित्वस्यापूर्वो निषेधो, हकारांशे त्वनुवादः ॥ अत एव नेमौ रहौ कार्यिणाविति भाष्यं स्वरसत उपपद्यते ॥ अन्यथा हकारस्य केनापि द्वित्वबोधकशास्त्रेण कार्यित्वस्याप्राप्ततया बाधानौचित्येन नायं रेफः कार्यीत्येव ब्रूयादिति वदन्ति ॥

---

१. वदन्तीति ॥ इदमयुक्तम्। अनचि चेत्यादीनां विकल्पः न वाग्रहणानुवृत्तिभ्यः। किन्तु शाकल्यमते सर्वत्र द्वित्वनिषेधलभ्यः। विवेचितं चेदमन्यत्र गुरुप्रसादे। एवञ्च निषेधविषये प्राप्तियोग्यतानपहारस्य हलन्तनपुंसकप्रकरणे शेखरे प्रतिपादितत्वेनात्रापवादत्वं सुस्थम्। एवञ्च कार्यित्वस्यान्तरङ्गत्ववर्णनप्रयासो विफल एव। घटत्वेन

लणुसूत्रस्थभाष्यविरोधेनेति ॥ तत्र हि भाष्ये "अनुनासिकविधावण्—ग्रहणं पूर्वेण न परेण नहि पदान्ताः परेऽणस्सन्ती"ति सिद्धान्त्युक्तिः, तदुत्तरमाशयानभिज्ञस्यैकदेशिनो 'ननु चायमस्ति कर्तृ हर्तृ, इत्याक्षेपे' "एवं तर्हि सामर्थ्यात् पूर्वेण न परेण यदि हि पूर्वेण न स्यात् अण्ग्रहणमनर्थकं स्यात् ॥ अचोऽप्रगृह्यस्यानुनासिक इत्येव ब्रूयात् ॥ अथवा एतदपि न ब्रूयात् ॥ अच एव हि प्रगृह्या भवन्ती" ति सिद्धान्ती स्वाभिप्रायमाविश्चकार ॥ ततश्च पदान्ता हलोऽणो न सन्तीति स्पष्टमेव प्रतीयत इति ऌाकृतिरिति प्रयोगे ऌकारस्थानिकपदान्तलकारसद्भावात्तद्विरोध इति भावः ॥ नन्वेवं सुद्ध्युपास्यो मध्वरिरित्यादावपि यकारवकारयोः पदान्तत्वाविशेषादनभिधानप्रसक्त्या दध्यत्रेत्याष्टमिकभाष्यप्रयोगासङ्गत्या चानुनासिकप्रवृत्तियोग्यानामावसानिकानां तेषामनभिधानमित्यर्थस्यावश्यकतया कथमस्य भाष्यविरुद्धत्वमिति चेत्तर्हि ऌकारस्य स्वरूपबोधकस्य प्रकृतसमासानुरोधेन विभक्त्यन्तस्य प्रयोगाभ्युपगमे पृथक् प्रयोगदशायां षष्ठीपञ्चम्येकवचनयोस्समभिव्याहारे ऋत उदित्युत्त्वे लपरत्वे चानुनासिकप्रवृत्तियोग्य आवसानिको ऌकारस्संभवतीति भाष्यविरोधस्स्यादतो विभक्त्यन्ततया ऌकारस्याप्रयोगो न्याय्य इत्याशयाददोषः ॥

---

द्व्यस्त्वबाधापत्तिकथनन्तु न सम्यक्, तत्र तयोरविधेयत्वेन विधेयविषयकस्यैतन्न्यायस्याप्रवृत्तेः । एवञ्च मूलोक्तरीत्या निर्वाहे रेफस्य द्वित्ववारणप्रयासस्सर्वोऽपि विफल एव । भाष्ये नेमौ रहाविप्यत्र हकारोपादानं दृष्टान्तार्थम् । दृष्टान्ते कार्यित्वाभावः स्वतस्सिद्धः । दार्ष्टान्तिके तु तक्रकौण्डिन्यन्यायमूलक इति न भाष्यस्वारस्यभङ्गः । किञ्च भवन्मत एव भज्येत भाष्यस्वारस्यम् । हकारांशेऽनुवादत्वेऽप्यनूद्यमाननिषेधस्यापि प्रसक्तिपूर्वकत्वेन प्राप्तेर्दुर्वचत्वादित्याहुः ।

२. अनुनासिकविधाविति ॥ अत्रेदं बोध्यम् । नेदं भाष्यं मूलकाराभिप्रेतम् । किन्तूरण्रपर इत्यत्र विचारपरमेव भाष्यमभिप्रेतम् । तत्र हि "अत्राण् पूर्वेण परेण वेति सन्दिह्य फलाभवान्न परेणेत्यभिधाय कर्त्रर्थमित्यादौ यणो रपरत्वं फलत्वेनाशङ्क्य रोरीति लोपेन फलाभावस्समर्थितः । यदीदृशानामभिधानं तदाऽत्र लद्वयश्रुतेः फलस्य सत्त्वात्फलाभवकथनमसङ्गतमेव स्यात् । तथा चानभिधानं भाष्यसम्मतमेवेति स्पष्टमेव तद्विदाम् । एवञ्चाणोऽप्रगृह्यस्येत्येतत्सूत्रविषयकविचारपरतया मूलग्रन्थयोजनं केचित्त्वित्यादिना तत्खण्डनं च ग्रन्थकृतो निमित्तादपराद्धेषोर्धानुष्कस्य वल्गितमनुकरोतीति ॥

केचित्तु यादृशविभक्त्यन्तत्वेन प्रयोगे ऌकारस्य भाष्यविरोधस्तदंशे प्रयोगाभावकल्पनेप्यन्यत्र तदभावकल्पने मानाभावः ॥ प्रकृते च ऌाकृतिरिति बहुव्रीहिः प्रथमान्तश्च, तत्र ऌकार इति युक्त एवायं प्रयोगः ॥ तथा च आकुञ्चितैकशरणो हस्ताभ्यां कुतुकमुद्वहन् व्रज स्त्रीणाम् । यश्चरति नन्दभवने ऌाकृतिरवने सनोस्तु भुवनपतिरिति केषांचित् श्लोकोप्युपपद्यत इत्याहुः ॥

**नकाररहितः पाठ इति** ॥ अत्र पाठे आङ्पूर्वादस्मादिगुपधात्किदित्यौणादिक इन् ॥ **वाचनिकत्वमिति** ॥ वाचनिकीयं परिभाषा भाष्यकारेणोपदर्शिता न तु कात्यायनोक्तं वचनं, तद्धि वक्तव्यमित्यादिशब्दचिह्नितमित्याशयः ॥ यत्तु रथवदयोश्चेति सूत्रमस्यां परिभाषायां ज्ञापकम् ॥ अन्यथा कोः कत्तत्पुरुषेऽचीत्यजन्ते विधीयमानस्य कदादेशस्य स्वत एव सिद्धौ तदसङ्गतिरेवेति तन्न ॥ रथवदशब्दाभ्यामाचक्षाणणिजन्ताभ्यां क्विप्येकदेशविकृतन्यायेन रथादिशब्दात्मके हलन्ते कदादेशाय तत्सार्थक्यात् ॥ न च स्थानिवद्भावेनाजन्तत्वमिति वाच्यम् ॥ रथेनाटति रथाट्, एवं वदेनाटति वदाट्, आभ्यामाचक्षाणण्यन्ताभ्यां क्विपि णिलोपटिलोपयोर्हलन्ते तदादेशस्य प्रकारान्तरेण साधयितुमशक्यत्वादित्याहुः ॥

**तत्रैवास्या इति** ॥ यत्र रूपवैजात्यप्रयुक्तः प्रयोगस्यानियमस्तत्रैकविधप्रयोगस्य कस्य चित् साधुत्वसंपादनाय परिभाषाप्रवृत्तिराश्रयितव्या, परिभाषाणामनियमे नियमकारिणीत्वात् ॥ इह तु पूर्वं पश्चाद्वा जश्त्वे प्रयोगस्यैकविधस्यैव संपत्तेरनियमाभावान्नास्ति परिभाषाप्रवृत्तिरित्याशयः, तदाह ॥ **परिभाषात्वेनेति** ॥ ननु शास्त्रप्रक्रियास्मरणपूर्वकप्रयोग एव धर्मोत्पत्त्या स्मर्यमाणप्रक्रियाक्रमवैजात्यप्रयुक्तः प्रयोगानियमः प्रकृतेप्यक्षतः ॥ किं च जश्त्वोत्तरं द्वित्वे सकृदेव जश्त्वप्रवृत्तिरिति लाघवं, द्वित्वोत्तरं जश्त्वे तु द्विवारं जश्त्वशास्त्रप्रवृत्तिरिति गौरवमतो लाघवसंपत्तये परिभाषाप्रवृत्तिराश्रयितुं युक्ता, अनियमे नियमकारिणी परिभाषेति च प्रायोवादः ॥ उभयगतिरिह भवतीत्यस्य कृत्रिमाकृत्रिमन्यायेन नियतविषयेऽपि प्रवृत्तिदर्शनात् ॥ तस्माद्द्वैधस्येति प्रकृतपरिभाषाया अप्रवृत्त्यभिप्रायको मूलग्रन्थश्चिन्त्य एवेत्यत आह ॥ **यद्वेति** ॥

**सूत्रशेषे चेति** ॥ तत्र हि भाष्ये यवलानामण्ग्रहणेन ग्रहणे प्रयोजनोपपादनावसरे संय्यन्तेत्यादौ परसवर्णस्यानुस्वारस्थानिकस्यानुनासिकस्य यकारादेर्ग्रा-

हकशास्त्रबलाद्यग्रहणेन ग्रहाणाद्द्विर्वचनप्रवृत्तौ यकारत्रयादिघटितप्रयोगसिद्धिः प्रयोजनमित्युक्त्वा नास्ति भेदः सत्यपि द्विर्वचने द्वियकारकमेव, कथं, हलो यमां यमि लोप इत्येवमेकस्य लोपेन भवितव्यमित्येकदेशिन आक्षेपस्य सिद्धान्तिना "एवमपि भेदः सति द्विर्वचने कदाचिद्द्वियकारकं कदाचित्त्रियकारकम् असति द्विर्वचने द्वियकारकमेव स एष कथं भेदो न स्यात् ॥ यदि नित्यो लोपस्स्यात् विभाषा च स लोप" इति परिहारः प्रदर्शितः॥ एतेन हलो यमामित्यत्र विभाषानुवृत्तिस्स्पष्ट-मेवाभिहिता । नाज्झलाविति सूत्रस्थे भाष्ये तु परश्शतानीत्यत्र पारस्करादित्वप्रयुक्त-सुट्स्थानिकश्चुत्वनिष्पन्नशवर्णस्यानचीति द्वित्वोत्तरं झरो झरीति लोपकृतद्विशका-रकरूपसिद्धिप्रयोजकसवर्णसंज्ञोपपत्त्यर्थमारब्धस्याज्झलोः प्रतिषेधे शकारप्रतिषेधोऽ-ज्झल्त्वात् सिद्धमनच्त्वाद्वाक्यापरिसमाप्तेर्वेति वार्तिकस्य व्याख्याने स्वराणा-मूष्मणां च प्रयत्नभेदात्सावर्ण्याभावेनेकारस्य शकाराग्राहकत्वाद्वाक्यापरिसमाप्त्या ग्राहकशास्त्रस्य नाज्झलावित्यत्राप्रवृत्तेश्च शकारस्याच्त्वाभाव इत्येवं विभिन्नहेतुक-पक्षमुपपाद्य वाक्यापरिसमाप्तिहेतुकादनच्त्वादित्येकहेतुकपक्षप्रतिपादनावसरे वा-ग्रहणस्य प्रयोजनसमर्थनायोक्तम् ॥ "माभूल्लोपः, ननु च भेदो भवति सति लोपे द्विशकारकमसति लोपे त्रिशकारकं नास्ति भेदः असत्यपि लोपे द्विशकारकमेव, कथं विभाषा द्विर्वचनम्, एवमपि भेदः असति लोपे कदाचिद्द्विशकारकं कदाचित्त्रिशका-रकं सति लोपे द्विशकारकमेव, स एष कथं भेदो न स्याद्यदि नित्यो लोपस्स्यात् विभा-षा तु स लोप" इति । तेन झरो झरीत्यत्र विभाषानुवृत्तिस्स्पष्टमुक्तेत्यत्र मूलव्याख्यान-कृतोराशयः ॥ **अण्ग्रहणमिति** ॥ तद्धि संय्यन्तेत्यादौ परसवर्णनिष्पन्नानुनासिक-यकारादेर्यत्वेन द्वित्वे त्रियकारादिरूपसिद्ध्यर्थं, हलो यमामिति लोपस्य नित्यत्वे तद्वैयर्थ्यं स्पष्टमेवेति भावः ॥ **विशेषापेक्षत्वे इति** ॥ कमलशब्दप्रकृतिकादा-चक्षाणणिजन्तात् क्विपि निष्पन्नस्यानुनासिकयोगे कमल्ँनयतीत्यादौ यरोनुनासिक इत्यनुनासिके लकारे यत्वेन तस्य ग्रहणे द्वित्वेन द्विलकारकरूपसंपत्त्यर्थमण्ग्रह-णस्य सार्थक्यकल्पनायां चेत्यपि बोध्यम् ॥

**सिद्धं कृत्वेति** ॥ ईदन्तु चिन्त्यम् ॥ उक्तरीत्या ग्राहकसूत्रस्थस्याण् ग्रहणस्य विकल्पानुवृत्तिज्ञापकत्वायोगात् ॥ न च न हि पदान्ताः परेऽणस्सन्तीति

१. इदं तु चिन्त्यमिति ॥ अत्रेयं चिन्ता । निरुक्तभाष्यप्रामाण्येन कमलित्यस्य

लृण् सूत्रस्थभाष्यप्रामाण्येन पदान्तलकारवतामनभिधानान्नास्ति चारितार्थ्यसंभव इति वाच्यम् ॥ उपक्रमोपसंहारस्वारस्येन तद्भाष्यबलादावसानिकानुनासिकप्रवृत्तिविषयाणां तेषामनभिधानेप्यन्येषां तथात्वे मानाभावात्। अन्यथा तल्लुनातीत्यादौ तथाविधलकारादिमतामुपलम्भात्तदसांगत्यमेव स्यात् ॥ संयोगान्तलोपे यणः प्रतिषेधो वाच्य इति वार्तिकमप्यसंबद्धं स्यात् ॥ अत एव लृण् सूत्रशेषे भाष्ये प्रकृतसूत्रद्वयेऽपि विकल्पानुवृत्तौ कैश्चिदुद्भावितस्य शरोऽचीति ज्ञापकस्य विघटनानन्तरं, तदेतदत्यन्तं संदिग्धं वर्तते "आचार्याणां विभाषाग्रहणमनुवर्तते न वे" त्युपसंहृतम् ॥ तस्य च विकल्पानुवृत्तावाचार्योपदेशपारम्पर्यमेव शरणं नत्वत्र ज्ञापकसंभव इत्येव हि स्वारसिकोऽर्थस्तथा च व्याख्यानमेव शरणमिति मूलकारोत्प्रेक्षितमेव युक्तमित्याहुः ॥

**अनभिधानादिति** ॥ आवश्यकं चेदमनभिधानमन्यथा एकः पूर्वपरयोरिति सूत्रस्थभाष्यसंमते प्रत्येकमुपधावकारयोरूठिति पक्षे प्राथमिकस्योठ आङा सहान्तरङ्गत्वादाद्गुणे अवादेशे सवर्णदीर्घे जनावूरिति स्यात् ॥ यथाश्रुते च जनौरिति फलवैलक्षण्यापत्तेः ॥ नन्वेच ऊठंशे संबन्धे ओमाङोरित्यस्य बाधः, तदसंबन्धे चाद्गुण इत्यस्य, तत्र वृद्धेर्गुणबाधकत्वं कॢप्तं गङ्गौघ इत्यादौ पररूपबाधकत्वं चाकॢप्तम् ॥ तस्मादकॢप्तबाधकल्पनापेक्षया कॢप्तबाधकल्पनैव न्याय्येत्याशयेनाह ॥ **किं चेति** ॥ नन्वेवमेत्येधत्यंशेपि तदसंबन्धस्स्यादुक्तयुक्तेरत आह ॥ **लक्ष्यानुरोधेन चेति** ॥ भाष्ये च योगविभागादूठंशे तदसंबन्ध उक्तः ॥ **पूर्वस्यैव हीति** ॥ हिशब्दादयमर्थोऽत्राभ-

---

केवलस्यानभिधाने सिद्धे संस्कृत्य संस्कृत्य पदान्युत्सृज्यन्ते तेषां यथेष्टमभिसम्बन्धो भवतीति रीत्या कमल्इत्यस्यैवाभावेन पदान्तरसम्बन्धो न घटत इति कमल् नयतीति समभिव्याहारो दुर्लभ एव । ध्वनिता चेयं रीतिः "काष्ठशगेत्र नास्ति कुतः काष्ठशक्स्थातेति" भाष्यग्रन्थेन। तल्लुनातीत्यादौ तु तदः स्वातन्त्र्येण प्रयोगस्य निर्बाधत्वेन तत्समभिव्याहारस्य सुलभतया नैतद्दृष्टान्तेन तदनभिधानप्रसङ्गः । दध्यत्रेत्यादौ यणन्तं पदं न कमल्सदृशम् । अतो न "यणः प्रतिषेधो वाच्य" इति वार्तिकस्वारस्यभङ्गः । एवञ्च न तदर्थमण्ग्रहणमिति ज्ञापकत्वं सुस्थमेव । सूत्रशेषे विभाषानुवृत्तेः सन्दिग्धत्वेनोपसंहारश्च शरोऽचीत्यस्य ज्ञापकत्ववर्णनाय प्रवृत्तवार्तिककृद्रीत्या, तन्मतेऽण्ग्रहणस्यैवाभावात् । अतस्सूत्रकृन्मतेऽण्ग्रहणस्य ज्ञापकत्वे नैतद्भाष्यं विरुणद्धि । एवं च सूत्रकृद्रीत्या शब्दरत्नग्रन्थः, वार्तिकरीत्या मनोरमाग्रन्थः । तदेतत्सकलं ध्वनयन्नाह मूले । परन्त्वित्यादीति ॥

क्षन्यायलब्ध इति सूचितम् ॥ एतत्फलमारतुरित्यादावृच्छत्यृतामित्युत्तरखण्डीय-गुणस्य सवर्णदीर्घे स्थानिवत्त्वाभावः ॥ **ण्यन्तस्याङ्गस्येति** ॥ न च ल्यपि लघुपूर्वा-दित्यत्रावश्यमाश्रयितव्येन वैयधिकरण्येन प्रकृतेप्यङ्गस्य णेरित्येवार्थः किं न स्यादिति वाच्यम् ॥ संभवति सामानाधिकरण्ये वैयधिकरण्यस्यायुक्तत्वादगत्या तत्र तथा स्वी-कारेपि प्रकृते वैयधिकरण्याश्रयणे मानाभाव इत्याशयात् ॥ **अल्पपदार्थापेक्षत्वा-दिति** ॥ ननु बह्वपेक्षं बहिरङ्गमल्पापेक्षमन्तरङ्गमित्यर्थस्य बहुशो दूषितत्वात्कथं द्वित्वस्यान्तरङ्गत्वमित्यत आह ॥ **भाष्ये त्विति** ॥ **षत्वाप्राप्तेरिति** । त्वद्रीत्या ण्यन्त-घटकस्य स्वतन्त्रधातुग्रहणेनाग्रहणादित्याशयः ॥ नन्वक्षौहिणीशब्दस्य परिमाण-विशेषविशिष्टसेनायां संज्ञाभूततया वाक्येन संज्ञिनोऽनवगमादविग्रहकेण नित्यसमा-सेन भवितव्यमित्यतो न युक्तं विग्रहप्रदर्शनं तत्राह ॥ **समस्यमानेत्यादि** ॥

**फणादेरेवेति** ॥ नन्वस्यामवस्थायामनर्थकस्य फणादिव्यतिरिक्तभ्राजन्त-र्गतराजेरपि राजिग्रहणेन ग्रहणसंभवात्तत्र फणादित्वनिश्चयाभावेन कथं तत्साहचर्येण भ्राजौ फणादित्वप्रतिपत्तिरिति चेन्न ॥ विपराभ्यां जेरित्यत्र परस्परसाहचर्येणोपसर्ग-योरिव प्रकृते फणाद्योरेव राजिभ्राज्योर्ग्रहणमित्याशयात् ॥ **जॄधातोः क्विबिति** ॥ ननु राशब्दघटितसंघातसापेक्षह्रस्वापेक्षया जॄधातुमात्रसापेक्षस्य ॠत इत्त्वस्यान्त-रङ्गतया प्रथमं प्रवृत्तेर्नैतादृशरूपसंभव इति चेत्सत्यम् ॥ केवलादेव जॄधातोः क्विप्यर्थ-कृतबहिरङ्गत्वानाश्रयणाद्धातोः कार्यमुच्यमानमिति परिभाषया ॠत इत्त्वस्य पर-निमित्तकत्वाच्च प्रथममेव ह्रस्वे राधातुप्रकृतिकक्विबन्तराशब्दस्य पश्चात्समासे निरु-क्तरूपसंभव इत्याशयोऽत्र द्रष्टव्यः ॥ **धातुसंज्ञकराजेरिति** ॥ ननु साहचर्येण दादेरिति सूत्रादनुवर्तनेन वा, धातुसंज्ञकानामेव व्रश्चादीनां ग्रहणे निर्दिश्यमान-परिभाषया धातुसंज्ञावतो निर्दिश्यमानस्य व्रश्चादेरित्यर्थे लावस्थायामडिति भाष्य-कारीयसिद्धान्ते व्रश्चादिभ्यो लुङि अव्राष्टामयाष्टामित्यादौ निर्दिश्यमानस्यागमसम-वधाने धातुत्वाभावेन षत्वानापत्तिर्धात्ववयवस्य निर्दिश्यमानस्येति वैयधिकरण्येन संबन्धे तु भ्राजन्तर्गतस्यापि तथात्वेन व्यर्थतया युक्तमेव ज्ञापकत्वमत आह ॥ **किं चेति** ॥ **समुदायानुबन्धत्वादिति** ॥ प्रयोगे क्वापि राजृ इत्येतादृशरूपानुप-लम्भेन ऋकारानुबन्धवैशिष्ट्येन यस्योपदेशस्तद्ग्रहणस्य विज्ञेयतया पाणिनेश्च सर्वत्र हलन्त्यसूत्रोक्तभाष्यरीत्या समुदायोपदेश एव तात्पर्याद्भ्राजादित्यादिप्रयोगान्तर्गतस्य

आजवयवराजेर्ऋकाररूपानुबन्धवैशिष्ट्येनोपदेशाभावाद्राजृग्रहणेनाग्रहणात् षत्वार्थं पृथग्भ्राजिग्रहणस्यावश्यकत्वेन न ज्ञापकत्वसंभव इत्याशयः ॥

केचित्तु धातुपाठे भ्राजृ इति ऋकारानुबन्धोच्चारणसामर्थ्यादवयवेप्युपदेशतात्पर्यकल्पनया राजृ इत्यनेन भवत्येव भ्राजन्तर्गतस्यापि राजेर्ग्रहणं, भ्राजभासेत्यनेन ह्रस्वविकल्पस्य वाचनिकत्वादकारानुबन्धोच्चारणेनाप्यात्मनेपदप्रवृत्तेस्सुलभतया तस्य षत्वमात्रफलकत्वादतस्सुस्थमेव ज्ञापकत्वं, परं तु न्यायसिद्धेऽर्थे ज्ञापकान्वेषणं नातीवोपयुज्यत इत्येवारुचिरित्यन्यत्र विस्तर इत्याहुः ॥

**प्रत्येकं स्थानित्वादिति** ॥ अत एव विध्यतीत्यादौ स्थानिवत्त्वेन संप्रसारणत्वमाश्रित्य न संप्रसारण इति निषेधः, पूर्वपरोभयसंघातस्यैव स्थानित्वे तु संप्रसारणत्वस्य तद्वृत्तित्वाभावादनुपपत्तिस्स्पष्टैव ॥ **स्थानिधर्मत्वाभावादिति** ॥ एकादेशस्थानिनोरकारकारयोः पदत्वाभावादिति तदर्थः ॥ **प्राच्छादेशे त्विति** ॥ श्रौतानुरोधादानुमानिकेपि स्थान्यादेशभावे श्रौतैकादेशघटितपूर्वपरोभयसंघातात्मक एक एवादेशः, स्थानित्वं तु श्रौतैकादेशस्थानिघटितपूर्वपरसंघातयोः पृथगेवेत्याशयः, तदाह ॥ **समुदाये प्रशब्दधर्माणामिति** ॥ पदत्वादीनामित्यर्थः ॥ इदन्तु चिन्त्यम् ॥

---

१. **आहुरिति** ॥ परे तु अस्य ज्ञापकत्वं नैव घटते । भ्राशतेःषत्वेन विभ्राडिति भ्राजतेः कुत्वेन विभ्रागिति च रूपसिद्ध्या स्वांशे चारितार्थ्यस्य दुर्निरूपत्वात् । न च भ्राजाः श्लोकाः, तानाचष्टे भ्राडिति सिद्ध्यर्थं तदावश्यकमिति वाच्यम् । साहचर्येणाफणादेः कुत्वं वदतः एकत्रर्कारानुबन्धकरणेन कुत्वं समर्थयतश्च तत्र षत्वस्यानिष्टत्वात् । यदि तत्र षत्वमिष्टं तथाप्यृकारानुबन्धकरणेन ज्ञापकत्वसमर्थनं दुर्घटम् । तत्र षत्वार्थं भ्राजिग्रहणस्यावश्यकत्वात् । यदि तत्र षत्वार्थं द्विवारं राजिग्रहणं कृत्वा ज्ञापकत्वं समर्थ्येत, तदा पुनः स्वांशे चारितार्थ्यं दुर्निरूपम् । न च ज्ञापनोत्तरं तत्रत्यराजेरनर्थकत्वेन राजानमाचष्टे राडित्यत्रार्थवतस्सम्भवेन चानया तद्व्यावृत्तौ तत्र षत्वार्थं भ्राजिग्रहणमावश्यकमिति वाच्यम् । ऋकारानुबन्धपरित्यागेनैकेन राजिग्रहणेन सर्वत्रार्थवतोऽपरेणानर्थकस्य च ग्रहणसम्भवेन चारितार्थ्यस्य दुर्निरूपत्वादिति दिगित्याहुः ।

२. **इदं तु चिन्त्यमिति** ॥ अत्रेदं तत्त्वम् । भियो हेतुभये इति सूत्रे ईकारप्रश्लेषसद्भावेन तत्रेयङ्निर्देशेन श्रौतस्थान्यादेशभावानुरोधेन प्रत्येकं स्थानित्वं विशिष्टस्यादेशत्वमिति वदतां प्राचामनुरोधेन यथाकथंचित्समुदाये पदान्तत्वप्रतिपादकोऽयं मूलग्रन्थः, न तु भिय इत्यादौ सौत्रत्वेन सिद्धिमभिप्रयतां नवीनानामनुरोधीति चिन्त्यतोक्तिरनुचितैवेति बोध्यमिति ।

श्रौतस्थान्यादेशभावे प्रत्येकं स्थानित्वबोधनेन कृतार्थस्य द्विवचननिर्देशस्य कल्पिते तस्मिन् पृथक्स्थानित्वसंपादकत्वे मानाभावात् ॥ स्पष्टं चेदमदादिप्रकरणे शेखरे ॥ अत एवेन्द्रस्य वज्रोसीत्यादौ पूर्वरूपात्मकैकादेशघटितसुप्तिङन्तसंघातस्य तिङन्तत्वातिदेशेन तिङतिङ इति निघातस्याप्रवृत्तिः, स्वाश्वशब्दे सवर्णदीर्घविशिष्टे स्वशब्दत्वमाश्रित्य स्वाश्वेरीत्यादौ स्वादीरेरिणोरिति वृद्धेरप्रवृत्तिश्च, अन्यथा विशिष्टे स्थानिभूतस्वावयवधर्मातिदेशेनोपदर्शितप्रदेशे विमतप्रसङ्गो दुर्वार एव स्यादित्याहुः ॥ **दुर्लभत्वादिति** ॥

केचित्तु सर्वे सर्वपदादेशा इत्येतद्वचनमूलकेनार्थवतोरेव स्थान्यादेशभाव इत्येतत्सिद्धान्तेन कल्प्यमानस्य स्थान्यादेशभावस्यार्थवत्ताप्रयुक्ततया प्रार्छतीत्यादौ श्रौतस्थानिघटितयोःपूर्वपरसंघातयोरपि कल्पितार्थवत्त्वाव्यभिचारेण प्रत्येकमेव स्थानित्वं, परं तु श्रौतादेशस्य पूर्वपरोभयनिवर्तकस्यैकत्वबोधनेनैकग्रहणस्य कृतार्थत्वात्सूत्रघटकपदजन्यलक्षणाधीनबोधविषयस्यैकादेशघटितादेशस्यानुमानिकस्यैकत्वसमर्थने गमकाभावात्। प्रशब्दस्य प्रार् ऋच्छतेश्च आर्छ् इत्येवमुभयविधादेशकल्पनाया आवश्यकत्वेन रेफान्ते पदत्वं दुर्वारम्। अत एव स्थानिवत्सूत्रेण गतार्थत्वं, अन्यथा हे ज्ञानेत्यादावमि पूर्व इति पूर्वरूपोत्तरमङ्गत्वस्य स्थानिवत्त्वेन ह्रस्वान्ते प्रतिपादयितुमशक्यतया संबुद्धिलोपाप्राप्तेस्तदुपपत्त्यर्थमावश्यकत्वादन्तादिवत्सूत्रस्य कथं गतार्थता स्यात् ॥ तस्मादिह विसर्गवारणे निर्देश एव सर्वथा शरणमिति चिन्त्य एवायं ग्रन्थ इत्याहुः[१] ॥

**ताद्रूप्यस्येति** ॥ तस्य वर्णस्य यद्रूपमसाधारणो धर्मस्तदेव ताद्रूप्यम्, स्वार्थे ष्यञ् तस्य योऽतिदेशस्तस्याभाव इत्येवं नञा सहार्थाभावेऽव्ययीभावस्तदाह ॥ **अतिदेशाभाव इति** ॥ उक्तार्थस्योपपत्तिमाह ॥ **पूर्वस्य परस्य चेति** ॥ अनुवर्तमानं च पूर्वपरयोरिति समुदायपरम्, अन्तादिवदिति तृतीयान्ताद्वतिः, उपमेये प्रथमादर्शनात् ॥ ततश्च एकादेशस्थानिघटितयोः पूर्वपरसंघातयोरेकादेशो-

---

१. आहुरिति ॥ परे तु आनुमानिकस्थान्यादेशभावस्य विशिष्ट एव विश्रान्तेः गुरुप्रसादे विस्तरतो निरूपितत्वेन स्थानिवद्भावेन गतर्थत्ववादिनामत्र विसर्गवारणाय ज्ञापकाश्रयणं न कार्यमित्येव मूलकाराशयः। गातर्थता तु न घटत इति निरूपितं शब्देन्दुशेखरे। विस्तरस्तु गुरुप्रसादतोऽवसेय इत्याहुः।

ऽन्तादिभ्यां तुल्यं भवतीत्यक्षरार्थः ॥ ताद्रूप्यानतिदेशश्च प्रमाणान्तरसिद्धो नत्वपूर्व इत्याहे ॥ **अत एव तुक्यसिद्धवचनमिति** ॥ एकादेशापेक्षया पूर्वमेव तु न तुगागमः। अधीत्येत्यादौ ल्यबुत्पत्तये क्त्वान्तेन समासे तत्र संहिताया नित्यत्वाद्विशिष्टसमाससापेक्षं ल्यबादेशमपेक्ष्यान्तरङ्गत्वाच्च प्रथममेकादेशस्य दुर्वारत्वादिति वक्ष्यते ॥ **तुग्ग्रहणं ज्ञापकमिति** ॥ षत्वग्रहणं तु न ज्ञापकं, तस्य त्रैपादिकान्तरङ्गत्वेन तदंशे बहिरङ्गपरिभाषाया अप्रवृत्तेः ॥

**अपपाठ इति** ॥ पूर्वत्र उस्यपदान्तादित्यत्रापि प्रयोजनसत्त्वेनातो गुण इत्येतदर्थत्वप्रतिपादनस्यायुक्तत्वादिति भावः ॥ **यादृशं रूपमिति** ॥ रूपमवयवसंस्थानं तद्यादृशं परस्य तादृशं यस्य स यथा स्यादिति तदर्थः ॥ न ह्यन्यदीयमवयवसंस्थानमन्यस्य भवतीत्याहुः ॥ **रूपशब्देनेति** ॥ रूपवदर्थकेनेत्यर्थः ॥ **न हि स्वर इति** ॥ उदात्तत्वादिगुणविशेषविशिष्टो वर्णस्तेन गुणेन न रूपवानिति तदर्थः ॥ **वर्णरूपावयवसंस्थानमिति** ॥ वर्णरूपा येऽवयवास्तेषां क्रमविशेषविशिष्टस्संदर्भस्संस्थानम्, आनुपूर्वीति यावत् ॥ अयं भावः ॥ रूपमत्राकारः। स च सकलपदार्थसाधारणो जातिगुणकर्मभ्यस्तत्तत्पदार्थगतेभ्यो विलक्षणो भिन्नभिन्नः, यथा घटादौ। ततश्च शब्दगतानां शब्दत्वादिजातीनामानुनासिक्यादिगुणानां च न शब्दाकारता, किन्तु संदर्भविशेषविशिष्टानामवयवानामेव, निरवयवत्वे च तत्तद्व्यक्तिरेकैवाकाराकारभेदेन व्यपदिश्यते, यथा गगनादौ, ततो नैकवर्णेऽपि तद्व्यवहारविरोध इति ॥ ननु गुणानां रूपत्वाभावे निरुक्तरीत्या तन्निवारणायोगादेकस्थान्यन्तरतमत्वात्पाक्षिकी सानुनासिकप्रवृत्तिर्दुर्वारेत्यत आह ॥ **परःकिं गुणक इत्यादि** ॥ **तस्यैव सिद्धेरिति** ॥ ननु गुणानामभेदकत्वात्कथमुक्तार्थलाभस्तत्राह ॥ **परशब्देनेत्यादि** ॥ **न तु प्रयोगे इति** ॥ अन्यथा गुणविधायकशास्त्रवैफल्यमेव स्यात्। अत एव य उदात्ते कर्तव्ये अनुदात्तं करोति खण्डिकोपाध्यायस्तस्मै चपेटां ददातीति वृद्ध्याह्निके भाष्यकारेणोक्तमित्याशयः ॥

---

१. **आहेति** ॥ ताद्रूप्यातिदेशश्च यथा सूत्रेण न भवति तथा सूत्रार्थस्य गुरुप्रसादे प्रतिपादितत्वेन ताद्रूप्यानतिदेशस्यार्थसिद्धत्वेन प्रमाणान्तरसिद्धत्वकथनासङ्गतेरिदमवतरणमयुक्तं, किन्तु "उक्तमर्थं प्रमाणेन द्रढयती" ति युक्तमवतरणम्। ताद्रूप्यानतिदेशश्चोक्तसूत्रार्थसिद्ध इति लेखने तु मूलोक्तमपि साध्वित्याहुः।

**दोषमाशङ्क्येति** ॥ एध इत्यादौ वृद्धिवारणेन कृतार्थत्वात्पररूपविधानस्य पचन्तीत्यत्र दोषप्रसङ्गः ॥ **यादृशं रूपमिति** ॥ अत एतीति सिद्धे गुण इत्युक्तेरकारे पररूपेण दीर्घाप्रवृत्तिरित्यपि युज्यते वक्तुम्[1] ॥ **सूचितमिति** ॥ सिद्धान्ते तस्योक्तार्थकताया आवश्यकत्वे अवश्यं चैतदेवं विज्ञेयमित्यपि तत्र वदेदिति भावः ॥

**इति दिगिति** ॥ दिगर्थस्तु आवसानिकानुनासिकोपहितस्य शिवायेत्यादेरोमित्यनेन संबन्धे निमित्तापाये नैमित्तिकस्याप्यपाय इति तदनुनासिकत्वं निवर्तेत, यद्यनुकरणस्वरूपभङ्गभयात्तदनिवृत्तिरित्युच्यते तर्हि तेनैव निमित्तेन संहिताकार्यमपि तत्र न स्यात् । निमित्तापायपरिभाषाया अनाश्रयणे तु युक्तमीदृशानामनभिधानमेव। अन्यथा विसर्जनीयस्य स इति सूत्रस्थभाष्यविरोधः, तत्र हि खरीत्यस्यानुवृत्त्यभावेपि खर्येव विसर्जनीयस्य सत्वमिति प्रतिपादनाय खरवसानयोर्विसर्जनीयं विधाय तस्यानेन सत्वविधानादन्यतरस्मिन्सत्वं, यदि च खरवसानयोरुभयोरप्यनेन सत्वं स्यात्तर्हि विसर्गविधानं व्यर्थं स्यादित्युपक्रम्य शर्परे विसर्जनीय इति ज्ञापकात्खर्येव विसर्गस्य सत्वप्रवृत्तिर्विपर्यये तु खरि विसर्जनीयस्य सिद्धतया पुनर्विधानमनुपयुक्तं स्यादित्युक्तम् । आवसानिककार्यस्य भाविन्यवसानभङ्गेपि पूर्वं प्रवृत्तिः, प्रवृत्तस्य वा निमित्तविनाशे निवृत्त्यभावः, तदा क इत्यादेर्विसर्गान्तस्यानुकरणे त्सरुशब्दयोगे कः त्सरुरित्यादौ सत्वनिवृत्तये विसर्गविधानेन सार्थकस्य शर्पर इत्यस्य भाष्यकारोक्तज्ञापकताया अनुपपत्तेरित्यन्यत्र विस्तरः ॥

ननु देशविशेषशब्दस्य लुप्तचातुरर्थिकाणन्तशकविशेषणत्वेपि जातिवाचकतया विशेषणानां चाजातेरिति पर्युदासाद्युक्तवद्भावाप्रसक्त्या बहुवचनान्तत्वमयुक्तमत आह ॥ **यौगिकत्वेनेति** ॥ समस्तत्वेनेत्यर्थः ॥ अयं भावः ॥ अजातेरिति जातिप्रवृत्तिनिमित्तकानां पर्युदासस्समासश्च समस्यमानपदार्थसंसर्गप्रवृत्तिनिमित्तकः॥ कृत्तद्धितसमासेभ्यः संबन्धाभिधानं भावप्रत्ययेनेत्यनुशासनानुरोधात् कर्मधारयेऽपि तादात्म्यमेव प्रवृत्तिनिमित्तम् ॥ तादात्म्यस्य संसर्गत्वमनिच्छूनां तु विशेषणविशेष्य-

---

१. **युज्यते वक्तुमिति** ॥ वस्तुतः तितउ शब्दात्सम्बुद्धौ तितओ इति जाते पररूपस्य एतीति न्यासेऽसिद्धेरिदं चिन्त्यम् । निपातनन्तु गुणस्यैव निवर्तकं न तु पररूपस्येति बोध्यम् ।

भाव एव तदित्यन्यत् ॥ ततश्च युक्तवद्भावविरोधिनो जातिप्रवृत्तिनिमित्तकत्वस्या-भावाद्युक्तवद्भावस्यात्र प्रसङ्ग इति, तदाह ॥ **जातिवाचकत्वाभावादिति ॥**

केचित्तु प्राधान्येन जात्युपहितद्रव्यवाचकस्यायं पर्युदासः ॥ अत एव भोगदेशश्चोला रोगदेशो वङ्गा इत्यादिव्यवहारोपपत्तिस्तस्मात्प्रधानवाचिनो विशेष-शब्दस्य जातिवाचकत्वाभावात्प्रकृते नोक्तपर्युदासप्रवृत्तिरिति युक्तमत्रोत्तरमिति वैदन्ति ॥

अत्र शकशब्दो देशविशेषे कर्कशब्दो राजविशेषे च प्रसिद्ध इति भेदेनार्थ-विवरणमिति तत्त्वम् ॥

नन्वव्यक्तस्येत्युक्तावपि ध्वनावच्छब्दाभावेन शास्त्रप्रवृत्त्ययोगेन सामर्थ्यादनु-करणे परिस्फुटाकारादिवर्णघटिते प्रवर्तत इति किमनुकरणोपादानेनेत्यत आह ॥ **तदभावे हीति ॥ जश्त्वेपीति ॥** सपादसप्ताध्यायीस्थकार्यप्रवृत्तियोग्यतायां त्रैपादि-कस्य पूर्वमप्रवृत्त्या तस्मिन् प्रसक्तेपीत्यर्थः ॥ **अत एवेति ॥** अच्छब्दस्यैवेत्यर्थः ॥ **वृत्त्यादिस्थस्येति ॥** पुनरद्ग्रहणाज्जश्त्वासिद्धत्वबोधनेन तद्विषये पररूपाप्रसक्तौ निषेधोदाहरणत्वं तस्य दुर्वचमित्याशयः ॥ **उभयतःपाशेति ॥** पटत्+इति=पटि-तीति पूर्वग्रन्थे जश्त्वाभावसमर्थनार्थमभेदविवक्षाश्रयणे अतः किं? दान्ते माभूदित्य-ग्रिमग्रन्थस्यासंगतिस्तत्समर्थनाय भेदविवक्षाश्रयणे च पूर्वग्रन्थासंगतिरिति तदर्थः ॥ **अपास्तमिति ॥** अपदान्तग्रहणानुवृत्तिशब्दाधिकाराभ्यामन्यथासिद्धत्वान्नेदमद्ग्र-हणस्य सौत्रस्य प्रयोजनमित्यभिप्रायः ॥ ननु सूत्राक्षराणां कथंचित्सार्थक्यसंभवे सुतरां वैयर्थ्यापादनमनुचितं तत्राह ॥ **ज्ञापनार्थमिति ॥** ननु नाम्रेडितस्यान्त्य-स्य तु वेति ज्ञापकादत्रार्थाधिकारो न युक्तः । न ह्यकारस्यान्त्यः कश्चन वर्णोऽस्ति येन विकल्पविधानमुपपन्नं स्यात् ॥ न चाम्रेडितान्त्यस्यैव विकल्पविधानमिति युक्तम् । नञो वैयर्थ्यादन्त्यग्रहणस्यापि निष्फलत्वाच्च ॥ तथा च कथं शब्दाधि-कारानित्यत्वज्ञापनेन वा सौत्रस्याद्ग्रहणस्य सार्थक्यं स्यात्, स्वांशे चारितार्थ्यस्य

---

१. **वदन्तीति ॥** मूले जातिवाचकत्वाभावादित्यस्य प्राधान्येन जातिवाचकत्वा-भावादित्यस्याप्यर्थस्य वक्तुं शक्यतया उक्तार्थस्य मूलोक्तार्थातिरिक्तत्वाभावान्मतान्त-रपरतया लेखनमनुचितमिति बोध्यम् ।

दुर्लभत्वादिति चेदत्र केचित् ॥ अत इत्यस्यानुवृत्तावपदान्तादित्यस्यापि संबन्धस्स्यात् ॥ पूर्वत्र तयोस्सहसंबद्धत्वात्, ततश्च पदान्तविषये न स्यात् । अतो भेदविवक्षायां पदान्ते तदविवक्षायामपदान्ते च प्रवृत्त्यर्थं पुनरद्ग्रहणमिति सर्वमनवद्यमित्याहुः ॥

**अन्यथासिद्धिरिति ॥** ईषत्पृष्टयोरप्यृकारऌकारयोर्द्विमात्रकत्वाद्धलक्सूत्रे पाठेनाच्त्वाच्च दीर्घतया होतृ ऋकार इत्यादौ रेफद्वयवत्तासाम्यात्कदाचिदीषत्स्पृष्टदीर्घः कदाचिद्विवृतत्वसाम्याद्विवृतदीर्घः, तथा होतृ+ऌकार इत्यादौ हल्द्वयवत्तासाम्यादुत्तरवार्तिकविधेय ईषत्स्पृष्टः पक्षे चोभयस्थान्यन्तरतमस्य परस्यान्तरतमस्य चाप्रसिद्धत्वात् पूर्वस्थान्यन्तरतम एव विवृतो दीर्घ इत्येवं तदुद्भावनमित्यन्यत्रविस्तरः ॥

**विभक्तौ चेदिति ॥** हरयो विष्णव इत्यादौ जसि पूर्वरूपाभावो नियमफलं स्यादिति भावः ॥ **नियमशङ्कावारणार्थमिति ॥** भवतेर इत्यादिनिर्देशरूपोपायान्वेषणपरिक्लेशमन्तरेण तन्निवारणबोधनार्थमित्यर्थः ॥

**आवृत्त्येति ॥** यथा दादेर्धातोरित्यत्र दादिपदावृत्त्या विशेषार्थावगमस्तद्वदिहापीति भावः ॥ इदं प्राचामनुरोधेन ॥ तन्मते हि लक्षणप्रतिपदोक्तपरिभाषा वर्णग्रहणेषु न प्रवर्तते, स्वमतेनाह ॥ **परिभाषया वेति ॥** ननु आदेच इति सूत्रस्थमुपदेशग्रहणं चेता स्तोतेत्यादौ लाक्षणिकस्यैच आत्त्ववारणार्थं सद्वर्णग्रहणे प्रकृतपरिभाषाया अप्रवृत्तौ ज्ञापकमिति तत्सार्थक्यम् ॥ यदि तु वर्णग्रहणेप्येतत्परिभाषाप्रवृत्तिस्स्यात्तर्हि लाक्षणिकत्वादेवात्त्ववारणसंभवात्तदानर्थक्यमनिवार्यं स्यादत आह ॥ **वर्णग्रहण इत्यादि ॥ अनित्यतामात्रज्ञापकत्वमिति ॥** वर्णग्रहणेष्वप्रवृत्तिरित्येवमात्मकव्यवस्थानुपहितसमुदायग्रहणसाधारणकाचित्काप्रवृत्तिरूपानित्यताया एव ज्ञापकमित्यर्थः ॥ ननु प्राचीनोक्तमनुगमोपहितमनित्यत्वमपहाय वर्णग्रहणसमुदायग्रहणसाधारणमननुगतमनित्यत्वं ज्ञापनियमिति कोऽसौ दुराग्रहस्तत्राह॥ **ध्वनितमिति ॥ भाष्ये इति ॥** तत्र हि ओतश्श्वि प्रतिषेध इत्येतद्वार्तिकप्रयोजनभूतयोरदोभवत्पुरोभवदित्यनयोरोकारस्य लाक्षणिकत्वात्प्रकृतपरिभाषाबलेनान्यथासिद्धिरुक्ता, वर्णग्रहणेष्वेतदप्रवृत्तौ तदसंगतिरेवेति भावः ॥ किं च वर्णग्रहणेष्वप्रवृत्तिज्ञापनेन न निर्वाहः ॥

समुदायग्रहणेष्वपि क्वचिदप्रवृत्तेरभीष्टत्वात् ॥ अत एव भोभगो इति सूत्रे प्रतिपदोक्त-निपातवद्विभाषा भवदिति वार्तिकनिष्पन्नानां लाक्षणिकानामपि ग्रहणमुपपद्यते ॥ अपि च तिष्ठतु तावत्सान्यासिकं धातुग्रहणमिति भाष्ये धातुग्रहणानुवृत्तेर्निराकृतत्वात् गोभ्यां नौभ्यामित्यादावात्त्वाभावार्थमादेच इत्यत्र उपदेशग्रहणस्यावश्यकतया निरुक्तज्ञापनासंभवः ॥ एशिरेचोस्तु सामर्थ्यादेवात्त्वाप्रवृत्तिः तस्माद्ध्रुवश्च महाव्याहृतेरिति सूत्रस्थेन महाव्याहृतिग्रहणेन सामान्यत एवोक्तपरिभाषाया अनित्यत्वं ज्ञाप्यत इति न काप्यनुपपत्तिस्तदाह ॥ **अन्यत्र विस्तर इति** ॥ **अत्रादेशोपि नेति** ॥ पाठयोः फलैकतालाभार्थमनन्तरस्येति न्यायोऽत्र नाश्रीयत इत्याशयः ॥

**औचित्यमिति** ॥ यद्यपि बहुव्रीहौ गवाग्रशब्दादौ गोशब्दसंबन्धिन ओकारस्य पूर्वपदप्रकृतिस्वरेणोदात्तगुणतया व्यपदेशिवद्भावेनान्तोदात्तत्वाद्युदात्तत्वरूपोभयधर्मवत्त्वात्तस्य स्थाने जायमानस्यावङादेशस्य कदाचिदन्तोदात्तत्वं स्यादिति तन्निवृत्तये गोरग्वचनं स्वरसिद्ध्यर्थमिति वार्तिककृदारब्धवचनसूचितोऽसौ न्यास आदेशस्याद्युदात्तत्वनिपातनात्तत्पुरुषे गवाग्रशब्दादौ समासान्तोदात्तत्वस्य सति शिष्टतालाभार्थमुपदेशिवद्भावाभ्युपगमाच्च भगवता भाष्यकारेण निराकृतः, तथापि तत्सूत्रकारतात्पर्यवर्णनपरं, न तु वार्तिकप्रत्याख्यानपरं गौरवपराहतत्वादिति भावः॥ नन्वमिति[1] न्यासे गवाग्रमित्यादौ सवर्णदीर्घोत्तरं वकारस्य पदान्तत्वाल्लोपश्शाकल्यस्येत्यस्य प्रसङ्गः ॥ न च सवर्णदीर्घस्याचः परस्मिन्निति स्थानिवद्भावादागमसन्निधानेन वान्तस्य पदत्वाभावात्तदप्राप्तिरिति वाच्यम् ॥ पूर्वत्रासिद्धिये न स्थानिवदिति तन्निषेधादिति चेत्सत्यम् ॥ यदा तु कार्यकालतावलम्बेन लोपविध्यैकवाक्यतापन्नस्यासिद्धत्वापन्नस्य पदत्वस्यातिदेशापेक्षा, यथा संयोगान्तलोपोपपादकस्य तक्षिरक्षिभ्यां ण्यन्ताभ्यां क्विपि तगुरगित्यादौ, तदा स्यादयं स्थानिवद्भावनिषेधः ॥ यदि तु यथोद्देशमाश्रित्य कार्यविशेषासंवलितस्यागमविशिष्टे विद्यमानस्य सवर्णदीर्घोत्तरमेकदेशविकृतन्यायेन शाकललोपार्थं वान्ते पदत्वातिदेशस्तदा स्थानिवद्भावेन तत्प्रतिबन्धो दुर्वारः ॥ पक्षयोश्च लक्ष्यानुरोधाद्व्यवस्था स्पष्टैव ॥ अत एव वेतस्वानित्यत्र सकारान्ते रुत्वसमर्पकपदत्वनिवृत्तये स्थानिवत्त्वोपवर्णनं भाष्यकाराणामुपपद्यते । अत

---

१. **नन्वगिति न्यासे इति** ॥ अवङ्न्यासेऽपि शङ्कासमाधानयोस्तुल्यत्वेन पृथक्कृत्य निर्देशः किमर्थं इति चिन्त्यमिदम् ।

एव च जनार्दन इत्यादौ नान्तस्योक्तन्यायेन पदत्वादिकमास्थाय नलोपाभाव इत्यन्यत्र विस्तरः ॥ ननु सर्वत्र विभाषा गोरित्यस्य प्रकृतिभावविधायकत्वात्पूर्वत्वं प्राप्नोतीत्ययुक्तमत आह ॥ **अत्र पूर्वत्वशब्देनेति** ॥ लक्षणयेति भावः ॥ एवमपि सर्वत्रेत्यनेन प्रकृतिभावावङोरुभयोरपि प्राप्तिरयुक्तैवेत्यत आह ॥ **अवङित्यस्याप्युपलक्षणमिति** ॥ **नाञ्जसमिति** ॥ अनिष्टशब्दोल्लेखस्य ग्रन्थकारशैलीविरुद्धत्वादित्यभिमानः ॥

**असत्यप्याह्वाने इति** ॥ नक्षत्रं दृष्ट्वा वाचं विसृजेदित्यत्र नक्षत्रशब्दस्य तद्दर्शनयोग्यकालोपलक्षकतया घनघटावृते गगनमण्डले नक्षत्रदर्शनाभावेपि तद्दर्शनयोग्यकाले यथा वाग्विसर्गस्तद्वदिति भावः ॥ अत्रेदं बोध्यम् ॥ सूत्रे हूतशब्दो भावनिष्ठान्तः ॥ तस्य चाभिमुखीभवनविषयकज्ञानजनकशब्दप्रयोगात्मकव्यापारोऽर्थः । ह्वेञ् स्पर्धायां शब्दे चेतिपाठात् । पराभिमुखीभवनं च स्वाभिप्रेतार्थविषयकप्रतिपत्त्यर्थम् ॥ सा च सन्निहितदेशवर्तित्वे संभवतीति दूरस्थितपुरुषविषयके तस्मिन्नेहीत्यादिपदप्रयोगो नियतः ॥ तथा च एहि देवदत्तेत्यादावेव प्लुतस्स्यात्, न तु सक्तून् पिब देवदत्तेत्यादौ । तत उपलक्षणमाश्रीयते संबोधनस्य, तच्च यथा कथंचित् स्वाभिप्रेतार्थबोधनं, न तु संबोधनविभक्त्यन्तपदप्रयोगाधीनमित्याग्रहः ॥ अत एवाकडारसूत्रे दाक्षीबन्धुरित्यत्र पूर्वपदसम्बन्धिन ईकारस्य गुरोरनृत इति प्लुतोपवर्णनं भाष्यकाराणामुपपद्यत इत्याहुः ॥

**अवयुत्यानुवाद इति** ॥ प्राचामिति योगविभागेन सिद्धस्य महाविकल्पस्यायमेकदेशं गृहीत्वानुवाद इत्यर्थः ॥ भाष्ये तु विभाषा पृष्टप्रतिवचन इत्यत्र विभाषेति योगविभागो दृश्यते, तेनैवास्य महाविकल्पस्य सिद्धौ प्राचामित्येवायमवयुत्यानुवाद इति प्रतिभाति ॥ ननु पस्पशायां व्याकरणाध्ययनफलप्रतिपादनावसरे प्रत्यभिवादवाक्यान्तर्गतनामगोत्रान्यतरावयवाज्वर्णान् प्लवितुमजानतां स्मृतिनिवेदितं स्त्रीसाम्यं स्यादिति तन्निवृत्तये प्लुतपरिज्ञानपूर्वकप्लुतोच्चारणस्य आवश्यकत्वप्रति-

---

१. **अभिमान इति** ॥ इति स्यादिति प्राप्नोतीत्यादिशब्दविरहितस्यानिष्टशब्दप्रयोगस्य प्रमितग्रन्थेषु क्वाप्यदर्शनाच्छैलीविरुद्धत्वस्य स्फुटत्वादभिमानत्वोक्तिरयुक्तैवेत्याहुः ।

पादनपरेण भाष्येणायं महाविकल्पो विरुद्ध्यतीत्यत आह ॥ **अविद्वांस इत्यादि** ॥ "अविद्वांसः प्रत्यभिवादे नाम्नो ये न प्लुतिं विदुः। कामं तेषु च विप्रोष्य स्त्रीष्विवायमहं वदेत् ॥ अत्र नाम्न इति गोत्रस्याप्युपलक्षणम् ॥ शास्त्रपरिज्ञानविहीनाः प्रत्यभिवादवाक्ये नाम्नो गोत्रस्य वा ये प्लुतं कर्तुं न जानन्ति तान् वञ्चयित्वा स्त्रीष्विव तेषु अयमभिवादयते अहमभिवादये इत्येव वदेन्न तु नामगोत्रे समुच्चारयेत् ॥ तदुच्चारणस्य प्लुतफलकत्वादिति तदर्थः ॥ एवं च शास्त्राज्ञानविशिष्टप्लुतप्रयोगाभावो निन्दाहेतुर्न तु तत्प्रयोगाभावमात्रमिति प्रतीयते, अतो न विरोधस्तदाह, **शास्त्राज्ञाननिन्दापरमिति। दूरात्सम्बोधकत्वाभावादिति** ॥ शुकयोगिनस्सन्निहितत्वेनानुकार्ये तत्त्वाभावात्प्लुताप्रवृत्तावनुकरणे कथं तत्प्रसङ्ग इत्याशयः। **अस्याभावेन तत्त्वमिति** ॥ प्रकृतिभावाभावरूपस्याप्लुतवद्भावस्य वैकल्पिकत्वे प्रकृतिभावविकल्प एव पर्यवसानमिति भावः ॥

**यद्द्विवचनमिति** ॥ ननु द्विवचनपदस्य तदन्तपरत्वं लक्षणाधीनं, येन विधिरित्यस्याप्ययमेवाशयः ॥ अपूर्वशक्तिकल्पनायां क्लेशात् ॥ एवं च लक्षितार्थघटके द्विवचने विशेषणभाव ईदूदेतामयुक्तः, पदार्थैकदेशत्वात् ॥ न च ईदूदेतामन्वयोत्तरमेव द्विवचनपदस्य तदन्तपरत्वमिति वाच्यम् ॥ विशिष्टस्य तत्पदशक्तिविषयत्वाभावेन शक्यसम्बन्धरूपलक्षणाया दुर्वचत्वादिति चेत्; सत्यम्। गभीरायां नद्यां घोष इत्यत्र यथा गाम्भीर्यावच्छिन्ननदीतीरे नदीपदस्य लक्षणा गभीरपदं च तात्पर्यग्राहकं तद्वत्प्रकृतेपीदूदेदन्तद्विवचनान्ते द्विवचनपदस्य लक्षणा, तात्पर्यग्राहकत्वमेवेदूदेदित्यस्येति ग्रन्थकृदाशय इत्यदोषः ॥ एतेन ह्रस्वात्परो यो ङम् तदन्तं यत्पदमिति ङमो ह्रस्वादितिसूत्रस्थमूलकारोक्तमपि व्याख्यातम् ॥ **अखण्डपदे इति** ॥ यद्यपि किरातार्जुनीयव्याख्यायां मल्लिनाथेन तवाभिधानादित्यस्य नामैकदेशे नामग्रहणमिति न्यायात् तश्च + वाश्च=तवौ=तक्षकवासुकी तयोरभिधानं यस्मिन्पदे तस्मादित्यर्थ इति व्याख्यातम्, तथापि तत्र अभिधानपदस्य नामपरत्वात्तशब्दवाश-

---

१. **अस्याभावेन तत्त्वमितीति** ॥ क्वचित्पुस्तके "अस्याप्लुतवद्भावस्य वैकल्पिकत्वेन तत्पक्षेऽस्याभावेन तत्त्वमित्यर्थ" इत्येवं पाठो दृश्यते। तदनुरोधेनेदं प्रतीकम्। इदानीन्तनपुस्तकेषु तु "अस्याप्लुतवद्भावस्य वैकल्पिकत्वेन तत्त्वमित्यर्थ" इत्येव पाठ उपलभ्यते ॥

ब्दघटिते अभिधाने यस्मिन् मन्त्रपदे तस्मादिति मध्यमपदलोपिसमासाश्रयणेनोपपत्तौ निरुक्तकल्पना निर्मूलेत्याशयः, तदाह ॥ **मानाभावादिति** ॥

**चारितार्थ्यमिति** ॥ ननु कार्यकालपक्षेऽप्यनुनासिकविध्यैकवाक्यतायाः पूर्वमेव मुत्वविध्येकवाक्यतापन्नपूर्वत्रासिद्धशास्त्रेण संज्ञादृष्ट्या मुत्वस्यासिद्धत्वे पश्चादनुनासिकविधौ संज्ञाशास्त्रस्योपस्थितावपि संज्ञाया दुर्लभतया कथमनुनासिकप्रतिषेधेन चारितार्थ्यमत आह ॥ **तत्र पक्षे हीति** ॥ **वाक्यार्थबोधकत्वमिति** ॥ ननु प्रदेशोपस्थित्यनन्तरं वाक्यार्थबोधात्पूर्वमेव मुत्वविध्येकवाक्यतापन्नपूर्वत्रासिद्धशास्त्रेण संज्ञादृष्ट्या मुत्वस्यासिद्धत्वं किं न स्यादत आह ॥ **कार्यार्थ इति** ॥ **वाक्यार्थबोधोत्तरमिति** ॥ अनुनासिकशास्त्रीयविशिष्टवाक्यार्थबोधोत्तरमित्यर्थः ॥ ननु संज्ञैकवाक्यतया तच्छास्त्रीयवाक्यार्थबोधोत्तरं कार्यज्ञानेप्यष्टाध्यायीपाठकृतपूर्वत्वानपायात्संज्ञादृष्ट्या मुत्वस्यासिद्धत्वं दुर्वारमित्यत आह ॥ **तद्देशीयत्वमेवेति** ॥ संज्ञानां कार्यकालपक्षे विधिदेशीयत्वमेवेत्यर्थः ॥ ननु तत्पक्षे कार्यज्ञानाय संज्ञानामुपस्थितिदेशीयत्वाभ्युपगमेऽपि अष्टाध्यायीपाठकृतोपस्थापकदेशीयतायास्त्यक्तुमशक्यत्वादुपस्थाप्योपस्थापकयोरैक्याभ्युपगमेनोपस्थाप्यान्तर्भावेण कार्यज्ञानमुपस्थापकदेशगतं पूर्वत्वं चाश्रित्य मुत्वविध्येकवाक्यतापन्नपूर्वत्रासिद्धशास्त्रेण संज्ञादृष्ट्या मुत्वस्यासिद्धत्वमपरिहार्यमत आह ॥ **किं चाधिकार इति** ॥ कार्यज्ञानोपपादकानुनासिकशास्त्रीयविशिष्टवाक्यार्थबोधसमनन्तरमेवाधिकारत्वेन तदेकवाक्यतापन्नपूर्वत्रासिद्धशास्त्रेण मुत्वदृष्ट्या अनुनासिकविधेस्तदेकवाक्यतापन्नसंज्ञायाश्चासिद्धत्वं प्रतिपाद्यते, ततो नास्त्युपस्थापकदेशान्तर्भावेण पूर्वत्वमादाय संज्ञां प्रति मुत्वस्यासिद्धत्वसंभवः, तदाह ॥ **एवं चेति** ॥ उपस्थाप्याभेदेनोपस्थापके कार्यज्ञाने सम्पादनीये तदभेदेनोपस्थापकस्यासिद्धत्वमप्यापततीति भावः ॥ ननु प्रगृह्यसंज्ञैकवाक्यतापन्नानुनासिकशास्त्रीयविशिष्टवाक्यार्थबोधप्रयुक्तकार्यज्ञानसहकारेण तच्छास्त्रानुवृत्तपूर्वत्रासिद्धशास्त्रेण प्रथमतो मुत्वदृष्ट्या संज्ञाया असिद्धत्वं, न तु संज्ञाविषयसमर्पकत्वेन प्रसक्तमुत्वशास्त्रानुवृत्तपूर्वत्रासिद्धशास्त्रेण संज्ञादृष्ट्या मुत्वस्येत्यत्र विनिगमनाविरहादिदमयुक्तमिति चेत्; सत्यम्। अनुनासिकविध्येकवाक्यतापन्नपूर्वत्रासिद्धशास्त्रविधेयमसिद्धत्वं नित्यम्। मुत्वविध्येकवाक्यतापन्नपूर्वत्रासिद्धशास्त्रेण संज्ञादृष्ट्या मुत्वस्यासिद्धत्वे प्रतिपादितेपि अनुनासिकशास्त्रैकवाक्यतापन्नपूर्वत्रा-

सिद्धशास्त्रेण मुत्वदृष्ट्या तदेकवाक्यतापन्नसंज्ञाया असिद्धत्वस्य सुवचत्वात् ॥ मुत्वविध्येकवाक्यतापन्नपूर्वत्रासिद्धशास्त्रविधेयं तु न तथा, अनुनासिकविध्येकवाक्यतापन्नपूर्वत्रासिद्धशास्त्रेण मुत्वदृष्ट्या संज्ञाया असिद्धत्वे प्रतिपादिते पुनर्मुत्वविध्येकवाक्यतापन्नपूर्वत्रासिद्धशास्त्रेणोक्तरीत्या संज्ञादृष्ट्या मुत्वस्यासिद्धत्वप्रतिपादनासम्भवादतो नित्यत्वमेव मुत्वदृष्ट्या संज्ञायाः प्रथममसिद्धत्वबोधने विनिगमकमिति विभावनीयमित्याहुः[1] ॥

केचित्तु यद्देशावच्छेदेन कार्यज्ञानं प्रत्यासत्त्या तद्देशगतमेव पूर्वत्वं परत्वं वा शास्त्रव्यवस्थापकमतस्संज्ञाया उपस्थापकदेशगतपूर्वत्वमादाय तद्दृष्ट्या मुत्वस्यासिद्धत्वमुपपादयितुमशक्यमित्याहुः ॥

**उपदेशप्रवृत्तिरेवेति** ॥ इदं च कार्यकालपक्षे ; यथोद्देशे तु भविष्यति किंचित्प्रयोजनमित्यभिसंधिमात्रेण कार्यविशेषानुसन्धानमन्तरेणैव अनुकार्ये संज्ञाप्रवृत्तेरव्याहतत्वादनुकरणे प्रगृह्यत्वस्यातिदेशेनैव सुवचत्वादुपदेशप्रवृत्तेरनुपयोग इति वदन्ति ॥

**परत्वेन विकल्पप्रवृत्ताविति** ॥ यद्यपि निपातपदाननुवृत्तौ शाकल्यस्येतावनार्ष इत्यस्य निपातानिपातसाधारणतया उभयत्र विभाषात्वेन नवेति विभाषेत्यस्योपस्थापनात्प्रथमतो निषेधेन निपातविषये प्राप्तसामान्यप्रवृत्तेर्वारणात् सर्वस्मिन् विषये समीकृते पश्चात्स्वतस्सिद्धमभावांशमादाय पाक्षिकस्य भावांशस्यैव विधेयतया पुनरुत्सर्गस्य प्रसक्त्ययोगात्प्रकृतविषये तदापादनं, विप्रतिषेधशास्त्रबोधित-

---

१. **आहुरिति** ॥ परे तु परिभाषाविषये कार्यकालेऽपि सूत्रपाठदेशीयत्वस्यावश्यकताया अन्यत्र प्रतिपादितत्वेन तदैकरूप्याय संज्ञानामपि स्वदेशीयत्वमेवोचितम् । अत एव संज्ञाशास्त्राणां परिभाषेन्दुशेखरे विधिदेशीयत्वप्रतिपादनस्य केचित्त्वित्यादिनाऽरुचिग्रस्तत्वसूचनं संगच्छते । परिभाषेन्दुशेखरग्रन्थव्याख्यानावसरे संज्ञासु कार्यकालपक्षाश्रयणे फलाभावं सिद्धान्तयतोऽस्य ग्रन्थकृतोऽपि तत्र स्वदेशीयत्वस्थापन एव तात्पर्यावगमात्तद्विरोधेनात्र विपरीतलेखनमनुचितम् । न चायादिभ्यः परैव प्रगृह्यसंज्ञेतिप्रकृतसूत्रस्थभाष्यविरोध इति वाच्यम् । प्रगृह्यसंज्ञाप्रयुक्तप्रकृतिभावस्य परत्वप्रतिपादने तात्पर्येणाविरोधात् । स्फुटीकृतश्चायमर्थः स्वसिद्धान्तसूचकेन परेत्वित्यादिना तत्रैवोद्योते इत्याहुः ॥

बलवत्त्वोपहितस्य प्रकृतशास्त्रगतपरत्वस्य तन्निवर्तनोपायत्वप्रतिपादनं च न युक्तम्, तथापि तत्प्रत्याख्याने वाक्यभेदेन निपातविषये भावांशस्य सिद्धतया तदनुवादेनाभावांशस्यैव विधेयतया तदंशे पुनरुत्सर्गप्रसक्तिः परबलीयस्त्वेन तन्निवृत्तिश्च संभवतीत्याशयेनायं ग्रन्थ इत्यदोषः ॥ **अन्तरङ्गत्वमिति** ॥ नन्वेवमहो इतीत्यादौ निपातविषयेऽन्तरङ्गेण नित्यप्रगृह्यत्वेन बाधाद्विकल्पाप्रसक्त्या संबुद्धिग्रहणमनर्थकमत आह ॥ **संबुद्धाविति** ॥ **वैचित्र्यार्थमिति** ॥ गोभ्यां गोयानमिति प्रयोगघटकपदत्वोपहितगोशब्दानुकरणे गवित्ययमाहेत्यादौ विष्णो इतीत्यादाविव प्रकृतिवदनुकरणमित्यतिदेशलब्धपदत्वनिमित्तकप्रकृतिभावफलकप्रगृह्यत्वस्य प्रकृतसूत्रप्राप्तस्य लक्ष्यानुसारिणा तदतिदेशानित्यत्वेन वारणे क्लेशात्सौगम्येन तन्निवारणार्थमिह संबुद्धिग्रहणमित्यर्थः ॥ ननु इतिहरिशब्देनाव्ययीभावेन समासे गवितिहरीत्यत्र प्रसक्तस्य प्रगृह्यत्वस्य वारणाय संबुद्धिग्रहणस्यावश्यकत्वात्कथं वैचित्र्यमिति चेन्न ॥ वैदिके इतिशब्दस्य स्वसमभिव्याहृतौदन्तस्वरूपबोधकस्यैव प्रसिद्धतया तद्भिन्नस्यापि तथाभूतस्यैव ग्रहणमित्याशयात् ॥ **लिङ्गसर्वनामेति** ॥ लिङ्गसामान्यमित्यर्थः ॥ स्त्रीत्वपुंस्त्वोभयाभावरूपस्य तस्य मृदु पचति प्रातःकमनीयमित्यादौ प्रसिद्धिर्द्रष्टव्या ॥ अत्र भेदविवक्षायामपीति शेषः ॥ **सामर्थ्यस्य दुरुपपादादिति** ॥ गोशब्दस्य शब्दविषयकप्रकाशबोधकेनेतिशब्देनाव्ययीभावे तु पूर्वनिपात इतिशब्दस्यैव स्यादित्यपि बोध्यम् ॥

**नकारापत्तिवारणायेति** ॥ नन्विदमयुक्तं, चतुर्मुख इत्यादौ प्रकृतशास्त्रप्रसक्तस्यानुनासिकस्य व्यावृत्त्यर्थमनुस्वारस्य ययीत्यत एकदेशे स्वरितत्वप्रतिज्ञाबलात्समासघटकसवर्णपदानुवृत्तेराकरसम्मतत्वात्प्रकृतन्यासेपि तत्संबन्धस्य न्याय्यतया सावर्ण्याभावादेव ऌकारस्य नकारापत्त्यसंभवादिति चेन्न ॥ अत्र न्यासे सवर्णपदसंबन्धे स्पर्शेतरवर्णसंग्राहकस्य यग्रहणस्य वैयर्थ्यापत्त्या सवर्णपदसंबन्धस्य दुर्वचत्वेन कमलांश्चिनोतीत्यादौ नकार एवापद्येत, चतुर्मुख इत्यादौ च रेफस्य द्विर्वचनानुनासिकपरसवर्णप्रतिषेध इति वचनेनैवानुनासिको निवर्तनीयस्स्यादित्याशयात् ॥

**अनित्यत्वस्यापीति** ॥ ननु सन्निपातनिमित्तकविधित्वरूपलिङ्गेनोपस्थितया प्रकृतपरिभाषया तत्तच्छास्त्रीयविशिष्टवाक्यार्थबोधोत्तरं वाक्यैकवाक्यतया

स्वनिमित्तभूतसन्निपातविघातकविधिं प्रतीदं निमित्तं न भवतीति बोधनात् सन्निपातनिमित्तकविधेस्स्वनिमित्तविघातकविध्यन्तरनिरूपितनिमित्ततासमर्पकत्वाभाव इति निरूढः पन्थाः ॥ एवं च निमित्ततासमर्पकत्वाभावस्य विध्यन्तरगतविघातकत्वप्रतिपत्त्यधीनत्वादिको यणचीत्यनन्तरपठितसापादिकवत्वविध्यपेक्षया पूर्वत्रासिद्धशास्त्रेणाविद्यमानवद्भावबोधनेन तद्गतविघातकत्वस्य दुर्ज्ञेयतया सन्निपातनिमित्तकविधिप्रयोज्यविघातकविधिनिरूपितनिमित्ततासमर्पकत्वाभावस्य वक्तुमशक्यत्वेन परिभाषाप्रवृत्त्यसंभवादयुक्तमेवेदमनित्यत्वज्ञापनम् ॥ न च पूर्वशास्त्रीयकर्तव्यतादशायामेव पूर्वत्रासिद्धमित्यनेन परशास्त्रस्यासिद्धत्वबोधनेन प्रकृते लक्ष्यसमवेतवत्वोपहितसापादिकविध्यपेक्षया सन्निपातविघातकानुस्वारविधेरसिद्धत्वायोगात्परिभाषाप्रवृत्तिरव्याहतैवेति वाच्यम् ॥ शास्त्रे चेतनत्वारोपस्याकरसम्मततया विनिगमनाविरहात् कर्तव्ये कृते च पूर्वस्मिन् तद्दृष्ट्या परस्यासिद्धत्वबोधनेन जातसमकालप्राप्तयोरिव पूर्वशास्त्रदृष्ट्या जनिष्यमाणस्यापि परस्यासिद्धताया दुर्वारत्वात् ॥ न च लिङ्गवत्तया स्वोपस्थापकेन सन्निपातनिमित्तकशास्त्रेणैकवाक्यतया प्रकृतपरिभाषायास्सन्निपातविघातकविध्यन्तरनिरूपिततन्निमित्तकविधिनिष्ठनिमित्तत्वाभावबोधकत्वेऽपि तथाविधनिमित्तत्वाभावस्य सन्निपातनिमित्तकविध्यंशे विघातकविधेः प्रवृत्त्यभावप्रयोजनकतया प्राधान्यात्स एव परिभाषाविषयस्तत्र च विघातकविधेरेव स्वातन्त्र्यात्तद्दृष्ट्या प्रकृते सन्निपातनिमित्तकविधेरसिद्धत्वाभावेन परिभाषाप्रवृत्तिर्दुर्वारैवेति वाच्यम् ॥ परिभाषादृष्ट्या विघातविधेरसिद्धत्वेन तदीयप्रवृत्त्यभावप्रयोजनकतन्निरूपितसन्निपातनिमित्तकविधिगतनिमित्तत्वाभावस्य बोधयितुमशक्यत्वेन परिभाषाप्रवृत्तेरभावादिति चेन्न ॥ अस्याः परिभाषाया उपजीव्यविरोधमूलकलोकन्यायतया सूत्रपाठगतसन्निवेशापेक्षपूर्वत्वोपहितशास्त्रसमर्पकेण मोऽनुस्वार इत्येतच्छास्त्रैकवाक्यतापन्नपूर्वत्रासिद्धशास्त्रघटकपूर्वग्रहणेन प्रकृतपरिभाषाया ग्रहीतुमशक्यत्वेन परिभाषादृष्ट्या विघातकविधेरसिद्धत्वाभावेन परिभाषाप्रवृत्तेर्निर्विवादत्वादित्याहुः ॥

केचित्तु ज्ञापकसिद्धापीयं परिभाषा, न तु लोकन्यायैकसाध्या ॥ अन्यथा पुरुषारम्भसहायेनैव लोकन्यायानां तत्र तत्र भाष्यकारैश्शास्त्रव्यवस्थापकत्वोपवर्णनेनास्याश्शास्त्रविषयत्वमेव न स्यात् ॥ धर्मिग्राहकसाजात्येनाभ्युप-

गन्तव्या विशेषविषयतापि परिभाषायाः शास्त्रसिद्धत्वमन्तरा दुर्लभा स्यात् ॥ अत आवश्यकं ज्ञापकसिद्धत्वमस्याः परिभाषायाः ॥ ज्ञापकं चात्र न तिसृचतसृ इति दीर्घनिषेधवचनम् ॥ तद्धि तिसृणां चतसृणामित्यत्र दीर्घाभावाय, तत्र ऋदन्तलक्षणे ङीपि दीर्घस्यानुपयोगादेवाप्राप्तौ तद्वैयर्थ्यं स्पष्टमेव ॥ ज्ञापितायां तु परिभाषायां विभक्त्यानन्तर्यनिमित्तकस्य तिसृचतसृभावस्य तद्विघातकं ङीपं प्रत्यनिमित्तत्वात्तदप्राप्तावृकारान्तयोर्दीर्घवारणार्थं निषेधवचनमर्थवत् ॥ न च तिसृचतसृशब्दयोस्स्वस्रादिपाठेन न षट्स्वस्रादिभ्य इति निषेधेन ङीपोऽप्राप्त्या वचनसार्थक्येन कथं परिभाषाज्ञापकत्वमिति वाच्यम् ॥ क्रुन्मेजन्त इति सूत्रस्थभाष्यप्रामाण्येन तयोस्स्वस्रादिपाठस्यानार्षत्वात् ॥ तत्र हि तिस्रश्चतस्र इत्यादौ ङीप्प्रत्ययाभावस्य सन्निपातपरिभाषाप्रयोजनत्वनिरासाय आचार्यप्रवृत्तिर्ज्ञापयति न तिसृचतसृभावे ङीप् भवतीति, यदयं न तिसृचतसृ इति नामि दीर्घत्वस्य प्रतिषेधं शास्तीत्युक्तम् ॥ तयोस्स्वस्रादिपाठस्य प्रामाणिकत्वे तदसङ्गतिस्स्पष्टैव ॥ न चोक्तस्थले ङीबभावमनेन ज्ञापकेनाश्रित्य परिभाषोदाहरणत्वखण्डनपरनिरुक्तभाष्यविरोधादयुक्तमेवेदमुक्तनिषेधस्य परिभाषाज्ञापकत्वमिति वाच्यम् ॥ तिसृचतसृभावे ङीबभावमात्रप्रयोजनकतया परिभाषारम्भमपेक्ष्य ज्ञापकेनैव तत्फलोपपादनस्य न्याय्यतया तथा प्रतिपादनेऽपि सिद्धान्ते साक्षाच्छास्त्रबाधकल्पनापेक्षया संभवदनेकप्रयोजनकप्रकृतपरिभाषाज्ञापनद्वारैवोक्तस्थले ङीबभाव इति तद्भाष्यतात्पर्यपर्यवसानेन विरोधस्य दुर्वचत्वात् ॥ न च तिसृचतसृशब्दाभ्यां ङीपि अत्यादय इत्यतिशब्देन समासे गोस्त्रियोरिति ह्रस्वे नामि प्रसक्तस्य दीर्घस्य वारणाय निषेधस्य सार्थक्यात्कथं ज्ञापकत्वमिति वाच्यम् ॥ अन्तरङ्गानपीति न्यायेन सामासिकविभक्तिनिमित्तकत्वेन तिसृचतसृभावस्य प्रथमतः प्रवृत्त्ययोगात् ॥ न च समासोत्तरमवयवस्त्रीत्वमादाय तत्प्रवृत्त्या तत्सार्थक्यसंभव इति वाच्यम् ॥ उक्तनिषेधस्य ङीबभावसाधकज्ञापकत्वोपवर्णनपरभाष्यप्रामाण्येन तादृशप्रयोगाणामनभिधानात् ॥ इत्थं च ज्ञापकसिद्धानां वचनानां ज्ञापकदेशीयताया निर्विवादत्वेन प्रकृतपरिभाषादृष्ट्या विघातकविधेरसिद्धतया प्रवृत्त्ययोगादयुक्तमेवेदमनित्यत्वज्ञापनम् ॥ आवश्यकश्च त्रिपाद्यामस्याः परिभाषायाः प्रवृत्त्यभावः ॥ अत एव सञ्च्छुम्भुरित्यादौ शवर्णानन्तर्यनिमित्तकत्वेन प्रवृत्तस्य तुगागमस्य तद्विघातकछादेशनिमित्तत्वसंभवः ॥ नद्ध इत्यादौ झषस्तथोरिति धत्वस्य पूर्वधकारस्य जश्त्वप्रवृत्तिनिमित्तत्वसंभवः ॥ परिभाषाया

अनित्यत्वेन तत्समर्थनं तु न समञ्जसम् ॥ परिभाषादोषेष्वेवंविधानां भाष्ये परिगणनाभावात् ॥ दोषाः खल्वपि साकल्येन परिगणिता इति भाष्यकारैरुपपादितत्वाच्चेति सुधीभिराकलनीयमित्याहुः ॥

अच्सन्धिरिति ॥ नन्वत्र कुत्वाभावादसाधुत्वमिति चेन्न । अल्पाच्तरमिति निर्देशेन स्वघटितवृत्तिघटकयत्किंचिन्निरूपितपूर्वत्वविशिष्टाच्पदीयचकारगतचुत्वप्रयुक्तप्रकृतशास्त्रीयकार्यसमर्पकत्वाभावज्ञापनेनाभीष्टसिद्धेरिति शिवम् ॥

॥ इति स्वरसन्धिः ॥



---

१. आहुरिति ॥ परे तु अस्याः परिभाषायाः ज्ञापकसम्भवेऽपि न ज्ञापकदेशस्थत्वं युक्तम् । न्यायसिद्धानामपि परिभाषाणां ज्ञापकसिद्धत्वोपवर्णनं निवर्तकपुरुषारम्भोल्लङ्घनेन शास्त्रे प्रवृत्त्यभ्यनुज्ञानार्थमेव, न तु तद्देशस्थत्वादिसम्पादनार्थमपि । अत एव तत्स्थानापन्न इति न्यायस्य स्वं रूपमितिशास्त्राविषये अशास्त्रीयेऽप्यतिदेशप्रापकत्वोक्तिर्ग्रन्थकृतां संगच्छते । एवं च त्रिपाद्यामपि पर्जन्यवत्परिभाषाप्रवृत्तिर्दुर्वारा । सम्ब्छम्भुरित्यादि तु परिभाषानित्यत्वेनैव साधनीयम् । न च दोषाणां साकल्येन परिगणनस्य भाष्योक्ततया अनित्यत्वेनाप्रवृत्तौ मानाभाव इति वाच्यम् । हलोऽनन्तरा इत्यादिनिर्देशैर्गवाक्ष इत्यादि भाष्योदाहरणैरितोऽन्यत्र प्रवृत्तिरेवेति नागेशनिर्देशेन च संहिताकार्यविषये परिभाषाया अप्रवृत्तेरवश्याभ्युपेयत्वात् । उक्तानित्यत्वज्ञापनमप्युक्तार्थपरमेवेत्यपि सुवचत्वाच्च । परिगणितातिरिक्तविषये नियमेन परिभाषायाः प्रवृत्तिमभ्युपगच्छतां गवाक्ष इत्याद्यसिद्धिर्दुर्वारैवेत्याहुः ।

# अथ हल्सन्धिः ।

**योगक्रियायामिति** ॥ तन्निरूपितमेवेह निमित्तनिमित्तिनोस्साहित्यम् ॥ एतदर्थमेव योग इत्यस्याध्याहारः ॥ अन्यथा प्रधानक्रियानिरूपितस्यैव तस्य परिग्रहापत्तौ साहित्यावच्छेदेनैव विधेयसंबन्धादादेशस्योभयनिवर्तकत्वप्रसङ्ग इति तत्त्वम् ॥ ननु योगस्समभिव्याहारस्स च पूर्वपरसाधारण इव व्यवहिताव्यवहितसाधारणोपीत्यनिष्टप्रसङ्ग इत्यत आह ॥ **संयोग इति** ॥ स च सम्यक्त्वविशिष्टस्समभिव्याहारः सम्यक्त्वं च नैरन्तर्येणैवेत्यभिप्रेत्याह ॥ **अव्यवहितयोरेवेति** ॥ ननु समसंख्याकत्वेन सन्निविष्टानामुपस्थितिक्रमानुरोधी विशिष्टवाक्यार्थबोधविषयस्संबन्ध इति यथासंख्यसूत्रस्य निष्कर्षः ॥ तत्र सन्निवेशक्रमापेक्षश्चोपस्थितिक्रमः ॥ प्रकृते च तथदधनेत्यादिक्रमिकसन्निवेशस्य वर्णसमाम्नाये विधिशास्त्रे वा नास्त्युपलम्भ इति कथमिह तथाविधोपस्थितिक्रमप्रयुक्ता विधेयसम्बन्धव्यवस्था स्यादत आह ॥ **तथदधनेत्यादि** ॥ क्रमिकसन्निवेशप्रसिद्धिर्यथासंख्यसूत्रप्रवृत्तौ बीजं, सा च प्रसिद्धिर्वर्णसमाम्नायवदनादितया व्यवह्रियमाणे मातृकान्यासे वर्तत एवेति नास्तीह यथासंख्यसूत्रप्रवृत्तेर्विरोध इत्याशयः ॥

**षत्वस्यासिद्धत्वेनेति** ॥ न च सकारस्यैव षत्वप्रवृत्तिवेलायां षत्वासिद्धत्वेन जश्त्वं किन्न स्यादिति वाच्यम् ॥ विसर्जनीयस्य स इति विहितस्य तस्याप्यसिद्धत्वात् ॥ प्राथमिकसकारबुद्ध्या तु न तत्प्रवृत्तिः ॥ स्वापवादभूतेन रुत्वेन बाधात् ॥ न च षत्वं रुत्वापवाद इति तदंशे रुत्वाप्रवृत्त्या षत्वासिद्धत्वेन जश्त्वं दुर्वारमिति वाच्यम् ॥ रुत्वविसर्गयोर्विसर्जनीयस्य स इति विहितस्य सकारस्य षत्वसम्पादनेन कृतार्थस्य षत्वविधेस्तदपवादत्वायोगात् ॥ न च तक्रकौण्डिन्यन्यायप्रयुक्तचारितार्थ्यविशिष्टस्वप्रथमप्राप्तिकालिकोत्सर्गप्राप्तियोग्यताविरहविशिष्टस्वप्रवृत्तियोग्यलक्ष्य - शून्यत्वरूपनिरवकाशत्वेन रुत्वापवादष्षत्वमिति वाच्यम् ॥ तथा सति रुत्वापवादत्वात्षत्वं षत्वासिद्धत्वेन जश्त्वं तदपवादत्वाद्रुत्वमित्येवं चक्रकापत्त्या रूपासिद्धिप्रसङ्गेनानित्यस्य तक्रकौण्डिन्यन्यायस्येहाप्रवृत्तेरवश्याभ्युपेयतया तदपवादत्वासंभव इत्याशयात् ॥

केचित्तु तक्रकौण्डिन्यन्यायप्रवृत्त्या षत्वस्य रुत्वापवादत्वेपि चक्रकेष्विष्टतो व्यवस्थेति षत्वप्रवृत्त्या परिनिष्ठितत्वाभ्युपगमेनाभीष्टसिद्ध्या लक्ष्यापेक्षन्यायाप्रवृत्तितात्पर्यकं षत्वासिद्धत्वोपवर्णनं नातीव रमणीयम् ॥ परं तु चतुष्ट्वमित्यादौ रेफसंबन्धिविसर्गस्थानिकसकारस्य षत्वसंपादनेन कृतार्थस्य षत्वशास्त्रस्य रुत्वापवादत्वं न संभवतीति युक्तमित्याहुः[1] ॥

**तात्पर्यमिति** ॥ इदमेव युक्तम् ॥ यवादिगणे ककुद्मानिति विशिष्टपाठे मानाभावात् ॥ तं विना दकारनिपातनकल्पनाया अयोगात् ॥ **अपपाठ इति** ॥ मूले समाधातुं शक्यमित्युत्तरमिति केचिदित्यादिग्रन्थ इत्यर्थः ॥

**अधिकमिति** ॥ तत्संबन्धोपायानुपलम्भादित्याशयः ॥ **पकारमात्रे इति** ॥ परसवर्णपदे इति शेषः ॥ **चयोऽभावादिति** ॥ उदस्थेति थादेशस्यासिद्धत्वादप्रवृत्त्या धातौ प्रवृत्तस्यासिद्धत्वेन वा शर्परत्वेऽपि चर्त्त्वासिद्धत्वेनोपसर्गे चयोऽभाव इत्याशयः ॥ प्रसिद्धाष्टाध्यायीपाठानुरोधादसिद्धत्वेन थस्य चर्त्वाभावाच्चयोऽभाव इति मूलकाराशयमुत्प्रेक्ष्याह ॥ **षट्सूत्रीपाठोत्तरमिति** ॥ ननु पूर्वत्रासिद्धीयमद्वित्व इत्युपसर्गदकारस्य चर्त्वोत्तरं द्वित्वे वाक्क् वाक् इति भाष्योदाहरणप्रामाण्येन द्वित्वाश्रयस्य कार्यविशेषकर्तव्यतायामप्यसिद्धत्वाभावस्यावश्यमभ्युपगन्तव्यत्वान्नादिन्याक्रोश इत्येतत्सूत्रपठितद्वितीयादेशबोधकवचनदृष्ट्या परस्योदस्थेत्यस्य त्रैपादिकासिद्धत्वस्य निर्विवादतया शर्परत्वसौलभ्येन द्वितीयादेशप्रवृत्तिविषयकः प्राचीनोद्घोषो युक्त एवेति चेन्न ; शिक्षायां ऊष्मोदयं प्रथमं स्पर्शमेके द्वितीयमाहुरपदान्तभाजमित्येतद्वचनघटकस्यापदान्तभाजमित्यस्य प्राङ्ख् षष्ठ इत्यादिप्रयोगोपपत्त्यर्थमचर्त्वभाजमित्यर्थकतया तदेकवाक्यतासंपत्तये प्रकृतवचनस्यापि चर्त्वनिष्पन्नातिरिक्तविषयकताया औचित्येनोच्छब्दसंबन्धिनस्तकारस्य द्विरुच्चारणात्मकद्वित्वप्रवृत्त्युत्तरमपि चर्त्वनिष्पन्नत्वानपायाद्द्वितीयादेशप्रवृत्त्यसंभव इत्याशयात् ॥

---

१. **आहुरिति** ॥ परे तु चक्रकेष्विष्टतो व्यवस्थाया अपि लक्ष्यानुरोधादेवाश्रयणीयतया न्यायाप्रवृत्तितात्पर्यकत्वस्य लक्ष्यापेक्षत्वेन हेतुना अरमणीयत्वोक्तिररमणीयैव । यस्तूभयोस्समो दोष इति न्यायात् । परन्त्वित्यादिनोक्तस्याशयस्यापि मूलकारस्य वक्तुं शक्यतया मतान्तरत्वेन मूलकारानभिप्रेतत्वसूचकतया केचित्त्वित्यादिग्रन्थघटकतया एतद्ग्रन्थलेखनं मूलकारेऽविद्यमानन्यूनत्वज्ञापनाग्रहमूलकमित्याहुः ।

केचित्तु द्वित्वशास्त्रेण चर्त्वनिष्पन्नसजातीयोऽन्य एव प्रादुर्भाव्यत इति नायं चर्त्वनिष्पन्नः ॥ वाक्क् वाक् इति भाष्यस्याप्ययमेवाशयः ॥ अत एवैत्र्स-न्नित्यादौ पूर्वत्रासिद्धीयमद्विर्वचन इति चर्त्वोत्तरं द्वित्वे द्विरुक्ततकारस्योत्तरख-ण्डीयस्य सन्संबन्धिसकारात्मकशर्परत्वनिमित्तको द्वितीयादेश इति सार्वजनीनः सिद्धान्तः ॥ तत्थ्सवितुरित्यादावपि द्वित्वोत्तरमेव द्वितीयादेश इति न किंचिद-नुपपन्नम् ॥ परं तु द्वित्वानुपन्यासेनोत्थानमित्यादौ द्वितीयादेशोपपादनं प्राचीनाना-मयुक्तमित्याहुः ॥

**शर्परत्वाभावश्चेति** ॥ धातुतकारस्येति भावः ॥

**उक्तरीतेरिति** ॥ अपवादभूतावसानिकचर्त्वप्रवृत्त्युत्तरं जश्त्वप्रवृत्तिरीते-रित्यर्थः ॥ अत्रायं निष्कर्षः ॥ विशेषशास्त्रेण सामान्यशास्त्रस्य बाधनं द्वेधा ॥ सर्वथा निरवकाशत्वेन, उत्सर्गप्राप्तिकालिकतदप्राप्तियोग्यलक्ष्यशून्यत्वेन च ॥ तत्र सर्वे ब्राह्मणा भोज्यन्तां माठरकौण्डिन्यौ परिवेविष्टामित्यत्र भोजनकाले भोजनोत्तरं चानुपपन्नतया सर्वथा निरवकाशेन परिवेषणेन भोजनस्येव यत्र बाधः, यथा ङेराम्न-द्याम्नीभ्य इत्यनेन याडाप इत्यस्य, न हि कृते याड्यामः प्रवृत्तिसंभवः ॥ निर्दिश्यमानस्य याटा व्यवधानात्, प्रवृत्तिकालेप्यनुपपत्तिरेव, यौगपद्यासंभवात्तत्र परिवेषणोत्तरं भोजनवत् सर्वथा निरवकाशेन बाधितस्य याटो बाधकप्रवृत्त्युत्तरमुत्स-र्गस्य सति संभवे भवत्येव प्रवृत्तिः ॥ यत्र तु सर्वेभ्यो ब्राह्मणेभ्यो दधि दीयतां तक्रं कौ-ण्डिन्यायेत्यत्र दधिदानोत्तरं प्राप्तियोग्यतया चरितार्थेनापि तक्रदानेन दधिदान-स्येवोत्सर्गप्रवृत्त्युत्तरकालिकचारितार्थ्योपहितेन तत्प्रवृत्तिकालिकतदप्रवृत्तियोग्य-लक्ष्यशून्यत्वेन बाधः ॥ यथा दयतेर्दिगि लिटीत्यनेन लिटि धातोरनभ्यासस्येत्यस्य, तत्र हि द्वित्वोत्तरमुत्तरखण्डे प्रवृत्त्या सत्यपि चारितार्थ्ये द्वित्वप्रवृत्तिकालिक-द्वित्वाप्रवृत्तियोग्यस्वप्रवृत्तिविषयलक्ष्यशून्यतया दिग्यादेशेन द्वित्वस्य बाधः ॥ तत्र तक्रदानोत्तरं दधिदानस्येव बाधकप्रवृत्त्युत्तरं पुनरुत्सर्गस्याप्रवृत्तिः ॥ एवं च तक्रकौ-ण्डिन्यन्यायप्रयुक्तचारितार्थ्यमूलकबाधकत्वोपहितेनावसानिकचर्त्वेन बाधितस्य जश्त्व-स्य पुनः प्रवृत्तिर्न संभवतीति ॥ तदेतत्सूचयन्नाह ॥ **एतदेवाभिप्रेत्येति** ॥ **वाक्यसंस्कारपक्षेणैवेति** ॥ पक्षयोर्लक्ष्यानुरोधेन व्यवस्थितत्वात्पदसंस्कारपक्षोऽत्र

न दोषाधायक इत्याशयः ॥ **अन्ये त्विति** ॥ अत्रारुचिबीजं तु प्रागुपदर्शितविसर्जनीयस्य स इति सूत्रस्थभाष्यविरोधः ॥

ननु यथासंख्यमित्यस्य क्रियाविशेषणत्वात्तद्विशिष्टविधिप्रवृत्तिनियामकशास्त्रप्रवृत्तेरिष्टत्वादिति वक्तव्ये यथासंख्यस्येष्टत्वादित्ययुक्तमत आह॥ **ख्यान्तैकदेशेनेति**॥ एवं चानुवाद्ययोरपि यथासंख्यमनुदेशस्समानामित्येतच्छास्त्रस्य व्यवस्थापकत्वेनाभीष्टत्वादित्यर्थ इत्यदोषः ॥

**परत्वादिति** ॥ ननु विप्रतिषेधशास्त्रप्रयोज्यव्यवस्थायां न केवलं शास्त्रगतं परत्वमेव बीजमपि तु तुल्यबलविरोधोऽपीति कथमिह तत्प्रयोज्यव्यवस्था स्यादत आह ॥ **डकारात्सकार इत्यादि** ॥ **परत्वेन व्यवस्थेति** ॥ ननु पञ्चमीनिर्देशसप्तमीनिर्देशयोरुभयोरप्यचारितार्थ्ये तव्यदादीनामिव पर्यायतैव प्राप्नोति ॥ यदि च सप्तमीनिर्देशस्य लाघवार्थत्वेन चारितार्थ्यमभिसंधीयते तर्हि पञ्चमीनिर्देशस्य निरवकाशत्वेनैव व्यवस्था भविष्यति ॥ अत एव तस्मिन्निति सूत्रे भाष्ये उभयनिर्देशप्रदेशानुदाहृत्य विप्रतिषेधमुपपाद्य विभक्तिविशेषानवकाशत्वादविप्रतिषेधः ॥ सर्वत्रैवात्र कृतसामर्थ्या सप्तमी, अकृतसामर्थ्या पञ्चमीति कृत्वा पञ्चमीनिर्देशो भविष्यतीत्युक्तम् ॥ एवं च पञ्चमीनिर्देशस्य परत्वेन व्यवस्थापनमयुक्तमेवेति चेत्; सत्यम् । निरवकाशयोस्सप्तमीपञ्चमीनिर्देशयोस्तुल्यबलत्वविरोधाभ्यां विप्रतिषेधशास्त्रसहायेन पञ्चमीनिर्देशस्य परत्वप्रयुक्तायां व्यवस्थायामुपस्थितस्योत्तरस्येत्यंशस्य सामानाधिकरण्याय सीत्यस्य षष्ठ्यर्थत्वनिश्चये सप्तमीनिर्देशस्य कथंचित्सार्थक्यसंपादनाय लाघवार्थत्वानुसंधानं,न तु व्यवस्थायाःपूर्वं, तत्काले हि निर्देशयोःपरिभाषाप्रवर्तकत्वाप्रवर्तकत्वाभ्यामेव सावकाशनिरवकाशभावो विचारविषयः ॥ सजातीयविषयताया औचित्यात् ॥ प्रकृते च द्वयोरपि पञ्चमीनिर्देशसप्तमीनिर्देशयोरन्यत्र परिभाषाप्रवर्तकत्वरूपसावकाशताया दुर्लभत्वान्निरवकाशत्वस्योभयसाधारण्ये तव्यदादिषु विधेयत्वपुरस्कृतप्राधान्योपहितप्रत्ययानुरोधेन गुणभूतप्रकृतिरूपधातोरावृत्त्याश्रयणेन पर्यायतायास्संभवेऽपि गुणभूतनिमित्तानुरोधेन प्रधानभूतधुडागमावृत्तेरनौचित्येन पर्यायताया असंभवाच्चरितार्थयोरिवाचरितार्थयोरपि तुल्यबलत्वविरोधाभ्यां विप्रतिषेधशास्त्रविषयत्वे बाधकाभावेन पञ्चमीनिर्देशस्य परत्वेनैव व्यवस्थापनं युक्तम् ॥ तस्मिन्निति सूत्रस्थं तु भाष्यं ङमो ह्रस्वादचीत्यादिसावकाशसप्तमीनिर्देशविषयम् ।

अत एव नश्चेतिसूत्रे कृतार्थाया न इति पञ्चम्याश्शि तुगित्यत्र शीतिसप्तम्या निरवकाशया बाध इति सर्वाभिप्रेतमुपपद्यत इत्याशयोऽत्र विभावनीय इत्याहुः । **अत एव तुडिति** ॥ द्वितीयादेशाप्रवृत्त्यर्थं धुट आवश्यकत्वादेव तुडिति नोक्त-मित्यर्थः ॥ श्चुत्वं धुटि सिद्धं वाच्यमिति वार्तिके कार्यविशेषोपादानफलं दर्शयितु-माह ॥ **श्चुत्वस्य धुटि सिद्धत्वेपीत्यादि** ॥ **तुग्नेति बोध्यमिति** ॥ एतेन तुगिति वक्तव्ये धुट्करणं ष्टुत्वनिषेधमात्रप्रयोजनकमित्यपास्तम् ॥

**द्वयोरचरितार्थयोरिति** ॥ उभयोरपि परिभाषाप्रवर्तकत्वरूपचारितार्थ्या-भावे विप्रतिषेधशास्त्रसहायेन विरोधसमबलत्वोपपन्नस्य पञ्चमीनिर्देशस्य प्राबल्ये सप्तमीनिर्देशस्य लाघवार्थत्वम् । इह तु पञ्चमीनिर्देशस्य सावकाशतया निरवकाशेन सप्तमीनिर्देशेन बाध एवोचित इत्याशयः ॥ **षष्ठ्यर्थे इति** ॥ ङःसीति सीत्ये-तत्साहचर्येणेत्याशयः ॥ ननु विरप्शमित्यस्य छान्दसत्वात्तत्र वर्णव्यत्ययेनाप्युप-पत्तौ तदर्थं पदान्तादित्यनुवृत्तिपरिक्लेशो व्यर्थ इत्यत आह ॥ **छान्दसार्थम-पीति** ॥ सत्यामुपपत्तौ बाहुलकाश्रयणमयुक्तमित्याशयः ॥ ननु छत्वस्य वैक-ल्पिकत्वाच्छन्दस्यापाद्यमानरूपाभावाच्च निर्वाहे निरुक्तक्लेशो व्यर्थ एवेत्यत आह ॥ **लौकिकविरप्शस्येति** ॥ अनुकरणात्मकस्येत्यर्थः ॥

केचित्तु अनुकरणभूते विरप्शमित्यत्रानुकरणस्वरूपभङ्गभयेनापि छत्वनि-वृत्तेस्सुवचतया नेदमुदाहरणं युक्तम् ॥ परं तु चक्षिङःख्याञादेशस्य रुशादित्वात् शस्य यो वेति विहितयादेशस्य वैकल्पिकत्वाच्च यादेशाभावपक्षे चक्शावित्यादौ छत्वाभावार्थमाकरे तदनुवृत्तिसमारम्भ इति सुधीभिराकलनीयमित्याहुः ॥

---

१. **लौकिकविरप्शस्येतीति** ॥ यत्नदर्शनादिति भावः इत्यनन्तरं "इत्यादावित्यादिना लौकिकविरप्शस्य संग्रहः" इत्येवं पाठः क्वचिद्दृश्यते । तदनुसारेणेदं प्रतीकम् । सोऽयं पाठो नेदानीन्तनपुस्तकेषु परिलक्ष्यते ।

१. **आहुरिति** ॥ ख्शादेशे प्रक्रियालाघवार्थं छकार एवोच्चारणीये शकारोच्चारणेन छत्वस्य वारयितुं शक्यत्वेन नेदमनुवृत्तेरसाधारणं फलम् । अत एव छान्दसोदाहरणपर्यन्तानुधावनं मनोरमाकृतस्संगच्छते । लौकिकविरप्शेत्यादिग्रन्थस्येदानीन्तनपुस्तकेष्व-नुपलम्भेन तं पाठं सिद्धवत्कृत्य मूलकृतो न्यूनत्वापदनमनुचितम् । यदि तस्यैव पाठस्य प्रमितत्वं तदाप्यनुकरणे स्वरूपभङ्गभिया छत्ववारणस्यागतिकगतितया अनुकरणेषु पदादि-

ननु कुर्वन्च्छेते इत्यत्र तुक्स्थानिकश्चुत्वनिष्पन्नचकारमाश्रित्य णत्वनिषेधो मूलोक्तयोगविभागेन साध्यः। तत्र श्चुत्वस्य निषेधापेक्षया परत्वेनासिद्धतया कथं निषेधोपपत्तिरत आह ॥ **श्चुत्वस्यासिद्धत्वं तु नेति ॥ वचनसामर्थ्यादिति ॥** ननु हे प्राण् चरसीत्यादौ अन्त इति सूत्रेणानितेः प्रवर्तमानस्य णत्वस्य निषेधार्थं वचनं स्यादिति कथं सामर्थ्यम् ॥ न च श्चुनेत्यनेन श्चुशब्देन भावितस्यैव ग्रहणं न तु स्वतस्सिद्धचकारादेरिति वाच्यम् ॥ श्चोततेरुपदेशे सादित्वेन श्चुत्वनिष्पन्न-शकारघटिते प्राण् श्चोततीत्यादौ दोषध्रौव्यादिति चेत् सत्यम् ॥ योगविभागा-दिष्टसिद्धिरिति न्याय एवात्र शरणमिष्टसिद्धिरेव न त्वनिष्टापादनमिति हि तदर्थ इत्याहुः ॥ नव्यमते कार्यकालयथोद्देशपक्षयोरुभयोरपि त्रिपाद्यां बहिरङ्गपरिभाषाया अप्रवृत्तेराह ॥ **सर्वथेति ॥ इदमेवेति ॥** योगविभागेन णत्ववारणमेवेत्यर्थः ॥ असिद्धत्वादित्यस्य बहिरङ्गासिद्धत्वादित्यर्थः ॥

**ङमिति प्रत्याहाररूपायामिति ॥** ननु हलन्त्यमित्यनेनाज्ञातस्वस्वरूपज्ञा-पनतात्पर्यप्रयुक्तोच्चारणविषयसमुदायचरमावयवस्य हल इत्संज्ञा बोध्यते। प्रत्याहा-रात्मकोऽयं ङम्शब्दश्च आदिरन्त्येनेत्येतच्छास्त्रेण स्वरूपातिरिक्ते सङ्केतितो न तु स्वरूपबोधक इति तत्रानुबध्यमानस्य टकारस्य कथमित्संज्ञाप्रवृत्तिरिति चेन्मैवम् ॥ अज्ञातस्वस्वरूपज्ञापनं च नाज्ञातस्वस्वरूपबोधनं, परं तु तदुपस्थापनं,तच्च स्वं रूपमि-त्येतच्छास्त्रबलादन्यत्रेव ङमुट्शब्देप्यस्त्येव। बोधविषयता तु टकारस्येत्संज्ञालोपा-भ्यामपगमे मान्तस्य प्रत्याहाररूपत्वादादिरन्त्येनेत्येतच्छास्त्रबोधितसङ्केतवशादाक्षरस-माम्नायिकङकारप्रभृतिमकारपर्यन्तवर्णानामेवेत्यन्यत् ॥ ततश्च प्राथमिकोपस्थितिविष-यसमुदायचरमावयवस्य टकारस्य हलन्त्यमित्येतद्विषयताया निर्बाधत्वेनेत्संज्ञाया अव्याघातात् ॥ **विभाषामध्ये इति ॥** विकल्पविषयविधिद्वयमध्ये इत्यर्थः ॥ **पूङः क्त्वा चेति ॥** तत्र हि उदुपधाद्भावादिकर्मणोरन्यतरस्यामित्यतो विकल्पानुवृत्तिमा-शङ्क्य नित्यमकित्त्वमिडाद्योरिति भारद्वाजीयमतमनुसृत्य उदुपधाद्भावादिकर्मणोरन्य-तरस्यां नोपधात्थफान्ताद्वेति विभाषाद्वयमध्ये पाठादन्यतरस्यामित्यस्यासंबन्धो विभाषामध्ये च ये विधयस्ते नित्यास्तेन पूङःपरौ सेटौ क्त्वानिष्ठाप्रत्ययौ नित्यमेव

---

**स्यादौ जश्त्वादिप्रवृत्तेरन्यत्र दर्शनेन तत्र तत्र क्लिष्टकल्पनामपेक्ष्यानुवृत्त्यैव तद्वारणं युक्त-मिति बोध्यम्।**

कितौ नेत्युक्तमिति बोध्यम् ॥ ननु ङम इति पञ्चम्या निरवकाशया मय उञ् इत्यत्र संबन्धेन कृतार्थाया अचीति सप्तम्याष्षष्ठीत्वकल्पनाया औचित्येन पूर्वादित्वस्यासंभवादेव परादित्वमिति न तत्र फलान्वेषणोपयोग इत्यत आह ॥ **ङम इत्यस्येति** ॥ पूर्वसूत्रे न इत्यस्य षष्ठ्यन्तताम् आश्रित्य तुकः पूर्वावयवत्वकल्पनात्तदनुरोधेनात्रापि ङम इत्यस्य षष्ठ्यन्तत्वानुसन्धानेन ङमुटः पूर्वावयवत्वसंभव इत्याशयः ॥ ननु पदस्येत्यधिकारात्तद्विशेषणत्वेन ङम इत्यस्य षष्ठ्यन्तत्वे तदन्तविधौ ह्रस्वावधिकपरत्वविशिष्टङमन्तपदस्य ङमुडित्यर्थे विशिष्टस्य ङमुडागमप्रवृत्त्या पूर्वादित्वस्य वक्तुमशक्यत्वादेव परादित्वमिति तस्य कुर्वन्नास्त इत्यादिस्थलीयणत्वनिवृत्तिमात्रप्रयोजनकत्वोपवर्णनमनुचितमत आह ॥ **अवयवषष्ठीति** ॥ न लोपः प्रातिपदिकान्तस्येति सूत्रस्थान्तग्रहणेन पदाधिकारस्य क्वचिद्वैयधिकरण्यस्यापि ज्ञापनादिति भावः ॥ अत एव तटित्वानित्यादौ वत्वसिद्धिः ॥ अन्यथा झय इत्यत्र झयन्तात्पदादित्यर्थे तान्तसान्तयोर्भसंज्ञकतया तदनुपपत्तिस्पष्टैव ॥ यद्येवं पदावयवस्य ह्रस्वात्परस्य ङमो ङमुडित्यर्थस्य पर्यवसानात् धनं वनमित्यादावपि तत्प्रसङ्गः ॥ न च पदस्येत्यस्य संबन्धमहिम्ना ङम्पदावृत्त्या ङमन्तपदावयवस्य ङमो ङमुडित्यर्थ इति वाच्यम् । एवमपि खनत्यादिभ्यश्शतरि खनन्नास्त इत्यादौ अनन्त्यस्यापि ङमुडापत्तिरत आह ॥ **अजादौ पदे इति** ॥ **कार्यकालपक्षसंबन्धीति** ॥ इदं प्राचीनाभिप्रायवर्णनं, न तु सिद्धान्त इत्याह ॥ **दिगर्थ इति** ॥ **अभाव एवेति** ॥ पक्षद्वयेऽपि तत्परिभाषायास्त्रिपाद्यामप्रवृत्तेर्विसर्जनीयसूत्रे भाष्यकृता व्यवस्थापितत्वादिति भावः ॥ **आगमानामागमिधर्मवैशिष्ट्यमिति** ॥ वाक्यशेषाध्याहारस्य बोद्धृधीनत्वाद्यदागमपरिभाषायां गृह्यन्त इत्यस्य कर्मतया सागमा आगमाश्च संबध्यन्ते, प्रकृतसूत्रस्थं भाष्यमेवात्र प्रमाणम् ॥ तत्र हि ङमो ङमुडितिपक्षे कुर्वन्नास्ते इत्यत्राद्यनकारस्यापदान्तस्य णत्वनिषेधोपायतया पदान्तभक्तः पदान्तग्रहणेन ग्राहीष्यत इत्युक्तमित्याशयः ॥ ननु लोकन्यायसिद्धमिदं यदागमा इति, लोके चाङ्गाधिक्ये तद्विशिष्टस्यैव देवदत्तादिग्रहणेन ग्रहणाद्युक्तमागमविशिष्टस्यागमिग्रहणेन ग्रहणम् ॥ देवदत्तादिग्रहणेनाधिकाङ्गग्रहणस्य सर्वानुभवविरुद्धत्वात्कथमागमानामागमिधर्मवैशिष्ट्यमिति चेन्न ॥ अङ्गुल्याकारस्याङ्गुल्यवयवस्य षष्ठाङ्गुलित्वेन व्यवहारस्य सकलसुप्रसिद्धतया परिभाषायामागमानामागमिधर्मव्यपदेशोऽपि लोकन्यायसिद्ध एवेत्याशयात् ॥ यत्तु मिदचोऽन्त्यात्पर इति सूत्रस्थभाष्यविरोधादिदमयुक्तं, तत्र ह्याद्यन्तौ

टकितावित्यत आदिपदानुवृत्त्या मितः परादित्वे द्विषन्तप इत्यत्र द्विषच्छब्दावयवतकारात् पूर्वं तदीयाद्यवयवत्वेन प्रवर्तमानस्य मुमः पदान्तत्वाभावान्मोनुस्वारो न स्यादित्युक्तम्, पदान्तभक्तस्य पदान्तग्रहणेन ग्रहणे हि तदसङ्गतिरेवेति, तदविचारविलसितम् ॥ द्विषन्तप इत्यत्र तकाराद्यवयवत्वेन प्रवृत्तस्य मकारस्य संयोगान्तलोपोत्तरं पदान्तत्वप्रयुक्तस्यानुस्वारस्य निर्बाधतया तदनापत्तिप्रतिसन्धानस्यैकदेशयुक्तित्वेन तद्भाष्यविरोधस्याकिंचित्करत्वादिति दिक् ॥ **इत्येवार्थ इति** ॥ पूर्वसूत्रे न इत्यस्य षष्ठ्यन्तत्वात् प्रकरणानुरोधेनात्र ङम इत्यस्य षष्ठ्यन्तत्वनिश्चये तदनुरोधात्सामानाधिकरण्यान्वयोऽपि प्रसज्येत, ह्रस्वादिति च पदस्येत्यनेनैव संबध्येत न तु तदन्तविधिना ङमन्तबोधकङम्शब्दार्थैकदेशेन ङमा, "पदार्थः पदार्थेनान्वेति न तु पदार्थैकदेशेने" ति व्युत्पत्तिविरोधात् ॥ किं च पदाधिकारसंबन्धस्योत्तरत्र संबन्धाविच्छित्तये राजनित्याहेत्यादौ ङमुटोऽप्रवृत्तये च सार्थकतया न तद्वैयर्थ्यशङ्कावकाश इत्याशयस्तदाह ॥ **न प्रागुक्त इति** ॥ **महदनिष्टमिति** ॥ विशिष्टपदस्यैवाद्यवयवत्वेन ङमुट्प्रवृत्तिरूपमित्यर्थः ॥ एतदनिष्टवारणाय ङमुगागमविधाने कुर्वन्नास्त इत्यादौ प्राथमिकनकारस्य णत्ववारणं दुष्करमेव, तस्मादिह ह्रस्वात्परीभूतपदावयवङमः परस्याजादेः पदस्य ङमुडित्यर्थोऽवश्यमभ्युपेय इति तात्पर्यम् ॥ **स निषेध इति** ॥ अत्र दीक्षितादयः, उत्तरपदत्वे चेत्यत्रापदादिविधाविति प्रसज्यप्रतिषेधः, सत्या भामेतिवन्नामैकदेशे नामग्रहणात् । उत्तरेत्युत्तरपदार्थकं, तच्च लुप्तषष्ठीकं पृथक्पदं, तथा च उत्तरपदसम्बन्धिपदत्वे संपादनीये प्रत्ययलक्षणस्य प्रतिषेधः । पदादिविधिप्रयोजकपदत्वे तु नायं निषेध इत्यर्थः ॥ परमवाचावित्यादावन्तर्वर्तिविभक्तिनिमित्तके पदत्वे प्रत्ययलक्षणप्रतिषेधात्तत्प्रयुक्तानां कुत्वादीनामभावः ॥ पदादिविधौ निषेधाभावाच्च दध्नस्सेचौ दधिसेचावित्यत्रान्तर्वर्तिसामासिकसुब्निमित्तकपदत्वप्रयुक्तस्सात्पदाद्योरिति षत्वनिषेधः ॥ पदादिविधिश्च प्रतिपदोक्त एव ॥ तेन तत्त्वबुधावित्यादौ सामासिकसुब्निमित्तकपदत्वे प्रत्ययलक्षणप्रतिषेधात् पदान्तत्वप्रयुक्तस्य वस्तुतः पदादिकार्यस्य भष्भावस्याभावः ॥ ङमन्तपदात्परस्याचो ङमुडित्येव प्रकृतसूत्रस्यार्थः ॥ अधिकारतः प्राप्तस्य पदस्येत्यस्य वैयधिकरण्येन संबन्धापेक्षया ङम इति समानाधिकरणविशेषणानुरोधातपञ्चम्या विपरिणामस्यैव सुगमत्वात् ॥ उञि च पदे इत्यतः पदे इत्यस्यानुवृत्तिषष्ठीविपरिणामौ च फलाभावादुपेक्ष्यौ ॥ एवं स्थिते परमदण्डिनावित्यादौ निरुक्तरीत्या प्रत्ययलक्षणनिषेधान्ङमुडभावः ॥

स्पष्टं चेदं प्रकृतसूत्रे भाष्ये इत्याहुः ॥ तत्र लक्ष्यविसंवादादसाङ्गत्यं मन्यमान आह ॥ **पर्युदासेनेति** ॥ प्रसज्यप्रतिषेधाश्रयणे वाक्यभेदासमर्थसमासकल्पनाभ्यां परिक्लेशः प्रसिद्ध एव ॥ पदत्वे इति च तत्प्रयुक्तविधिपरम् ॥ इत्थं च पदादिविधिभिन्ने तत्सदृशे पदान्तविधौ प्रत्ययलक्षणस्य प्रतिषेध इत्यर्थः ॥ अत एव पूर्वसुगण्णीश इत्यत्र त्रिपदे बहुव्रीहावुत्तरपदनिमित्तकावान्तरतत्पुरुषगर्भे ङमुण्णिर्बाधः ॥ नन्वेवं पञ्चगोराड्धन इत्यत्र निरुक्तबहुव्रीहिघटकावान्तरतत्पुरुषीयोत्तरपदभूतगोराट्छब्द-राट्छब्दान्यतरनिष्ठपदत्वप्रयुक्तो न पदान्तादिति ष्टुत्वनिषेधो दुर्लभः, तस्यापि पदान्तविधित्वाविशेषादत आह ॥ **किं चेति** ॥ उत्तरपदस्येत्यर्थकस्य उत्तरेत्यस्य पदत्वप्रयुक्तेन विधिना संबन्धो न तु पदत्वेनेत्याशयः ॥ **माषकुम्भवापेनेति** ॥ कार्यित्वनिवेशादेव कुम्भशब्दगतपदत्वनिमित्तकस्य पदव्यवायेपीत्यस्य प्रवृत्तिरित्यर्थः ॥ ननु कार्यित्वनिवेशे पूर्वदण्डिप्रिय इत्यादौ त्रिपदे बहुव्रीहाववान्तरतत्पुरुषीयोत्तरपदभूतस्य दण्डिन्शब्दादेः पदत्वप्रयुक्तनलोपप्रवृत्तिर्दुर्लभा, तस्योत्तरपदस्य कार्यितया निरुक्तनिषेधेन प्रत्ययलक्षणायोगात् ॥ तस्मात् प्रकृतवार्तिकस्थशब्देन्दुशेखररीत्या मध्यमत्वानाक्रान्तस्यैवोत्तरपदस्य प्रकृतनिषेधविषयताया आवश्यकतया तेनैव माषकुम्भवापेनेत्यादावुपपत्तेस्तत्र णत्वनिषेधस्य कार्यित्वनिवेशप्रयोजनत्वोपवर्णनमयुक्तमिति चेन्न ॥ स्वनिष्ठसुबन्तत्वप्रयोज्यसमासीयपूर्वोत्तरपदनिरूपितमेवेह मध्यमत्वं, प्रत्यासत्त्यनुरोधात् ॥ तच्च त्रिपदबहुव्रीहावेव संभवति ॥ माषकुम्भवापेनेत्यादौ तु तत्पुरुषगर्भस्तत्पुरुष इति कुम्भादेर्निरुक्तमध्यमत्वानाक्रान्तत्वेन निषेधविषयत्वापत्त्या णत्वनिषेधप्रयोजकपदत्वसमर्थनाय कार्यित्वनिवेशस्यावश्यकत्वात् ॥ अत एव व्युत्पत्तिपक्षे परमसर्पिः कुण्डिकेत्यादौ विशिष्टस्य इसुसन्तत्वाभावात् पूर्वसमासीयोत्तरपदभूतसर्पिरादीनामनेन निषेधेन पदत्वाभावादिसुसन्तपदावयवविसर्गस्य स्थाने प्रवर्तमानस्य षादेशस्य प्रवृत्त्ययोगाद्यर्थमनुत्तरपदस्थग्रहणमित्याशङ्क्य परमसर्पिष्करोतीत्यादौ षत्वप्रवृत्तिफलकतया तदन्तविधिद्वयज्ञापनेन सार्थक्योपवर्णनपर नित्यं समास इति सूत्रस्थशब्देन्दुशेखरादिग्रन्थसङ्गतिः ॥ यथाकथंचित् मध्यमत्वग्रहणे तु सर्पिरादीनामपि मध्यमत्वाक्रान्तत्वेन प्रत्ययलक्षणनिषेधविषयत्वाभावात्तदसङ्गतिरेव । तस्मात्स्वनिष्ठसुबन्तत्वप्रयोज्यसमासघटकपूर्वोत्तरपदावधिकमध्यभागवृत्तित्वाभाववदुत्तरपदोद्देश्यकपदादिविधिभिन्नपदत्वप्रयोज्यविधिप्रयोजकप्रत्ययलक्षणस्याभाव इति निष्कर्षः ॥ तथा च परमदण्डिनावित्यादौ प्रकृतकार्योद्देश्यत्वानुपहितस्य दण्डिनित्या-

देरुत्तरपदस्य प्रत्ययलक्षणनिषेधविषयत्वाभावेन पदत्वस्य सुस्थतया ङमन्तपदात्परस्याचो ङमुडिति व्याख्यानं न तत्र ङमुण्णिवारणोपाय इत्याशयः, तदाह ॥ इत्युच्यते तदेति ॥ **अजादेः पदस्येति** ॥ उञि च पदे इत्यतः पदे इत्यस्यानुवृत्तिरवश्यमाश्रयितव्या ॥ पदावयवङमः परस्याजादेः पदस्य ङमुडित्येव तदर्थ इत्याशयः ॥ नन्वेवमिण्गतावित्यस्माल्लङ्मध्यमपुरुषैकवचने ऐरित्यस्य तिङश्चेति अकचि राजन्नकैरित्यत्र विशिष्टस्याकचो वा पदत्वाभावान्ङमुडनापत्तिरिति चेन्न ॥ तत्राप्यर्थवत्सूत्रेण विशिष्टस्य प्रातिपदिकत्वस्य निर्बाधत्वादौत्सर्गिकैकवचनेन पदत्वाक्षतेः॥ अन्यथा तस्यापदं न प्रयुञ्जीतेति निषेधविषयतैव स्यात् ॥ न च सुगण्णीश इत्यत्रोत्तरपदस्य निरुक्तरीत्या पदत्वाभावान्ङमुडनापत्तिरिति वाच्यम्॥ वाक्ये ङमुटो निर्बाधत्वेन वृत्तिकाराद्युदाहरणोपपत्त्या समासे तस्यानिष्टत्वे क्षत्यभावात् ॥ अत एव वृषणश्व इत्यत्र ङमुडभावः ॥ सनन्तप्रक्रियायङन्तप्रक्रियेत्यादावपि प्रागुक्तरीत्या प्रत्ययलक्षणनिषेधविषयत्वादन्तशब्दस्य ङमुट्प्रवृत्त्यभावादुपपत्तिः ॥ इको यणचीत्यादिस्तु संहिताया अविवक्षया निर्बाधः ॥ नन्वेवं सुगण्शब्दोपपदकात् अयधातोः कर्मण्यणि सुगण्णाय इत्यत्र ङमुट्प्रवृत्त्ययोगान्निरुक्तव्याख्यानमयुक्तमत आह ॥ **स्पष्ट चेदमित्यादि** ॥ तथा चैवं व्याख्यानपरभाष्यप्रामाण्यादीदृशानामनभिधानमभीष्टो वा तत्र ङमुडभाव इति गूढाशय इति दिक्[१] ॥

**इदमेव ज्ञापकमिति** ॥ समस्सुटीति सूत्रमेवेत्यर्थः ॥ अन्यथा समो मलोपमेक इति लोपे लोपस्यापि रुप्रकरणविधेयत्वादनुस्वारानुनासिकयोः सक्कृद्द्वित्वेन द्विसकारकस्य पुनर्द्वित्वेन त्रिसकारकस्यापि सिद्धौ सूत्रं व्यर्थमेव स्यादिति भावः ॥ ननु सूत्रसत्त्वे त्रिसकारकरूपसम्पत्तये सकृदेव द्वित्वशास्त्रस्य प्रवृत्तिः ॥ सूत्राभावे द्विवारं

---

१. **दिगिति** ॥ दिगर्थस्तु यदि त्वार्द्रगोमयेणेत्यादौ निषेधाप्रवृत्तये क्रियमाणस्य अतद्धिते इति वक्तव्यमिति वार्तिकस्य प्रत्याख्यानायाश्रिते "पदे व्यवाये नेति" व्याख्याने पदपदस्य पदत्वयोग्योपलक्षणत्वस्याश्रयणवन्माषपवापेनेत्यादौ णत्वव्यावृत्तये अरारम्भपक्षेऽपि पदपदस्य पदत्वयोग्योपलक्षणत्वाश्रयणस्यावश्यकतया कार्यित्वनिवेशे फलाभाव इत्युच्यते, तदा राजपुरुषशब्दादाचारक्विपि लोण्मध्यपुरुषैकवचने निष्पन्नात्परत्र भवतीत्यस्य प्रयोगे तिङतिङ इति निघातार्थं कार्यित्वनिवेश आवश्यकः। तत्रोत्तरपदभूतपुरुषशब्दस्यान्तर्वर्तिनीं विभक्तिमाश्रित्य पदत्वादतिङ इत्यस्य पर्युदासत्वेन तिङन्तभिन्नत्वाच्च तत्र निघात इष्ट एवेति बोध्यमिति ॥

द्वित्वशास्त्रप्रवृत्तिरिति प्रक्रियालाघवार्थं सूत्रमावश्यकम् ॥ न च सूत्रसत्त्वे द्विसकारकसम्पत्त्यर्थं खरवसानयोरित्यादिप्रवृत्त्याश्रयणप्रयुक्तं गौरवमधिकमिति वाच्यम् ॥ सम्पुङ्कानामिति वार्तिकबलेन समस्सुटीत्यत्र सकारं प्रश्लिष्य मकारस्यैव सकारविधानेन विसर्गाद्यनपेक्षणादिति चेन्न ॥ समस्सुटीत्यस्य सत्त्वे तत्प्रवृत्त्या द्विसकारकं द्वित्वप्रवृत्त्या त्रिसकारकं, सूत्राभावे च द्विवारं द्वित्वशास्त्रप्रवृत्त्या द्विसकारकत्रिसकारकयोस्सिद्धिरिति शास्त्रप्रवृत्त्यप्रवृत्तिकृतलघुगुरुभावस्य दुर्वचत्वादित्याहुः ॥

नन्वधिकारपक्षवद्विधिपक्षेऽपि रुप्रकरणपाठादेव तल्लाभादत्रग्रहणं व्यर्थमेवेत्यधिकारपक्षमात्रपरतया तद्वैयर्थ्योपपादनं मूलकारस्यायुक्तमित्यत आह ॥ **विधिपक्षे इति** ॥ **अत्र रुप्रकरणे इति** ॥ तेन ससजुषोरिति विहितरुत्वविषये नास्य प्रवृत्तिरिति भावः ॥ **विधित्वे त्विति** ॥ यद्यपि मतुवसोरु इत्यतः प्रागेव पठितव्ये तदुत्तरं पाठादेव तद्विषयेऽस्य प्रवृत्त्यभाव इति वक्तुं शक्यं, तथापि तत्र क्लेश इति भावः ॥

ननु पूर्वशब्देनागमत्वबोधनस्य दृष्टान्ततया प्रतिपादनादवधारणार्थक एवकारो न युक्त इत्याह ॥ **प्रसिद्धाविति** ॥ तत्प्रसिद्धिश्च उरण् रपर इत्यत्रेति बोध्यम् ॥

**अवसाने न स इति** ॥ खरवसानयोरुभयोरपि सत्वप्रवृत्तौ विसर्गविधानवैयर्थ्यादन्यतरस्मिन् तद्विधाने खरीत्यस्याननुवृत्तौ विनिगमकाभावादवसान एव तत्प्रवृत्तिस्संभाव्येतेत्याशयः ॥ यद्यपि भाष्ये खरीत्यस्यानुवृत्त्यभावेऽपि शर्परे विसर्जनीय इतिज्ञापकात् खर्येव विसर्गस्य स इत्युक्तम्, तथापि ज्ञापकेनापूर्वतया तत्संबन्धकल्पनापेक्षया मण्डूकानुवृत्त्या तत्संबन्धकल्पनैव लघीयसीत्याशयः। नन्वस्य संहिताधिकारीयत्वान्निमित्तनिमित्तिनोरतिशयितसामीप्येनोच्चारणे सत्वप्रवृत्तिरित्यर्थस्य पर्यवसन्नत्वादभावात्मकस्यावसानस्य संहिताविषयत्वासंभवात् खर्येव पर्यवस्यतीति व्यर्था खर्पदानुवृत्तिरत आह ॥ **पूर्वेणेति** ॥ अयं भावः ॥ वर्णानामुच्चारणे स्वाभाविकोऽर्धमात्राकालव्यवायः । तदधिककालकृतव्यवधानराहित्यं चातिशयितसामीप्यं, तदेव संहितापदाभिधेयं, परस्सन्निकर्षस्संहितेत्यनुशासनात् ॥ लोकेप्येषा संहिता प्रसिद्धा । तादृशी च संहिता परेणेव पूर्वेणापि सुवचा, निमित्तानुपादाने

संहितयोच्चार्यमाणस्य विसर्गस्य स इत्यर्थेनावसाने तत्प्रवृत्तिर्दुर्वारा ॥ संबन्धेप्यवसान इत्यस्य निरुक्तरीत्या वाक्यार्थे स्यादेवावसानेऽपि तत्प्रवृत्तिः ॥ निरवकाशयावसान-संज्ञया परसत्त्वे सावकाशायास्संहितासंज्ञायास्सत्यपि संभवे बाधनं भवतीति बाधनं तु न युक्तम् । आकडारसूत्रेणैतच्छास्त्रीयसंज्ञानामेव बाध्यबाधकभावबोधनात् ॥ संहिता-वसानसंज्ञयोर्लोकसिद्धत्वेन शास्त्रमात्रविषयत्वाभावात् ॥ न हि परेणैव संहिता ग्राह्या न पूर्वेणेत्यत्र प्रमाणमस्ति इति ॥ ननु निमित्तनिमित्तिनोरुभयोरनुपादाने भवतु पूर्वेण संहिता, तदुपादाने च प्रत्यासत्त्या तदुभयसंहिताया एव ग्रहीतुमौचित्येन तत्संबन्धकल्पनायामावसानिकक्कार्याणामप्रवृत्तिरेव स्यादित्यत आह ॥ **अत एवेति**॥ आवसानिककार्यविधायकेषु अनुवर्तमानसंहिताधिकारस्य पूर्वसन्निकर्षपरत्वादेवेत्यर्थः॥ यद्यपि विसर्जनीयादेरजाश्रयतया पूर्वसन्निकर्षस्य नियतत्वेन संहिताधिकारसंबन्धस्य व्यावर्त्यालाभः, तथाप्युत्तरत्र संबन्धाविच्छित्त्यर्थमेव तत्संबन्धः, मण्डूकानुवर्तनं तु ना-तस्समञ्जसमिति तत्त्वम् ॥ वर्णसमाम्नाये पठ्यमानानामयोगवाहानामिकारात्पूर्वं पाठे प्रमाणं दर्शयति ॥ **अत एवेति** ॥ **झलां जश् झशीति** ॥ झलां जशोऽन्त इति तु नापा-दनीयम् ॥ तद्दृष्ट्या मोनुस्वारस्यासिद्धत्वादित्याशयः ॥ **कश्चिदिति** ॥ अत्रारुचिबीजं तु नुम्ग्रहणस्यानुस्वारोपलक्षकस्याट्कुप्वाङितिसूत्रे भाष्ये प्रत्याख्यानात्तेनानित्यत्व-ज्ञापनानुपपत्तिः ॥ वाचंयमपुरंदरौ चेति निर्देशादनुस्वारस्य जश्त्वाभावः ॥ कटं करो-तीत्यादौ खरि चेत्यनेन प्रकृतिचरां प्रकृतिचर इति न्यायादनुस्वारस्यानुस्वार एव भवतीति सामान्यतोऽयोगवाहपाठस्यानित्यत्वज्ञापनेनास्त्युपयोग इति ॥ **परस्य द्विती-योच्चारणस्येति** ॥ ननु विरोधाभावात् पौर्वापर्ये विनिगमकाभावाच्च द्वाभ्यामपि वचनाभ्यामेकस्यैव द्विरुच्चारणस्य साधुत्वमुपपद्यत इति पौर्वापर्येण तद्व्यवस्थापनमनु-चितमिति चेत्सत्यम् ; प्रकरणे प्रकरणमसिद्धं न योगे योग इत्यस्य सिद्धान्तिसम्म-तत्वाभावादचो रहाभ्यामिति सूत्रापेक्षया त्रिपाद्यां परत्रानचि चेति सूत्रे पठितस्य यणो मय इत्यस्यासिद्धतया यौगपद्यासंभवेनाचो रहाभ्यामित्यस्य प्रवृत्त्युत्तरं यणो मय इत्यस्य प्रवृत्तौ न किंचिद्बाधकं, तदेतदचो रहाभ्यामिति कृते यणो मय इति भवत्येवेति वदता मूलकृता सूचितमेवेत्याहुः ॥

**व्याख्यादर्शरीत्येति** ॥ अप्रत्यय इति पर्युदासो लाघवात्, तच्च समानाधिकरणं विसर्गविशेषणं, सामानाधिकरण्ये संभवति वैयधिकरण्यायोगात् ॥

पदस्येति व्यधिकरणमेव ॥ तथा च इकारोकारोपधकपदस्याप्रत्ययो यो विसर्गस्तस्य ष इति हि तदीयो ग्रन्थः ॥ **षत्वापत्तेरिति** ॥ यदि तु समुदाये दृष्टाश्शब्दा अवयवेऽपि दृश्यन्ते पूर्वे पञ्चालास्तैलं भुक्तं घृतं भुक्तमित्यादिव्यवहारबलादिति भाष्यकारोक्तिमनुसृत्येह भिसो विसर्गस्य प्रत्ययत्वमित्यभ्युपगम्यते, तर्ह्यादेशावयवस्यापि आदेशतया तिसृभिरित्यत्र सकारस्यादेशप्रत्यययोरिति षत्वं प्रसज्येत ॥ तत्रादेशे सकारोच्चारणसामर्थ्यादेव षत्वाभाव इति वक्तुमशक्यम् ॥ तिस्र इत्यादौ न रपरेति निषेधेन षत्वाप्रवृत्त्या चारितार्थ्यात् ॥ यदि च इदुद्भ्यामप्रत्ययस्येत्येव सिद्धावुपधाग्रहणादिकारोपधकस्यैव पदस्य यो विसर्गः प्रत्ययभिन्नस्तस्यैवेह ग्रहणम् ॥ भिसो विसर्गस्तु रामैरित्यादावैकारोपधकपदावयवत्वेनापि दृष्ट इति न तस्य प्रकृते षत्वप्रवृत्तिरित्युच्यते, तर्हि चतुष्कपाल इत्यत्राव्याप्तिस्तस्य विसर्गस्य प्रियचत्वा इत्यादावाकारोपधकपदावयवत्वेन दृष्टतया षत्वप्रवृत्तिविषयत्वाभावात् ॥ किं चाग्निः करोतीत्यादावपि सुप्रत्ययविसर्गस्य राम इत्यादावकारोपधकपदावयवत्वेन षत्वाविषयतया व्यर्थ एवाप्रत्यय इति पर्युदासस्स्यात् ॥ अपि च प्रत्याहाराह्निके भाष्ये उपधाग्रहणं न करिष्यते इदुद्भ्यां परं विसर्जनीयं विशेषयिष्याम इत्युपधाग्रहणस्य तत्र प्रत्याख्यानात्तेन फलान्तरकल्पनाभिनिवेशोप्ययुक्त इत्यास्ताम् ॥ **एतच्चेति** ॥ व्याख्यादर्शकारीयग्रन्थासाङ्गत्यं चेत्यर्थः ॥ **व्याख्यादर्शरीत्येति** ॥ एतेन परेषांरीत्याप्यत्र सामानाधिकरण्यमेव, परं तु प्रत्ययपदं प्रत्ययावयवपरमुपचारात् ॥ इत्थं च प्रत्ययसंबन्धिभिन्नस्य विसर्गस्येत्येवं संबन्धो न तु प्रत्ययसंबन्धिनो विसर्गस्य नेति वैयधिकरण्येन, प्रसज्यप्रतिषेधमूलकगौरवपराहतत्वादिति सूचितम् ॥ **पातेर्डुम्सुनिति** ॥ पूञो डुम्सुनिति पाठः कौमुद्यामुणादिषु च प्रायेण दृश्यते ॥ **सस्थानशब्द उच्यत इति** ॥

अत्रेदं बोध्यम् ॥ तस्य भाव इति सूत्रे भवत्यनेन शब्दस्य प्रवृत्तिरिति व्युत्पत्त्या भावशब्देन करणसाधनेन प्रवृत्तिनिमित्तमुच्यते ॥ चतुर्विधाश्च भावप्रत्ययविषयाश्शब्दाः, जातिशब्दा गुणशब्दाः क्रियाशब्दा यदृच्छाशब्दाश्च ॥ तत्र जातिगुणक्रियाभिरर्थविशेषे प्रवर्तमानेभ्यो जातिगुणक्रियाशब्देभ्यो विधीयमानानां भावप्रत्ययानां प्रवृत्तिनिमित्तभूता जात्यादय एव वाच्याः ॥ यदृच्छाशब्दानां तु जात्यादिविलक्षणं सङ्केतसहकृतं स्वरूपमेव तत्तदर्थविशेषे प्रवृत्तौ निमित्तमतस्तदेव तत्र

भावप्रत्ययार्थः ॥ नन्वेवं गोत्वमित्यादौ गोत्वविशिष्टनिष्ठं गोत्वमित्यादिरर्थस्स्यात्, स चायुक्तः ॥ तद्धर्मविशिष्टे तद्धर्मान्वयवत् तद्धर्मविशिष्टस्य तद्धर्मान्वयस्याप्यव्युत्पन्नत्वात् ॥ अत एव कर्म गच्छतीत्यादिको न प्रयोग इति चेन्मैवम् ॥ गोत्वादिशब्देषु भावप्रत्ययेन प्रतीयमानो जात्यादिर्न तद्रूपेणाभिधाविषयः ॥ किंतु जातित्वादिना धर्मत्वेन वा, प्रकृत्यर्थस्य च तत्र स्वेतरावृत्तित्वावच्छिन्नसकलस्ववृत्तित्वसंबन्धेनान्वयः ॥ तथा च गोत्वमित्यादितो गवेतरावृत्तित्वावच्छिन्नसकलगवीनिरूपितवृत्तित्ववती जातिः तथाभूतसकलगवीनिरूपितवृत्तित्वविशिष्टो धर्म इत्येवंरीत्या वा बोधे फलविधया विशेषरूपेण जातीनां भानमित्यभ्युपगमात् ॥ इत्थं च संज्ञाशब्दानां तत्तच्छब्दस्वरूपप्रकारकस्वार्थपरत्वस्य निर्विवादतया सस्थानशब्दोत्तरभावप्रत्ययेन सस्थानशब्दस्य स्वरूपेण प्रतिपादनासंभवेऽपि शब्दत्वेन तत्प्रतिपाद्ये स्वेतरासङ्केतितत्वविशिष्टस्वसङ्केतितत्वसंबन्धेन प्रकृतिभूतसस्थानशब्दार्थान्वये सस्थानशब्द एव फलविधया पर्यवस्यतीति ॥

नन्वेवं सस्थानत्वशब्दार्थतया पर्यवसन्नस्य सस्थानशब्दस्य प्रकृतवाक्यार्थाननुगुणत्वात् वार्तिकासाङ्गत्यमत आह ॥ **लक्ष्यत इति** ॥

केचित्तु भावप्रत्ययविषये प्रकृतीनां शब्दपरत्वं भावप्रत्ययासमभिव्याहृतप्रकृत्यर्थे प्रकारतया भासमानो धर्मो भाव इति स एव त्वतलाद्यर्थः ॥ तत्र च प्रकृत्यर्थशब्दस्य स्वजन्यबोधीयप्रकारतासंबन्धेनान्वयः ॥ कृत्तद्धितसमासेभ्यः संबन्धाभिधानं भावप्रत्ययेनेति सिद्धान्तात्, पाचकत्वमौपगवत्वं राजपुरुषत्वमित्यादौ प्रकृत्यर्थशब्दानां त्वतलाद्यर्थे संबन्धे स्वजन्यबोधीयसंसर्गत्वेनान्वयः ॥ संज्ञाशब्देषु सङ्केतितार्थस्यैकस्यैव विषयताद्वयेन भानमित्यर्थ एव त्वतलाद्यर्थः ॥ प्रकृत्यर्थस्य शब्दस्य स्वजन्यबोधीयप्रकारत्वेनैवान्वयः ॥ स्पष्टं चेदं भाष्ये ॥ एवं च वाच्यवृत्त्यैव सस्थानत्वशब्देन जिह्वामूलीयरूपार्थप्रतिपत्तौ लक्षणाश्रयणं नोपयुज्यत इत्याहुः ॥

१. आहुरिति ॥ इदं प्राचामनुरोधेन । मूलग्रन्थोऽपि दीक्षितानुरोध्येव । तेषां प्रकृतिजन्यबोधे प्रकारतया भासमानः प्रवृत्तिनिमित्तभूतो यः स एव भावप्रत्ययार्थ इत्यभिमानः ।

**नेष्टापत्तिमिति** ॥ आर्धधातुकेष्वेव ख्शादिप्रयोग इति प्रतिपादनेनान्यत्र तत्प्रयोगस्यानिष्टत्वं मन्यमानो माधवस्सार्वधातुके ख्शादिप्रयोगस्य कथमिष्टापत्तिं कुर्यादित्याशयः ॥ **रुत्वमिति** ॥ गणेषु प्रातिपदिकपाठस्यैव शैलीसिद्धत्वादेकवचनान्तत्वेन पाठस्य विवक्षार्थत्वात्तत्प्राप्तिसम्पादकोऽत्र कबभाव इत्याशयः ॥ **नमःख्यातिनिःख्यातीति** ॥ सार्वधातुके ख्शादित्वाभावाच्छर्परे इत्यस्याप्राप्त्या नमःख्यातीत्यादौ जिह्वामूलीयो निःख्यातीत्यादौ इदुदुपधस्येति सर्पिः ख्यातीत्यादाविसुसोः सामर्थ्ये इति षत्वं च स्यादिति भावः ॥

**अभिग्रान इति** ॥ औपदेशिकं ङित्वमात्मनेपदप्रवृत्तौ निमित्तं, तच्च नामधातुत्वेपि आनुपूर्व्यन्तराघटितत्वादक्षतमेवेत्याचारक्विबन्तादात्मनेपदाभावे बीजं त्राहीति प्रयोगं परिकल्प्य आत्मनेपदिभ्योऽपि परस्मैपदं साधयामीति क्वाचित्कत्राहीतिप्रयोगावष्टब्धो दुराग्रह एवेति तदर्थः ॥ वस्तुतः पुराणस्थमुनि-

---

उपाध्यायानुयायिनस्तु संज्ञाशब्देभ्यो भावप्रत्ययोपपादकस्य "यद्वा सर्वे भावाः स्वेनार्थेन भवन्ति, स तेषां भावः" इति भाष्यग्रन्थस्य पर्यालोचनायां पूर्वोक्तमसंगतमेव। तथाहि ॥ अनेन भाष्येण अत्रत्यभावशब्दः करणसाधन इति प्रतीयते। शब्दप्रयोगकारणं चार्थ एव। स च द्विविधः वाच्यः प्रवृत्तिनिमित्तभूतश्चेति। गवादिशब्देभ्योऽर्थपरेभ्य एव प्रवृत्तिनिमित्तभूतार्थे भावप्रत्ययः। संज्ञाशब्देषु आनन्त्यादिदोषाभावेनातिरिक्तप्रवृत्तिनिमित्ताभावेन व्यक्तिरेव वाच्येति सैव भावप्रत्ययार्थः। तत्र प्रकृत्यर्थातिरिक्तार्थस्यासम्भवादनुपपत्त्या प्रकृतेर्लक्षणया शब्दपरता। तादृशशब्दस्य स्वजन्यबोधविषयत्वसम्बन्धेन भावप्रत्ययार्थेऽन्वयः। एवं च कुशब्दकुत्वशब्दौ पर्यायौ। अनयोः पर्यायता च वृद्धिसूत्रे भाष्ये "कुत्वं कस्मान्न भवति, चोः कुः पदस्ये" त्यनेन सूचिता। अनियतार्थबोधकभपदादिशब्देषु व्यक्तिमात्रस्य वाच्यतायामानन्त्यादिदोषप्रसक्त्या तत्रानुगमार्थं शब्दरूपं प्रवृत्तिनिमित्तमाश्रयणीयमिति तत्र तदेव भावप्रत्ययार्थः। अत एव तत्रैव भाष्ये भत्वात्, कथं भसंज्ञा इति संज्ञाशब्दघटितनिर्देशः संगच्छते। अनेन भाष्येण भत्वभसंज्ञापदयोः पर्यायत्वं स्फुटमेव। स्पष्टं चेदं "ऋलृक्" सूत्रे भाष्यप्रदीपोद्योते। तद्धितार्थवादादौ मञ्जूषायां च स्फुटीकृतं चेदं परेत्वित्यादिना। नामार्थवादे मञ्जूषायां प्राचीनमतमुपन्यस्य यद्वेत्यादिना एतदर्थस्य प्रतिपादनेन "यद्वा सर्वे भावाः" इत्यादिभाष्याभिप्रेतार्थोऽयमेवेति सूचितम्। तत्र यद्वाशब्दस्तत्सूचनप्रयोजनकोऽपि। अन्यथा अन्यत्रेव परेत्वित्यादि ब्रूयात्। एवं च सस्थानत्वादिशब्देष्वनुपपत्त्या प्रकृतेश्शब्दलक्षकत्वाङ्गीकारेऽपि सर्वत्र तथाङ्गीकारोऽनुचितः। मानाभावदित्यप्यत्र विस्तर इत्याहुः।

प्रयोगोप्ययमन्यथासिद्ध इति निर्बीज एवायमभिमान इत्याह ॥ **आर्षं तदिति** ॥ युक्तं चैतत् । रक्षणविषयकप्रार्थनामपेक्ष्य रक्षकतुल्याचारप्रार्थनायां स्वारस्यविरहात् ॥ **नान्तत्वासम्भवादिति** ॥ ननु न ङिसम्बुध्योरिति निषेधेन नलोपाभावे हे प्रशान् तनोषीत्यादौ शानधातुप्रकृतिकस्यापि क्विबन्तस्य संभवत्येव नान्तत्वमित्ययुक्तमेवेदमिति चेन्मैवम् ॥ सूत्रे अप्रशानित्यनेन शाम्यतिप्रकृतिकक्विबन्तपर्युदासे तद्भिन्नस्य लाक्षणिकनान्तस्यैव ग्रहणं स्यादित्यलाक्षणिकनान्तस्यापि संग्रहाय न इत्यावश्यकं, शानधातुप्रकृतिकस्यापि प्रशान्शब्दस्य सत्त्वे तु तन्त्रेण द्वयोरपि ग्रहणप्रसक्त्या तद्भिन्नस्य लाक्षणिकालाक्षणिकसाधारण्येन नान्तग्रहणस्योपपन्नतया न इत्यस्य वैयर्थ्यापत्त्या शानधातुप्रकृतिकस्य तस्यानभिधानमित्याशयात् ॥ न च शाम्यतिप्रकृतिकस्य तस्य ग्रहणे पर्युदासेन लाक्षणिकनकारान्तस्यैव ग्रहणप्रसक्तिवारणाय यथा न इत्यस्य सार्थक्यं तथा शानधातुप्रकृतिकस्य तस्य ग्रहणे निरुक्तरीत्या लक्षणानधीनस्यैव तस्य ग्रहणप्रसक्तिवारणाय न इत्यस्य सार्थकत्वाच्छाम्यतिप्रकृतिकस्यैव तस्यानभिधानं किं न स्यादिति वाच्यम् ॥ व्याससमासादिसाधारणतया बहुप्रयोगविविषयस्य शाम्यतिप्रकृतिकस्य तस्यानभिधानकल्पनापेक्षया सम्बोधनविभक्त्यन्तमात्रविषयस्य शानधातुप्रकृतिकस्यैव तस्यानभिधानकल्पनं श्रेय इत्याशयात् ॥ तदेतत्सर्वमभिप्रेत्य शङ्कते ॥ **न चेति** ॥

**न तु तयोर्विधेयत्वमिति** ॥ अकारयोरित्संज्ञया निवृत्तावपि ककारपकारयोर्विधेयघटकत्वे क ᳲखनति क ᳲफलतीत्यादिषु नित्यं द्वित्वश्रवणापत्तावनिष्टप्रसङ्ग इति भावः ॥ **लक्षणेति** ॥ यद्यपि न विधौ परशब्दार्थ इति विधेयबोधके पदे लक्षणाया अनौचित्यादिदमयुक्तं, तथापि जिह्वामूलीयोपध्मानीययोर्वर्णान्तरसहायमन्तरेणोच्चारणासंभवात्तदुपपत्तये परिगृहीतयोस्तयोर्भङ्ग्यन्तरेण निवृत्त्ययोगादगत्या लक्षणा विधेयविषयेऽपि स्वीक्रियते, शक्त्यधीनस्य स्वरूपविधेर्बाधितात्वादित्याशयः, तदाह ॥ **व्याख्यानादिति** ॥

ननु जिह्वामूलीयोपध्मानीययोर्विकल्पेन विधाने पक्षे विसर्ग एव तिष्ठतीति कोऽसौ बकबन्धनप्रयास इत्याशङ्क्य मूले जिह्वामूलीयोपध्मानीययोरभावपक्षे विसर्जनीयस्य स इति सत्वप्रसङ्गादयं परिक्लेश इत्युक्तम् ॥ तत्रानेन विसर्गे

कुतो न तत्प्रवृत्तिरित्युद्भाव्य समाधत्ते ॥ **चानुकृष्ट इति** ॥ अपवाद इति ॥ अतो नासिद्धत्वमिति भावः ॥

**सा प्रवर्तत एवेति** ॥ अत्र यद्वक्तव्यं तदन्यत्र प्रपञ्चितम् ॥ ननु पदान्ताद्वेत्यस्य वैकल्पिकत्वात्तुगभावघटित एवायं सूत्रप्रयोग इति कुतो न कल्प्यते तत्राह ॥ **वैकल्पिकेष्विति** ॥ समानेप्यर्थप्रत्यये परमधार्मिको भगवान् पाणिनिरधिकफलसम्पादकं सतुक्प्रयोगमपहाय कथं तुग्रहितं प्रयुञ्जीतेत्याशय इत्यलम् ॥




॥ इति हल्सन्धिः ॥



## अथ विसर्गसन्धिः ।

ननु शर्परे नेति न्यासे कुप्वोरिति सूत्रे चकारबलेन प्राथ्र्यमानस्य पाक्षिकविसर्गस्य दौर्लभ्यापत्तिरत आह ॥ **नेत्येवानुकृष्टव्यमिति** ॥ विसर्गस्य कवर्गपवर्गयोः परतो जिह्वामूलीयोपध्मानीयौ भवतस्सकारश्च नेत्यर्थे सामर्थ्यात्ताभ्यां पर्यायेण सत्वनिषेधे पाक्षिको विसर्गः फलतीत्याशयः ॥ **सत्वनिषेधे इति** ॥ शर्परे नेत्यनेन कुप्वोरित्यस्यासिद्धत्वात् सत्वस्यैव निषेधे इत्यर्थः ॥ नन्वत्रापि न्यासे कुप्वोरित्यत्र चकारानुकृष्टनिषेधारम्भसामर्थ्यात् सत्वनिषेधविषये जिह्वामूलीयोपध्मानीययोः प्रवृत्त्ययोगात्कथं वासः क्षौमद्भिः प्सातमित्यादौ तत्प्रवृत्त्यापत्तिरिति चेन्मैवम् ॥ अशर्परकवर्गपवर्गपरत्वे कः करोतीत्यादौ चरितार्थस्य कुप्वोरिति सूत्रबोधितनिषेधस्य कवर्गपवर्गातिरिक्तशर्परत्वे कः त्सरुरित्यादौ कृतार्थस्य शर्परे नेत्यस्य च वासः क्षौमद्भिः प्सातमित्यादौ प्रसङ्गे कुप्वोरित्यस्यासिद्धत्वेन शर्पर इत्यस्यैव प्रवृत्त्या स्वसन्नियुक्तनिषेधविषयप्रवृत्त्यभावस्वभावयोः जिह्वामूलीयोपध्मानीययोः प्रकृतविषये प्रवृत्तौ प्रतिबन्धकाभाव इत्याशयात् ॥ **एतेनेत्यस्य** सामर्थ्यप्रतिपादनेनेत्यर्थः ॥ **असिद्धत्वादिति** ॥ शर्पर इति सूत्रविहितविसर्जनीयस्य स्थाने प्रवृत्तौ चारितार्थ्यादपवादत्वासम्भव इति भावः ॥ ननु विसर्जनीयविधानसामर्थ्यादसिद्धत्वबाधापूर्वकं जिह्वामूलीयोपध्मानीययोः निवृत्तिकल्पनापेक्षया लाघवात्तदसिद्धत्वबाधाराहित्येन विसर्जनीयस्य स इत्येतदपवादत्वाभावकल्पनैव ज्यायसीत्यत आह ॥ **अर्थाधिकारेति** ॥ अत एव सोपदादावित्यादि चरितार्थम्, अन्यथा तद्विषये विसर्जनीयस्य स इत्यस्य निर्बाधतया तदारम्भवैफल्यं स्पष्टमेव ॥ यत्तु सत्वविधावशर्पर इति पठित्वा कुप्वोरित्यत्र तत्संबन्धादेव वासः क्षौममद्भिःप्सातमित्यादौ जिह्वामूलीयोपध्मानीययोर्वारणसंभवाद्विसर्जनीयप्रत्यापत्तिविधानं विफलमिति वदन्ति, तदयुक्तमिति ध्वनयन्नाह ॥ **विसर्जनीयस्य सोऽशर्पर इति** ॥ **लाभानापत्तेरिति** ॥ यदि तु कुप्वोरिति सूत्रे चकारस्थाने नञं पठित्वा स इत्यनुवर्त्य जिह्वामूलीयोपध्मानीयाभ्यां पर्यायेण सत्वनिषेध इत्युच्यते तदा फलत्येव पाक्षिको विसर्गलाभः ॥ परं तु पुरःक्षुतं पुरः प्सातमित्यादौ नमस्पुरसोरित्यादिना सत्ववारणाय सर्पिः प्साति धनुःक्षिणोतीत्यादौ इसुसोस्सामर्थ्य इत्या-

दिना षत्ववारणाय च तत्र तत्राशर्पर इत्यस्य मण्डूकानुवृत्त्या बहुषु प्रदेशेषु संबन्धकल्पनायां परिक्लेशः ॥ ततो विसर्जनीयप्रत्यापत्त्या विकारमात्रनिवारणमेव समञ्जसमिति भगवतस्सूत्रकारस्याभिप्राय इत्याहुः ॥

**पूस्तरेति** ॥ यद्यपि ह्रस्वात्तादाविति ह्रस्वग्रहणादपीह षत्ववारणं सुकरं तथापि गीश्श्चुन्चुर्गीश्श्रण इत्यादौ षत्ववारणं तत्फलमिति बोध्यम् ॥ ननु सुबुत्पत्तेः पूर्वं समासे कवर्गपवर्गादीनामनेकेषामपदानां संभवादसंभवाभिधानमनुचितमत आह ॥ **अयं भाव इति ॥ आदिग्रहणसामर्थ्येन तल्लब्धावधारणेन चेति** ॥ पदस्यादिः पदादिर्न पदादिरपदादिरिति विग्रहो यद्याश्रीयते तर्ह्यादिग्रहणसामर्थ्यात् पदत्वयोग्यतावदाद्यवयवभिन्न इत्यर्थः ॥ न पदमपदं तस्यैव य आदिरिति सामर्थ्यमूलकसावधारणविग्रहो यदि तदा पदत्वयोग्यतावद्भिन्नाद्यवयव इत्युभयथा सामर्थ्योपयोगात् द्वेधा हेतूल्लेखः ॥ परं तु चकारो वाशब्दार्थे, निपातानामनेकार्थत्वान्न तु समुच्चये, तस्यासंभवादिति बोध्यम् ॥ यस्तु विस्तारे पटजिति वार्तिकेन पशुनामभ्यो विहितः पटच्प्रत्ययः, नासावुच्चैश्श्रवश्शब्दाद्भवति, एकव्यक्तिवाचकत्वात् ॥ विस्तारो हि तत्र न कायवैशाल्यमपि तु व्यक्तिबाहुल्यं, भाष्यस्वारस्यात् ॥ अत एव सङ्घाते कटजिति कटच्प्रत्ययोपि नास्माद्भवति ॥ अश्ववृषशब्दप्रकृतिकासुग्विशिष्टक्यजन्ताभ्यां क्विपि निष्पन्नसकारान्तयोस्तु रूढ्या पशुवाचकत्वाभावान्न पशुनामत्वम् ॥ यद्यपि सहो धश्चेति उणादिसूत्रनिष्पन्नः सधिशब्दो रूढिवशेनानडुद्वाची प्रसिद्धस्तस्मादनयोः प्रत्यययोः सौलभ्यात् संभवत्येव प्रत्ययान्तरं, तथापि तस्योत्तरसूत्रविषयत्वात् सोपदादावित्येतत्सूत्रविषये तदसंभवाभिधानमिति बोध्यम् ॥ ननु अव्ययमिति महासंज्ञाबलादसत्त्वभूतार्थबोधकेष्वेवाव्ययसंज्ञाप्रवृत्त्या प्रातः कल्पमित्यादौ कल्पबाद्युपपत्तये लिङ्गाद्यन्वितशक्तिमत्परत्वेन सत्त्वभूतार्थकतया प्रातश्शब्दस्याव्ययत्वायोगादनव्ययस्येति प्रतिषेधानुपपत्तिरत आह ॥ **अव्ययत्व त्विति** ॥ **भूतपूर्वगत्येति** ॥ इयं च दोषामन्यमहः दिवामन्या रात्रिरित्यादौ स्वित्यनव्ययस्येति ह्रस्वपर्युदासार्थमवश्याभ्युपगन्तव्यत्वेन प्रसिद्धा ॥

**समुदायनिरूपितत्वादिति** ॥ समुदायनिरूपितचरमावयवत्वविशिष्टात्वावच्छिन्नावधितानिरूपकपूर्वत्वोपहितवर्णत्वरूपोपधात्वस्य तन्निरूपितचरमाव-

यवत्वघटितत्वात् समुदायनिरूपितत्वमिति बोध्यम् ॥ **अन्ये इति** ॥ अत्रारुचिहेतुः प्रत्याहाराह्निकस्थभाष्यस्वरसभङ्गप्रसङ्गः ॥ तत्र ह्ययोगवाहानामल्त्वस्योपधासंज्ञायां प्रयोजनाभावोपपादनायेदुदुपधस्येति सूत्रे न इदुदुपधग्रहणेन विसर्जनीयं विशेषयिष्यामः, किं तर्हि सकारमित्युक्तमिति बोध्यम् ॥ **को विशेष इति** ॥ पुनरित्यत्रापि स्थानिवद्भावाधीनमेव विसर्गविधानमित्यग्निरित्यादितो विशेषाभावाच्चारितार्थ्यायोग इत्याशयः ॥ **एकदेशविकृतन्यायेनेति** ॥ अस्य लोकदृष्टान्तसिद्धतया लौकिकत्वात्त्रिपाद्यां प्रवृत्तौ प्रतिबन्धकाभाव इत्याशयः ॥ **अकिंचित्करत्वादिति** ॥ एवं च पुनरित्यादौ विसर्गविधेश्चारितार्थ्योपपत्तये लोकन्यायेन पदत्वातिदेशकल्पनायामग्निरित्यादावपि तथैवोपपत्तौ तत्स्थलीयविसर्गस्य त्रिपाद्यां स्थानिवत्सूत्रप्रवृत्तिप्रयोजनत्वोपवर्णनमयुक्तमेवेत्याक्षेपः ॥ नन्वनेन न्यायेन पदत्वातिदेशो न युक्तः, अन्यथा दधिसेचावित्यादावुत्तरपदस्यानेन न्यायेन पदत्वमाश्रित्य कुत्वाद्यापत्तेः ॥ उत्तरपदत्वे चेति निषेधस्तु प्रत्ययलक्षणस्य, न तु लोकन्यायस्य, किं च पदत्वस्य प्रकृते सुबन्तत्वप्रयुक्ततया विकृतावयवनिबन्धनत्वाच्छिन्नपुच्छे शुनि पुच्छवत्त्वस्येव तेन न्यायेनातिदेशासंभवः, किं तु प्रत्ययलक्षणेन पुनरित्यादौ पदत्वं, तत्तु त्रिपाद्यामपि प्रवर्तत एव । तिप्यनस्तेरित्यादीनामारम्भात् ॥ किं च पुनस्तरामित्यादौ स्वादिष्वितिपदत्वावलम्बेन विसर्गप्रवृत्तिसौलभ्याददतिदेशानपेक्षणाच्चारितार्थ्यमपि सुवचम् ॥ तस्मादग्निरित्यादीनामेव विसर्गस्य स्थानिवद्भावैकसाध्यत्वात्तत्प्रयोजनत्वाभिधानं युक्तमेवेत्यत आह ॥ **किं चेति** ॥ **असिद्धत्वेनेति** ॥ रान्ते सान्तत्वबुद्ध्येत्याशयः ॥ नन्विदं यथोद्देशे कार्यकाले वा, नाद्यः ॥ तत्पक्षे कार्यविशेषानुद्देशेन रुत्वात्पूर्वं प्रवृत्तायाः पदसंज्ञाया अतिदेशमन्तरेण रेफान्ते दुर्लभत्वेन यथाकथंचिद्रेफान्ते पदत्वमन्तरा विसर्गप्रवृत्तेरशक्यत्वेन च रुत्वासिद्धत्वस्य विसर्गसंपादकत्वायोगात् ॥ नान्त्यः । कार्यकाले संज्ञानां विधिदेशीयतया विसर्गविध्येकवाक्यतापन्नपदसंज्ञादृष्ट्या रुत्वासिद्धत्वस्य दुर्वचत्वात् ॥ तस्मादिदमयुक्तमेवासिद्धत्वोपवर्णनमत आह ॥ **किं चेति** ॥ **स्थान्यल्धर्मत्वेनेति** ॥ एकत्वमात्रावच्छिन्नाल्त्वावच्छिन्नपर्याप्तिकाधारतानिरूपकधर्मावच्छिन्नस्थानिताकादेशवृत्तिः स्थानिसंबन्ध्यल्वृत्तिर्वा स्थानिवद्भावप्रयोज्यो यो धर्मस्तद्धर्मावच्छिन्ननिमित्तताकविधौ स्थानिवद्भावो नेत्यनल्विधावित्यस्यार्थः । इत्थं च सामानाधिकरण्यवादिभिरप्रत्ययस्येति पर्युदासलभ्यनिषेधोपपत्त्यर्थमग्निरित्यादौ सकारगतस्य रेफे रेफगतस्य

विसर्गे च स्थानिवत्त्वेन संपादनीये प्रत्ययत्वे रुत्वविधौ विसर्गविधौ च स्थानिनोऽल्त्वेन ग्रहणादनल्विधाविति निषेधवशादतिदेशानापत्तिरिति तदर्थः ॥ ननु अनल्विधावित्यस्य निरुक्तरीत्या व्याख्याने प्रमाणाभावादल्मात्रवृत्तिरल्मात्रवृत्तिधर्मघटितो वा स्थानिवद्भावप्रयोज्यो यो धर्मस्तद्धर्मावच्छिन्ननिमित्तताकविधौ स्थानिवद्भावो नेत्यर्थ एव स्यादतो न प्रकृतातिदेशविरोध इत्यत आह ॥ **स्पष्टा चेयमिति** ॥ नन्विदं ण्यल्लोपावित्येतद्वार्तिकविषयकसास्मिकभाष्यविसंवादाद्विप्रतिपत्तिग्रस्तमत आह ॥ **किं चेति** ॥ **व्यर्थं स्यादिति** ॥ ननु सुषिरमधुरशब्दाभ्यां मत्वर्थीयरप्रत्ययान्ताभ्यामाचक्षाणणिजन्ताभ्यां क्विपि सुषिः करोति मधुः करोतीत्यादौ प्रकृतनिषेधविषयस्सुप्रत्ययातिरिक्तोऽपि संभवतीति कथं वैयर्थ्यमत आह ॥ **किं चेति** ॥ **अनुत्तरपदस्थस्येत्यस्य वैयर्थ्यमिति** ॥ ननु वैयधिकरण्यवादिनामव्युत्पत्तिपक्षे तत्सार्थक्यसमर्थनोपायः कश्चिद (न्वेष्टव्य) पेक्षितः, स एवास्माकं पक्षद्वयेऽपि भविष्यतीति न किंचिदनुपपन्नं तत्राह ॥ **किं चैवं नित्यं समास इत्यादि** ॥ **तदसङ्गतिरिति**॥ एवं चैतद्भाष्यविरोध एव निरुक्तसामानाधिकरण्ये दुष्परिहरो दोष इति तत्त्वम् ॥ ननु प्रत्ययसंबन्धिनो विसर्गस्य नेति वैयधिकरण्याश्रयणेऽप्यसमर्थसमासवाक्यभेदवैयधिकरण्यरूपदोषत्रयस्य गले पतितत्वात्तौल्यमेवानयोस्सामानाधिकरण्यवैयधिकरण्यपक्षयोरित्यत आह ॥ **प्रत्ययपदमिति** ॥ लक्षणया प्रत्ययपदस्य तत्संबन्धिपरत्वे सामानाधिकरण्यमेव संभवतीति नोक्तदोषत्रयावकाश इत्याशयः ॥ न केवलं भाष्यविरोध एव दोषः, किंतु लक्ष्यविसंवादोऽपि व्याख्यादर्शकारीयव्याख्याने इत्याह ॥ **कविभिः कृतमिति** ॥ आदिना पेचुः काष्ठैरित्यादिसङ्ग्रहः । एतेन प्रत्ययपदस्य तत्संबन्धिपरत्वे लक्षणाश्रयणमपि दोष एवेत्यपास्तम् ॥ **इष्टानुरोधेनेति** ॥ ज्ञापकस्य विशेषापेक्षत्वेन अचः परस्मिन्नित्येतद्विषयकतया कल्प्यमानाया अप्रवृत्तेस्संयोगादिलोपलत्वणत्वपरत्वमित्याशयः ॥ नन्विदुदुपधस्येत्यस्य प्रत्ययसंबन्धिभिन्नविसर्गस्येति व्याख्यायास्सिद्धान्तितत्वात् मातुः कार्यमित्यादिस्थलीयविसर्गस्य कथंचित् प्रत्ययसंबन्धित्वसंभवेन षत्वाप्रवृत्त्या ज्ञापकेन तन्निवारणपरभाष्यासङ्गतिरत आह ॥ **सिद्धान्तव्याख्यानेऽपीति** ॥ **तत्संबन्धित्वाभावादिति** ॥ ननु प्रत्ययसंबन्ध्यकारस्थानिकादेशसंबन्धिरेफस्थानिकविसर्गस्य परम्परया प्रत्ययसंबन्धित्वमस्त्येवेति निषेधप्रवृत्तिर्दुर्वारा ॥ न च साक्षात्संबन्धेन संबन्धिनि कविभिः कृतमित्यादौ चरितार्थस्य प्रत्ययसंबन्धिपर्युदासस्य परम्परासंबन्धेन

संबन्धिनि प्रवृत्तौ मानाभाव इति वाच्यम् ॥ अग्निः करोतीत्यादावनल्विधाविति निषेधप्रयुक्तस्थानिवद्भावाप्रवृत्तिविषये सुप्रत्ययस्थानिकरेफस्थानिकविसर्गस्य परम्परासम्बन्धेनैव तत्संबन्धितया निषेधानापत्तेरिति चेत् सत्यम्; प्रत्ययसंबन्धित्वं च प्रत्ययावयवत्वप्रत्ययस्थानिकत्वान्यतररूपं, भाष्यप्रामाण्यादावश्यकत्वाच्च । तच्च स्थानिद्वारकं विसर्गे आश्रीयमाणं प्रकृतपर्युदासनिमित्तं कविभिः कृतमित्यादावतिदेशेन प्रत्ययत्वापन्नस्य भिस्प्रत्ययादेशस्य रेफान्तस्यावयवे रेफे विद्यमानं प्रत्ययावयवत्वं स्थानिद्वारा तत्स्थानिके विसर्गे निर्बाधम् । एवमग्निः करोतीत्यादावपि सुप्रत्ययस्थानिकत्वं रेफे तच्च स्थानिद्वारकं तत्स्थानिके विसर्गेप्यक्षतमेवेति नानुपपत्तिः ॥ मातुः करोतीत्यादौ तु प्रत्ययघटकीभूताकारगतं प्रत्ययावयवत्वं न विसर्गे संभवति ॥ विसर्गस्य तत्स्थानिकत्वाभावादित्याशय इत्याहुः ॥ **उरित्यस्येति** ॥ तदवयवीभूतरेफस्थानिकविसर्गे स्थानिद्वारकं प्रत्ययावयवत्वं सुलभमिति भावः ॥ **स्थानिवत्त्वेनेति** ॥ स्थानिवत्सूत्रविषयमेतत् ॥ पूर्वत्रासिद्धीये न स्थानिवदिति निषेधेनाचः परस्मिन्नित्यस्य त्रिपाद्यामप्रवृत्तेः ॥ **प्रत्ययत्वाभावादिति** ॥ अतिदिदिक्षितधर्माभावादेवातिदेशाप्रवृत्तावनल्विधाविति निषेधोपन्यसनं नोपयुक्तमिति तदनुल्लेखः ॥ **प्रत्ययसम्बन्धित्वमिति** ॥ प्रत्ययावयवीभूताकारस्थानिकस्योरित्यस्य प्रत्ययावयवत्वे रेफस्यापि तदवयवस्य प्रत्ययावयवत्वमवयवावयवस्समुदायावयव इति न्यायेनेत्यभिमानः ॥ **अशास्त्रीयत्वादिति** ॥ अत्वेनगृहीतस्थानिताकत्वेनाल्विधित्वाच्चेत्यपि बोध्यम् ॥ **प्रत्ययत्वमलभ्यमिति** ॥ पूर्वपरयोरिति द्विवचननिर्देशस्य तु श्रौतादेशस्य प्रत्येकं स्थानित्वकल्पनेन कृतार्थत्वादानुमानिके तत्कल्पनायां मानाभाव एवात्रार्थे कारणमिति बोध्यम् ॥ ननु भाष्ये लुप्यते प्रत्ययविसर्गो रात्सस्येत्युच्यते रात्सस्येत्यनेन हि सकारो लुप्यते न तु विसर्ग इति कोऽसौ भाष्याशयस्तत्राह ॥ **लुप्यत इत्यादेरिति** ॥ **अन्तादिवत्त्वज्ञापनद्वारेति** ॥ इदं सिद्धान्तानुसारेण ॥ प्रत्ययभिन्नस्य विसर्गस्येत्येवं सामानाधिकरण्येन व्याख्यातवतां व्याख्यादर्शकृतां तु ङसिङसोरत उकारात्परस्य विसर्गस्य षत्वं नेत्येतावान् यथाश्रुत एव ज्ञाप्योंऽशः ॥ अन्यथा परादिवद्भावादुरस् इत्यस्य प्रत्ययत्वे सकारलोपोत्तरमुर् इत्यस्य एकदेशविकृतन्यायेन तत्त्वेऽपि तदवयवरेफस्थानिकविसर्गस्य प्रत्ययभिन्नत्वात्षत्वस्य दुर्वारतया ज्ञाप्यांशवैफल्यं चारितार्थ्याऽसंभवश्च ॥ किं चैतन्मते सख्युःकार्यं पत्युःप्रीतिरित्यादावप्यनेनैव ज्ञापकेन षत्वस्य वारणीयतया साक्षादेव षत्वाप्रवृत्तिस्सामान्येन ज्ञाप्यत

इत्येव तदभिप्रायः ॥ परं तु इदमपि वक्ष्यमाणभाष्यकारीयज्ञाप्यांशविरुद्धमिति सूचयितुमेवं प्रतिपादितमिति दिक् ॥ **पे इत्यस्येति**॥ एकदेशविकृतन्यायेन तु न निर्वाहः, तदेकदेशमात्रविकाराभावात् । अर्धविकारसत्त्वाच्च ॥ पञ्चमीसमासपक्षे स्थानिवत्त्वेनाप्येतत्सिध्यतीति निरूपितमन्यत्र ॥ **उक्तव्याख्याया इति** ॥ लक्षणामूलकसामानाधिकरण्यव्याख्याया इत्यर्थः ॥ **ओषधीस्कृधीति** ॥ अत्र ओषधिशब्दाच्छसि सुपां सुलुगिति पूर्वसवर्णदीर्घ एकादेशः ॥ विसर्गस्तु तस्मात्परो न तु तन्निमित्तक इति भावः ॥ ननु एतत्फलानुरोधात् पञ्चम्यन्तपाठस्यावश्यकतया कथं मूलकारोक्तषष्ठ्यन्तपाठोपपत्तिरत आह ॥ **मूले त्विति** ॥ ओषधीस्कृधीत्यत्र प्रकारान्तरेणैव षत्वनिवृत्तेर्न तत्र ज्ञापकान्तरप्रयुक्तनिषेधावश्यकतेत्याशयः ॥

**अभिधानियामकत्वं**, शक्तिसङ्कोचकत्वं, तदुक्तमभियुक्तैः "संयोगो विप्रयोगश्च साहचर्यं विरोधिता । अर्थः प्रकरणं लिङ्गं शब्दस्यान्यस्य सन्निधिः ॥ सामर्थ्यमौचिती देशः कालो व्यक्तिस्स्वरादयः ॥ शब्दार्थस्यानवच्छेदे विशेषस्मृतिहेतव" इति ॥ एतन्मूलकमेव सहचरितासहचरितयोस्सहचरितस्य ग्रहणमिति परिभाषाशास्त्रमपि ॥ तत्र साहचर्यं साहित्यावच्छिन्ना प्रसिद्धिविषयीभूता प्रवृत्तिः ॥ सा च लोके रामलक्ष्मणावित्यादावर्थपरत्वात्तदर्थसम्बन्धिनी सहयात्रादिः ॥ शास्त्रे तु शब्दपरत्वात्तत्संबन्धी क्वचिदन्यत्र प्रसिद्धस्सहप्रयोग एव ॥ इत्थं च द्वित्रिश्चतुरित्येषां क्वाप्यन्यत्र सहप्रयोगाभावात्कथमिह सहचरितन्यायविषयतेत्याशङ्काभिप्रायः ॥ **सादृश्यमुच्यत इति** ॥ लक्षणयेति शेषः ॥ भाष्यप्रामाण्यादभियुक्तवचनस्याप्ययमेवाशयः ॥ एवं च क्रियाभ्यावृत्तिगणनाभिलापकत्वेन सुजन्तत्वेन वा सादृश्यादेवाभीष्टार्थसिद्धौ युक्तमेव सहचरितन्यायानित्यत्वज्ञापकत्वं कृत्वोर्थग्रहणस्येति सिद्धान्ताशयः ॥ **इति दिगिति** ॥ अत्रेदं विचार्यते ॥ कृत्वोर्थ इत्येव कुतो न सूत्रितम् ॥ न च कृत्वोर्थे वर्तमानस्य विसर्गस्येत्यर्थे रात्सस्येति लुसकृत्वोर्थप्रत्ययके चतुर्शब्दे षत्वानापत्तिरिति वाच्यम् ॥ पदस्येत्यधिकारात् कृत्वोर्थे वर्तमानस्य पदस्य यो विसर्गस्तस्येत्यर्थेनादोषात् ॥ न चैवं पञ्चकृत्वः करोतीत्यादावपि षत्वापत्तिरिति वाच्यम् ॥ इण इत्यनुवर्त्य इण उत्तरस्य कृत्वोर्थे वर्तमानपदावयवस्य विसर्गस्येत्यर्थेनादोषात् ॥ न च सूत्रान्तरादनुवर्तमानस्यापि वा नपुंसकस्येत्यादौ

श्रुतत्वेन व्यवहाराच्छ्रुतसंबन्धस्य बलीयस्त्वाच्च इण उत्तरस्य कृत्वोर्थे वर्तमानस्य पदावयवस्य विसर्गस्येत्यर्थे चतुश्शब्दे दोषस्तदवस्थ एवेति वाच्यम् ॥ कृत्वोर्थे वर्तमानत्वं च कृत्वसुच्प्रत्ययद्योत्यक्रियाभ्यावृत्तिसंख्यारूपार्थवाचकत्वं, तच्च केवल-विसर्गस्य न संभवतीति निरुक्तकृत्वोर्थवाचकपदावयवस्येणः परस्य विसर्गस्ये-त्यर्थेन सामानाधिकरण्यानुरोधादिणः परीभूतविसर्गान्तस्य कृत्वोर्थवाचक-पदस्येत्यर्थेन वा चतुष्करोतीत्यादौ षत्वस्य निर्बाधत्वेन दोषाभावात् । न च द्विस्त्रिश्चतुरित्युक्तौ कृत्वोर्थ इत्यत्र सप्तम्यर्थो वाचकत्वमेव, न तु द्योतकत्वमिति वक्तुं शक्यते । द्विरित्यादिषु द्योतकत्वानुपपत्तेः, तदनुक्तौ च द्योतकत्वमेव सप्तम्यर्थः स्यादतो विसर्गविशेषणत्वे प्रागुक्तरीत्या चतुश्शब्दे दोषो दुरुद्धर एवेति वाच्यम्[1] । तदनुक्तावपि सप्तमीविभक्तेर्वा-चकत्वार्थकत्वेन विसर्गविशेषणत्वे प्रतिबन्धकाभावादिति चेत्तर्हि द्विस्त्रिश्चतुरित्युक्तौ विसर्गापेक्षया श्रुतत्वात्सामानाधिकरण्यान्वयस्य न्याय्यत्वेन प्राधान्याच्च द्विरादीना-मेव विशेषणं कृत्वोर्थ इति सम्पद्यते, वाचकत्वं च सप्तम्यर्थः, न तु विसर्गस्य विशेषणं, न वा द्योतकत्वमर्थ इति चतुश्शब्दे दोषशङ्काकलङ्काभावः । तदनुक्तौ तु विसर्गविशेषणत्वं श्रुतत्वात् । द्योतकत्वार्थकत्वं च सामर्थ्यात्सम्पद्येतेति चतु-श्शब्दांशे दोषो दुर्वार इति भगवतस्सूत्रकारस्याशयः । एवं सुच इत्यपि सूत्रयितु-मशक्यम् । विसर्गविशेषणत्वे चतुश्शब्दांशे दोषस्य[2] दुर्वारत्वादित्याहुः ॥ **प्रति-पदोक्तस्येति** ॥ तत्त्वं च इसुसन्तयोर्द्रष्टव्यम् । एतेन सर्पिरादीनां भाष्यकारोप-वर्णिताव्युत्पत्तिपक्षे प्रत्ययत्वमर्थवत्त्वं च इसुसोरसम्भवीति चिन्त्यमिदमित्यपास्तम् ॥

---

१. **दुरुद्धर एवेति वाच्यमिति** ॥ एतदुत्तरं तदनुक्तावपीत्यादिचेत्तर्हीत्यन्तग्र-न्थस्य स्थाने "तदनुक्तावपि सप्तमीविभक्तेर्वाचकत्वार्थकताया इदूतौ च सप्तम्यर्थे इत्यादौ दृष्टत्वेन प्रकृतेऽपि तथैवौचित्येन तस्य विसर्गविशेषणत्वायोगात्पदविशेषणत्वे प्रतिबन्धकाभावादिति चेदलोच्यते" इत्येतदर्थकस्य ग्रन्थस्य स्थितिः पूर्वोत्तरग्रन्थपर्या-लोचनया युक्तेवेति प्रतिभाति ॥

२. **दोषस्य दुर्वारत्वादिति** ॥ सुच इत्युक्तौ सुचः प्रत्ययत्वेन प्रत्ययग्रहणपरि-भाषामहिम्ना सुजन्ततदादेरित्यर्थसम्पत्त्या तस्य विसर्गविशेषणत्वायोगेन पदविशेषणत्वे सुजन्तपदावयवविसर्गस्येत्यर्थान्न चतुश्शब्दे दोषः । अत एव सुच इति सूत्रयितुमुचित-मित्युक्तं शब्देन्दुशेखरे इति बोध्यम् ।

ननु व्युत्पत्तिपक्षे चतुश्शब्दस्यौणादिकोरन्प्रत्ययान्ततया चतुष्कपाल इत्यत्र रेफस्थानिकविसर्गस्य प्रत्ययसम्बन्धितया षत्वानुपपत्त्या पक्षभेदेन षत्वविकल्पे कृत्वोर्थग्रहणेन निरुक्तार्थज्ञापकत्वासम्भवः, स्वांशे चारितार्थ्यायोगादत आह ॥ **भाष्यप्रामाण्येनेत्यादि** ॥ **चतुष्पाद्भ्य इति** ॥ चतुःपञ्चाशदित्यत्रापि षत्वं न्याय्यमित्याशयः ॥

**मूले पारायणिका इति** ॥ तेषामयमाशयः । इदुदुपधस्येत्यत्र प्रत्ययभिन्नस्य विसर्गस्येति सामानाधिकरण्येनान्वये सर्पिष्करोतीत्यादौ नित्यषत्वप्राप्ताविसुसोस्सामर्थ्य इति तदपवादतया विकल्पविधानार्थम् । नित्यं समास इति तु समासे चेदनुत्तरपदस्थस्यैवेति नियमार्थम् । इत्थं च कस्कादिषु सर्पिष्कुण्डिकाशब्दपाठः सन्निहितत्वाद्विध्यपेक्षया दुर्बलत्वाच्च अनुत्तरपदस्थस्येति निषेधमेव बाधते न तु व्यपेक्षायामिसुसोस्सामर्थ्य इति विकल्पविधिमिति ॥ **इत्यर्थ इति** ॥ भाष्यप्रामाण्यादप्रत्ययस्येति प्रत्ययसम्बन्धिभिन्नपरम् । इत्थं च व्यपेक्षाभावे षत्वसम्पादकत्वेन व्यपेक्षायामपि पाक्षिकषत्वाभावनिवर्तकतया च कृतार्थस्य तत्पाठस्यानुत्तरपदस्थस्येत्येतन्निषेधबाधकत्वे मानाभाव इति तत्त्वम् ॥

**स्फुटप्रतिपत्तये इति** ॥ एतेन कुशेति टाबन्तनिर्देशेनैव विकारार्थकत्वाभावस्य स्पष्टत्वादयस्सहिता कुशेति मध्यमपदलोपिसमासप्रदर्शनेन तदभावबोधनं व्यर्थमित्यपास्तमिति दिक् ॥

॥ इति विसर्गसन्धिः ॥



## ॥ अथ स्वादिसन्धिः ॥

**श्रीः** ॥ ननु स्वस्वरूपोपस्थापकप्रातिपदिकांशे विषयविशेषासंवलनेन प्रवृत्तस्य तदन्तविधिनिषेधस्य विना प्रमाणं विशेषपरतया सङ्कोचस्यायुक्तत्वात्कथमस्य प्रत्ययविधिविषयत्वं तत्राह ॥ **अत एवेत्यादि** ॥ **भाष्ये इति** ॥ तत्र हि महदप्स्वसृनप्तॄणां दीर्घविधाविति प्रत्ययविधिभिन्नविधौ तदन्तविधेः प्रयोजनतया महान्परममहानित्याद्युपपादितम् ॥ तथा विधीयते विधिरिति व्युत्पत्त्या प्रतिषेधस्यापि विधित्वमित्यभ्युपेत्य प्रतिषेधे स्वस्रादीनामित्युपक्रम्य न षडिति निषेधविषये तदन्तविधिप्रयोजनत्वेन स्वसा परमस्वसेत्युदाहृतम् ॥ इत्थं च निरुक्तनिषेधस्य प्रत्ययविधिविषयत्वं स्पष्टमेव भाष्यकारस्सूचितवानित्याशयः ॥ ननु ग्रहणवतेत्यस्य प्रत्ययविधावेव तदन्तविधिनिषेधकत्वे तद्विषये येन विधिरित्यत्र समासप्रत्ययविधाविति कात्यायनीयः पृथक्निषेधारम्भो व्यर्थस्स्यादित्यत आह ॥ **अस्य समासप्रत्ययविधाविति** ॥ **युक्तत्वादिति** ॥ अपूर्वत्वकल्पनामपेक्ष्यानुवादकत्वकल्पनाया लाघवोपहितत्वादित्याशयः ॥ नन्वेवमपि सपूर्वाच्चेत्यनेनापूर्वतया ग्रहणवतेत्येतन्निषेधज्ञापनपरभाष्यासङ्गतिर्दुर्वारेत्यत आह ॥ **यत्त्विति** ॥ कात्यायनवचनघटकप्रत्ययांशनिषेधस्य गृह्यमाणप्रातिपदिकविषयतासंपत्त्यर्थमत्र भाष्यकारीयो ज्ञापनोद्योग इत्याशयः ॥ **तदन्तविधिनैवेति** ॥ ननु पूर्वादिनिरित्यत्र तदन्तविधौ बहुचूपूर्वकादपीनिप्रत्ययः प्रसज्येत, सपूर्वाच्चेत्युक्तौ तु विद्यमानपूर्वपदकात्पूर्वशब्दान्तादित्यर्थस्य पर्यवसानाददोष इति फलवैजात्यात्कथं ज्ञापकत्वमिति चेन्न ॥ ज्ञापनपरभाष्यप्रामाण्यात् बहुचूपूर्वकस्य तस्यानभिधानेनादोषात ॥ **केवलैकशब्दगोशब्दयोरिति** ॥ पूर्वग्रहणमपहायैकशब्दगोशब्दयोः पञ्चम्या निर्देशे ताभ्यां परं यत्तदन्तादित्यर्थो यदि लभ्येत तदा पूर्वग्रहणं व्यर्थमिति सामर्थ्याद्व्यपदेशिवद्भावाप्रवृत्तिसाधकमिति वक्तुं शक्यते । स चार्थो दुर्लभः । सामानाधिकरण्येनैकशब्दगोशब्दरूपप्रातिपदिकादित्यर्थस्यैव सौगम्येनौचित्यादित्याशयः ॥ ननु शतसहस्रान्ताच्च निष्कादित्युत्तरसूत्रे निष्कशब्दस्य सामानाधिकरण्येन प्रातिपदिकसंबन्धाभावात्तत्साहचर्यादिहाप्येकशब्दगोशब्दाभ्यां परं यत्तदन्तादित्यर्थस्सुलभ एवेति पूर्वग्रहणमभीष्टार्थसाधकं किं न स्यादत आह ॥

**सूत्रान्तात् ठगित्यादि** ॥ **विशेषणविशेष्यभावव्यत्यासेनेति** ॥ समासप्रत्ययविधाविति गृह्यमाणस्य विशेष्यतायामधिकारतः प्राप्तस्य विशेषणत्वे च सिद्धस्य तदन्तविध्यभावस्यानुवादकं, न त्वपूर्वतया तदन्तविधिनिषेधकं, लाघवात् ॥ यत्र तदन्तविधिरिष्टः तत्र भवत्येव उपात्तस्य विशेषणत्वम् ॥ उपपदविधौ यथा भयाढ्यादीनाम् ॥ तथा च प्रकृतेऽपि सूत्रशब्ददशन्शब्दयोरपि प्रातिपदिकविशेषणत्वेन लब्धं तदन्तांशमादाय सिद्धावन्तग्रहणं सामर्थ्याद्व्यपदेशिवद्भावाप्रवृत्तिसाधकमित्याशङ्काभिप्रायः ॥ **अशक्यत्वादिति** ॥ भयाढ्यादिग्रहणमुपपदविधावित्यादितदन्तविधिप्रयोजनप्रतिपादनपरभाष्यप्रामाण्यादुपात्तस्य तथाविधे विषये तदन्तविध्युपयोगाय विशेषणत्वाभ्युपगमेप्यन्यत्र तथा स्वीकारे समासप्रत्ययविधाविति तदन्तविध्यभावबोधककात्यायनवचनविरोध इत्याशयः ॥ ननु गृह्यमाणप्रातिपदिकविषयकव्यपदेशिवद्भावाभावस्य प्रमाणसिद्धत्वे तत्प्रवृत्त्या सजूस्सजूर्भ्यामित्यादौ रुत्वप्रवृत्तिर्व्याहन्येत, प्रमाणाभावे च कथं तदापत्त्या प्रकृते रुत्वप्रवृत्तिविघात इत्याशयेन शङ्कते ॥ **न चेति** ॥ **पृथग्योगकरणस्येति** ॥ ननु पूर्वात्सपूर्वादित्येकयोगकरणे विद्यमानपूर्वावयवकपूर्वशब्दान्तप्रातिपदिकादनेनेत्यर्थे प्रत्यय इत्युक्ताविदंशब्देन निर्दिष्टस्य कर्तुः प्रत्यासत्त्या प्रकृत्युपात्तक्रियानिरूपितस्यैव ग्रहणेन कृतपूर्वीत्यादावेव तत्प्रवृत्तिः, न तु केवलपूर्वीत्यत्र तथाभूतस्य कर्तुरभावात् ॥ पृथग्योगकरणे तु पूर्वादित्यत्र प्रकृत्युपात्तक्रियानिरूपितस्य कर्तुरसंभवात् सामर्थ्याद्गम्यमानस्थित्यादिक्रियानिरूपिते तस्मिन् प्रत्ययविधानादभीष्टसिद्धिः ॥ न चैकयोगकरणेऽपि प्रत्यासत्तिमनादृत्य व्याप्तिन्यायाद्यत्किंचित्क्रियानिरूपितस्य कर्तुः परिग्रहात् पूर्वीत्यादिकमपि निर्बाधमेवेति वाच्यम् ॥ तथा सति मासपूर्वादिप्रातिपदिकेभ्योपि पूर्वशब्दान्तेभ्यो यत्किंचित्क्रियानिरूपितकर्तारमुपादाय प्रत्ययोत्पत्तिप्रसङ्गात् ॥ इत्थं च पृथग्योगकरणस्यावश्यकतया कथं ज्ञापकत्वमिति चेन्न ॥ केवलपूर्वशब्दस्य पूर्वकालिकक्रियाबोधकस्यैव वृत्तिघटकत्वाभ्युपगमेन तत्रापि प्रकृत्युपात्तक्रियानिरूपितस्यैव कर्तुस्संभवेनादोषात् ॥ यत्तु पूर्वात्सपूर्वाच्चेति एकयोगकरणेपि चकारबललब्धसूत्रोपात्तप्रकृतिसमुच्चयोपहितप्रत्ययविधानवशादेव केवलात् पूर्वशब्दान्ताच्च प्रत्ययस्य निर्बाधतया पृथग्योगकरणस्य चारितार्थ्यायोगात् ज्ञापनानुपपत्तिरिति, तदयुक्तम् ॥ पूर्वसूत्रोपात्तप्रकृतिसमुच्चायकतया तत्रत्ययोः प्रत्ययतदर्थयोरनुवृत्तिसमर्पकत्वेन कृतार्थेन चकारेणाधिकारप्राप्तप्रातिपदिकपदस्य सूत्र-

घटकपूर्वशब्दस्य चावृत्तिकल्पनाद्वारेण सूत्रघटकप्रकृतिद्वयसमुच्चयसमर्पकत्वे मानाभावादिति दिक् ॥ **अनिष्टत्वादिति** ॥ ननूत्तरत्र संबन्धाभावे पूर्वात्तदन्ताच्चेत्येव सिद्धे सपूर्वाच्चेत्यनर्थकमेव स्यात् ॥ तच्चेष्टादिभ्य इत्यत्र विद्यमानपूर्वावयवकादिष्टाद्यन्तादित्यर्थबोधकत्वेनैव हि सार्थकमत आह ॥ **एकयोगेऽपीति** ॥ स्वरितत्वप्रतिज्ञाबलादनुवृत्तिकल्पनायामेकसूत्रत्वे सूत्रभेदे वा नास्ति विशेष इति अस्मादेव भाष्यादवगम्यत इत्याशयः ॥ **असमासे निष्कादिभ्य इति** ॥ तत्र हि भाष्ये असमासेग्रहणेन निषेधविषये प्रतिप्रसवतया तदन्तविधिज्ञापनप्रशंसायामार्हादगोपुच्छसंख्यापरिमाणादित्यत्र पर्युदस्यमानसमर्पकगोपुच्छादिविषये तदन्तविधौ परमगोपुच्छेन क्रीतं पारमगोपुच्छिकमित्यत्र ठको निवृत्तिः ठञःप्रवृत्तिश्च प्रयोजनमित्युपक्रम्य नैतदस्ति प्रयोजनं विधौ प्रतिषेधः प्रतिषेधश्चायमित्युक्तम् ॥ कैयटे च पूर्वात्सपूर्वाच्चेति प्रत्ययविधौ ग्रहणवतेत्यस्याः परिभाषाया ज्ञापितत्वाद्यत्रैव प्रत्ययो विधीयते तत्रैवायं तदन्तविधिः प्रतिषिध्यते ॥ अगोपुच्छसंख्यापरिमाणादित्यनेन तु ठक् प्रतिषिध्यत इति न तदन्तविधिप्रतिषेधः ॥ नापि व्यपदेशिवद्भावप्रतिषेध इत्युक्तमिति द्रष्टव्यम् ॥ ननु ग्रहणवतेति व्यपदेशिवद्भावोऽप्रातिपदिकेनेति च परिभाषाद्वयस्यापि प्रकृतविषये प्रमाणबलात् प्रवृत्त्यभावस्य प्रतिपादितत्वादुभयविषयेपि प्रयोजनोपपादनस्य न्याय्यतया तदन्तविधिनिषेधाप्रवृत्तिप्रयोजनमात्रोपपादनमयुक्तमत आह ॥ **आदिना सजूर्भ्यामिति** ॥

**ग्रहणं न स्यादिति** ॥ सकारान्तानां त्रयाणामपि निपातनामङ्गीकारे विभाषा भवदिति वार्तिकमेव नेति तु न युक्तम् ॥ भो इत्यादिसमभिव्याहारदशायामभीष्टस्यामन्त्रितकार्यस्य निर्वाहाय वार्तिकावश्यकताया वक्ष्यमाणत्वात् ॥ **अनभिधानादिति**॥ ननु भो राजन्यविशां वेति वार्तिकविरोधादनभिधानमयुक्तमत आह ॥ **तेषामभिधाने इति** ॥ **एषां रोरिति** ॥ सामानाधिकरण्येन वन्तानां भो इत्यादीनां यःस्यादपूर्वस्य च रोरिति व्याख्यानेनापि न दोषः ॥ एकदेशविकृतन्यायेन रोरीति लोपोत्तरं वन्तत्वस्य विकृतावयवनिबन्धनधर्मतया दुर्लभत्वात् ॥ आनुमानिक-

---

१. **अनभिधानादितीति** ॥ क्वचित्पुस्तके इति वाच्यमित्यनन्तरं "अनभिधाना" दित्यधिकः पाठो दृश्यते । तदनुसारेणेदम् । इदानीन्तनपुस्तकेषु तु नैव दृश्यते ॥

स्थानिवद्भावेनापि वन्तत्वं दुर्लभमेव ॥ वलादित्ववदस्यापि स्थानिसंबन्ध्यल्वृत्ति-धर्मघटितत्वात्, तथापि मूलानुसारादेवमुक्तम् ॥ तन्मते ह्यल्मात्रवृत्तिरल्मात्रवृत्तिधर्मघटितो वा स्थानिवद्भावप्रयोज्यो यो धर्मस्तस्यैव निषेधविषयतया सामानाधिकरण्येन संबन्धे रोरीति लोपोत्तरं भो इत्यादिष्वानुमानिकेन स्थानिवत्त्वेन वन्तत्वबुद्ध्या प्रवर्तमानो यकार ओकारनिवर्तकस्स्यादित्यनिष्टप्रसङ्गः ॥ वैयधिकरण्ये तु लोपे स्थानिवत्त्वेन रुत्वबुद्धावप्युच्चारणप्रसङ्गात्मकस्थानशब्दार्थनिरूपितनिवर्त्यनिवर्तकभावरूपस्थानषष्ठ्यर्थस्य दुर्वचत्वादादेशाप्रवृत्तिः ॥ प्रवृत्तौ वा रुत्वबुद्ध्या रेफलोपप्रदेशे हलि सर्वेषामिति लोपेन निवृत्त्या क्षत्यभाव इति बोध्यम् ॥ ननु भो इत्यादीनां रोरपूर्वस्य च रोरिति व्याख्याने सहविवक्षाया अभावात् द्वन्द्वनिर्देशानुपपत्तिरित्यत आह ॥ **षष्ठ्यास्सौत्रो लुगिति** ॥ भो भगो अघोरिति पृथक्पदमिति भावः ॥ **स्थान्यल्वृत्ति-धर्माश्रये इत्यादि** ॥ प्रकृतसूत्रस्थभाष्यबलादनल्विधावित्यस्यावृत्तिवशादेकत्वमात्रावच्छिन्नाल्त्वावच्छिन्नपर्याप्तिकाधारतानिरूपकधर्मावच्छिन्नस्थानितावद्वृत्तिः स्थानिसंबन्ध्यल्वृत्तिर्वा स्थानिवद्भावप्रयोज्यो यो धर्मस्तद्धर्मावच्छिन्ननिमित्तताकविधौ च स्थानिवद्भावो नेत्यर्थोऽवश्यमाश्रीयत इति भावः ॥ अत्र यद्वक्तव्यं तत्स्थानिवत्सूत्रे उक्तम् ॥ **विधिमुखेनेति** ॥ सप्तमीबहुवचने परे रोर्विसर्गविधानसामर्थ्येन तदंशे खरवसानयोरित्यस्याप्रवृत्त्या रुत्वानुपहितस्य रेफस्य विसर्गाभाव आर्थिक इत्येवंरीत्या रोस्स्थानित्वमिति भावः ॥ **उत्तरार्थमिति** ॥ हलि सर्वेषामित्यत्राश्रूपे हलीति व्याख्यानेन सत्यभिधाने वृक्षव्करोतीत्यादौ लोपनिवारणार्थमित्यर्थः ॥ **भो इत्यादिप्रयोगाणामिति** ॥ भो हरिहरावित्यादिप्रयोगाणामित्यर्थः ॥ ननु वार्तिकानभ्युपगमे भो इत्यादिनिपातानामामन्त्रितत्वाभावादामन्त्रितत्वप्रयुक्तकार्यानुपपत्तिस्तथा तत्समभिव्याहारदशायामितराभ्योऽपि दृश्यन्त इति भवदादियोगे प्रवर्तमानयोस्त्रतसिलोश्चानुपपत्तिरत आह ॥ **निपातानामपीत्यादि** ॥ **सोर्लुका लुप्तत्वेनेति** ॥ भो हरिहरावित्यत्र द्विवचनस्य संबुद्धित्वाभावेनेत्यपि बोध्यम् ॥ **लिङ्गविशिष्टाग्रहणादिति** ॥ तद्ग्रहणेऽपि ङीबन्तस्य रुत्वप्रवृत्तावभीष्टरूपासिद्धिश्चेत्यपि बोध्यम् ॥ **सहप्रयोगसंभव इति** ॥ व्यतिलुनीते इत्यादौ व्यतीहारविशिष्टक्रियावाचकस्य लूञ्धातोर्द्योतकस्यात्मनेपदस्योपसर्गस्य च यथा सहप्रयोगस्तद्वदेव संबोधनवाचकस्य भोश्शब्दस्य तद्द्योतकस्य हेशब्दादेश्च सहप्रयोग इत्यर्थः ॥ **शक्तौ मानाभावेनेति** ॥ भोश्शब्दस्यैव विभाषा भवदिति वार्तिकसिद्धविभक्त्यन्तप्रतिरूपकत्वमुक्तं भाष्यकैयटयोर्न त्वनयोरिति

भावः ॥ **एकान्तरतेति** ॥ आमःपरस्यैकपदव्यवहितस्यामन्त्रितस्य निघातैक-श्रुत्यप्लुतोदात्तत्वप्रतिषेधप्रयुक्तमामन्त्रिताद्युदात्तत्वमित्यर्थः ॥ अनन्तिके इत्यनेन तत्र दूरे विहितस्य प्लुतोदात्तत्वस्य असन्निहिते विहितस्यैकश्रुत्यस्य प्रकरणप्राप्तस्य निघातस्य च प्रतिषिध्यमानतया भाष्यकाराभिमतत्वादित्यन्यत्र विस्तरः ॥ **न प्रामाणिकाविति** ॥ ननु कथमप्रामाणिकत्वं तत्राह ॥ **अत एवेति** ॥ एष भोश्शब्द इत्यनेन तदितरयोरव्ययत्वाभावो भाष्यकृता ध्वनित इति भावः ॥ **उभयोर्ग्रहणसिद्धिरिति** ॥ ननु भगो अघो इत्यनयोर्निपातयोरनभ्युपगमात् तत्साहचर्याद्वार्तिकनिष्पन्नस्यैव भोश्शब्दस्य ग्रहणं स्यान्न तु निपातस्येत्यत आह ॥ **बिभाषा भवदिति** ॥ भाष्यप्रामाण्यात् भो ब्राह्मणा इत्यादिप्रयोगोपपत्तये निपातस्यापि भोश्शब्दस्य रुत्वनिष्पन्नरेफान्तस्य ग्रहणमुपपन्नमिति भावः ॥ **अर्थवतामेवेति** ॥ अर्थवत्त्वेन साहचर्यं न तु वार्तिकनिष्पन्नत्वेन निपातत्वेन वेति भावः ॥ ननु सान्तानुकरणे निपातस्य भोश्शब्दस्य सान्तत्वेऽपि वार्तिकनिष्पन्नानामन्येषामतथात्वात् सूत्रासङ्गतिरत आह ॥ **अत्रेदमिति** ॥ **असन्दिग्धनिर्णाय्य एवेति** ॥ ओकारान्तानुकरणस्य सौत्रत्वं प्रभोरित्यादिघटकभोइत्यादिव्यावृत्तेः पक्षान्तरैकरूप्यातिरिक्तप्रमाणराहित्यं चेति भावः ॥

**एकदेश्युक्तिरेवेति** ॥ ननु विना प्रमाणमृषिवचनानामेकदेश्युक्तित्वकल्पनाप्रयुक्तमप्रवर्तकत्वमयुक्तमत आह ॥ **भाष्यविरोधादिति** ॥

केचित्तु पदान्तत्वोपहितयणन्तप्रयोगाणामविशेषेणानभिधानकल्पनायां यणः प्रतिषेधो वाच्य इति संयोगान्तलोपविषयकप्रतिषेधवार्तिकासङ्गतिः ॥ यदि तु लक्षणानधीनपदान्तयणन्तानामनभिधानमित्युच्यते तर्हि गमुल्शकुल्इत्यादेरनभिधानस्य शेखरोद्योताद्युपपादितस्यासङ्गत्यापत्तिः ॥ यदि च आवसानिककार्यप्रवृत्तियोग्यानां तेषामनभिधानमित्युच्यते तदा कविकमलादिशब्देभ्योप्याचक्षाणणिजन्तेभ्यो विजादौ स्वोत्तरत्वेन पदान्तरसमभिव्याहाराभावदशायां तद्घटकयणामप्यावसानिककार्यप्रवृत्तियोग्यतया पूर्वमपि तेषामप्रयोगप्रसङ्गः ॥ तस्मादुपक्रमोपसंहारस्वारस्यात्तद्भाष्यस्यावसानिककार्यप्रवृत्तिविषयाणामेव यणामनभिधानमित्येवाभिप्राय इति युक्तम् ॥ किं चाणोऽप्रगृह्यस्येत्यत्र पूर्वेणाणग्रहणमिति समर्थनार्थं

भाष्यकारीयोऽयमुद्योगः ॥ तत्राप्रगृह्यस्येत्यस्याण्विशेषणत्वेन प्रगृह्यत्वस्याज्धर्मतया तद्भिन्नस्याज्रूपस्यैवाणो ग्रहणात्पदान्ता हलो अणःकार्यभाजो न भवन्तीत्यर्थकमेव न हि पदान्ताः परेऽणःसन्तीति भाष्यं, स्पष्टं चेदं कैयटे॥ तस्मात्तद्भाष्यावष्टम्भेन वृक्षव्करोतीत्यादावशा हलो विशेषणेन लोपनिवारणपरहलि सर्वेषामित्येतत्सूत्रविषय-भाष्यस्यैकदेश्युक्तिकल्पनं न समञ्जसम्, वृक्षव्हसतीत्यादीनामनभिधानमेव युक्तिमदित्याहुः[1] ॥

ननु दहेरिदितो निष्ठाया इडभावस्य हकारस्थाने धकारस्य च निपातनमात्रेण सत्स्वपि धत्वष्टुत्वढलोपेषु कथं दृढ इत्यस्य सिद्धिरत आह ॥ **येन नलोपसङ्ग्रह इति** ॥ ननु ष्टुत्वस्य ढलोपदृष्ट्या त्रिपाद्यां परत्वेनासिद्धत्वात्कथं ढलोप इत्यत आह ॥ **नासिद्धत्वमिति** ॥ **सामर्थ्यादिति** ॥ ष्टुत्वनिष्पन्नव्यतिरिक्तस्य ढलोपविषयस्य दौर्लभ्यात्तच्छास्त्रैकवाक्यतापन्नपूर्वत्रासिद्धशास्त्रघटकपूर्वग्रहणेन ढलोपशास्त्रस्याग्रहणबोधनद्वारा सामर्थ्यात्त्रैपादिकासिद्धत्वबाध इत्याशयः ॥ ननु तत्सामर्थ्यात् लिड् ढौकत इत्यादौ जश्त्वनिरूपितढलोपासिद्धत्वबाधनेन ढलोप-प्रवृत्त्या सूत्रसार्थक्यं किं न स्यादिति चेन्न ॥ जश्त्वनिरूपितासिद्धत्वपूर्वकजश्त्व-बाधकल्पनापेक्षया ष्टुत्वगतासिद्धत्वमात्रबाधायां लघुत्वेन न्याय्यत्वात् ॥ न च ढलो-पविध्येकवाक्यतापन्नपूर्वत्रासिद्धशास्त्रघटकपूर्वग्रहणेन जश्त्वशास्त्राग्रहणबोधन-द्वारा जश्त्वशास्त्रनिरूपितढलोपशास्त्रगतासिद्धत्वमात्रबाधनमेव कल्प्यम् ॥ जश्त्व-बाधनं तु विप्रतिषेधशास्त्राधीनमिति नास्ति गौरवावकाश इति वाच्यम् ॥ विप्रति-षेधशास्त्रस्य यथोद्देशताया एव भाष्यारूढत्वात्तन्निरूपितढलोपशास्त्रगतासिद्धत्व-निवृत्तये जश्त्वशास्त्रनिरूपिततद्गतासिद्धत्वनिवृत्तये च ढलोपशास्त्रैकवाक्यतापन्न-पूर्वत्रासिद्धशास्त्रघटकपूर्वग्रहणेन जश्त्वशास्त्रविप्रतिषेधशास्त्रयोरुभयोरग्रहणकल्पना-पेक्षया ष्टुत्वशास्त्रैकवाक्यतापन्नतथाविधपूर्वग्रहणेन ढलोपशास्त्रमात्राग्रहणकल्पना-या लघुत्वस्य निर्विवादत्वात् ॥ **णेरयभावे चेति** ॥ र ऋतो हलादेर्लघोरिति रभावोपि द्रढीयानित्यत्र भवत्येव, ढलोपासिद्धत्वस्य तत्प्रतिबन्धकत्वाभावात् ॥ तत्र हि हलादेरित्यस्य अङ्गविशेषणत्वे न पृथुरपृथुस्सोऽस्यास्तीति अपृथुमान् अतिशयेना-

१. आहुरिति ॥ अत्र यद्वक्तव्यं तदधस्तान्निरूपितम् ।

पृथुमानप्रथीयानित्यत्र रभावानापत्तिर्लघुविशेषणत्वे च न सन्ति ऋचोऽत्रेत्यनृक् तद-स्यास्तीति अनृग्मान्, अतिशयेनानृग्मान् अनृचीयानित्यत्र रभावापत्तिरिति भाष्ये हलादेर्लघोरिति प्रत्याख्याय पृथुमृदुकृशभृशदृढपरिवृढानामेव रपरत्वमिति परिगणनाभ्युपगमात् ॥ रूढिस्तूभयसाधारणीत्याशयः ॥ **लोपार्थमिति** ।[1] परस्य च ढत्वार्थमित्यपि तत्रोक्तमिति द्रष्टव्यम् ॥ **भाष्यविरोध इति** ॥ ननु भाष्यमिद-मुभयसाधारणं नकारलोपस्त्वन्वाचयशिष्ट इति नास्ति भाष्यविरोधो वामनस्येत्यत आह ॥ **कैयटविरोधश्चेति** ॥ ननु मास्तूभयसाधारणं निपातनं योगविभाग-प्रयुक्तढत्वसंपत्त्या बहुतरप्रयोगनिर्वाहकागमशास्त्रीयानित्यत्वमूलकेडागमाप्रवृत्त्या च प्राचीनपरिकल्पितं दृढ इति प्रत्युदाहरणं किं नाद्रीयते तत्राह ॥ **किं चेति** ॥ **व्यर्थत्वमिति** ॥ अनित्यत्वेनैवेडागमाभावसिद्धौ नलोपादीनामेव निपातनीयतया तत्प्रकरणे पाठमुपेक्ष्य इण्णिषेधप्रकरणे पाठो व्यर्थस्स्यादतोऽत्राग-मशास्त्रानित्यत्वमिडागमाप्रवृत्तिसाधकमिति वक्तुमयुक्तमित्याशयः ॥ **अलमिति** ॥ एतेन वा दृहेत्यत्र योगविभागस्य भाष्यकाराननुगृहीतत्वादप्रामाणिकत्वमित्यपि सूचितम् ॥

**तद्वैयर्थ्यमिति** ॥ एषको रुद्र इत्यादौ सुप्रत्ययस्यैतच्छब्दाद्विहितत्वाभावा-देवाप्राप्तेस्तद्वैयर्थ्यमित्याशयः ॥ एतच्छब्दतच्छब्दाभ्यामनन्तरो यस्सुस्तस्य लोप इत्युचितम् ॥ एतत्तदर्थगतसंख्याभिधायिन इत्युक्तौ तु तत्कल्पो भवतीत्यादावपि लोपापत्तिः ॥ कल्पबादेर्द्योतकतया तदर्थस्येषदूनत्वस्य विशेषणतया प्रकृत्यर्थस्यैव प्राधान्यात् । अत एव त्वत्कल्पो भवसीत्यादौ लबोध्यार्थसमानाधिकरणप्रधान-भूतयुष्मदर्थबोधकशब्दे उपपदे विधीयमानस्य मध्यमपुरुषस्योपपत्तिरिति स्पष्टमुद्द्यो-तशेखरयोः ॥

**प्रातिशाख्येनेति** ॥ ईदृशेषु प्रातिस्विकतया तत्र प्रकृतिभावप्रतिप्रसवाभिधा-नादिति भावः ॥ **अवधारणपरतयेति** ॥ निपातानामनेकार्थत्वमाश्रित्य बहुलग्रह-णस्य अवधारणार्थकत्वमयुक्तमुक्तवैदिकप्रयोगविरोधादित्याशयः ॥ **सोऽहमा-जन्मेति** ॥ पादपूर्तिनिमित्तको लोपविधिः ॥ स च यत्र नेष्यते तत्र बहुलग्रहण-

---

१. **अनित्यत्वेनैवेति** ॥ अस्य तन्मते इत्यादिः ।

प्रयुक्तलोपप्रवृत्तिपरिहारेण निर्वाहः ॥ तदुक्तमभियुक्तैः ॥ क्वचित्प्रवृत्तिः क्वचिदप्रवृत्तिः क्वचिद्विभाषा क्वचिदन्यदेव । विधेर्विधानं बहुधा समीक्ष्य चतुर्विधं बाहुलकं वदन्तीति ॥ तस्मादनवधारित एवायं विधिरविरोधेन लक्ष्यसमर्थनायोपयोक्ष्यत इति सकलेष्टसिद्धिरित्याहुः ॥

॥ इति स्वादिसन्धिः पञ्चसन्धयस्समाप्तिमगमन् ॥



## ॥ अथाजन्तपुंलिङ्गाः ॥

श्री गणपतये नमः ॥ **अर्थवदधातुः ॥ निषेधबाधनेनेति** ॥ कार्यकालपक्षे तत्तद्विध्येकवाक्यतया कार्यविशेषोद्देशेन संज्ञाप्रवृत्तेरावश्यकतया प्रकृते नित्यस्य यस्येतिलोपस्य प्रवृत्त्युत्तरमवशिष्टात्स्वाद्युत्पत्तये तद्विध्येकवाक्यतया प्रातिपदिकसंज्ञापेक्षायामेतन्निषेधप्रसङ्ग इति भावः ॥ **प्रवृत्ताया इति** ॥ अस्य यथोद्देशे इत्यादिः । तत्पक्षे हि विध्येकवाक्यतां विनैव कार्यसामान्योद्देशेन सकृत्प्रवृत्तयैव संज्ञया सर्वकार्यनिवाहः, पक्षयोर्व्यवस्थितत्वाच्च न कार्यकालपक्षो दोषापादनहेतुरित्याशयः । न च कार्यकालपक्षेऽप्यनाकडारीयत्वेन विरोधाभावाल्लुक्प्रवृत्तिसुबुत्पत्तिप्रयोजकयोर्द्वयोरपि संज्ञयोर्यौगपद्येन प्रवृत्तौ तस्यामेवावस्थायां स्वाद्युत्पत्त्या निर्वाह इति वाच्यम् । अनितरनिमित्तकत्वप्रयुक्तादन्तरङ्गत्वाल्लुका परत्वाद्यस्येति लोपेन च बाधाद्बहिर्भूतसंख्याकारकयोस्तत्रानभिव्यक्त्या निमित्ताभावाच्च तदुभयप्रवृत्त्युत्तरमेव स्वादीनां प्रवर्तनीयतया कार्यप्रवृत्तिसमानकालिकत्वेनैव तत्पक्षे संज्ञाप्रवृत्तेः स्वाभाविकतया च निरुक्तनिषेधो दुर्वार इत्याशयात् । एवं च तद्धितग्रहणस्य प्रत्ययान्तपर्युदाससमर्पकत्वं मूलकारोक्तं यथोद्देशाभिप्रायकमिति वस्तुस्थितिः । न चैतत्पक्षे लिह् क्विबित्याद्यवस्थायां कार्यविशेषानुद्देशेन प्रवृत्तायास्संज्ञाया उक्तन्यायेन क्विब्लोपोत्तरं सुलभत्वात्कृद्ग्रहणस्यापि व्यर्थतया तदनुक्तेर्न्यूनतेति वाच्यम् । अन्तरङ्गेण वेरपृक्तलोपेन बाधात्तत्काले संज्ञाया अप्रवृत्त्या लोपोत्तरं प्रसक्तस्य धातुपर्युदासस्य बाधनेन कृतार्थतया वैयर्थ्याभाव इत्याशयात् ।

केचित्तु लिडादौ धातुपर्युदासबाधनस्य क्विब्विजादिसाधारणतया विग्रहणेनैव सिद्धौ सामान्यग्रहणस्य व्यर्थतया कृद्ग्रहणमप्युक्तार्थे ज्ञापकम् । अत एव भाष्ये प्रत्ययान्तपर्युदासखण्डनाय कृत्तद्धितग्रहणं नियमार्थमित्युक्तं, न तु तद्धितग्रहणमेवेत्युक्तमित्याहुः ॥

---

१. आहुरिति ॥ अत्रेदं तत्त्वम् । विग्रहणे तत्रेकारस्यानुनासिक्यज्ञानार्थं व्याख्यानस्यैव शरणीकर्तव्यतया ज्ञानगौरवसत्त्वेन तदपेक्षया कृद्ग्रहणे गौरवाभावेन तस्य ज्ञापकत्वं दुर्लभमिति मनोरमाकारस्याशयः । भाष्यन्तु धातोः प्रत्ययान्तस्य च चेत्कृत्तद्धितान्तानामेवेति नियममाश्रित्य प्रत्ययान्तपर्युदासखण्डनायेव धातुपर्युदासखण्ड-

तन्मात्रवृत्तित्वेति ॥ एवं च स्वपर्याप्तैकार्थीभावप्रयोज्यलौकिकार्थविषय-कबोधजनकत्वमुत्तरसूत्रघटकमर्थवत्त्वमिति निष्कर्षः ॥ न प्रातिपदिकत्वमिति ॥ सति तु तस्मिन् टित्त्वलक्षणस्य द्विगुलक्षणस्य वा ङीप्प्रत्ययस्यानुपसर्जनाधिकारेण बाधेऽपि टाप् दुर्वारः । पुंवद्भावस्तु प्रियादौ निषिद्धः । गोस्त्रियोरिति ह्रस्वोऽपि न भवति । विशिष्टस्यैव टाबन्तत्वेनोपसर्जनीभूतस्त्रीप्रत्ययान्तोत्तरपदकसमासरूप-प्रातिपदिकत्वाभावात् । स्त्रीप्रत्ययान्तस्य ह्रस्वप्रवृत्तिविषयसमासनिरूपितोपसर्ज-नत्वाभावाच्चेति भावः । यदि तु यस्मात् स्त्रीप्रत्ययो विधित्सितस्तन्निरूपितोपस-र्जनत्वाभाव एवानुपसर्जनाधिकारस्य विषयः, अन्यथा पदावधिकेऽन्वाख्याने पञ्चपूलीप्रिय इत्यादावपि स्त्रीप्रत्ययानुपपत्तिप्रसङ्ग इत्युच्यते, तदा ङीप एवापत्तिरत्र न्याय्या ।

यत्तु सन्निपातपरिभाषयात्र न स्त्रीप्रत्ययप्रवृत्तिः, उत्तरपदानन्तर्यनिमित्त-कस्य समासस्य प्रातिपदिकत्वेन स्त्रीप्रत्ययोत्पत्त्या तद्विघातकत्वायोगात् । टचा तु न तद्विघातस्तस्य समासावयवत्वादित्याहुस्तदसत् । परम्परया सन्निपातनि-मित्तकत्वग्रहणे मानाभावेन तद्धितान्तत्वनिबन्धनप्रातिपदिकसंज्ञाप्रयुक्तस्त्रीप्रत्यया-पादने परिभाषाविरोधस्य दुर्वचत्वात् । अतो युक्त एवैकार्थीभावे तन्मात्रवृत्तित्व-निवेश इति दिक् ॥

---

नात्रापि प्रवृत्तम् । स्पष्टं चेदमुद्योते । मनोरमाकारस्तु धातुपर्युदासं वदतस्सूत्रकारस्य प्रत्ययान्तपर्युदासेऽपि तात्पर्यमस्तीति बोधनार्थं ज्ञापकत्वं वदति । एवञ्च भिन्नविषयक-त्वाद्भाष्योक्त्यनुसरणं नावश्यकं सूत्रकाराशयमुपवर्णयतो मनोरमाकारस्येति ॥

१. ङीप एवापत्तिरत्र न्याय्येति ॥ वस्तुतस्तु प्रातिपदिकत्वस्यार्थवत्त्वनिब-न्धनतया यस्मात्प्रातिपदिकान्ङीप्प्रत्ययो विधित्सितस्तन्निष्ठप्रातिपदिकसंज्ञाप्रयोजकार्थो-पस्थित्यनुकूलवृत्त्युपस्थितयत्किञ्चिदर्थनिष्ठविशेष्यतानिरूपितप्रकारतारहितत्वमनुपसर्जनत्व-मिति विचक्षणेन पञ्चमूलशब्दस्य समाहारद्विगुप्रयोजकैकार्थीभावप्रयोज्यार्थवत्त्वेनैव प्रातिपदिकत्वेन तन्निरूपितोपसर्जनत्वाभावान्ङीप् सुलभः । प्रकृते तु टजन्ते प्रातिपदि-कत्वनिबन्धनस्यार्थवत्त्वस्य समुदायवृत्त्येकार्थीभावप्रयोज्यतया तन्निरूपितोपसर्जनत्वस्य टजन्ते सत्वान्न ङीपः प्रसक्तिः । अत एव टाबेवापादितश्शब्देन्दुशेखरे । अतो ङीबापादनमयुक्तमेवेति ध्येयम् ।

**न तु तन्मात्रे इति** ॥ उत्तरपदनिमित्तको द्विगुस्सामर्थ्यात्समुदायपर्याप्तमेवैकार्थीभावमाश्रित्य प्रवर्तत इति सिद्धान्तः ॥ **कल्पितैकार्थीभावस्येति** ॥ कृद्वृत्तित्वसंपत्तये तस्यामवस्थायां तत्कल्पनेनि भावः । नन्वर्थवत्त्वांशे लौकिकार्थविषयकबोधजनकत्वनिवेशो व्यर्थः । न ह्यलौकिकवाक्यव्यावृत्त्यर्थस्तन्निवेशः । तत्रापि प्रातिपदिकसंज्ञाया अभीष्टत्वात्, कथमन्यथा तत्र सुपो धात्वित्यस्य प्रवृत्तिः स्यात् । तस्मात्पर्याप्त्याख्यसंबन्धेनैकार्थीभावरूपशक्तिमत्त्वमेवार्थवत्त्वमिति परिष्क्रियताम्, प्रकृतिप्रत्यययोरन्यतरलोपे तदारोपस्योभयवादिसम्मतत्वेऽप्यन्यत्र तदनपेक्षणाल्लाघवमिति चेत्सत्यम् । लौकिकस्य विशिष्टार्थबोधस्योपायतया कल्प्यमानस्यैकार्थीभावस्य यत्र लिङ् धुगित्यादावसम्भवस्तत्रागत्या तदीयालौकिकवाक्ये तत्स्वीकारेऽप्यन्यत्र तथाविधबोधानौपयिके प्रक्रियावाक्ये तत्कल्पनायां मानाभावेनातिदेश एव तत्राभ्युपगन्तव्य इति सर्वथाप्यतिदेशस्यावश्यकतया तादृशबोधप्रयोजकस्यैकार्थीभावस्य वा तत्प्रयोज्यतथाविधबोधजनकत्वस्यैव वा प्रातिपदिकसंज्ञाप्रवर्तकतया तत्रातिदेशे नास्ति विशेष इति विभावनीयमित्याहुः ॥ **प्रातिपदिकत्वे हीति** ॥ सातिरत्र प्रत्यय एव, न तु सौत्रो हेतुमण्यन्तः । षोपदेशविरहितत्वेन वैयर्थ्यात् । ननु धनवनादिषु चरमवर्णपर्यन्तानां भवतु तन्मध्यपतितन्यायेन विशिष्टप्रातिपदिकावयवत्वम् । चरमवर्णप्रकृतिकस्य तु तदवयवत्वाभावाल्लुकोऽप्राप्त्या श्रवणापत्तिरित्यत आह ॥ **समुदायसंज्ञा चेति** ॥ इत्थञ्च तथाविधसुब्विशिष्टस्यैव समुदायसंज्ञेति न कस्यापि श्रवणापत्तिरित्याशयः । एकाज्द्विर्वचनन्यायस्य तु नात्र विषयः । समुदायसंज्ञाया अवयवकार्यनिर्वाहकत्वाभावात् । यत्र समुदाये प्रवर्तमानेन कार्यविशेषेणावयवानामप्यनुग्रहस्तत्रैव हि तादृशो न्यायो धर्मिग्राहकसाधर्म्यात् । अत एव यत्र बहवो हलस्संश्लिष्टास्तत्र द्वयोर्बहूनां चाविशेषेण संयोगसंज्ञेति सिद्धान्तः । नन्वेवमपि प्रत्ययान्तावयवेभ्यः प्रातिपदिकसंज्ञाप्रयुक्ते सुपि समुदायप्रातिपदिकसंज्ञामाश्रित्य लुको दौर्लभ्यात्तत्र तच्छ्रवणापत्तिः । न च चरमवर्णप्रकृतिके सुपि तमादाय विशिष्टस्य प्रत्ययान्तत्वानुपपादनात्तद्विशिष्टस्य प्रकृतसंज्ञायां लुक्प्रवृत्तिस्सुलभैवेति वाच्यम् । तावतापि तदवयवानां पदत्वप्रयुक्तस्य नलोपाद्यापादनस्य परिहारासम्भवात् । तथा धात्ववयवत्वेन तदवयवेभ्यः प्रवृत्तस्य सुपो निवृत्तिसम्भवेऽपि निरुक्तदोषो दुर्वार इत्यत आह ॥ **पचति ध्वनतीत्यादि** ॥ **तदवयवपरत्वेनेति** ॥ लक्षणयेति

शेषः । धातुप्रत्ययान्तयोस्तदवयवत्वं व्यपदेशिवद्भावेनेति भावः । यदि तु धातुप्रत्ययपदयोरेव तदवयवपरत्वमाश्रीयेत तदा बभूवेत्यादावभ्यासस्य धातुप्रत्ययोभयभिन्नत्वेन तदवयवानां संज्ञाप्रवृत्तिर्दुर्वारा स्यात् । धातुपदस्य तदवयवपरत्वं तु अहन्नित्यादाववयवानां संज्ञाप्रवृत्तिपरिहारायेति द्रष्टव्यम् ॥ **अव्युत्पन्नप्रातिपदिकावयवेभ्य इति** ॥ तत्रान्तरङ्गत्वादवयवप्रातिपदिकत्वतन्निमित्तकौत्सर्गिकैकवचनयोः प्रवृत्त्युत्तरमेव समुदायप्रातिपदिकतन्निमित्तकसुपौ प्रवर्तेते इति न प्रत्ययान्तावयवपर्युदासेन निर्वाह इत्याशयः ॥ **व्युत्पत्तिपक्षे त्विति** ॥ व्युत्पत्तिरियं पङ्क्तिविंशतीति सूत्रे भाष्ये । तुशब्देन पाणिनेरव्युत्पत्तिपक्ष एवेति सिद्धान्तोपि सूचितः ॥ **ध्वनितमिति** ॥ उक्तोदाहरणे यत्किञ्चित्खण्डस्य सुब्विशिष्टस्य प्रातिपदिकत्वमाश्रित्य सुपो धात्वित्यस्य प्रवृत्तेरनुद्भावनेन धातुप्रत्ययान्तपदयोस्तदवयवपरत्वं भाष्यकैयटयोर्ध्वनितमिति तदर्थः ॥ **नलोपाद्यापत्तिरिति** ॥ लुका श्रवणापत्तेर्वारणादयमेव दोष इति भावः । वस्तुत एषोऽप्यत्र न दोष इत्याशयेनाह ॥ **इदमव्ययेभ्य इत्यादि** ॥ एकवचनं, द्विबह्वोर्द्विवचनबहुवचने, इति न्यासेन द्वित्वबहुत्वयोरविषये संख्यानपेक्षमेकवचनमव्ययेभ्यो यथा प्रवर्तते तथा प्रकृतेऽपीत्यापादनतात्पर्यम् ॥ **महासंज्ञाकरणादिति** ॥ एकग्रहणराहित्येन पृथग्योगारम्भेऽप्येकं वक्तीत्यर्थकमहासंज्ञावैयर्थ्यान्न सार्वत्रिकं संख्यानपेक्षमेकवचनं, किन्तु गमकाधीनमिति भावः । नन्विदं महासंज्ञाकरणं प्रथमैकवचनस्यैव संख्यानपेक्षत्वं न तु द्वितीयाद्येकवचनस्येत्यर्थकल्पकतया कृतार्थम् । अत एव पचतिरूपमित्यादौ रूपप्सूत्रस्थभाष्यसम्मते न प्रथमातिरिक्तविभक्तेरेकवचनम् । उत्तरसूत्रे द्विबहुग्रहणादिह महासंज्ञाकरणं प्राचामनुरोधीत्यपि वक्तुं युक्तम् । न च द्वितीयाद्येकवचनस्य संख्यानपेक्षत्वेऽपि कर्माद्यपेक्षणादप्रसङ्ग एवेति वाच्यम् । प्रथमैकवचनस्यापि प्रातिपदिकार्थापेक्षणादनर्थकेभ्यो हुं फडादिभ्यः प्रवृत्त्यनापत्त्या तस्य विभक्त्यर्थमात्रानपेक्षत्वस्यैव कल्पनीयत्वादतो नोक्तार्थलाभ इत्यत आह ॥ **अत एवेति** ॥ **दुर्वारमेवेति** ॥ एवञ्च तत्रौत्सर्गिकैकवचनानापादनाद्भाष्यकारस्य न्यूनतापत्त्या तस्य गमकाधीनत्वमावश्यकमिति भावः । नन्वेवं धनवनादिषु नलोपाद्यापादनपरं भाष्यं विरुध्येतेत्यत आह ॥ **एकदेश्युक्तिरिति** ॥ वैपरीत्यमाशङ्क्याह ॥ **अत**

---

१. **एकदेश्युक्तिरितीति ॥ एकवचनं दुर्वारमेवेति शब्दरत्नग्रन्थानंतरं**

**एवेति** ॥ **मुख्यं व्यावर्त्यमिति** ॥ न च धातुसाहचर्यादर्थवत्येव प्रातिपदिके सुपो धात्विति लुकः प्रवृत्त्या कथमेतद्व्यावर्तनेनार्थवद्ग्रहणसार्थक्यं स्यादिति वाच्यम् । साहचर्यपरिभाषाया अनित्यत्वज्ञापनेन तद्व्यावृत्त्या तत्सार्थक्यमित्याशयात् । नन्वेतावदेव न, किन्त्वन्यदपि तस्यैकदेशयुक्तित्वे साधकमस्तीत्याह ॥ **अत एवेति** ॥ एवञ्च प्रमाणबाहुल्यादौत्सर्गिकैकवचनस्य गमकाधीनत्वसिध्या धनवनाद्यवयवानां न तद्व्यावर्त्यत्वमित्यभिमानः ॥ **रूपसूत्रस्थमिति** ॥ तत्र हि भाष्ये पचतिरूपमित्यादितिङन्तप्रकृतिकस्वार्थिकप्रत्ययान्तेषु क्रियाया निस्संख्यात्वात्साधनगतसंख्यायाश्च तिङ्प्रत्ययेनाभिधानादेकवचनानुत्पत्तिः । न केवला प्रकृतिरिति नियमेन तत्कल्पने तु सर्वेषामेव वचनानां प्रवृत्तिप्रसङ्ग इत्याशङ्कायामेवं तर्ह्येकवचनमुत्सर्गः करिष्यत इत्युक्तम् । अर्थवत्समुदायविषयक इत्यस्यार्थवदवयवको योऽर्थवान्समुदायस्तद्विषयक इत्यर्थः ॥ इति दिगिति ॥

केचित्तु काण्डे इत्यादौ प्रवृत्तावप्यौत्सर्गिकैकवचनस्य लिङ्गसर्वनामनपुंसकत्वाश्रये लुकि रूपे विशेषाभावाद्भाष्यकृतस्तदनापादनमित्यपि वक्तुं शक्यत्वान्नैतद्भाष्यं तस्य गमकापेक्षत्वे प्रमाणम् । ङ्याप्सूत्रस्थमपि भाष्यं न प्रकृतार्थसाधकं, प्रातिपदिकाधिकारस्यानारम्भे शब्दमालादौत्सर्गिकैकवचनप्रवृत्त्या तदन्तादपि तत्प्रवृत्त्या चानवस्था स्यादिति सामर्थ्यादपदं न प्रयुञ्जीतेत्येतन्निषेधपरिपालनमेव तत्प्रयोजनमित्यभ्युपगन्तव्यत्वात्तिङन्तेभ्यस्तदनुत्पत्त्या भाष्योपपत्तेः । तदारम्भे च सामर्थ्यमूलकस्य सङ्कोचस्य दुर्वचत्वाद्द्वित्वबहुत्वयोरविषये प्रातिपदिकत्वमात्रपुरस्कारेण प्रवर्तमानस्य तादृशवचनस्य धनवनाद्यवयवेभ्यो वर्णेभ्योऽपि प्रवृत्तेर्दुर्वारत्वात्तद्व्यावृत्तिरेव मुख्यमर्थवद्ग्रहणस्य प्रयोजनं, दशदाडिमादौ च साहचर्यपरिभाषया लुङ्निवृत्त्या प्रयोजनाभावादेव संज्ञाया अप्रवृत्तिः । तदनित्यत्वज्ञापनार्थत्वे तु क्त्वोर्थग्रहणादीनामन्यत्र तत्साधकानां प्रमाणानां प्रत्याख्यानमेव

---

" प्रकृतसूत्रस्थमिदं भाष्यं त्वेकदेशयुक्तिः " इत्यधिकः पाठः क्वचिद्दृश्यते । तद्वीत्येदम् इदानीन्तनपुस्तकेषु नैवोपलभ्यतेऽयं पाठः ।

१. अत एवेतीति ॥ मुख्यं व्यावर्त्यमित्यनन्तरं " अत एवैतत्सूत्रशेषे भाष्ये काण्डे इत्यादौ पूर्वान्तत्वेन प्रातिपदिकत्वाद्ध्रस्व एवापादितो न तु सुबुत्पत्तिः " इत्यधिकः शब्दरत्नपाठः क्वचिद्दृश्यते तद्वीत्येदम् ।

भाष्यकृता प्रदर्शितं स्यात् । किञ्च दशदाडिमादिपदकदम्बस्य स्वावयवार्थवत्तामूलकमर्थवत्त्वमुपादाय कृतेप्यर्थवद्ग्रहणे दोष इत्याशयेनार्थवत्यनेकपदप्रसङ्ग इत्येकदेशिना प्रातिपदिकसंज्ञायामापादितायामापत्तिसाधकत्वेन त्वदभिप्रेतं समुदायार्थवत्त्वं लोकदृष्टान्तबलान्न सिध्यत्यतस्संज्ञायाः प्रसङ्ग एव नास्तीति सिद्धान्तिना परिहार उक्तो न तु फलाभावादिति । फलविचारस्य प्रसक्तिपूर्वकत्वादतो नानयोर्भाष्ययोः परस्परविरोधः । अपि च रूपप्सूत्रस्थभाष्यस्यासङ्कोचेनोपपत्तौ तत्कल्पना न न्याय्येति सुधीभिराकलनीयमित्याहुः ॥

**व्याख्यानादिति** ॥ शब्दत्वस्याव्यावर्तकत्वमन्येषामसंभवश्चात्र बीजम् ॥ **अन्तग्रहणमिति** ॥ तत्सूत्रस्थान्तग्रहणेन संज्ञाविधाविति परिभाषायां ज्ञापितायामत्र सूत्रे वार्तिककृता कर्तव्यत्वेन प्रतिपादितं तदिति बोध्यम् । एकशेषविषयतया द्वन्द्वस्यानुपपत्तिरित्यालोच्याह ॥ **कृतद्विर्वचनेनेति** ॥ ननु द्विष्प्रयोगपक्षे विशिष्टस्य सुबन्तत्वादिकमादाय समासप्रवृत्तावपि स्थाने द्विर्वचनपक्षे वत्ससादिवत्प्रकृतिप्रत्ययविभागसम्मोहेन विशिष्टस्य तदनुपपत्त्या समासो दुर्लभः । न च स्थानिवत्त्वेन विशिष्टे सुबन्तत्वादिकं सुलभमिति वाच्यम् । यस्माद्विहितस्तदादित्वघटितस्य तस्याशास्त्रीयतया तेनातिदेशायोगात् । अतिदेशेऽपि तदवयवेषु

---

१. आहुरिति वस्तुतस्तु औत्सर्गिकैकवचनस्य गमकसापेक्षत्वेनार्थवद्ग्रहणाभावे धनवनादौ न दोषः, किन्तु प्रत्ययस्य प्रातिपदिकत्वापत्तिः पञ्चगवधन इत्यादौ टजन्ताट्टाबापत्तिश्च दोषः । एवञ्च तेनैव दश दाडिमानीत्याद्यनर्थकसमुदायस्य प्रातिपदिकत्ववारणसम्भवे तत्र प्रातिपदिकत्वमभ्युपगम्यानित्यया सहचरितपरिभाषया लुग्वारणमनुचितमित्याशयेन मूले तस्य फलत्वकथनम् । तस्य मुख्यत्वोक्तिस्तु भाष्योक्तफलयोरस्य मुख्यत्वाभिप्रायेण । औत्सर्गिकैकवचनस्य गमकसापेक्षत्वे मानन्तु मूलोक्तं प्रकृतसूत्रस्थं भाष्यमेव । न च काण्डे इत्यादौ सुबनापादनं सोर्नपुंसकलुका निर्वाहादित्याशयकमिति न तद्गमकमिति वाच्यम् । एकवचनमित्युत्सर्गेण सर्वेषामेकवचनानां प्रवृत्तिरित्युद्योतशेखरादौ स्पष्टत्वेन स्वमोर्लुक्यपीतरेषां श्रवणस्य दुर्वारत्वेन तदनापादनस्य गमकसापेक्षत्वे प्रमाणत्वसम्भवात् । पचतिकल्पमित्यादौ तु न सर्वैकवचनानि, किन्तु प्रथमैकवचनमेवेति स्पष्टमुद्योतशेखरयोः । ङ्याप्सूत्रस्थभाष्यस्य चान्याशयकत्वकथनमनुचितम् । अपदं न प्रयुञ्जीतेत्यत्रापरिनिष्ठितमित्यर्थस्य अन्यत्र स्पष्टतया तिङन्तस्य प्रातिपदिकत्वे औत्सर्गिकैकवचनोत्पत्तिमन्तरा परिनिष्ठितत्वस्य दुर्वचत्वेन तत्रैकवचनप्रवृत्तेर्दुर्वारत्वात् । अतो गमकसापेक्षत्वाशयकत्वमेव युक्तं निरुक्तभाष्यस्येति बोध्यम् ॥

सुप्त्वस्य दुर्लभतया लुगप्रवृत्तावनुपपत्तिरेव । तस्मादेवंविधेषु भाष्यसम्मतफलैक्या-नुपपत्त्या समासाप्रवृत्तिरेव युक्तेत्यत आह । सुबंतत्वमपीत्यादि ॥

अयं भावः, द्वित्वविधौ द्विरित्येव सिद्धे द्विवचनान्तनिर्देशेनानस्त-मितावयवधर्मविशिष्टयोरेव स्थान्यनुरूपयोर्द्वयोश्शब्दयोरादेशत्वस्य तत्पक्षे व्यवस्था-पनादिह सुप्त्वादिकं सूपपादम् । अत एवात्र पक्षे पटुःपटुरित्यादा-विदुदुपधस्येति षत्वाभावस्ताँस्तानित्यादौ नश्छवीति रुभावश्च निर्बाधः । स्पष्टा चेयं रीतिस्सर्वस्य द्वे इत्यत्रोद्योतशेखरयोः । न चैवं धातुर्द्विर्वचनेष्वाटिटदित्यादा-वप्युक्तरीत्या टकारेकारादौ णित्वबुद्धेस्सुलभतया तत्पक्षे तादृशेषु णिलोपानापत्ति-प्रतिपादनमेकाचो द्वे इति सूत्रस्थं भाष्यकृतामसंबद्धं स्यादिति वाच्यम् । तद्विषये द्वे इत्यस्योभे अभ्यस्तमित्यत्र सामर्थ्यमूलकसमुदायसंज्ञासंपत्त्यर्थमावश्यकतया निरु-क्तार्थसाधकत्वायोगात् । किञ्च स्थानित्वेन गृहीतटिशब्दादावनर्थके पूर्वत्र प्रकृति-त्वज्ञानाभावेन परत्र तत्प्रकृतिकप्रत्ययत्वस्य दुर्ज्ञेयत्वात्तदादेशेऽपि तद्बुद्धिर्दुर्लभा । आनुमानिको वा स्थानिवद्भावस्समुदाये ण्य-तत्वमापादयेन्न त्विकारे णित्त्वमतो नास्ति तद्भाष्यानुपपत्तिरिति । एतेनात्रोपमानोपमेयभाववैपरीत्येन व्याचक्षाणा उपेक्ष्या इति बोध्यम् ॥

**स्फोट इति** ॥ स्फुटत्यस्मादर्थ इति विग्रहः । अकर्तरि च कारके संज्ञाया-मित्यपादाने घञ् । स च वर्णपदवाक्यभेदेन त्रैविध्यमापन्नो जातिव्यक्तिपक्षाभ्यां द्विधा । पदवाक्यरूपावखण्डाविति पक्षान्तरमेवमष्टधा स्फोटः । अयं च मनो-मात्रसंवेद्यनादात्मकोऽपि वर्णपदाद्यनुस्यूतस्तत्तद्धर्मैर्व्यवह्रियते, देहधर्मैर्देहीवेति निष्कर्षः ॥ **वाक्यरूपो वेति** ॥ प्रकृतिप्रत्ययात्मको वर्णस्फोटस्तु शास्त्रप्रक्रिया-मात्रनिर्वाहक इति भावः ॥ **तत्रैवेति** ॥ पदरूपे वाक्यरूपे वेत्यर्थः । तत्राप्य-खण्डो वाक्यस्फोटो मुख्य इति सिद्धान्तः । नन्वेवं शास्त्रस्यावास्तविकपदार्थप्रतिपा-दकत्वादनुपादेयता स्यादित्यत आह ॥ **शास्त्रेणेति** ॥ पदे इत्युपलक्षणं वाक्य-स्यापि । समीहत इत्यस्य बुध्या प्राप्नोतीत्यर्थः ॥ **अनावश्यकत्वमेवेति** ॥ भाष्यसम्मतफलाभावोऽस्यानावश्यकत्वे हेतुः । वेस्कन्देरनिष्ठायामित्यस्य तिङन्तेपि प्रवृत्तिर्न्यायानित्यत्वे प्रयोजनमिति वृत्तिकृता प्रतिपादितं, न तु भाष्यकृता ।

द्वित्वस्यावसानेपि प्रवृत्त्यर्थमनचीत्यत्र प्रसज्यप्रतिषेध एवाश्रितो न तु न्याया-नित्यत्वं भाष्यकृतेति भावः ॥ **भूवादय इत्यादि** ॥ भूवादिसूत्रबोधितधातुपदी-यशक्तिस्मरणादित्यर्थः। इदं धातुसंज्ञायाः प्रातिपदिकसंज्ञाव्याप्यत्वबोधनाय। एवञ्च धात्वधातुसाधारणीभूतप्रातिपदिकसंज्ञावच्छिन्नोद्देश्यकस्वाद्यपेक्षया व्याप्य-भूतधातुसंज्ञावच्छिन्नोद्देश्यकानां तिबादीनां निरवकाशत्वमिति भावः। पर्युदासे इत्यस्य प्रत्ययलक्षणेन प्रत्ययान्तपर्युदासे सत्यपीत्यर्थः ॥ **सम्बन्धादिति** ॥ ननु मास्तु कृत्तद्धितेति सूत्रे तत्संबन्धः। सप्तम्यधिकरणे चेत्यादिनिर्देशबलादनति-दिष्टसुप्त्वविशिष्ट एव लुक्प्रवृत्त्या वक्ष्यमाणरीत्या वा दाक्षी दिदृक्षू इत्यादौ न दोषः। न च न ङिसंबुध्योरित्यस्योक्तार्थज्ञापकत्वोपपत्तये तत्र तत्संबन्धः। अन्यथा हे राजन्नित्यत्र कृदन्ततया प्रातिपदिकत्वेन प्रसक्तस्य नलोपस्य व्यावृत्त्या चारितार्थ्येन तदनुपपत्तिरेवेति वाच्यम्। प्रत्ययलक्षणेनापि प्रत्ययान्तपर्युदा-साभ्युपगमे क्षत्यभावेनोक्तार्थज्ञापनानुपयोगात्। किञ्चैवं कार्यकालपक्षे प्रत्ययान्त-पर्युदासेनाहन्नित्यादौ प्रातिपदिकत्वनिबन्धनस्य नलोपस्याप्रसक्त्या धातुपर्युदा-सस्याकर्तव्यत्वादपरमनुकूर्लमिति चेन्मैवम्। ईषदूनो राजा बहुराजेत्यादेः कृदन्त-त्वाभावेनोत्तरसूत्रस्याविषयतया नलोपोपपत्तये पूर्वसूत्रेणापेक्षितायाः प्रातिपदि-कसंज्ञायाः प्रत्ययान्तपर्युदासो विधातुको माभूदिति प्रागुक्तार्थस्यावश्यकत्वेन तज्ज्ञापनोपपत्तये तत्संबन्ध उत्तरसूत्रे आवश्यक इत्याशयात् ॥ **इयमिति** ॥ सामान्ये पक्षपातरूपेत्यर्थः ॥ **सामर्थ्यादिति** ॥ तल्लक्ष्यविषयकलक्षणे संज्ञाविधान-सामर्थ्यादित्यर्थः ॥ **स्वरूपायोग्यत्वे इति** ॥ विभक्त्यर्थकारकशक्तेर्लिङ्गसंख्या-संबन्धाभावात्मकमसत्त्वभूतत्वं स्वरूपं लिङ्गसंबन्धाभ्युपगमे तदयुक्तं स्यादिति भावः ॥ **तद्योग्यत्वे इति** ॥ स्तोकं पचति प्रातः कमनीयमित्यादावसत्त्वभू-तार्थविशेषणे नपुंसकत्वैकत्वयोर्दर्शनेन भेदघटितसंख्यायाः पुंस्त्वादिरूपलिङ्गवि-शेषस्य च संबन्धाभाव एवेहासत्त्वरूपता, ततश्च भेदघटितसंख्यासामान्याभावा-त्मकस्यैकत्वस्य लिङ्गविशेषाभावात्मकस्य नपुंसकत्वस्य च संबन्धेपि न तत्स्वरूप-हानिरिति भावः ॥ **षत्वनिषेधापत्तिरिति** ॥ यद्यपि निषेधे सातिग्रहणेन प्रत्ययसकारस्य नायं निषेध इति ज्ञापने व्यतिसे इत्यादौ षत्वनिषेधा-प्रवृत्तावपि प्रकृतिसंबन्धीणकवर्गनिमित्तकस्य प्रत्ययावयवसकारस्थानिकस्य तस्य निषेधो नेति ज्ञापने न कोपि दोषस्तथापि तत्र क्लेश इत्यभिमानः ॥ **लुगापत्ति-**

रिति ॥ हरिष्वित्यादाविति बोध्यम् ॥ **न त्वतिदेशेनेत्यत्रेति** ॥ नन्वत्र पक्षे विध्याक्षिप्तानां गुणशास्त्राणां प्रदेशेषूपस्थितौ विध्येकवाक्यत्वेनोपकारः। आक्षेपश्च स्वघटकप्रातिपदिकार्थनिर्णयाय तद्घटितमुपदेशं प्रति संभवेदतिदेशस्य चातथात्वेनाक्षेपायोगात्कथमुपस्थितिप्रयुक्ता विध्येकवाक्यता स्यादिति चेन्मैवम्। अतिदेशस्य कार्यार्थत्वादतिदिदिक्षितधर्मावच्छिन्नोद्देश्यककार्यसमर्पकेषु विधिषु तैरनाक्षिप्तानामपि स्वकीयाकाङ्क्षाबलादेवातिदेशानामुपस्थितावेकवाक्यत्वम्, अथवा तत्र पक्षे स्वघटकवृध्यादिपदप्रतिपाद्यनिर्णायकं किमिति सामान्यरूपैवाकाङ्क्षा, न तु तत्तत्पदीयशक्तिनिर्णायकं किमिति विशेषरूपा, ततश्च शक्तिग्राहकत्वेन मुख्यार्थप्रतिपत्तिसमर्पकस्योपदेशस्येव गौणार्थप्रतिपत्तिसमर्पकस्यातिदेशस्यापि तादृशाकाङ्क्षाबलेनोपस्थितौ बाधकाभावाद्विध्येकवाक्यत्वमित्याशयात्।

केचित्तु कार्यकालपक्षे कार्यविशेषसंवलनेनैव तत्तद्विध्येकवाक्यतया संज्ञाप्रवृत्तिरित्यावश्यकम्। अन्यथा पक्षयोरवैलक्षण्यमेव स्यात्। ततश्च स्वाद्युत्पत्तिप्रयोजकत्वेन तद्विध्येकवाक्यतया प्रवृत्तायाः संज्ञायाः कार्यान्तरोपयोगार्थमारोपो न न्याय्यः। किञ्चातिदेशस्याप्यत्र पक्षे कार्यविशेषसंवलनेनैव प्रवृत्तेर्न्याय्यतया सुबुत्पत्तिप्रयोजकत्वेन प्रवृत्तायास्संज्ञाया अतिदिदिक्षायामुपस्थिततदीयकार्यपर्यालोचनेन कार्यान्तरविषयकाकाङ्क्षाया अनुदयात्तदुपहिताया एवातिदेष्टव्यतया कार्यान्तरोपहितस्य तादृशातिदेशस्य ह्रस्वविधायकशास्त्रेणाक्षेपायोगाद्धात्वादिभिन्नमर्थवच्छब्दस्वरूपं प्रातिपदिकं तस्य ह्रस्व इत्येवमुपदेशवत्प्रातिपदिकाप्रातिपदिकसंबन्धिनोः पूर्वपरयोर्य एकादेशस्तद्विशिष्टं पूर्वं प्रातिपदिकं तस्य ह्रस्व इत्येवमतिदेशशास्त्रस्य तदेकवाक्यता दुर्लभा। अत एव भाष्ये अप्रत्ययः किं, काण्डे कुड्ये इति प्रत्ययान्तपर्युदासस्य प्रयोजनमुपपाद्योत्तरसूत्रस्थस्य तद्धितग्रहणस्य नियमार्थत्वेन परिहृतम्। यथोद्देशकार्यकालयोरुभयोरपि पक्षयोरतिदेशेन विभक्त्यन्ते प्रातिपदिकसंज्ञायाः प्रवृत्तौ च प्रत्ययान्तपर्युदासेन व्यावर्तयितुमशक्यत्वात्तदसङ्गतिः। कार्यकाले प्रातिपदिकत्वातिदेशस्य प्रवृत्त्यभावे च तत्पक्षाभिप्रायेण भाष्यं सूपपादमित्यन्यत्र विस्तरः। एवञ्चात्र पक्षे कार्यविशेषोद्देशेन प्रवृत्तायास्संज्ञाया अतिदेशेन कार्यान्तरापादनस्यायुक्तत्वाद्यथोद्देशाभिप्रायेणैवात्र ज्ञापकानुसरणं मूलकारस्येति युक्तमित्याहुः॥

---

१. **आहुरिति ॥ वस्तुतस्तु कार्यकालपक्षे कार्यविशेषसंवलनेनैव तत्तद्विध्येक-**

**स्वाद्युत्पत्तिस्त्विति** ॥ औत्सर्गिकैकवचनोत्पत्तिरित्यर्थः। यद्यपि लिङ्ग-सर्वनामनपुंसकत्वाश्रयेण लुका तन्निवृत्तिस्संभवति, तथापि तिष्ठतु काण्डे मे स्वमित्यादावन्वादेशे सपूर्वायाः प्रथमाया इति विकल्पः प्रसज्येतेति भावः ॥ **सत्त्वप्रधानप्रातिपदिकग्रहणार्थमिति** ॥ काण्डे इत्यादौ नपुंसकह्रस्ववारणाय ह्रस्वो नपुंसके यत्तस्येति न्यासमुपदर्शयता भाष्यकृता सूत्रस्थस्य प्रातिपदिकपदस्योक्तार्थकत्वं सूचितमित्याशयः ॥ **तेनात्रेति** ॥ काण्डे इत्यादिविभक्त्यन्तेन कारकशक्तिरेव प्राधान्येनाभिधीयते, न द्रव्यमिति भावः। न च विभक्त्यन्तस्य पूर्वान्तत्वेन द्रव्यवाचकत्वं किं न स्यादिति वाच्यम्। अर्थनिमित्तयोरेकेन युगपदतिदेष्टुमशक्यत्वात्। अर्थमात्रन्तु नान्तादिवद्भावेनातिदेष्टुमिष्यते। सर्वस्या इत्यादौ पूर्वान्तवद्भावेन सर्वार्थवाचकत्वातिदेशेपि टाबन्ते सर्वनामत्वस्य दुर्वचतया स्याडाद्यनुपपत्तेः। न च काण्डशब्दस्यानुमानिके काण्डे इत्यादेशे स्थान्यर्थाभिधानसमर्थस्यैवादेशतया द्रव्यवाचकत्वं सूपपादमिति वाच्यम्। अन्तादिवच्छास्त्रबलेनैकादेशविशिष्टयोः पूर्वपरयोरेकादेशस्थानिघटितपूर्वपरसंघातनिष्ठप्रत्येकधर्मातिदेशाभ्युपगमेपि पूर्वपरघटितसमुदायस्थाने कल्प्यमानस्यादेशस्योभयसंबन्धिविशिष्टार्थबोधकताया औचित्येन प्राधान्येन द्रव्यवाचकत्वायोगात्।

ननु काण्डे तिष्ठत इत्यादौ प्रथमान्ते प्रकृत्यर्थद्रव्यव्यतिरिक्तस्य कस्यचिदन्यस्यार्थस्य प्राधान्येन प्रतीत्यभावाद्ध्रस्वो दुर्वार इति चेदत्र केचित्। एका-

---

वाक्यतया संज्ञाप्रवृत्तेरभ्युपगमेऽपि काण्डे इत्यादौ विभक्त्युत्पत्तेः पूर्वं पर्जन्यवल्लक्षणप्रवृत्त्या ह्रस्वप्रवृत्तिप्रयोजकत्वेन ह्रस्वविध्येकवाक्यतया प्रवृत्तायास्संज्ञायाः कृतैकादेशे ह्रस्वप्रवृत्त्युपयोगार्थमारोपो न्याय्य एव। किञ्चान्तादिवत्सूत्रस्य प्रकृते प्रातिपदिकसंज्ञातिदेशरूपतया तस्यापि संज्ञासूत्रत्वेन तत्र यन्निमित्तवैकल्यप्रयुक्तेति न्यायेन धातुभेदादेर्निमित्तत्वेऽपि प्रत्ययान्तभेदस्यानिमित्ततया कार्यकालपक्षेऽप्यतिदेशेन तदानींप्राप्तप्रातिपदिकसंज्ञाप्रयुक्तह्रस्ववारणार्थं विभक्त्यैकादेशो नान्तवदिति ज्ञापनं पक्षद्वयेऽप्यावश्यकमेव। भाष्यन्तु प्रत्ययान्तपर्युदासाभावे उपदेशप्रयोज्यप्रातिपदिकसंज्ञामादाय प्राप्तह्रस्ववारणायैव प्रवृत्तम्। सूत्रशेषेऽन्तवद्भावेन प्रातिपदिकसंज्ञायाः पुनराशङ्कितत्वान्न तदसङ्गतिः। अतः परममूलस्य मूलकारोक्तरीत्यैवाशयवर्णनमुचितम्। न त्वन्यथेत्यादि स्वयमूहनीयमित्याहुः।

१. **सम्भवतीति** ॥ उत्सर्गतस्सर्वैकवचनानां प्रवृत्तेस्तद्धितश्चासर्वविभक्तिरिति सूत्रोद्योतशेखरयोः प्रतिपादितत्वेन अत्र स्वमोर्लुका निवृत्तिसम्भवेऽपि टादीनां श्रवणप्रसङ्गोऽप्यापत्तिविषय एवेति बोध्यम् ॥

देशात्पूर्वमन्तरङ्गत्वात्सकृत्प्रवृत्ततया ह्रस्वस्य पुनरप्रवृत्त्या निर्वाहः । प्राथमिकप्रवृत्तिकालिकोद्देश्यघटकेतराघटितत्वे सति तद्धटकमात्रसंबन्धिविधेयाघटितत्वं तल्लक्ष्यत्वमिति परिष्कारे तूखतुरित्यादावङ्गरूपसमुदायघटकमात्रसंबन्धित्वात्पूर्वपरैकादेशघटितस्य तल्लक्ष्यत्वोपपत्तावप्यनु ऊखतुरनूखतुरित्यादावुपसर्गैकादेशविषये तदनुपपत्त्या ह्रस्वापत्तिः । बहिरङ्गत्वन्तु काण्डे इत्यादावप्यविशिष्टम् । अत एव खट्वामतिक्रान्तोऽतिखट्वस्तस्मिन्नतिखट्वे इत्यत्र गोस्त्रियोरिति ह्रस्वो नेति युक्तम् । भाष्यन्तु सप्तम्याद्यन्तेषु ह्रस्ववारणाय न्यायमनादृत्य कारकशक्तिनिरूपिताप्राधान्यरूपमुपायान्तरमुपादाय प्रवृत्तमिति न तद्विरोधः । प्रथमान्तेषु तिङाद्यभिहितकारकशक्तेः प्राधान्यमिति तु न समञ्जसम् । ग्रामणि तिष्ठतीत्यादौ नपुंसकह्रस्वात्पूर्वमन्तरङ्गानपीति न्यायेन लुकि ह्रस्वानुपपत्तेः । अनभिधानेन भाष्यसमर्थनन्तु न युक्तिमदिति सुधीभिराकलनीयमित्याहुः ॥

---

१. आहुरिति ॥ परे तु काण्डे इत्यत्र लक्ष्ये लक्षणस्येति न्यायेन ह्रस्ववारणमनुचितम् । एकादेशस्य तन्मात्रोद्देश्यकविकारत्वाभावेन तल्लक्ष्यत्वाभावात् । न चात्र विकारस्य तन्मात्रोद्देश्यकत्वस्वीकारेऽनूखतुरित्यादावुपसर्गैकादेशस्य तन्मात्रोद्देश्यकत्वाभावेन तल्लक्ष्यत्वानापत्त्या ह्रस्वापत्तिरिति वाच्यम् । एकादेशस्य बहिरङ्गतया असिद्धत्वेन ह्रस्वाप्रवृत्तेः । अनूखतुरित्यादावभ्यासोत्तरखण्डयोरेकादेशोत्तरं स्थानिन्यभ्याससंज्ञायाः फलाभावेनाप्रवृत्त्या परादिवद्भावेनैकादेशविशिष्टेऽभ्यासत्वस्यातिदेष्टुमशक्यत्वेन च तदप्रवृत्तेः । अत्र मात्रपदेन लब्धे तदितरानुद्देश्यकत्वे इतरद्विभक्तिरूपमेव गृह्यत इति विवक्षणेन दोषानवकाशाच्च । अतिखट्वे इत्यत्रैकादेशपूर्वस्थानिघटितखट्वेत्यस्य स्त्रीप्रत्ययान्तत्वाभावेनैकादेशविशिष्टे तस्यातिदेष्टुमशक्यतया ह्रस्वस्य प्रसक्तिरेव नास्तीति तदर्थं मात्रपदनिराकरणं व्यर्थमेव । एवञ्च काण्डे इत्यादौ ह्रस्ववारणपरभाष्यस्य न्यायानादरेण प्रवृत्तत्वकल्पनामन्तरापि समाञ्जस्यं घटते । अतः काण्डे इत्यादौ ह्रस्वो भाष्यानुगृहीतमूलोक्तसरण्यैव वारणीयः । न च सप्तम्यन्ते तथा वारणसम्भवेऽपि काण्डे तिष्ठत इत्यादौ ह्रस्वो दुर्वार एवेति वाच्यम् । "अभिहिते प्रथमा" "तिङ्समानाधिकरणे प्रथमा" इति वार्तिकबलेन प्रथमाया अपि कारकविभक्तित्वेन सप्तम्यन्तादविशेषात् । न चैवं ग्रामणि तिष्ठतीत्यादौ नपुंसकह्रस्वात्पूर्वमन्तरङ्गानपीति न्यायेन लुकि ह्रस्वानुपपत्तिरिति वाच्यम् । तत्र सुबुत्पत्तेः पूर्वमेव ह्रस्वप्रवृत्त्या दोषाभावात् । अन्तरङ्गानपीति न्यायस्य लुक्प्रयोजकसमासादीनां प्राबल्यबोधकत्वेऽपि सुपोऽपि प्राबल्यबोधकत्वे मानाभावेन न तेन ह्रस्वात्पूर्वं सुबुत्पत्तिस्सम्पादयितुं शक्या । एवञ्च मूलोक्तसरणौ बाधकाभावेन व्यर्थ एवायं भाष्यविरुद्धकल्पनाप्रयास इति सुधियो विभावयन्त्वित्याहुः ।

**सर्वतस्सोरित्यादि**[1] ॥ प्रत्ययान्तपर्युदासाभावे इत्यादिः ॥ **सुप्तिङि-तरेत्यादि** ॥ इतरशब्देन च प्रकृतिभिन्नं विवक्षितम्। तेन काण्डे इत्यादौ प्रकृतिसमभिव्याहारेपि न क्षतिः। समभिव्याहारश्च व्यवहितसाधारणः। तेन समासे चरमसुपः पूर्वपदसमभिव्याहारमादाय लुक्प्रवृत्तिरित्यूह्यम् ॥ **नकारोच्चा-रणसामर्थ्येनेति** ॥ न च पचेरन् भृज्जेरन्निति यस्यां क्रियायामित्याख्यातमाख्या-तेनेति समासे ऋन्नेभ्य इति ङीबर्थं तच्चरितार्थमिति वाच्यम्। एहीडादय इति साहचर्याल्लोण्मध्यमपुरुषान्तानामेव समास इत्याशयात्। यद्वा ऋन्नेभ्य इति ऋकारसाहचर्यान्नकारोपि तिङ्भिन्नावयव एव गृह्यत इत्यदोषः ॥ **अशास्त्री-यत्वेनेति** ॥ विशेषणविशेष्यभावस्य लोकाश्रयत्वाच्छास्त्रानधीनत्वेन तद्घटितो न शास्त्रीयः। तथाभूतश्च न शास्त्रेणातिदिश्यते, प्रत्यासत्तिविरोधादिति भावः। ननु विशिष्टधर्मस्याशास्त्रीयतया न्यायविषयत्वाभावे कथमियायेत्यादावेकाच्त्वनिबन्धन-द्वित्वसिद्धिरित्याशयेन मूलकृत्तात्पर्यमन्यथा करोति ॥ **यद्यपीत्यादि** ॥ **अङ्गत्व-सिद्धिरिति** ॥ तदभावे सार्वधातुकार्धधातुकयोरिति भवतेश्शन्निमित्तक इगन्ताङ्ग-त्वनिबन्धनो गुणो न स्यादिति भावः। नन्वङ्गावयवस्येको गुणस्सार्वधातुकार्ध-धातुकयोरिति वैयधिकरण्येन संबन्धे भवतेरसत्यप्यङ्गत्वे गुणो निर्बाधः। यदि तु प्रत्ययस्याङ्गांशे उत्थिताकाङ्क्षतया सामानाधिकरण्ये संभवति वैयधिकरण्यस्या-युक्तत्वाच्च नायमर्थो लभ्यत इत्युच्यते तर्हि अङ्गसंज्ञासूत्रे तदादीति कर्मधारय-बहुव्रीह्योस्तन्त्रेण निर्देशाभ्युपगमादतिदेशस्यानुपयोग एवेत्यत आह ॥ **व्यतिसे इति** ॥ पदत्वसिद्धिरित्यस्य तिङन्तत्वातिदेशप्रयुक्ता पदत्वसिद्धिरित्यर्थः। सात्पदाद्योरिति षत्वनिषेधश्चैतत्प्रयोजनमिति भावः। ननु दधिसेचावित्यादौ सोपपदात्सिजादेर्विचि गतिकारकोपपदानामिति सुबुत्पत्तेः पूर्वं समासे षत्ववार-णाय पदादादिरिति पञ्चमीसमासस्याकरसम्मतत्वान्नात्र षत्वनिवारणाय पदत्वो-पयोगः। किञ्च यथोद्देशे प्राक् प्रवृत्तायाः पदसंज्ञाया इदानीमानुमानिकेन स्थानि-वद्भावेनातिदेशोपि सुलभः। तत्पक्षे हि भविष्यति किञ्चित्प्रयोजनमित्यभिसंधि-

---

१. **सर्वतस्सोरित्यादीति** ॥ मूले औत्सर्गिकैकवचनमपि नेत्यनन्तरं "तथा सति सर्वतस्सोरुत्पत्त्या स्वन्तं पदमित्येव सिद्धे तिङादिग्रहणेन विभक्त्यन्तेभ्यस्तदनुत्पत्तेः। गमकं विना तदनुत्पत्तेश्च"। इति क्वाचित्कः पाठः। तदनुसारेणायमुल्लेखः। इदानीन्तनपुस्तकेष्वयं पाठो न दृश्यते ॥

मात्रेण संज्ञानां प्रवृत्तिरित्यर्थः प्रगृह्यसंज्ञाप्रकरणे भाष्यकैयटयोर्व्यवस्थापितः। कार्यकालपक्षश्च भपदसंज्ञादिष्ववर्वाचीनानामनिष्ट एव। तस्मादिदमपि न प्रयोजनमत आह॥ **इरियानिति**॥ **कार्यकालपक्षे इति**॥ यथोद्देशपक्षे तु सुब्लुगर्थमलौकिके वाक्ये प्रवृत्तायास्संज्ञाया आनुमानिकेन स्थानिवद्भावेन विशिष्टेऽतिदेशसंभव इति सुबुत्पत्तेर्नानुपपत्तिरतः कार्यकालपक्षोद्घाटनमिति द्रष्टव्यम्। ननु लक्ष्यानुरोधेन व्यवस्थितयोः पक्षयोरन्यतरपक्षेण लक्ष्ये सिद्धे पक्षान्तरेणानिष्टापादनस्यायुक्तत्वाद्यथोद्देशपक्षमाश्रित्य निर्वाहोऽस्तु, कार्यकालेपि प्रत्ययपर्युदासस्याग्रे निराकरिष्यमाणत्वात्सुलभमेव तत्र प्रातिपदिकत्वमतो नैतदपि प्रयोजनमित्यत आह॥ **तत इजन्तत्वनिबन्धन इति**॥ तत्त्वञ्च न स्थानिवद्भावलभ्यमशास्त्रीयत्वात्। नाप्येकदेशविकृतन्यायलभ्यमर्धविकारे तदधिकविकारे च तादृशन्यायस्याप्रवृत्तेः॥ **फक्सिद्धिरिति**॥ व्यतिसे इत्यादौ तिङतिङ इति तिङन्तत्वनिबन्धननिघातसिद्धिश्चेत्यपि बोध्यम्॥ **असहाय एवेति**॥ ईदृशार्थकत्वादेव चैकस्मिन्निति सार्थकम्। अन्यथा विशिष्टव्यवहारस्योभयसत्तामूलकस्यान्यतरस्मिन्नेकत्रातिदेश इत्यर्थस्य स्वत एव लाभसंभवात्तदसङ्गतिः स्पष्टैव॥ असहायत्वञ्चातिदिदिक्षितधर्मावच्छिन्नद्वितीयशून्यत्वम्॥ **कैयटे इति**॥ तत्र ह्युपदिश्यमानस्यैजन्तस्यात्त्वमित्यर्थे नान्तरीयकत्वादुपदिष्टस्य ढौकत इत्याद्यवयवस्य व्यपदेशिवद्भावेनैजन्तत्वादात्त्वसुद्भाव्यासहायत्वाभावादाद्यन्तवदित्यतिदेशो न प्रवर्तत इत्युक्तम्॥ **आकारस्य नादित्वमिति**॥ असहाय इत्यस्याभावे यो यादृशधर्माभाववांस्तत्र तादृशधर्मस्यातिदेश इत्यर्थस्य पर्यवसानादिति भावः। लोकन्यायेनाप्यसहायविषयत्वं युक्तमित्याह॥ **लोकेपीति**॥ ज्येष्ठत्वमधिकसूर्यपरिस्पन्दवत्त्वम्। न्यूनसूर्यपरिस्पन्दवत्त्वञ्च कनिष्ठत्वम्। तदुभयवत्त्वन्तु मध्यमत्वमिति विवेकः। ननु न्यायस्यासहायविषयत्वे भवतः शब्निरूपितमङ्गत्वं दुर्वचं, मुख्यतदादित्वविशिष्टस्य शबन्तस्य सत्त्वेन ससहायतया तत्र तदतिदेशाप्रवृत्तेरत आह॥ **विजातीयेति**॥ शबन्तस्य तिङ्विधानावध्याद्यवयवकत्वरूपतदादित्वसत्त्वेऽपि शब्विधानावध्याद्यवयवकत्वरूपस्य तस्याभावेन विजातीयतया तेन शब्रहितस्य ससहायत्वाभावः। सजातीयेनैव हि साहाय्यमतो न तादृशेष्वतिदेशप्रवृत्तेर्विरोध इति भावः॥ **अत एव हरिष्वित्यादि**॥ न्यायस्यासहायविषयत्वादेवेति तदर्थः। न तु शास्त्रीयविषयत्वादिति॥

एकदेश्युक्तिरिति ॥ केचित्तु[1] परस्परनिरूप्यनिरूपकभावापन्नयोर्विभिन्नाधिष्ठानावस्थितिस्वभावयोर्धर्मयोरेकस्मिन्धर्मिण्यारोपेणावस्थानमनया परिभाषया बोध्यते। लोकन्यायेनाप्येतावदेवाश्रयणीयं सामान्ये पक्षपातात्। न त्वसहायपरत्वमतः परिभाषायामेकग्रहणं संख्यापरमेव स्पष्टार्थम्। एवञ्च स्वस्यैव स्वनिरूपितमवयवत्वमवयवित्वञ्चेतीयायेत्यादौ द्वित्वमाभ्यामित्यादौ दीर्घश्च सिद्धः। नन्वेवं सभासन्नयने भकाराकारस्य स्वनिरूपितमादित्वं दरिद्रातावीकारस्य स्वनिरूपितमन्त्यत्वञ्च प्रकृतन्यायेनातिदिश्येतेति चेदस्तु, तथापि न क्षतिः। तादृशधर्मस्य तद्विधावुद्देश्यत्वेन गृहीतसमुदायनिरूपितत्वाभावात्। तथाभूतमेव ह्यादित्वं वृद्धसंज्ञायामन्तत्वमच्प्रत्यये च प्रयोजकम्। किञ्च स्वं रूपमित्येतच्छास्त्रस्याविषये दर्भाणां स्थाने शरैः प्रस्तरितव्यमित्यादिदृष्टान्तसिद्धेन तत्स्थानापन्नन्यायेनाशास्त्रीयस्याप्यतिदेशस्याभीष्टत्वात् व्यतिसे इरित्यादौ तिङन्तत्वेऽन्तत्वादिकम्। अस्तु वा तथाभूतस्य स्वनिष्ठविधानावधित्वविशिष्टस्वनिरूपितप्रथमावयवत्वस्य स्वावधिकविधानाश्रयत्वविशिष्टस्वनिरूपितचरमावयवत्वस्य चानेनैवारोपः। हरिषु बिभेषीत्यादौ प्रत्ययमात्रस्योक्तन्यायेन न सुबन्तत्वादिप्रयुक्तं पदत्वम्। षत्वनिषेधे पञ्चमीसमासाश्रयणेन फलाभावात्। न चोक्तन्यायेन प्रकृतौ प्रत्ययत्वातिदेशात्पदत्वमाश्रित्य पञ्चमीसमासेपि तत्र दोषो दुर्वार इति वाच्यम्। प्रत्ययत्वस्य कथंचित्प्रकृतिनिरूपितत्वेऽपि सुप्त्वतिङ्त्वयोरतथाभूततया प्रकृतावतिदेशासंभवेन तदन्यतरप्रयुक्तस्य पदत्वस्य तत्र दुर्वचत्वात्। हरिष्वित्यादौ स्वादिष्विति पदत्व-

---

१. केचित्त्विति ॥ परे तु परस्परनिरूप्यनिरूपकभावापन्नयोर्विभिन्नाधिष्ठानावस्थितिस्वभावयोर्धर्मयोरेकस्मिन्धर्मिणि आरोपेणावस्थानमनया परिभाषया बोध्यत इति तु न युक्तम्। भवदुक्तरीत्या तिङ्त्वादेः प्रकृत्या निरूप्यनिरूपकभावस्यासत्त्वेऽपि प्रत्ययत्वस्य प्रकृत्या तत्सत्त्वेन सर्वत्र प्रकृतौ प्रत्ययान्तत्वातिदेशप्रवृत्त्या धातुमात्राद्भावे स्त्रियां "अप्रत्ययात्" इत्यकारप्रत्ययापत्तेः। तत्र प्रत्ययादित्यनेनानतिदिष्टप्रत्ययान्तस्यैव ग्रहणमित्यर्थकल्पने तु आचारक्विबन्तेभ्यस्तदनापत्तिर्दोषः। सङ्कोचस्यातिदेशविशेषविषयकत्वकल्पने तु क्लेशः। एवं सर्वेषां प्रातिपदिकानामुक्तरीत्या प्रत्ययान्तत्वेनार्थवत्सूत्रस्यैव निर्विषयत्वप्रसङ्गः। सूत्रसामर्थ्येनार्थान्तरकल्पनायां क्लेशः। किञ्च सभासन्नयनेऽकारेऽच्समुदायत्वतदादित्वयोरनयाऽतिदेशे वृद्धिसंज्ञकाद्यवयवकाच्समुदायत्वस्याकारेऽतिदेशतः सिद्धतया तादृशसमुदायघटितत्वस्य सभासन्नयने सत्त्वेन वृद्धिसंज्ञकाद्यवयवकाच्समुदायघटितस्य विधीयमानाया वृद्धसंज्ञायाः प्रवृत्त्या छप्रत्ययो दुर्वार एव। अतो मूलोक्तरीत्या एकस्मिन्नित्यस्यासहायार्थकत्वमेवोचितमित्याहुः।

प्रयुक्तोऽपि षत्वनिषेधो मूल एव निराकरिष्यते । एवञ्च निजाविकारस्यापि स्वनिरूपितावयवत्वावयवित्वयोरारोपेणैकाच्त्वसिद्ध्या चतुर्णामेकाचामुपपत्तौ भाष्यसामञ्जस्ये परिभाषाया विलक्षणार्थकल्पनेनैकदेशयुक्तित्वापादनमयुक्तं न्यायविरोधात्फलाभावाच्च । असहायार्थकत्वाभावादेव ह्येकग्रहणस्य प्रयोजनविचारो भाष्यकृता न कृत इति सुधीभिराकलनीयमित्याहुः ॥

नन्वर्थवत्सूत्रे शक्तिलक्षणान्यतररूपेणार्थबोधकत्वमर्थवत्त्वमुत्तरसूत्रे चान्यादृशमिति वैरूप्यमयुक्तम् । निरर्थकार्थाधिकारबाधापत्तेः । किञ्च कृत्तद्धितेति सूत्रस्यैकार्थीभावेन लौकिके प्रयोगे प्रसिद्धो योऽर्थस्तादृशार्थवत्त्वविषयकतायामङ्गसंज्ञासूत्रस्थभाष्यविरोधः । तत्र हि देवदत्तो गार्ग्येत्यस्य तद्धितान्तत्वनिबन्धनप्रातिपदिकत्वाभावः प्रत्ययग्रहणपरिभाषायाः प्रयोजनमित्युक्तम् । तद्धितान्तत्वेपि निरुक्तार्थवत्त्वाभावेन प्रातिपदिकत्वाप्रसक्त्या तदसङ्गतिरेव । अपि चार्थवत्पदस्योत्तरसूत्रे निरुक्तार्थकत्वे कृत्तद्धितान्तयोरतथाभूतयोरप्रसिद्ध्या व्यावर्त्यालाभाद्विशेषणत्वानुपपत्तिः । इत्थमनेकदोषदूषितत्वान्मूलकारोक्तमयुक्तमित्याशयेनाह ॥ **वस्तुत इति** ॥

**विभक्तीतरसमभिव्याहारानपेक्षयेत्यादि** ॥ विभक्तिसमभिव्याहारापेक्षयेति तु नोक्तं दधि मध्वित्यादावन्तरेणापि तत्समभिव्याहारं विभक्तिलुक्यर्थबोधदर्शनात्पारिष्कारिकार्थवत्ताविरहेण प्रातिपदिकत्वानापत्तेः । विभक्तिरत्र प्रत्यासत्त्या चिकीर्षितप्रातिपदिकसंज्ञाफलभूता विवक्षिता, तेन जजागरतुरित्यादावाख्यातप्राग्वर्तिनि साभ्यासे नातिप्रसङ्गः । प्रातिपदिकत्वे च लघावन्ते द्वयोश्च बह्वषो गुरुरिति मध्योदात्तत्वमापद्येत । न च धातुपर्युदासेनैव तद्व्यावृत्तिरिति वाच्यम् । अभ्यासविशिष्टस्य धातुत्वाभावात् । नन्वेवं धातुपर्युदासो व्यर्थः, निरुक्तविशेषणविशिष्टार्थवत्त्वाभावेनैवोर्णुनुवतुरित्यादौ प्रातिपदिकत्वव्यावृत्तेः । न चाहन्नित्यत्र प्रातिपदिकत्वनिबन्धनस्य नलोपस्य व्यावृत्तिरेतत्प्रयोजनमिति वाच्यम् । नलोपोऽतिङ इति न्यासेनापि तत्र नलोपव्यावृत्तिरिति चेन्न । चकास्त्यादीनामनेकाचां धातूनां प्रातिपदिकत्वे तत्प्रयुक्ते धात्वर्थे णिचि टिलोपे चाकयतीत्यादेरनिष्टस्य निवर्तनेन तत्सार्थक्यात् । किञ्च वासुदेववाचककारस्याचारक्विबन्तस्य ऋणोतेश्च लोण्मध्यमपुरुषैकवचनान्तयोराख्यातमाख्यातेनेति समासे तत आच-

क्षाणणिजन्तात्क्विपि निष्पन्ने अर्ण् इत्यत्र रात्सस्येति नियमेन संयोगान्तलोपस्याप्रवृत्तावप्यभीष्टो नलोपः परादिवद्भावेन तिङन्तत्वादतिङ इति न्यासे दुर्वच इत्यहन्नित्येतदर्थमपि तत्पर्युदास आवश्यक ऐवेति दिक्। न च खट्वा गौरीत्यादौ प्रकृतिभागस्य विभक्तीतरटाबादिसापेक्षत्वेन प्रातिपदिकत्वानापत्तिरिति वाच्यम्। विभक्तिपदस्य प्रत्ययमात्रोपलक्षकत्वेनादोषात्। एतेन पटमाचष्टे पटयतीत्यादौ प्रकृतसंज्ञया विभक्त्यनुत्पादाण्णिच्प्रकृतेः प्रातिपदिकत्वानुपपत्तिरित्यपि निरस्तम्। न च तादृशसंज्ञाफलभूतणिच्प्रत्ययेतरतिबादिसापेक्षत्वेन तत्र प्रातिपदिकत्वानुपपत्तिरेवेति वाच्यम्। साक्षात्परम्परया वा प्रत्ययस्य प्रकृतसंज्ञाप्रयोज्यत्वविवक्षणेनादोषात्। अत एव कृत्रिमं सांराविणमित्यादौ कृदन्तस्य प्रातिपदिकत्वसिद्धिः। नन्वेवं मूलकेनोपदंशं माषवापिणावेधाञ्चकारेत्याद्यन्तर्गतणमुलन्तादेरर्थबोधने मूलकेनेत्यादितथाविधप्रत्ययेतरस्यापेक्षणादर्थवत्त्वाभावेन प्रातिपदिकत्वानुपपत्तिः। न च विभक्तीतरस्मिन् स्वोत्तरवर्तित्वं विशेषणं, स्वशब्देन च प्रकृतसंज्ञोद्देश्यं विवक्ष्यत इति नायं दोष इति वाच्यम्। असमासे मूलकेनेत्यादेः प्रागेव णमुलन्तात्प्रयोक्तव्यमिति नियमाभावेन परप्रयोगावस्थायामेधाञ्चकारेत्यादौ च दोषध्रौव्यात्। न च तत्रोपपदानुप्रयोगातिरिक्तत्वविशेषणाददोष इति वाच्यम्। उदगात्कठकालापमजर्यं सङ्गतं मालीभवतीत्याद्यन्तर्गतलुङन्तादिसहप्रयोगसापेक्षचरणद्वन्द्वादावव्याप्तेः परिहारासंभवात्। न च तत्र प्रकृतिप्रत्ययान्यतरत्वनिवेशेन निर्वाह इति वाच्यम्। मालीभवत्येधाञ्चकारेत्यादौ च्व्यन्तामन्ताभ्यामपेक्ष्यमाणस्य धातोस्तिङ्प्रकृतित्वानपायेन व्यतिसे इयत्कारिणावित्यादावपेक्ष्यमाणस्य प्रत्ययत्वेन च दोषस्य दुर्वारत्वात्। यदि विभक्तीतरस्मिन्विशेषणतया स्वप्रकृतित्वं निवेश्यते, तदा विशेष्यांशवैयर्थ्यम्। स्वप्रकृतिप्रत्ययैतदन्यतरत्वनिवेशे तु व्यतिसे इत्यत्रोपसर्गस्य प्रातिपदिकत्वानापत्तिः। पञ्चनावप्रिय इत्यादाववान्तरतत्पुरुषस्य प्रातिपदिकत्वापत्तिश्चेति चेन्मैवम्। तत्रैव स्वादिष्विति पदत्ववद्भिन्नस्वनिष्ठसंज्ञासमर्पकत्वानवरुद्धस्वाघटितपदघटकेतरत्वविशेषणेनादोषात्। स्वाघटितपदे स्वादिष्विति पदत्ववद्भिन्नत्वविशेषणात्पयस्कल्पमित्याद्यन्तर्गतकल्पबादेः प्रातिपदिकत्वव्यावृत्तिः। स्वनिष्ठसंज्ञासमर्पकत्वानवरुद्धत्वविशेषणात्पञ्चनावप्रिय इत्यादाववान्तरतत्पुरुषस्य प्रातिपदिकत्वनिवृत्तिः। उत्तरपदत्वानाक्रान्तत्वविशेषणेन तु न निर्वाहः। महद्भूत इत्यादौ च्व्यन्तस्य प्रातिपदिकत्वानुपपत्तेरित्यादि स्वयमूहनीयम्। इत्थञ्च

चिकीर्षितप्रातिपदिकसंज्ञाफलभूतप्रत्ययेतर स्वादिष्विति पदत्ववद्भिन्न स्वनिष्ठसंज्ञासमर्पकत्वानवरुद्ध स्वाघटितपदघटकेतरानपेक्षया लोके अर्थविषयकबोधजनकत्वमर्थवत्त्वमिति निष्कर्षः। डित्थ इत्यादौ चिकीर्षितप्रातिपदिकसंज्ञाफलभूतप्रत्ययव्यतिरिक्तं यत्स्वादिष्विति पदत्ववद्भिन्न स्वनिष्ठसंज्ञासमर्पकत्वानवरुद्ध स्वाघटितभवतीत्यादिपदघटकेतरत्तत्समभिव्याहारानपेक्षया लोके अर्थविषयकबोधजनकत्वमक्षतमेवेति लक्षणसङ्गतिः। देवदत्तो गार्ग्येत्यस्य स्वाघटितगार्ग्य इत्यात्मकपदघटकसुप्रत्ययसमभिव्याहारापेक्षणेऽपि तदितरानपेक्षणान्नाङ्गसंज्ञासूत्रस्थभाष्यविरोधः। न चैवं देवदत्तः पुत्रीयति राज्ञः पुरुषस्येत्यादौ तिङ्स्यप्रत्ययादिविनिर्मुक्तस्य तदितरानपेक्षणात्प्रातिपदिकत्वं दुर्वारमेवेति वाच्यम्। समासकृतनियमेन व्यावृत्तेः। देवदत्तो गार्ग्येत्यस्य तु न तेन व्यावृत्तिस्तस्यामवस्थायां राजपुरुष इत्यादेः प्रत्ययान्तत्वेनाप्राप्तायास्समर्थनेन कृतार्थस्य समासग्रहणस्य नियामकत्वायोगात्। यद्वा विभक्तीतरस्मिन् स्वनिष्ठसंज्ञासमर्पक स्वनिमित्तकसंज्ञाश्रयैतदन्यतरत्वं निवेश्यते, पञ्चनावप्रिय इत्यादाववान्तरतत्पुरुषस्य स्वनिष्ठसमाससंज्ञासमर्पकोत्तरपदापेक्षणात्केवलप्रत्ययस्य च स्वनिमित्तकाङ्गसंज्ञाश्रयप्रकृत्यपेक्षणाच्च न प्रातिपदिकत्वमन्यत्र प्रातिपदिकत्वमक्षतम्। गत्युपसर्गसंज्ञयोश्च क्रियायोगो निमित्तं, न तु धातुः। क्रिया तु न समभिव्याहारमर्हतीति तदपेक्षणेऽपि तदीयसमभिव्याहारानपेक्षणान्न मालीभवतीत्यादौ च्व्यन्तादेः प्रातिपदिकत्वविरोधः। किञ्च सप्तम्यन्तेन गृहीतमिह निमित्तं विवक्षितम्। तेन राजपुरुष इत्यादौ स्वनिमित्तकसमाससंज्ञाश्रयसमुदायसापेक्षत्वेऽपि पूर्वोत्तरपदयोः प्रातिपदिकत्वं सिद्धम्। तदेतदर्थवत्त्वं किमादीनामारोपितमस्त्येवेति प्रागादेशात्प्रातिपदिकत्वं निर्बाधमतो न काप्यनुपपत्तिरिति दिक्[1]॥

---

१. इति दिगिति॥ परे तु देवदत्तो गार्ग्यं इत्यत्र चरमसुपः प्राग्वर्तिनो देवदत्तो गार्ग्येति समुदायस्यार्थवत्त्वसम्पादनप्रयासो विफल एव। तस्य कल्पितार्थेनाप्यर्थवत्त्वस्याभावात्। अर्थो हि प्रकृतौ प्रत्यये प्रकृतिप्रत्ययसमुदाये परस्पराकाङ्क्षितत्तत्समुदाये च शास्त्रप्रक्रियानिर्वाहार्थं कल्प्यते। न तु परस्परानाकाङ्क्षितानामर्थवतामपि समुदाये। अत एव दश दाडिमानीत्यादिवाक्यस्यार्थवतां समुदायात्मकस्यानर्थकत्वकथनं भाष्यकृतस्सङ्गच्छते। प्रकृते च देवदत्त इति सुबन्तस्य यञन्तेन नैराकाङ्क्ष्यात्तदुभयमात्रघटितसमुदायस्य कल्पितार्थोऽपि नास्तीत्येव युक्तम्। अत एवाङ्गसंज्ञासूत्रे उद्योते प्रकृतोदाहरणस्य नियमेनान्यथासिद्धिमाशङ्क्य समुदायस्यार्थवत्त्वाभावान्न नियम-

आरोपितमस्तीति ॥ लोके इत्यस्याभावे प्रक्रियादशायां प्रत्ययमात्र-स्यापि स्वप्रतिपाद्यकल्पितार्थविषयकखण्डबोधजनकता शास्त्रज्ञानामनुभवसिद्धेति

कोटावन्तर्भाव इति समाहितम्। अत्रार्थवत्त्वनिर्वचनं कल्पितार्थवतां केषाञ्चिदसङ्ग्रहार्थं न तु कल्पितार्थरहितानामपि निरर्थकानां सङ्ग्रहार्थम्। तथा सत्यर्थवत्पदस्यात्यन्तरूढ-त्वकल्पनाप्रसङ्गः। मदुक्तरीत्या तु योगरूढेर्लाभेनार्थवद्ग्रहणं योगरूढं, न तु केवलयौ-गिकमिति प्रदर्शनाय परिष्कारोपयोग इति स्पष्टमेव। न च देवदत्तो गार्ग्येत्यस्यार्थव-त्त्वानङ्गीकारे प्रत्ययग्रहणपरिभाषाभावे तत्र तद्धितान्तत्वप्रयुक्तप्रातिपदिकत्वापादनपरे-णाङ्गसंज्ञासूत्रस्थेन भाष्येण विरोधः। उत्तरसूत्रेऽप्यर्थवद्ग्रहणानुवृत्तेरिति वाच्यम्। उत्तरसूत्रेऽर्थवत्पदानुवृत्तावप्यर्थवदन्तं यत्कृत्तद्धितान्तमिति व्याख्यानेन तत्र प्रतिपदिकत्वापादनसम्भवात्। प्राचीननयेऽप्युत्तरसूत्रे एकार्थीभावप्रयोज्यलौकि-कार्थविषयकबोधजनकत्वमर्थवत्त्वमित्यभ्युपगमेन निरुक्तभाष्यस्योभयोरप्येवमेवोपपाद-नीयत्वाच्च। न च कृत्तद्धितान्तयोरर्थवत्त्वाव्यभिचारादर्थवदित्यस्य व्यावर्तकत्वरूपविशे-षणत्वासम्भवेन तेन तदन्तविधिर्दुर्लभ इति वाच्यम्। पञ्चनावप्रिय इत्यादौ पञ्चनावेत्यस्यानर्थकस्यापि तद्धितान्तस्य सम्भवेनार्थवदित्यस्य विशेषणत्वे बाधकाभावात्। न चार्थवदित्येतन्निरूपितविशेषणत्वमन्तरा कृत्तद्धितग्रहणेन तदन्तवि-धिर्दुरुपपादः। संज्ञाविधाविति निषेधादिति वाच्यम्। कृत्तद्धितेति सूत्रेऽन्तग्रहणं कर्तव्य-मिति वार्तिकनये तदन्तविधेरनपेक्षितत्वात्। वृत्तिभूतसमाससाहचर्याद्वृत्तिभूतयोरेव ग्रहणेन केवलकृत्तद्धितयोर्वृत्तित्वाभावेन तदन्तविधेस्सुलभत्वाच्च। न चार्थवद्ग्रहणानुवृत्ति-सामर्थ्यात्तदन्तविध्युपपादनपरभाष्यविरोध इति वाच्यम्। सिद्धान्तेऽर्थवद्ग्रहणानुवृत्त्यैव तदन्तविधेस्सम्पादनीयत्वेन सहचरितपरिभाषानादरेण तद्भाष्यं प्रवृत्तमित्यपि वक्तुं शक्यत्वात्। एवञ्च देवदत्तो गार्ग्येत्यस्यार्थवत्त्वसम्पादनप्रयासो विफल एव। अतोऽन्यादृशमेवार्थवत्त्वमिह नागेशसम्मतम्। तच्च एतत्संज्ञाप्रयोज्यप्रत्ययेतरप्रत्ययप्र-कृत्येतदन्यतरसमभिव्याहारानपेक्षया लोकेऽर्थविषयकबोधजनकत्वरूपम्। केवलप्र-त्ययस्य प्रकृतिसमभिव्याहारापेक्षणान्नार्थवत्त्वम्। अनुप्रयोगोपपदादीनां प्रत्ययत्वा-भावेन तदपेक्षावतामेधामित्यादीनामर्थवत्त्वं निर्बाधम्। तन्निभ इत्यादौ पूर्वपदसापेक्षत्वेऽपि तस्याप्रत्ययत्वेन निभादीनामर्थवत्त्वम्। समासोत्तरसुपः प्रत्ययत्वेऽपि तस्य परम्परया निभशब्दनिष्ठप्रातिपदिकसंज्ञाप्रयोज्यत्वेन तादृशप्रत्ययेतराभावान्नार्थ-वत्त्वविघटकता। पञ्चनावप्रिय इत्यादौ समासोत्तरसुपः पञ्चनावेति तद्धितान्तनिष्ठप्राति-पदिकसंज्ञाप्रयोज्यत्वाभावेन तादृशप्रत्ययेतरप्रत्ययत्वेन तदपेक्षयैवार्थबोधकत्वेन न पञ्चना-वेत्यस्य प्रातिपदिकत्वम्। पक्त्रिममित्यादौ क्त्र्यन्तादेर्मप्सुबादिसापेक्षत्वेऽपि तेषां क्त्र्य-न्तादिनिष्ठप्रातिपदिकसंज्ञाप्रयोज्यत्वात्तदपेक्षणं नार्थवत्त्वं विघटयति। न चैवं सति व्यतिसे इत्यलोपसर्गयोः से इत्येतत्समभिव्याहारापेक्षयैवार्थबोधकत्वात्तस्य च निरुक्त-प्रत्ययेतरप्रत्ययत्वाच्च तयोरर्थवत्त्वानापत्तिरिति वाच्यम्। तत्र प्रत्ययपदेन पर्युदासन्यायेन पदसंज्ञानवरुद्धस्यैव प्रत्ययस्य ग्रहणेनादोषादित्यादि स्वयमूहनीयमित्याहुः॥

तामाश्रित्य प्रसक्तस्य प्रातिपदिकत्वस्य व्यावृत्तये प्रत्ययपर्युदासोऽपि भाष्यानभिप्रेतः स्वीकर्तव्यस्स्यादुत्तरसूत्रे च तदन्तविधिर्दुरुपपादस्स्यादतस्तन्निवेशः। तद्ध्वनयन्नाह ॥ **प्राप्तिरेव नेति** ॥ लौकिके विशिष्टबोधे प्रकृत्यपेक्षणादिति भावः। नन्वेवं सुप्तिङन्तमिति सूत्रकैयटसूचितभाष्यतात्पर्यविरोध इत्यत आह ॥ **अत्रैव तात्पर्यमिति** ॥ कैयटस्तु दीक्षितवदुपेक्ष्य एवेति भावः। यत्त्वेतादृशमर्थवत्त्वनिर्वचनमनुपसर्जनादिति सूत्रस्थशेखरविरुद्धम्। तत्र हि कुम्भकारशब्दान्तर्गतस्योपपदसापेक्षस्योत्तरपदस्यार्थवत्सूत्रोक्तार्थवत्त्वाभावात्प्रातिपदिकत्वाभाव इत्युक्तमिति तदसत्। तद्ग्रन्थस्य प्राचीनावहेलनपरत्वात्। तन्मते हि तत्पर्याप्त्यैकार्थीभावेन लौकिकार्थविषयकबोधजनकत्वरूपस्यार्थवत्त्वस्याभावस्स्पष्ट एव। ननु तथाभूतस्य प्रातिपदिकत्वाभाव एव किन्नेष्ट इति चेत्तर्हि पुंयोगादाख्यायामनुपसर्जनादिति सूत्रस्थभाष्यविरोधः। तत्राद्ये कृद्ग्रहणपरिभाषया गतिकारकसमभिव्याहारे तद्विशिष्टस्यैव कृदन्तत्वमित्युपक्रम्य कुम्भकारशब्दस्याणन्ततया ततो ङीप्यपत्ये ढकि कौम्भकारेयस्सिद्ध्यति, अन्यथा कारशब्दस्याप्यणन्ततया ततोऽपि कदाचिन्ङीपि तद्धिते कुम्भकारेयोप्यापद्येतेत्युक्तम्। अन्त्येप्यनुपसर्जनाधिकाराभावे द्वितीयस्य तदन्तविधेरभावात्कुम्भकारशब्दान्तर्गतस्य कारेत्यस्यैवाणन्ततया ततो ङीपि ढकि कुम्भकारेय इत्येव स्यात्, न तु कदाचित्कौम्भकारेय इत्युक्तम्। किञ्च माषवापिणावित्यादावुत्तरपदात्मकप्रातिपदिकान्तत्वनिबन्धनं णत्वं न सिद्ध्येदित्यलम् ॥ मूले **इत्याद्यर्थमिति** ॥ आदिनोर्ध्वमौहूर्तिकपरमगार्ग्यायणयोः संग्रहः। तत्र हि समासतद्धितयोरेकेनैवैकार्थीभावेन युगपत्प्रवृत्तिरिति विशिष्टस्य समासत्वतद्धितान्तत्वयोरभाव इति स्पष्टमेव ॥ **भिन्नस्वरश्रवणमिति** ॥ उपदंशमित्ययमादिर्णमुल्यन्यतरस्यामित्याद्युदात्तः, पक्षे लित्स्वरेण वाप्युपान्त्योदात्तः। समासे कृत्स्वरेण तस्यावशेषाच्छेषनिघातेन मूलकशब्दोऽस्वरकः। समासाभावे लघावन्त इति नब्विषयस्येति वा मूलकशब्दोप्याद्युदात्त इति विशेषः। फिट्स्वरश्चाखण्डप्रातिपदिकविषय इति भावः।

**क्रियावाचकत्वाक्षत्येति** ॥ प्रधानाप्रधानयोरिति न्यायो न धातुसंज्ञायां प्रवर्तते। धातुसंज्ञानुवादेन भसंज्ञायामातो लोपारम्भात्। आदन्तप्रकृतिको भावक्विबन्तस्त्वप्रसिद्धः। वाशब्दस्य प्रयोगस्थस्य प्राधान्येनैव क्रियावाचकत्वमिति

नियमाभावेन तत्सादृश्यलभ्ये क्रियावाचकत्वे प्राधान्यनिवेशायोगाच्च ॥ **तदस्तीति** ॥ ननु लिङ्गबोधकप्रत्ययविनिर्मुक्ते विशिष्टे तद्घटके वा दृष्टानां प्रातिपदिकत्वतद्व्याप्यधर्माणां लिङ्गबोधकप्रत्ययविशिष्टेष्वतिदेश इत्यवश्यमभ्युपेयम्। अत एव कर्णीशब्दात्मकोत्तरपदनिमित्तकत्वेन विधीयमानमतः कृकमीति सत्वं पाककर्णेति विहितङीष्प्रत्ययान्तेऽपि भवति। ततश्च राजकुमारीत्येतद्घटककुमारशब्दगतप्रातिपदिकत्वातिदेशो विशिष्टे सुलभ एवेति चेन्न। यादृशस्त्रीप्रत्ययविशिष्टे धर्मविशेषस्यातिदेशचिकीर्षा तादृशस्त्रीप्रत्ययमात्रविनिर्मुक्ते तद्घटके दृष्टस्यैव तादृशस्त्रीप्रत्ययविशिष्टे समुदाये प्रकृतिगतस्य वान्यगतस्य वा धर्मस्यातिदेशो, नान्यस्य, प्रत्यासत्तेः। अत एव पयस्कुम्भीशब्दे कुम्भशब्दत्वमाश्रित्यायः पयस्कुम्भीत्यत्रातः कृकमीति सत्वाभावः। एवञ्च राजकुमारीत्येतद्घटके स्त्रीप्रत्ययमात्रविनिर्मुक्ते राजकुमारेत्यत्र कदाप्यदृष्टस्य प्रातिपदिकत्वस्यातिदेशो विशिष्टे दुर्लभः। कुमारशब्दगतन्तु कुमारीशब्देऽतिदेष्टुं शक्यते न तु विशिष्टे इत्याशयात्॥ **उत्तरयतीति** ॥ अन्तरङ्गानपि विधीन् बहिरङ्गो लुक् बाधत इति न्यायेनेति शेषः। एतेन द्वन्द्वघटकतया समासांशेऽप्यप्रत्यय इत्यस्य सम्बन्धाद्राजकुमारीत्यस्योक्तरीत्या प्रत्ययान्तत्वेन सूत्रद्वयाविषयत्वाद्विभक्त्युत्पत्तौ ङ्याब्ग्रहणमेव शरणमिति निरस्तम्॥ **उगितश्चेति सूत्रे इति** ॥ तत्र हि भाष्ये निर्यवमतीत्यादौ प्रत्ययग्रहणपरिभाषया ङीपोऽप्रवृत्तिमाशङ्क्य प्रत्ययग्रहण इत्युच्यते न चेदं प्रत्ययग्रहणं वर्णोऽप्युगित् प्रत्ययोऽप्युगिदित्युक्तम्॥ **बौद्ध इति** ॥ बाह्यसत्तया बहिरिन्द्रियगोचरत्वाभावेऽपि बुद्धिकल्पितं मानसिकज्ञानविषयीभूतमस्त्येव शशीयत्वविशिष्टश्रृङ्गादिकमिति भावः।

केचित्तु आरोपितशशीयत्वविशिष्टश्रृङ्गादिबोधकत्वाच्छशश्रृङ्गादिपदानामर्थवत्त्वमित्याहुः॥

---

१. आहुरिति॥ इदमयुक्तम्। सर्वेषां शब्दानां बौद्ध एवार्थे शक्तिरिति मञ्जूषायां विस्तरतो निरूप्य शशश्रृङ्गादिपदानामर्थवत्त्वस्योपपादितत्वेनालारोपाश्रयणस्य वैयाकरणसिद्धान्तानारूढत्वात्। आरोपमूलस्य सादृश्यादेः सम्बन्धस्य दुर्वचत्वेनारोपस्य वक्तुमशक्यत्वाच्च। यथाकथञ्चिदारोपस्याङ्गीकारेऽपि श्रृङ्गे शशीयत्वारोपे शशश्रृङ्गधनुर्धर इत्यादौ श्रृङ्गे शशीयत्व।भावबोधनेऽपि धनुर्धरेऽभीष्टस्यालीकत्वस्याप्रतीतेः।

**पदत्वाभावादिति** ।। अनुकार्यानुकरणयोरभेदविवक्षायामर्थवत्त्वाभावेन प्रातिपदिकत्वाभावात्तदभावः । अत एवात्र वलोपाभावः । ननु वान्तस्येदमनुकरणं, भेदविवक्षायां स्यादेवात्र पाक्षिको वलोपः । लक्ष्यानुरोधित्वाच्च विवक्षाविवक्षयोर्भेदपक्ष एवात्र कल्प्यत इति वितण्डामालोच्याह ।। **वृषण्वसुरित्यादि** ।।

**पूर्वभागस्य भत्वेनेति** ।। नन्वलौकिके सुब्लुकः पूर्वं वृषण्शब्दस्याव्यवहितवस्वश्वशब्दपरत्वाभावेन भत्वं दुर्लभम् । सुब्विशिष्टस्य च पदत्वमक्षतमेव, ततश्च निरुक्तसाजात्यस्य कथमनुपपत्तिः । न च लुकः पूर्वं वस्वश्वशब्दपरत्वाभावेऽपि तदुत्तरं वृषण्वसुरित्यादौ तत्परत्वस्य सुवचतया भत्वस्य निर्बाधत्वात्तस्यापि समासत्वाविशेषाच्च समासत्वावच्छेदेन स्वीकर्तव्यस्य साजात्यस्यानुपपत्तिरेवेति वाच्यम् । समासः प्रातिपदिकमित्येतद्वाक्यीयोद्देश्यतावच्छेदकीभूतसमासत्वस्य प्रक्रियावाक्यमात्रविश्रान्ततया प्रातिपदिकसंज्ञाप्रयुक्तसुब्लुगुत्तरकालिकतदतिरिक्तसमासीयपूर्वखण्डगतभत्वस्य निरुक्तसाजात्यविघटकत्वासंभवात् । न च सामर्थ्यात्सुब्व्यवधानेऽप्यलौकिके वाक्ये भत्वमनेन विधीयत इति वाच्यम् । सुब्लोपोत्तरं नलोपनिवृत्तये णत्वलाभाय चाव्यवहितवस्वश्वशब्दपरस्य भत्वसंपादनेन चरितार्थतया सामर्थ्योपक्षयात् । अत एवोपजनिष्यमाणन्यायस्याप्यविषयस्तस्य सर्वथा विधिवैयर्थ्यमूलकत्वात् । अत्र वदन्ति । सुबित्यनुवर्त्य वृषण्शब्दप्रकृतिकस्य सुबन्तस्यालौकिके वाक्ये भत्वमनेन विधीयते, सुब्लुगुत्तरमेकदेशविकृतन्यायेन वृषण्शब्दस्य भविष्यति । अन्यथा जातसंस्कारनिवृत्त्ययोगेनाकडारीयेनापि भत्वेन पूर्वं प्रवृत्तस्य पदत्वस्यानिवृत्तौ सामर्थ्यात्संज्ञाद्वयप्रयुक्तकार्याणां पर्यायताप्रसङ्गः । तस्मादलौकिकेऽपि पदत्वाभावः । किञ्च कार्यकालपक्षे विशिष्टात्स्वाद्युत्पत्तये पुनस्संज्ञाविधानस्य न्याय्यतया समासः प्रातिपदिकमित्येतद्वाक्यीयोद्देश्यतावच्छेदकस्य लौकिकालौकिकोभयविधसमाससाधारणस्यैवावश्यकत्वेन तद्धर्माक्रान्तसुब्लुगुत्तरलौकिकसमासीयपूर्वखण्डगतभत्वस्यापि समाससामान्यपुरस्कारेण स्वीकर्तव्यस्य पदत्ववत्पूर्वखण्डघटितत्वरूपसाजात्यस्य विघटकत्वमापततीत्याशय इति ।।

---

भृङ्गे शशीयत्वाभावमात्रस्यैव प्रतीत्याऽन्यदीयभृङ्गधनुर्धरत्वप्रतीतेर्बाधकाभावाददि तिक्ि ।

**प्रकृतिप्रत्ययभावानापन्नसंघातविषयक** इत्यस्य परस्परनिरूपितप्रकृतिप्रत्ययभावापन्नसंघातातिरिक्तसंघातविषयक इत्यर्थः। तेन राजा इयानित्यादौ प्रकृतनियमेन प्रातिपदिकत्वव्यावृत्तिसिद्धिः। इत्थञ्च भाष्यानारूढत्वमेवात्र पक्षे दोषो, नान्य इति ध्वनयन्नाह ॥ **भाष्ये त्विति** ॥

**स्वातन्त्र्येणापीति** ॥ ननु शब्दानां स्वातन्त्र्यमन्याविनाभूतत्वाभावः। ततश्चान्याविनाभूतत्वाभावहेतुकप्रयोगयोग्यपूर्वोत्तरावयवकार्थवत्समुदायत्वं नियमोद्देश्यतावच्छेदकं पर्यवस्यतीत्यत्रापि पक्षे साजात्यभङ्ग एव। प्रादिसमासे पूर्वखण्डस्योपपदसमासे चरमखण्डस्य च स्वातन्त्र्याभावात्। न च तथाभूतान्यतरावयवकसमुदायत्वमेव नियमोद्देश्यतावच्छेदकमाश्रीयते, प्राचार्य इत्यादिप्रादिसमासे चरमखण्डस्य स्तम्बेरम इत्याद्युपपदसमासे पूर्वखण्डस्य च स्वातन्त्र्यानपायान्न साजात्यभङ्ग इति वाच्यम्। जन्मवानित्यादौ पूर्वखण्डगतस्वातन्त्र्यमुपादाय प्रकृतनियमेन प्रातिपदिकत्वव्यावृत्त्यापत्तेः। न च तद्धितग्रहणसामर्थ्यात्तदंशे नियमाप्रवृत्त्या निर्वाह इति वाच्यम्। नभ्यं वैरङ्गिक इत्यादौ तद्धितसन्नियोगेन विधीयमानादेशरूपस्य प्रकृतिखण्डस्यापि स्वातन्त्र्याभावेन नियमाप्रवृत्त्या तादृशेषु प्रातिपदिकत्वसंपत्तये तद्धितग्रहणस्यावश्यकत्वेन सामर्थ्योपक्षयात्। बहुपटव इत्यादावुत्तरखण्डात्मकप्रकृतिनिष्ठस्वातन्त्र्यमुपादाय नियमेन प्रातिपदिकत्वव्यावृत्त्यापत्तेश्चेति चेत्सत्यम्। समभिव्याहृतस्वनिष्ठप्रत्ययत्वनिरूपकानधीनत्वं स्वातन्त्र्यम्। जन्मवान् बहुपटव इत्यादौ मतुबादेः स्वनिष्ठप्रत्ययत्वनिरूपकप्रकृत्यधीनतामादाय स्वातन्त्र्याभावान्न स्वतन्त्रावयवकसमुदायविषयकस्य प्रकृतनियमस्य प्रसङ्गः। प्रकृत्यनधीनत्वमेव स्वातन्त्र्यमिति तु नोक्तम्। इयान् राजेत्यादौ राजेत्यादेर्यत्किञ्चिन्निरूपितप्रकृतित्वोपहितत्वेन तदधीनतामाश्रित्य तदितरखण्डस्य प्रकृतनियमप्रयोजकस्वातन्त्र्यानुपपत्तेः। किञ्च तत्रैव मतुबादेरुत्पत्तिकालिकस्वनिष्ठप्रत्ययत्वनिरूपकेदम्शब्दाद्यधीनतामादाय स्वातन्त्र्यभङ्ग इति स्वनिष्ठप्रत्ययत्वनिरूपके समभिव्याहृतत्वम्। प्राचार्यस्स्तम्बेरम इत्यादौ तु पूर्वोत्तरखण्डयोर्द्वयोरपि प्रत्ययत्वाभावेन स्वनिष्ठप्रत्ययत्वनिरूपकेतरखण्डानधीनत्वात्स्वातन्त्र्यमविप्रतिपन्नमिति वदन्ति।

यत्तु प्रधानेतरानधीनत्वं स्वातन्त्र्यमिति तदसत्। स्तम्बेरमः कुम्भकार इत्यादौ प्रधानान्तराभावादुत्तरखण्डस्य विशेषणाभावप्रयुक्तविशिष्टाभावविधया

प्राचार्यः कुपुरुष इत्यादौ स्वव्यतिरिक्तप्रधानेतराभावात्पूर्वखण्डस्य विशेष्याभावप्रयुक्तविशिष्टाभावविधया च प्रधानेतराधीनत्वाभावात्मकस्वातन्त्र्यसंपादनेन साजात्योपपादनेऽपि जन्मवान् बहुपटव इत्यादौ मतुबादेरुक्तरीत्या स्वातन्त्र्यसंभवेन प्रकृतनियमबलात्प्रातिपदिकत्वव्यावृत्त्यापत्तेः । अजर्यं संगतमित्यादौ प्रधानेतरनञधीनत्वेन स्वातन्त्र्यानापत्त्या साजात्यभङ्गापत्तेश्च ।

यदपि "विभक्तीतरानधीनत्वमेव स्वातन्त्र्यं स्तम्बेरमकुम्भकारादाविदानीं विभक्तीतराधीनभेदात्मकस्य स्वातन्त्र्यस्याभावेऽपि विनापि प्रत्ययं पूर्वोत्तरपदयोर्लोप इति वार्तिकेन पूर्वपदलोपे स्वातन्त्र्येण प्रयोगार्हतायास्सुवचत्वान्न साजात्यभङ्गः । एतदर्थमेव हि तत्रार्हपदम् । अन्यथा स्वातन्त्र्येण प्रयुज्यमानार्थवत्त्वमित्येव वदेत् । दृश्यते च वेदव्यासादिषूपपदसमासेषु पूर्वपदलोपो यथा व्यास इति, प्रत्ययमात्रस्य तथा क्वचिदपि न प्रयोगार्हत्वमतो जन्मवानित्यादौ नास्ति प्रकृतनियमेन प्रातिपदिकत्वव्यावृत्तिरिति" तदप्ययुक्तम् । लोपस्य प्रसिद्धप्रयोगानुरोधित्वेनासार्वत्रिकत्वात् । अन्यथा राजपुरुष इत्यादावपि तत्प्रसङ्गात् । गतिसमासेषु प्रादीनां प्रत्ययवत्स्वतन्त्रप्रयोगानर्हत्वेन स्वातन्त्र्यस्य व्यभिचरिततया साजात्यभङ्गापत्तेश्च ।

यदपि "किञ्चिदुद्देश्यकोपपदसंज्ञाविधायकशास्त्रविधेयप्रत्यायान्तघटितसमुदायावयवत्वपूर्वोत्तराभावसमानकालिकार्थबोधजनकतावच्छेदकानुपूर्वीमत्त्वैतदन्यतररूपमिह स्वातन्त्र्येण प्रयोगार्हत्वमिति" तदप्ययुक्तम् । देवदत्तः पुत्रीयति राज्ञः पुरुषस्येत्यादौ विभक्तिविनिर्मुक्तोत्तरखण्डघटितसंघातावयवीभूतपुत्रीयपुरुषादेर्निरुक्तान्यतररूपं यत्स्वातन्त्र्येण प्रयोगार्हत्वं तदनवरुद्धत्वेन नियमाप्रवृत्त्या तथाविधसंघातस्य प्रातिपदिकत्वापत्तेर्दुर्वारत्वात् । गतिसंज्ञोपहितानामेवंविधस्य स्वातन्त्र्येण प्रयोगार्हत्वस्य दुरुपपादतया तत्समासेषु स्वातन्त्र्येण प्रयोगार्हार्थवदवयवकसमुदायत्वस्य व्यभिचरिततया साजात्यभङ्गापत्तेश्चेति दिक् ।

केचित्तु प्रत्ययत्वानुपहितसमासप्रवृत्तिप्रयोजकतावच्छेदकधर्मावच्छिन्नावयवकसमुदायावयवत्वमिह स्वातन्त्र्येण प्रयोगार्हत्वं विवक्षितम् । प्राचार्यः स्तम्बेरम

---

१. प्रातिपदिकत्वापत्तेर्दुर्वारत्वादिति ॥ देवदत्तः पुत्रीयतीत्यत्र तिप्रत्ययप्राग्वर्तिनः प्रागुपदर्शितदिशा अर्थवत्त्वाभावेन प्रातिपदिकत्वाप्रसक्तेरिदं चिन्त्यम् ।

इत्यादौ समासप्रवृत्तिप्रयोजकतावच्छेदकीभूतसुबन्तत्वकृदन्तत्वादिरूपतत्तद्धर्मावच्छिन्नावयवकसमुदायावयवत्वं पूर्वोत्तरखण्डयोर्द्वयोरप्युपपन्नमेवेति न साजात्यभङ्गः। देवदत्तः पुत्रीयति राज्ञः पुरुषस्येत्यादौ विभक्तिविनिर्मुक्तोत्तरखण्डघटितसंघातस्यापि निरुक्तधर्मावच्छिन्नावयवकत्वाविशेषात्तदीयोत्तरखण्डात्मकधातुप्रातिपदिकादेरप्युक्तरीत्या स्वातन्त्र्येण प्रयोगार्हतया प्रकृतनियमप्रवृत्तेर्न प्रातिपदिकत्वप्रसङ्गः। अत एव देवदत्तो गार्ग्य इत्येतद्घटके विभक्तिविनिर्मुक्तोत्तरखण्डोपहिते प्रातिपदिकत्वाभावस्य प्रत्ययग्रहणपरिभाषाप्रयोजनत्वोपवर्णनपरमङ्गसंज्ञासूत्रस्थं भाष्यमुपपद्यते। अन्यथा तदीयोत्तरखण्डस्य प्रातिपदिकतया स्वातन्त्र्येण प्रयोगानर्हत्वात्सिद्धान्ते नियमाप्रवृत्तौ प्रातिपदिकत्वस्य दुर्वारत्वात्तदसङ्गतिरेव। एवञ्च समुदायादेकविभक्तावेकशेष इति पक्षे राम राम औ इत्यादौ प्रकृतिभागस्याभीष्टप्रातिपदिकत्वनिवर्तकनियमव्यावृत्तये तत्पूर्वभागस्य स्वातन्त्र्येण प्रयोगार्हत्वाभावोपपादनपरवक्ष्यमाणग्रन्थविरोधोऽपि न संजाघटीति। तादृशसंघातस्य समासप्रवृत्तिप्रयोजकतावच्छेदकीभूतसुबन्तत्वादिरूपतत्तद्धर्मावच्छिन्नावयवकत्वाभावात्। जन्मवान् बहुपटव इत्यादौ मतुबादेस्समासप्रवृत्तिप्रयोजकतावच्छेदकीभूतसुबन्तत्वावच्छिन्नप्रकृत्यवयवकसमुदायावयवत्वात्प्रसक्तं स्वातन्त्र्येण प्रयोगार्हत्वं वारयितुमवयवे प्रत्ययत्वानुपहितत्वनिवेशः। यद्यपि कुगतिप्रादय इत्यत्र सुपेत्यस्य गत्यंशे निवृत्तावपि प्रथमान्तस्य सुबित्यस्यानुवृत्तेरव्याघातात्खाट्कृत्येत्यादौ गतिसंज्ञोपहितस्यानुकरणस्य भेदविवक्षामूलकेन सुबन्तत्वेनैव समासस्य न्याय्यत्वात्प्रत्ययत्वानुपहितसुबन्तत्वावच्छिन्नावयवकसमुदायावयवत्वमेव स्वातन्त्र्येण प्रयोगार्हत्वमित्युक्तावपि न क्षतिस्तथापि पिबतभृज्जता खादतमोदतेत्यादिमयूरव्यंसकादिसमासेषु सुबन्ताभावेन निरुक्तस्य स्वातन्त्र्येण प्रयोगार्हत्वस्य साजात्यसंपादकत्वानुपपत्तिरिति समुदाये समासप्रवृत्तिप्रयोजकतावच्छेदकधर्मावच्छिन्नावयवकत्वनिवेशः। तिङन्तस्याप्याख्यातमाख्यातेन क्रियासातत्य इति मयूरव्यंसकाद्यन्तर्गतसूत्रेण समासविधानात्समासप्रवृत्तिप्रयोजकतावच्छेदकत्वं स्पष्टमेव। यदि तु निरुक्तरीत्या स्वातन्त्र्येण प्रयोगार्हत्वनिर्वचने प्रागुपदर्शिते देवदत्तो गार्ग्येत्यत्र तद्धितान्तत्वप्रयुक्तप्रातिपदिकत्वाभावस्य प्रत्ययग्रहणपरिभाषाप्रयोजनत्वोपपादनपरभाष्यसामरस्याय तदंशे प्रकृतनियमाप्रवृत्तिप्रतिपादनपरप्रकृतसूत्रस्थशेखरग्रन्थविरोधः। तद्घटकस्यापि गार्ग्येत्यस्य निरुक्तस्य स्वातन्त्र्येण प्रयोगार्हत्वस्यानपायात्।

न च तस्यामवस्थायां प्रत्ययग्रहणपरिभाषाया अभावेन समासविषये प्रत्ययान्तत्वेनाप्राप्तप्रातिपदिकसंज्ञाविधानार्थस्य समासग्रहणस्य नियामकत्वायोगात्कथं नियमप्रवृत्तिसंभव इति वाच्यम्। तस्यामप्यवस्थायां देवदत्तमहन् सुन्दरं दधीत्यादिवाक्येषु प्रत्ययलक्षणेन प्रत्ययान्तपर्युदासाप्रवृत्त्या कार्यकालपक्षे पूर्वसूत्रप्राप्तसंज्ञाया निवृत्त्युपायाभावेन चकारबलाल्लक्ष्यानुरोधाद्वा समासग्रहणस्यावृत्त्या नियमोऽवश्यमभ्युपगन्तव्य इत्याशयात्। यत्तु तादृशभाष्यस्य प्रत्ययसामान्यग्रहणे परिभाषाप्रवृत्तिमभ्युपगम्य प्रत्ययविशेषग्रहणे प्रवृत्तौ प्रयोजनप्रतिपादनाभिप्रायेण देवदत्तो गार्ग्येत्येतद्विषयकतद्धितान्तत्वप्रयुक्तप्रातिपदिकत्वाभावस्य तत्प्रयोजनत्वोपपादकतया विनैवावृत्तिं समासग्रहणस्य नियामकत्वसंभव इति शेखरकाराशयमुद्भावयन्ति। तदसत्। तथा सति देवदत्तो गार्ग्येत्यत्र प्रत्ययान्तपर्युदासाप्रसक्त्या पूर्वसूत्रेण प्रातिपदिकसंज्ञाया दुर्वारतया तद्धितान्तत्वेन तदापादनपरभाष्यासंगतेः। ततश्च नेदं प्रागुपदर्शितं स्वातन्त्र्येण प्रयोगार्हत्वनिर्वचनं युक्तमिति मन्यते, तर्हि समासप्रवृत्तिप्रयोजकतानवच्छेदकीभूतप्रत्ययत्वोपहिताद्यन्तावयवकसमुदायातिरिक्ततत्प्रवृत्तिप्रयोजकतावच्छेदकधर्मावच्छिन्नावयवकसमुदायावयवत्वं स्वातन्त्र्येण प्रयोगार्हत्वमिति निष्कर्षः। तद्धितस्य सुप्तिङ्कृतामिव क्वापि समासप्रवृत्तौ निमित्तत्वाभावेन तत्प्रवृत्तिप्रयोजकतानवच्छेदकतया परिभाषाभावदशायां विशिष्टस्यैव देवदत्तो गार्ग्येत्यस्य तद्धितान्ततया तद्घटकस्य गार्ग्येत्यस्य न स्वातन्त्र्येण प्रयोगार्हत्वम्। तदन्तभिन्नसमुदायघटकस्यैव स्वातन्त्र्येण प्रयोगार्हत्वनिष्कर्षात्। सिद्धान्ते तु विशिष्टस्य तद्धितान्तत्वाभावात्। तद्भिन्नसमुदायघटकत्वेन गार्ग्येत्यस्यापि स्वातन्त्र्येण प्रयोगार्हतया नियमप्रवृत्त्या न प्रातिपदिकत्वप्रसङ्गः। बहुज्विषये जन्मवानित्यादौ च दोषवारणाय पर्युदस्यमानकोटावाद्यन्तपदोपादानम्। अतो न कोऽपि दोषः। यदि च प्रकृतोदाहरणविषयकतद्धितान्तत्वप्रयुक्तप्रातिपदिकत्वापादनपरभाष्यस्य सुन्दरं दधि देवदत्तमहन्नित्यादिवाक्यविषयकनियमाभावप्रयोज्यप्रातिपदिकत्वापादनोपलक्षकत्वे तस्यामवस्थायां नियमाभावादेव प्रकृतभाष्यसामञ्जस्यादावृत्तिपूर्वकनियमकल्पनायां मानाभावः। चकारस्त्वनर्थकनिपातानां संज्ञासंपत्त्यर्थ इति स्पष्टमाकरे। न्यायबलादर्थसिद्धौ ग्रन्थान्तरविरोधो

न किञ्चित्कर इति मन्यते, तदा प्रागुक्तमेव युक्तम् ॥ दश दाडिमानीत्यादौ संघाते विशिष्टार्थविषयकबोधजनकत्वाभावादेव प्रातिपदिकत्ववन्नियमस्याप्यप्रवृत्तिरिति सर्वमनवद्यमित्याहुः ॥

नन्वनुकरणेष्वितिशब्दविशिष्टेनैवार्थप्रतीत्या केवलस्यानर्थक्यात्कथं स्वातन्त्र्येण प्रयोगार्हार्थवत्त्वमत आह ॥ गवित्ययमाहेति ॥ अनितिपरस्यापीति ॥ व्यतिरेकव्यभिचारात्केवलस्यैवार्थवत्त्वं, न विशिष्टस्येत्याशयः ॥ तत्त्वमस्त्येवेति ॥

---

१. आहुरिति ॥ परे त्वेवंविधस्वातन्त्र्याङ्गीकारे देवदत्तो गार्ग्येति सङ्घातघटकयोः पूर्वोत्तरखण्डयोर्निरुक्तस्वातन्त्र्येण प्रयोगार्हार्थवत्त्वेन समुदायस्यापि ग्रन्थकारोक्तदिशाऽर्थवत्त्वाच्च नियमेन व्यावृत्तावङ्गसंज्ञासूत्रस्थभाष्यविरोधः। अतस्समासप्रवृत्तिप्रयोजकतावच्छेदकरूपावच्छिन्नत्वमेव स्वातन्त्र्यमिह विवक्षणीयम्। तच्च स्वातन्त्र्यं पूर्वोत्तरभागयोरुभयोरप्यपेक्षितम्। एवञ्च गार्ग्येत्यस्य सुब्विनिर्मुक्तस्य समासप्रवृत्तिप्रयोजकतावच्छेदकीभूतसुबन्तत्वाद्यनाक्रान्तत्वेन स्वातन्त्र्याभावाद्विशिष्टस्य नियम्यकोटावनन्तर्भावेण न भाष्यविरोधः। अस्माकं पुनस्समुदायस्यार्थवत्त्वाभावादपि नियम्यकोटावनन्तर्भाव इति त्वन्यदेतत्। एवञ्च जन्मवानित्यादावुत्तरखण्डस्य निरुक्तस्वातन्त्र्याभावादेव नियम्यकोटावनन्तर्भावसिद्धावत्र स्वातन्त्र्यनिर्वचने तदर्थं समुदायावयवे प्रत्ययत्वानुपहितत्वविशेषणं व्यर्थम्। न चैवं गवित्यादेर्निरुक्तस्वातन्त्र्याभावाद्गवित्ययमाहेति विशिष्टस्य नियम्यकोटावनन्तर्भावेण प्रातिपदिकत्वापत्तिः। तत्र स्वातन्त्र्यप्रतिपादनपरमूलग्रन्थासङ्गतिश्चेति वाच्यम्। गवित्यस्यानितिपरस्य गतित्वेन कुगतिप्रादय इति समासप्रवृत्तिप्रयोजकतावच्छेदकीभूतगतित्वावच्छिन्नत्वेन स्वातन्त्र्यस्याव्याघातात्। एवमुपपदत्वकृदन्तत्वादेरप्युपपदमतिङित्यादिसमासप्रवृत्तिप्रयोजकतावच्छेदकत्वेनोपपदादेर्निरुक्तं स्वातन्त्र्यमस्तीति प्राचार्यैस्तम्बेरम इत्यादौ न साजात्यभङ्गः। देवदत्तेन कृतमित्यादौ चरमसुप्प्राग्वर्तिनो नियम्यकोटावन्तर्भावश्च सिद्धः। एवञ्च समासप्रवृत्तिप्रयोजकतावच्छेदकरूपावच्छिन्नत्वं, देवदत्तो गार्ग्येति समुदायस्यार्थवत्त्वानभ्युपगन्तृमते पूर्वोक्तं समभिव्याहृतस्वनिष्ठप्रत्ययत्वनिरूपकानधीनत्वमपि वा स्वातन्त्र्यं विवक्षणीयम् ॥

वस्तुतस्तु स्वनिष्ठप्रकृतित्वनिरूपकप्रत्ययप्रकृत्यन्यतरसमभिव्याहारानपेक्षया प्रयोगार्हार्थवत्त्वं स्वातन्त्र्येण प्रयोगार्हार्थवत्त्वं विवक्षितम्। तच्च पूर्वोत्तरखण्डयोर्द्वयोरपि विवक्षणीयम्। देवदत्तो गार्ग्येति समुदायस्यार्थवत्त्वाभावादेव न नियमव्यावर्त्यता। अत एव सरूपसूत्रे "स्वातन्त्र्येण प्रयोगार्हत्वेन साजात्येऽपि न दोषः। एतत्पूर्वभागस्य विभक्त्युत्पत्तिमनपेक्ष्य स्वातन्त्र्येण प्रयोगानर्हत्वात्" इति ग्रन्थेन राम राम औ इत्यत्र रामरामेत्यस्य नियमव्यावर्त्यत्वाभावकथनं शब्दरत्नकृतः स्वरसत उपपद्यते। पूर्वोक्तरीतिद्वयाश्रयणे तु विभक्त्युत्पत्तिमनपेक्ष्येत्यक्षरस्वारस्यं भज्येतेत्याहुः।

अवयवगतमर्थवत्त्वं कथञ्चिदर्थोपस्थापकत्वं सादृश्याख्यसंबन्धेनानुकार्योपस्थापकत्वादभेदविवक्षायामप्यर्थवत्त्वं सुवचम् । यद्वा स्वातन्त्र्येण प्रयोगार्हत्वमेवावयवगतमर्थवत्त्वम् । अत एवासूर्यंपश्येत्यादौ पूर्वखण्डस्यासमर्थसमासस्य सुतरामानर्थक्येऽपि न साजात्यभङ्ग इसि बोध्यम् ॥ कर्मत्वेनाप्यन्वय इति ॥ आर्थिकोयमन्वय इति भावः । एतावतैव सामर्थ्येन तत्र कृद्वृत्तिस्समासश्च शास्त्रारम्भबलादिति भावः ॥ ब॰वच्चाच्चेति ॥ नियमलभ्यस्यार्थिकस्यापि निषेधस्य निषेधाश्च बलीयांस इत्यत्र ग्रहणमिति भावः ॥ **विशेषणविशेष्यभावांश इति** ॥ एषां पदानां सामान्ये वर्तमानानां यद्विशेषेऽवस्थानं स वाक्यार्थ इत्यर्थवत्सूत्रे भाष्ये उक्तम् । पूर्ववर्तित्वोत्तरवर्तित्वाभ्यामेव तद्वैशिष्ट्यमिति दुराग्रहेऽपि न निर्वाह इत्याह ॥ **किञ्चेति** ॥ **तदसंबन्धादिति** ॥ तन्मते विशिष्टशक्तेरभावादौपगवप्रभृतीनामप्यर्थवत्ताविरहेण बाधितत्वादिति बोध्यम् । **परिनिष्ठितत्वमिति** ॥ अप्रवृत्तनित्यविध्युद्देश्यतावच्छेदकानाक्रान्तत्वमिह परिनिष्ठितत्वम् । निहते तिङन्तादावव्याप्तिवारणायाप्रवृत्तत्वम् । वैकल्पिकेडागमाद्युद्देश्यतावच्छेदकाक्रान्ते सेद्धेत्यादावव्याप्तिवारणाय नित्यत्वं विधिविशेषणमित्यन्यत्र प्रपञ्चितम् ।

**बहुव्रीहेरूधस इति** ॥ तत्र हि भाष्ये कुण्डोघ्नीत्यत्र नद्यन्ताद्बहुव्रीहेरित्यर्थेन नद्यृत इति कपमापाद्य नद्यन्तप्रकृतिकसुबन्तोत्तरपदकाद्बहुव्रीहेरित्यर्थेन परिहृतः । प्रातिपदिकत्वतद्व्याप्यधर्माणामतिदेशाभावे नद्यन्तस्य बहुव्रीहित्वाभावात्तदसंगतिरेव । ननु धर्मिग्राहकसाजात्यात्प्रातिपदिकविशेषग्रहणे परिभाषा-

---

१. **यद्वा स्वातन्त्र्येणेत्यादि** ॥ इदमयुक्तम् । केचित्त्वित्यादिना "प्रत्ययत्वानुपहितसमासप्रवृत्तिप्रयोजकतावच्छेदकधर्मावच्छिन्नावयवकसमुदायावयवत्वं" खलु स्वातन्त्र्येण प्रयोगार्हत्वं भवता प्रतिपादितम् । तदेव यद्यवयवगतमर्थवत्त्वं,तदा पुलकाम्या पचतितरामित्यादौ काम्या तरामित्यादेः प्रत्ययसमुदायस्य निरुक्तार्थवत्त्वात्ससमुदायस्याप्यर्थवत्त्वेन समासग्रहणकृतनियमेन तादृशानां प्रातिपदिकत्वानापत्तेः । असूर्यंपश्येत्यादौ पूर्वखण्डस्य सुतरामानर्थक्यप्रतिपादनमपि न सम्यक् । तस्य सर्वथाऽनर्थकत्वे तस्यापि समासत्वेन समाससाजात्यादर्थवतस्समुदायस्य नियम्यकोटौ प्रवेश इति कथनस्यासाङ्गत्यापत्तेः । समुदायस्यार्थवत्त्वं तत्र नापेक्ष्यत इति चेद्दश दाडिमानीत्यादिसमुदायस्यापि नियमव्यावर्त्यत्वापत्तावर्थवद्ग्रहणस्य तद्व्यावृत्तिफलकत्वप्रतिपादनपरभाष्यासङ्गतिः । अतोऽसमर्थसमासस्यापि यथाकथञ्चित्कल्पितमर्थवत्त्वं ज्ञापकादङ्गीक्रियत इत्येव युक्तमिति सुधियो विभावयन्तु ॥

प्रवृत्तिरस्तु। सामान्यग्रहणे तत्प्रवृत्तौ किं प्रमाणमत आह ॥ **अत एवेति** ॥ **एकान्तरतापत्तिरिति** ॥ एकपदव्यवधानवत्ताप्रयुक्तकार्यप्रसङ्ग इत्यर्थः। आमः परमेकपदान्तरितं दूरात्संबोध्यमानार्थकमामन्त्रितं नानुदात्तमित्याम एकान्तरमामन्त्रितमनन्तिके इत्यस्यार्थः। अनेनैकश्रुतेरपि सामर्थ्यान्निवृत्तिः। अन्यथा तथा बाधादनुदात्ताप्रवृत्त्या किमनेन सूत्रेण। एवञ्च प्लुतपक्षे प्लुतोदात्तत्वं तदभावे षाष्ठमाद्युदात्तत्वं चात्र प्रसज्येतेति भावः। ननु सामर्थ्यात्सहचरितपरिभाषा बाध्यताम्। भाष्यन्तु निर्युक्तिकत्वादनुपादेयमेवेत्युच्छृङ्खलतया विप्रतिपद्यमानं प्रत्याह ॥ **प्रत्येकमपीत्यादि** ॥ **नियमार्थमिति** ॥ स्त्रीप्रत्ययान्ताच्चेत् ङ्याबन्तादेवेति नियमाकारः। यदि तु ङित्विदन्यतरस्त्रीप्रत्ययान्ताच्चेन्ङ्याबन्तादेवेति विशेषतो नियमस्तदा तिप्रत्ययान्ते न दोषः ॥ **भाष्योक्तरीत्येति** ॥ स्वार्थे परिपूर्णं पदमर्थान्तरेण संबध्यत इति लिङ्गाद्यन्वितस्य सुबन्तार्थस्य बहिर्भूततद्धितप्रतिपाद्यकुत्साद्यर्थसंबन्ध इति हि तत्रत्या रीतिः। इत्थञ्चान्तरङ्गत्वादेव लिङ्गसंबन्धप्रयुक्तयोर्ङ्याॅपोः प्रथमं प्रवृत्तिरिति न तदर्थं प्रकृतनियमोपयोग इत्याशयः ॥ **अत्यन्तस्वार्थिकत्वेनेति** ॥ अन्तं स्वार्थपरिपूर्तेरवसानमतिक्रान्तस्तदनपेक्षोऽत्यन्तस्स चासौ स्वार्थिकश्चेति तथोक्तः। एवञ्च प्रवृत्तिनिमित्तमात्रबोधकत्वमत्यन्तस्वार्थिकत्वं, तद्व्यतिरिक्तप्रकृत्यर्थनिष्ठविशेषबोधकत्वं स्वार्थिकत्वमिति निष्कर्षः। अनुपयुक्तार्थकथनमभ्युच्चयः ॥ **न वक्तव्यमिति** ॥ अन्तरङ्गतरत्वात्कनस्सिद्धान्ते वचनारम्भः।

**ताच्छब्द्यमिति** ॥ उपचारात्तेन शब्देन व्यवहार इति भावः। समासान्तानामुत्तरपदावयवत्वं विरुद्धमित्यन्यथा व्याचष्टे ॥ **अन्वय इत्यादि** ॥ यतोयं समासान्तः, अतः प्रक्रियावाक्यस्यावयवीभूयोत्तरपदस्यानन्तरं प्रवर्तत इति तदर्थ इति भावः ॥ **इत्त्वानापत्तिरिति** ॥ ननु सुब्लुकः पूर्वमेव टापि नायं दोष इत्यत आह ॥ **तत्र विभक्त्यन्त इत्यादि** ॥ **तदन्तेऽसत्त्वादिति** ॥ न च कबन्ते एव तदारोपोऽस्त्विति वाच्यम्। समाससंज्ञाप्रवृत्तये प्रक्रियावाक्ये

---

१. **अत एवेतीति** ॥ सामान्यग्रहणे प्रवृत्तेरेवेति मूलग्रन्थस्य स्थाने अत एवेति क्वाचित्कं पाठमनुसृत्येदम्.

स्वीक्रियमाणस्य तदारोपस्य तदीयोद्देश्यतापर्याप्त्यधिकरण एव न्याय्यत्वात्। अत एवेत्यस्य सुपः परस्तात्प्रवृत्तेरेवेत्यर्थः ॥

**तत्पूर्वभागस्येति** ॥ इदं तु चिन्त्यम्। अन्यपदार्थबोधकसुबन्तसंघातस्वरूपस्य तथाविधसमासीयोद्देश्यतावच्छेदकस्य यदागमन्यायविरोधेन समासान्तविनिर्मुक्ते दुर्वचत्वात्। न्यायानित्यत्वेन तदुपपादनमनुपयुक्तमिति वदन्ति ॥

**आर्यकेत्यस्य साधनेनेति** ॥ ङ्याबन्तात्तद्धितोत्पत्तिर्यथा स्यादिति भाष्यकारोक्तनियमस्यावन्तांशे फलावश्यंभावादिदमभीष्टमिति भावः। **अचः परस्मिन्नित्यत्रेति** ॥ तत्र हि भाष्ये लोकदृष्टान्तेन शास्त्रीयकार्याणामन्तरङ्गबहिरङ्गभावमुपक्रम्य प्रातिपदिकं चाप्युपदिष्टं सामान्यभूतेऽर्थे, सामान्ये वर्तमानस्य व्यक्तिरुपजायते, व्यक्तस्य सतो लिङ्गसंख्याभ्यामन्वितस्य बाह्येनार्थेन योगो भवति। यथैव चानुपूर्व्यार्थानां प्रादुर्भावस्तथैव शब्दानामपि तत्कार्यैर्भवितव्यमित्युक्तमिति भावः। उक्तन्यायविषयस्य बाह्यस्य तद्धितार्थस्याभावात् ङ्याब्ग्रहणनिवृत्तेरिति संबन्धः। **सूत्रशेषे भाष्ये इति** ॥ तत्र हि ङ्याब्ग्रहणं प्रत्याख्याय प्रकृतवचनेन लोहिनिकेत्यस्य सिद्धिमुपपाद्यार्यकेत्यस्य साधनाय न कश्चिद्यत्न आश्रितस्ततोऽस्यानभिधानमेव युक्तम्। पुरस्तान्नियमकोटावाप्ग्रहणन्तु प्रसङ्गोच्चारितं, अत एव तदंशे फलानुपन्यासो भाष्यकृत इति भावः ॥ **घेस्सुपि गुण इति** ॥ घेरित्येव सूत्रमस्तु, मास्तु ङिद्ग्रहणं, सुपीति गुण इति चानुवर्तत इति भावः ॥ **बहिरङ्गतयेति** ॥ लौकिकोयमन्तरङ्गबहिरङ्गभावः ॥ **सहस्रदक्षिणा इति** ॥ दत्तगोसहस्रदक्षिणा इत्यर्थः ॥ **संबोधनसत्त्वेनेति** ॥ संख्यावाचिन एवेदं संबो-

---

१. **वदन्तीति** ॥ अत्रेयं चिन्ता। यदि पूर्वभागस्य समाससंज्ञां यदागमन्यायः प्रतिबध्नीयात्तदा तस्यालौकिकवाक्यस्य कदाचिदपि समाससंज्ञाया अप्रवृत्त्या समासार्थालौकिकवाक्यत्वमेव न स्यात्। अतस्समासान्तत्वोपजीव्यत्वाद्यदा कदा वा समाससंज्ञाऽवश्यमभ्युपेया। सा च संज्ञा कदेत्याकाङ्क्षायां तद्धितान्तत्वनिमित्तकप्रातिपदिकसंज्ञासमकालमेवेत्याशयकोऽयं ग्रन्थः। यदागमन्यायस्तूपजीव्यविरोधादेतादृशविषयेऽनित्यत्वान्न प्रवर्तत इत्येव युक्तः पन्थाः। यद्वा क्वचिदागममात्रे आगमिधर्मवैशिष्ट्याङ्गीकारवदागमसमभिव्याहृते केवले आगमिनि तद्धर्मवैशिष्ट्यमीदृशे विषयेऽभ्युपेयत इति वा वक्तुमुचितमिति। अत्र युक्तमुत्पश्यन्तु सुधियः।

धनमित्युचितम्[1]। सहस्रमृषयः प्रत्येकमेकया कपिलया सहस्रदक्षिणास्संपन्नाः किं पुनस्त्वमेक इति कैमुत्येन स्वारस्यलाभादित्याहुः॥ **गौण्यपीति**॥ दानक्रियागणनप्रयुक्ता हि कपिलगवीनिष्ठा सहस्रसंख्या न तु वास्तवीति भावः।

**एकशेषारम्भफलमिति**॥ तदनारम्भे तन्त्रवशादेकेनानेकार्थबोधसिद्धावपि पाक्षिको द्वन्द्वो दुर्वारस्स्यादिति तन्निवृत्तिरेवासाधारणं फलमिति भावः॥ **अनुप्रयोगविरोधादिति**॥ अस्मादेव हेतोर्मातृमात्रोरेकशेषाप्रवृत्तिरिति वार्तिकारम्भो व्यर्थ इति तदाशयः॥ **अथ मतमिति**॥ प्रातिपदिकैकशेषे प्रतिषेधमारभमाणस्य वार्तिककारस्य विभक्त्यन्तानामेकशेषे मातृभ्यामित्यादावभीष्ट एवैकशेष इत्यर्थः। **ईदृशविरुद्धमिति**॥ एकस्यैव प्रयोगस्य पक्षभेदेन साधुत्वासाधुत्वप्रयुक्तं विरोधमित्यर्थः॥ **उपलक्षणमिति**॥ तेन पथिकवाचकभर्तृभ्रातृभार्यावाचकयोर्मातृशब्दयोरेकशेषप्रतिषेधस्सिद्ध्यति। ननु एकविभक्तौ परतस्सरूपाणामेकशेष इत्यर्थे विभक्तिपरत्वस्यानुपयुक्तत्वेन सामर्थ्यात्सर्वस्यामपि विभक्तौ येषां सारूप्यं तेषामेवैकशेष इत्यर्थस्य सुलभतया मातृभ्यामित्यादावेकशेषाप्रसक्तेः कथमुक्तिसंभवः प्रतिषेधस्येत्यत आह॥ **अयं चेति**॥ प्रातिपदिकानामेकशेष इति पक्षो हि प्रक्रान्तस्स च विभक्त्युत्पत्तेः प्रागपि समर्थयितुं शक्य इत्येकविभक्तावित्यस्यानादरो वार्तिकैकदेशिन इति भावः।

केचित्तु प्रातिपदिकानामेकशेष इति पक्षस्योपष्टम्भकमेवैकविभक्ताविति, कथमन्यथा द्वन्द्वे प्रसक्ते विधीयमानस्य सुबन्तेषु प्रवृत्तियोग्यस्य प्रातिपदिकेषु प्रवृत्तिः स्यात्तस्माद्यत्र विभक्तौ सारूप्यं तत्रैकशेष इति प्रत्यासत्तिमभ्युपेत्य वार्तिकारम्भ इत्याहुः[2]॥

---

१. **उचितमिति**॥ मूलोक्तप्रधानार्थकत्वेऽप्यृषिसहस्रेऽन्यतमस्य प्राधान्यस्य दुर्निरूपतया तादृशस्यापि सहस्रदक्षिणत्वसम्पत्तौ प्रधानभूतस्य तव सहस्रदक्षिणत्वसम्पत्तिः कैमुतिकन्यायसिद्धा। यद्यन्यतमस्य तत्र प्रधानत्वं प्रमितं तदा तस्यैव सम्बोधनेन प्रधानस्य तव सा कैमुतिकन्यायसिद्धेति स्वारस्यलाभेन मूलोक्तव्याख्यापरित्यागेनान्यथा व्याख्यानकरणमनुचितम्। मूलोक्तव्याख्याने सम्बोधनविभक्तिरपि स्वरसत उपपद्यत इत्यपरमनुकूलम्। संख्यार्थकत्वे त्यदादीनामुत्सर्गतः सम्बोधनविभक्त्यभावेन क्वाचित्कतत्प्रयोगाश्रयणे स्वारस्यभङ्गः स्पष्ट एवेति बोध्यम्।

२. **आहुरिति**॥ इदमयुक्तम्। एकविभक्ताविति पदस्यालोपष्टम्भकत्वा-

प्रतिषेधवार्तिकस्योपलक्षणत्वे प्रमाणमाह ॥ **अत एवेति** ॥ अन्यथा प्रत्याख्यानस्यारम्भसमफलकता न सिद्ध्येत् । न च सहविवक्षायामुपदर्शितार्थयोर्मातृशब्दयोरनभिधानमिति वाच्यम् । जननीपरिच्छेतृवाचकयोर्मातृशब्दयोरपि तुल्यतया वार्तिकारम्भवैफल्यात् । अतस्तस्योपलक्षणत्वमेव युक्तमिति भावः ॥ **तदभावस्येति** ॥ अस्य प्रतिषेधारम्भे इत्यादिः । इत्थञ्च प्रत्याख्यानेऽपि फलैक्याय तदभाव एवोचित इति भावः ॥ **अनवकाश इति** ॥ एकशेषस्य सहविवक्षाविषयत्वे तद्विषयसरूपासरूपसाधारणद्वन्द्वापेक्षया सरूपमात्रविषयकस्य तस्यानवकाशत्वं युज्यते, न त्वन्यथेत्याशयः ॥ **एकरूपेणेत्यादि** ॥ तथाविधान्वयबोधप्रयोजकसाहित्यविषयिणी वक्तुरिच्छा सहविवक्षा । साहित्यं च पृथगर्थेषु व्यासज्यवृत्तिस्समुदायादविलक्षणो धर्मः । तस्यैकशेषेतरेतरयोगद्वन्द्वयोः प्रकारतया भानमावश्यकम् । अत एव रामौ रामकृष्णावित्यादौ विभक्तिवाच्यद्वित्वादेः प्रकृत्यर्थान्वयः । अन्यथा प्रकृत्यर्थतावच्छेदकव्याप्यत्वविशिष्टपर्याप्तिसंबन्धेनान्वयनियमात्तथाभूतसंख्यायाः प्रकृते तदनापत्तिः । नियमानभ्युपगमे च प्रत्येकं द्वित्वादितात्पर्येणापि धवखदिरावित्याद्यापत्तिः । रामलक्ष्मणौ गच्छत इत्यादौ सुब्विभक्तिवाच्यसंख्याया अविवक्षितत्वेऽपि तिङ्वाच्यायास्तस्या अन्वयितावच्छेदकलाभाय च तद्भानं, पुष्पवत्पदेऽप्येवम् । कोशबलात्साहित्यविशिष्टयोरेव सूर्याचन्द्रमसोस्तत्पदीयशक्तिनिर्णयात् । वृषाकपिशब्दे तु न तथा । ततो हरविष्ण्वन्यतरमात्रविषयकबोधस्याप्यानुभविकत्वात् । एवञ्च रामौ पश्येत्यादौ साहित्यावच्छिन्नद्वित्वविशिष्टभार्गवदाशरथिकर्मकं दर्शनमित्यादिक्रमेण बोध इति प्राञ्चः ।

नव्यास्तु चार्थे द्वन्द्व इत्यनेन समूहात्मकचार्थप्राधान्य एव द्वन्द्वसमासस्य साधुत्वं बोध्यते । अनेकमन्यपदार्थे इत्यनेन अन्यपदार्थप्राधान्ये यथा बहुव्रीहिस्तद्वत् । अत एव गोस्त्रियोरिति सूत्रे भाष्ये कुक्कुटमयूर्यावित्यादौ द्वन्द्वे ह्रस्वप्रति-

---

भावात् । तत्त्वे चैकविभक्तौ परतः सरूपाणामेकशेष इति पक्षादस्य पक्षस्याविशेषेण भाष्ये पृथग्पक्षत्वकथनासङ्गतेः । अत्र पक्षे सहविवक्षाविषयत्वस्य परममूलेऽन्यथैवोपपादनेन द्वन्द्वे इत्यनुवृत्तेरनपेक्षणात् । तदनुवृत्तावपि वा द्वन्द्वे प्रसङ्क्ष्यमाण इति व्याख्यानेनापि सहविवक्षाविषयत्वं सम्पादयितुं शक्यम् । एवञ्चास्य पक्षस्यैकविभक्ताविति पदाभाव एवोपपत्तिरिति युक्तमिति बोध्यम् ।

षेध आरब्धः। कैयटेन च समासार्थसमुदायं प्रत्यवयवार्थस्याप्राधान्यादनेकमित्यस्यानुवृत्तेश्चोपसर्जनतया ह्रस्वप्राप्तिरित्युक्तम्। तत्र तिरोहितावयवभेदःसमुदायस्समाहारद्वन्द्वार्थः। उद्भूतावयवभेदोऽवयवानतिरिक्त इतरेतरयोगद्वन्द्वैकशेषयोः॥ अत्र समुदायत्वञ्च सकलावयवात्मकसमुदायपर्याप्तं प्रकृत्यर्थतावच्छेदकमिति न विभक्तिवाच्यद्वित्वाद्यन्वयविरोधः। समासान्तविधायके समाहारशब्देन तिरोहितावयवभेदस्यावयवातिरिक्तस्य समुदायस्य ग्रहणम्, अथवा तत्रैव समाहारशब्दस्य शक्तिः। इतरेतरयोगशब्दस्य तूद्भूतावयवभेदे तस्मिन्। अतो नेतरेतरयोगद्वन्द्वाट्टच्प्रसङ्गः। एवञ्च रामौ रामकृष्णावित्यादौ समुदायविशेष्यक एव बोधः। किञ्चैकशेषे लुप्तपदार्थानामवशिष्टपदीयशक्यतावच्छेदकानाक्रान्तानामपि तदारोपेण तत्पदवृत्त्यैव बोध इत्येकशेषसूत्रप्रत्याख्यानभाष्यस्वरस इत्याहुः॥

तदेतत्सकलमभिप्रेत्याह॥ **पुष्पवत्पदे इवेति**॥ इदमव्युत्पन्नमदन्तं तकारान्तं वेति कोशव्याख्यातारः॥ **उद्भूतावयवभेदविवक्षयेति**॥ तिरोहितावयवभेदसमूहगतद्वित्वबहुत्वान्यतरबुबोधयिषा हि सर्वशब्दस्यैकशेषविषयत्वे हेतुरित्याशयः॥ **द्वन्द्वोच्छेद इति**॥ ननु मास्तु द्वन्द्वविधौ सुबित्यस्य संबन्धः। ततश्च द्वन्द्वैकशेषयोः बाध्यबाधकभावोऽपि युक्तमुपपद्यते तत्राह॥ **नलोपाद्यनापत्तिरिति**॥ पूर्वपदे इति शेषः॥ **अनुमानादिति**॥ तद्बीजमविशेषेण वार्तिकप्रवृत्तिरिति बोध्यम्॥ **समुदायादिति**॥ क्षीरनीरवाचकयोः पयश्शब्दयोस्संघातादुभयगतविरुद्धकर्तृत्वकर्मत्वरूपशक्तिद्वयाभिलापकैकविभक्तेरसंभव इत्याशयः। नन्वेकग्रहणस्य भाष्याननुगृहीतत्वात्प्रत्येकं प्रवृत्तया विभक्त्या तत्परत्वमाश्रित्यैकशेषो दुर्वार इति चेन्न। समुदायादेकविक्ताविति पक्षे निरुक्तरीत्या तदापादनायोगात्। किञ्च तत्राप्युपयोगो विभक्तिपरत्वस्यास्त्येवेत्याह॥ **लुका लुप्तत्वाच्चेति**॥ एककारकावेश इत्यस्य तच्छक्त्यावेश इत्यर्थः॥ **अत्रापि लुकीति**॥ ननु पयश्शब्दसमुदायादुभयविधकर्मगतद्वित्वाभिधानाय द्विवचनस्य न्याय्यतया कथं तस्य लुक्प्रवृत्तिः, एकवचनस्यैव नपुंसकलुग्विषयत्वादिति चेत्सत्यम्। प्रकृत्यर्थतावच्छेदकीभूतक्षीरत्वनीरत्वान्यतरव्याप्यताविरोधेन द्वित्वस्यानन्वयादेकत्वाभिधायकवचनमेव प्रवर्तत इत्याशयमुद्भावयन्ति॥ **समुदायादेकविभक्तेरिति**॥ देवदेव इति समासप्रकृतिकविभक्तेरित्यर्थः। असहवि-

वक्षाविषयस्य तन्त्रस्यापि नात्र प्रसक्तिः। गिलगिले चेत्यादिनिर्देशस्वारस्येन तथाभूतस्य तन्त्रस्योच्चार्यमाणविभक्त्यन्तसारूप्यनिबन्धनत्वौचित्यात्। विभक्त्यन्तस्य देव इत्यस्य हि न देवेति देवानामिति वा सरूपमिति भावः॥ **दीर्घश्रवणं स्यादिति** ॥ अयमिन्नन्तत्वप्रयुक्तस्सौ चेति दीर्घः। अकृतपरिभाषावदन्तरङ्गानपीति न्यायोऽपि समर्थाधिकारेण बाध्यत इत्यभिमानः। यदि तु शब्दस्वरूपपरादश्विनशब्दान्नपुंसकान्मत्वर्थीय इत्युच्यते, तदा नास्ति दीर्घस्य प्रसक्तिरिति बोध्यम्॥ **शास्त्रीयविधित्वाभावादिति** ॥ स्वरे निषेधारम्भाच्चाशास्त्रीयकार्यस्य प्रवृत्तिनिवृत्त्यन्यतरप्रयोजकस्याशास्त्रीयस्यापि धर्मस्यातिदेशोऽभ्युपगम्यते। यदा यातिरित्यत्र पूर्वखण्डीयाकारलोपनिवर्तकं तदुत्तरखण्डीयाकारलोपे स्थानिवद्भावकृतं व्यवधायकत्वं, न त्वशास्त्रीये कार्ये तत्प्रवृत्तिरित्याशयः॥ **अनयापि रीत्येति** ॥ अपिरवधारणे, अशास्त्रीयकार्यत्वेनैवेत्यर्थः। उभयत आश्रयणे नान्तादिवदिति त्वयुक्तम्। पूर्वान्तवत्त्वपरादिवत्त्वयोर्यौगपद्येन स्वीकारेऽपि पौर्वापर्यलक्षणस्य व्यपवर्गस्याशास्त्रीयतया शास्त्रेणातिदेष्टुमशक्यत्वान्निषेधानुपपत्तेः। अत एव ह्युपसर्गस्यायताविति सूत्रे भाष्ये प्लायत इत्यादावयतिपरस्योपसर्गस्य यो रेफस्तस्य लत्वमित्यर्थे सवर्णदीर्घोत्तरमुभयत आश्रयणेऽपि व्यपवर्गदौर्लभ्येन लत्वाप्राप्तिमुद्भाव्याचः परस्मिन्निति स्थानिवद्भावाद्व्यपवर्ग इत्युक्तम्। किञ्चैकादेशस्थानिभूतपूर्वपरघटितसंघातयोर्व्यपवर्गो यत्र नाश्रीयते, इष्यत एव तत्रोभयत आश्रयणम्। यथा हे ज्ञानेत्यादौ ह्रस्वान्ताङ्गात्परस्य संबुद्ध्यवयवहलो लोपे पूर्वान्तत्वेनाङ्गत्वस्य परादित्वेन संबुद्धित्वस्य च लाभार्थम्। अपि च द्वयोरेकः प्रेष्यो भवतीत्यादिलोकदृष्टान्तमूलकेनानेन न्यायेन शास्त्रबाधोऽप्यनुचित एवेत्यन्यत्र विस्तरः॥ **भाष्यप्रामाण्यादिति** ॥ तत्र हि छिन्नपुच्छश्वदृष्टान्तसिद्धस्यास्य न्यायस्य प्राग्दीव्यत इति विकृतनिर्देशः प्रकृतशास्त्रेऽप्याश्रयणे प्रमाणमित्युक्तम्। तेन दीव्यतीति सूत्रस्थस्यार्थनिर्देशस्यैकदेशभूतो दीव्यच्छब्द ऐच्छिकेन लोपेनानुकृतो, न तु स्थानषष्ठीप्रयुक्तेन। तथाविधस्यानुकरणन्त्वर्थस्यावधित्वे साजात्यादर्थानामेवावधिमत्त्वलाभादर्थनिर्देशघटितेषु तस्यापत्यमित्यादिष्वेवाण्प्रत्ययाधिकारो यथा स्यान्नान्यत्र। अन्यथा ह्यत इञित्यादावपि तत्प्रवृत्त्या विकल्पप्रसङ्ग इति स्पष्टं भाष्ये। इत्थञ्चाशास्त्रीयस्यापि विकारस्य न्यायविषयत्वं सिद्धमिति भावः॥ **अशास्त्रीयस्येति** ॥ अतिदेशस्य लौकिकतया शास्त्रीयस्यैवेति प्रत्यासत्तेर्दुर्वचत्वा-

दित्याशयः ॥ पदत्वसिद्धिरिति ॥ अत्र कार्यकालपक्षे इति शेषः। यथोद्देशे सन्धिकार्यात्पूर्वं प्रवृत्तया संज्ञया निर्वाहात्। न चाकडारीयसंज्ञासु यथोद्देश एवेति सिद्धान्तव्याहतिरिति वाच्यम्। यत्र भपदसंज्ञादीनां यौगपद्येन प्रवृत्तौ विरोधस्तत्रैव तादृशसिद्धान्तः। प्रकृते तु न तथा भसंज्ञाया अप्राप्त्या विरोधाभाव इत्याशयात्। (ननु सादृश्यमूलकात्प्रत्यभिज्ञानाद्विकृतेष्वविकृतधर्माध्यास इति प्रकृतन्यायस्य प्रतिपाद्यांशः। मान्ते च तथाविधप्रत्यभिज्ञाहेतोः प्रत्ययपूर्वत्वस्य दुर्लभतया कथं प्रकृतित्वम्। अनेनैव न्यायेन परत्र प्रत्ययत्वमपीत्ययुक्तमेव, विशिष्टविकारे तदयोगात्। न च परादिवद्भावेन तत्त्वमिति वाच्यम्। अशास्त्रीयप्रकृतन्यायगम्यप्रकृतित्वोपपादकतया तदप्रवृत्तेरत आह ॥ विकारे-विशिष्टे इति ॥ विशिष्टे प्रत्ययान्तत्वप्रत्यभिज्ञाने तदीयपूर्वोत्तरखण्डयोः प्रकृतित्वप्रत्ययत्वप्रत्यभिज्ञा सुलभेति भावः) ॥ श्रायसावीति ॥ श्रेयस इमौ श्रायसौ देविकादिसूत्रेणाकारः। यथा तत्र सान्तस्याङ्गत्वमवशिष्टस्य सर्वनामस्थानत्वं तद्वदिहापीत्याशयः ॥ तत्साधने त्विति ॥ विभक्त्युत्पत्तिप्राक्कालिकमेव वैरूप्यमाश्रीयत इत्यत्र न मानमिति बोध्यम् ॥ युगपदधिकरणानामित्यादि ॥ अयं पक्षश्चार्थे द्वन्द्व इति सूत्रे भाष्ये। तत्र हि चार्थे प्रतीयमाने द्वन्द्व इत्यर्थे गामश्वं पुरुषं पशुं, इन्द्रस्त्वष्टा वरुणो वायुरादित्यः। एवमादावपि चार्थसंप्रत्ययादनिष्टप्रसङ्ग इत्यापाद्य सिद्धं तु युगपदधिकरणे द्वन्द्ववचनादित्युक्तम्। अवयवसुबन्तैः प्रत्येकं स्वसमभिव्याहृतसकलावयवप्रतिपाद्यसमुदायात्मके द्रव्ये प्रतिपादनीये द्वन्द्वो वक्तव्य इति तदर्थः। गामश्वमित्यादौ च स्वार्थमात्रवर्तिनो गवादयश्शब्दाः। न तु स्वार्थविशिष्टसमुदायवर्तिनो, यत एकवचनमेव श्रूयते, ततो न द्वन्द्वः ॥ तत्कल्पनादिति ॥ अलौकिक एव तत्कल्पनं न तु लौकिके। अन्यथा द्वन्द्वैकशेषयोर्लौकिकविग्रहवाक्येष्वेकवचनान्तप्रयोगस्याभीष्टस्य प्रवेशानापत्तेः ॥ प्राक्कालिकस्यैवेति ॥ पुंवद्भावशास्त्रे सामानाधिकरण्यमप्येवंभूतमेव। तेन पट्वीमृद्व्यावित्यादौ पूर्वपदस्य पुंवत्त्वाभावोऽपि सिद्धः ॥ मानाभाव इति ॥ अकृतव्यूहपरिभाषा त्वनित्या नास्त्येव वेति तत्त्वम् ॥ दृश्यत इति ॥ शक्ति-

---

१. विकारविशिष्टे इतीति ॥ तस्य पदत्वसिद्धिरित्यनन्तरं "विकारविशिष्टे प्रत्ययान्तत्वस्यैव प्रत्यभिज्ञानेन तत्पूर्वभागे प्रकृतित्वप्रत्यभिज्ञसम्भवात्" इति क्वाचित्कं शब्दरत्नपाठमनुसृत्याय ग्रन्थः। इदानीन्तनपुस्तकेष्वयं पाठो न दृश्यते ॥

ग्राहकशिरोमणेर्व्यवहारस्यादर्शनात्कथं प्लक्षन्यग्रोधावित्यादौ प्रत्येकमनेकवाचकत्वम् । अतो दुर्ज्ञेयत्वाद्दुःखकरी युगपदधिकरणवचनता । दुःखाशब्दश्च सुखदुःखतत्क्रियायामिति ण्यन्तात्पचाद्यचि द्रष्टव्यः । दुरुपपादेत्यत्र दुष्ट उपपादो यस्या इति बहुव्रीहिः । निष्प्रमाणोपपादनेति तदर्थः ॥ **समासस्येति** ॥ इतरेतरयोगद्वन्द्वसमासोत्तरमारोपितावयवसंख्याकसमूहात्मकसमासार्थसमवेतद्वित्वाद्यभिधायकमेव द्विवचनादिकमुत्पद्यत इति न तदर्थं युगपदधिकरणताया उपयोग इत्याशयः ॥ **एतदुपपादिकेति** ॥ न च द्यावाचिदस्मै पृथिवीत्यादावसमासे द्विवचनप्रवृत्तिरेतदुपपादिकेति वाच्यम् । असमासे लोके धवौ खदिरावित्यादितथाविधप्रयोगवारणाय वृत्तिविषयतायास्तस्या आवश्यकत्वेन छान्दसत्वादेव तत्र निर्वाह इति प्रकृतानुपयोगात् । भाष्येऽपि चेन कृतोऽर्थश्चार्थ इति व्युत्पत्तिमवलम्ब्य यत्र चशब्देन साहित्यं प्रतीयते तत्रैव द्वन्द्वो नान्यत्र गामश्वमित्यादौ, अहरहर्नयमान इतीन्द्रस्त्वष्टेत्यादौ लोकपाला इति चपदमहिम्ना तत्प्रतीयते, न तु चशब्देनेति नात्र द्वन्द्वप्रसक्तिरित्युपेक्षितोऽयं पक्षः ॥ **वैयर्थ्यापत्तेरिति** ॥ नन्वेकशेषानारम्भे द्वन्द्वप्रवृत्त्यापत्तिरत एकशेषविषये युगपदधिकरणवचनतायां न तद्वैयर्थ्यमत आह ॥ **भैक्षासिद्धिरिति** ॥ ननु तावेव सुप्तिङौ यौ ततः परौ, सैव च प्रकृतिराद्या, आदिग्रहणं च कृतम् । समुदायपदत्वमेतेनेति सर्वस्य द्वे इति सूत्रभाष्योक्तरीत्या भिक्षाशब्दप्रकृतिकामन्तत्रयस्य षष्ठ्यन्ततायास्सुवचतया विशिष्टात्सामूहिके तद्धिते कुतो भैक्षासिद्धिरित्येवं विप्रतिपद्यमानं प्रत्याह ॥ **भिक्षा आमित्यादि** ॥ **प्रातिपदिकत्वपर्याप्त्यधिकरणेति** ॥ तत्प्रकृतिकसुबन्ताभावादिति तदर्थः ।

अयं भावः । तद्धितविधौ प्रातिपदिकाधिकारात्प्रातिपदिकादेव परत्वेन विधीयन्ते तद्धिताः । ते च घकालतनेष्विति ज्ञापकात्सुब्व्यवधाने प्रवर्तन्ते ।

---

१. **भैक्षासिद्धिरित्यादीति** ॥ न दोष इति शब्दरत्नग्रन्थानन्तरं "अत्रापि पक्षे भैक्षासिद्धिरेव । भिक्षा + आमित्यतः समुदायादण् । यद्यपि प्रातिपदिकत्वपर्याप्त्यधिकरणसुबन्ताभावान्न प्राप्नोति, तथापि तदवयवादेकस्मात्तस्य दुर्वारत्वेन तत्र कृते परत्वादादिवृद्धौ वैरूप्यादेकशेषाप्रवृत्तेर्विरूपाणामपीत्यनेन तत्सिद्धावपि विनिगमनाविरहात्प्रत्येकमणप्रत्यये कदाचित्पूर्वयोर्निवृत्तावणत्रयश्रवणापत्तिरिति दिक्" इत्येवमधिकः पाठः क्वचिद्दृश्यते । तन्मूलकोऽयं ग्रन्थः । इदानीन्तनपुस्तकेष्वयं न दृश्यते ॥

प्रातिपदिकपदं प्रातिपदिकत्वपर्याप्त्यधिकरणपरम्। ततश्च भिक्षादिरूपसमर्थप्रातिपदिकत्वपर्याप्त्यधिकरणात्समूहे षष्ठीमात्रव्यवहितोऽण्प्रत्यय इत्यर्थे भिक्षाशब्दप्रकृतिकषष्ठ्यन्तघटकस्य चरमषष्ठीप्राग्वर्तिनो भिक्षाशब्दान्तस्य तथात्वाभावाद्विशिष्टात्सामूहिकप्रत्ययाभावः। अत एव देवस्य देवस्य भक्त इति वीप्साद्विरुक्तिविषये वाक्यमेव, न कदाचिच्छैषिकः। पौनःपुन्यमित्यादौ च गणपाठादेव प्रत्यय इति ॥

प्रत्येकमित्यादेः प्रत्येकमुत्पत्तावण्प्रत्यये सतीत्यर्थः॥ **पूर्वयोर्निवृत्ताविति॥** परनिवृत्तावतो गुण इति त्रयाणां पररूपे नास्ति विशेषः। पूर्वनिवृत्तौ तु पररूपेऽपि भैक्षशब्दात्पूर्वमकारश्रवणप्रसक्त्या दोष इत्याशयः। यदि चावशिष्टयोरणोर्व्यपदेशिवद्भावेन तद्धितान्तत्वाद्भिक्षासमूहवाचकत्वेनार्थवत्त्वाच्च प्रातिपदिकत्वेन सुबुत्पत्तावतो गुण इत्यस्याप्रवृत्तिरित्युच्यते, तदा पूर्वत्रावशेषे परत्र वा तुल्य एव दोषः। पूर्वपरोभयनिमित्तकात्पररूपात्सुबुत्पत्तेरन्तरङ्गत्वमक्षतम्। वस्तुतस्तत्र विरूपाणामपीत्येकशेषे कदाचिदमित्यस्यैव भैक्षार्थे प्रयोगापत्तिर्दोष इति बोध्यम्॥

केचित्तु यस्मिन्नर्थे सकृदेकस्मात्प्रत्ययः प्रवृत्तस्तत्रैवार्थे तस्मात्पुनस्तदुत्पत्तावुक्तार्थानामिति न्यायविरोधः। अतो विनिगमनाविरहेण पर्यायतः प्रकृते तदुत्पत्तिः प्रसज्येतेति युक्तमापादयितुम्। किञ्चैकशेषविषये सर्वेषामपि प्रत्येकं सर्वार्थवाचकत्वम्। तदीयप्रक्रियावाक्ये परस्परसमभिव्याहारोत्तरमेव, न तु ततः प्राक्। कल्पकाभावादेकवचनविलयापत्तेश्च। ततश्चान्तरङ्गत्वेन प्रथमप्रवृत्तैकवचनविशिष्टसमूहस्यैव तद्विषयतया समूहिपर्याप्तसंख्याभिधायकविभक्तिव्यवधानेन विधीयमानस्य तद्धितस्य तदा प्राप्तिविरहादेकशेषोत्तरमेकवचनात्पूर्वं बहुवचने तद्धितोत्पत्त्या भैक्षसिद्धावपि तदुत्तरं भिक्षाशब्दप्रकृतिकस्य प्रथमप्रवृत्तस्यैकवचनस्य श्रवणापत्तिरित्येव दोष इत्याहुः[1]॥

---

१. आहुरिति॥ परे तु पदस्य विभज्यान्वाख्यानेऽण्प्रत्ययप्रकृतेर्विभक्तव्यतया तस्या अनेकभिक्षार्थत्वानुरोधेनैकशेषनिष्पन्नत्वाभ्युपगमात्तदीयप्रक्रियावाक्यस्थस्य परस्परसमभिव्याहारानपायात्तदानीं प्रत्येकं सर्वार्थवाचकत्वेन बहुवचनस्यैव प्रत्येकमुत्पत्त्या तत्र भिक्षाशब्दप्रकृतिकप्रथमप्रवृत्तैकवचनस्यैवाभावेन कथं तच्छ्रवणापादनं युज्यते। अतो मूलोक्त एव दोषः सुस्थ इति विभावयन्त्वित्याहुः॥

इत्थं विभक्त्यन्तानामेकशेषः प्रातिपदिकानां वा विभक्तौ परत इति पक्षद्वयस्यापि निराकृतत्वाद्विभक्त्युत्पत्तेः पूर्वमनैमित्तिकः प्रातिपदिकानामेकशेष इति पक्षःस्थितः ॥ **ब्राह्मणशब्देनेवेति** ॥ इवशब्दघटित एव पाठो नत्वेवकारघटितः । विरोधादवधारणस्येति भावः । दृष्टान्तस्य व्यक्तिपक्षे तन्त्रैकशरणतां स्फुटयति ॥ **न हीत्यादि** ॥ तावद्ब्राह्मणेत्यत्र तावच्छब्दस्साकल्ये ॥ **आर्षमिति** ॥ अयमुपायस्तन्त्रपक्षे । तत्पक्षे ह्युपस्थितानेकव्यक्तिसमवेतसंख्यानुरोधिनी विभक्तिः । जातिपक्षे तु जात्याख्यायामित्येकवचनमपि साध्वेवेति द्रष्टव्यम् । ननु सकृदुच्चरितश्शब्दस्सकृदेवार्थं गमयतीति सकलतन्त्रसम्मतो न्यायः । तदुक्तं भाष्ये । प्रत्यर्थं शब्दाभिनिवेश इति । एकैकमर्थं बोधयितुमेकैकस्य शब्दस्य प्रयोग इति तदर्थः । ततश्च कथमेकशेषारम्भमन्तरेणैकेन शब्देनानेकेषामर्थानां प्रत्ययः स्यादत आह ॥ **अयं भाव इति** ॥ एवञ्च सकृदुच्चारितानामप्यनेकार्थप्रत्यायनशक्तिः स्वाभाविकी, न तु शास्त्रैकसाध्येति तन्त्रव्यवहारोपपत्तावनर्थक एवैकशेषारम्भः । सकृदुच्चरितन्यायस्य त्वेकवारमुच्चारितशब्द एकमनेकं वा स्वार्थमेकवारमेव बोधयतीत्यर्थः । एकमर्थं बोधयतीत्यर्थे तु सकृच्छब्दस्यैकस्य सकृच्चेति क्रियाभ्यावृत्तिगणने व्युत्पादितस्य साधुत्वानापत्तिः । अन्तरेणाप्येकशेषं पुष्पवन्तावित्यादौ युगपदनेकार्थोपस्थितिः प्रसिद्धैवेति सर्वमुपपद्यत इति द्रष्टव्यम् ॥

**अर्थतन्त्रमिति** ॥ अत्र प्राञ्चः । अनेकेषां शब्दानामेकत्वानुसन्धानं तन्त्रम् । तस्य सकृदुच्चारणप्रयुक्तत्वात्सकृदुच्चारणमेव तन्त्रमित्यौपचारिको व्यवहारः । अन्यथा तन्त्रेणोच्चारितमित्यादावन्वयानुपपत्तेः । तच्च द्विधा, शब्दतन्त्रमर्थतन्त्रं चेति । अर्थभेदाच्च शब्दभेद इति मते रूपसादृश्यादपह्नुतभेदानामनेकेषां शब्दानां सकृदेव कण्ठताल्वोष्ठपुटव्यापारेण प्रकाशनाच्छब्दतन्त्रम् । अर्थभेदेऽपि शब्दैक्यमिति मते तु सकृदुच्चारणेनाभिव्यक्तेनैकेनैव शब्देनैकनालावलम्बितानेकफलवदनेकेषामर्थानामेकदा संप्रत्ययादर्थतन्त्रम् । स चायं तन्त्रव्यवहारस्सहविवक्षाविषयोऽसहविवक्षाविषयश्च । ब्राह्मणान्भोजय घटान्पश्येत्यादावाद्यः । तत्र ब्राह्मणादिपदप्रतिपाद्यानामनेकव्यक्तीनामेकधर्मावच्छेदेन समभिव्याहृतभोजनादिरूपैकक्रियान्वयात् । इदञ्च तन्त्रं प्रातिपदिकानामेव । अत एव तन्त्रानु-

सन्धीयमानानेकार्थव्यक्त्यनुगतसंख्यानुरोधिनी विभक्तिः। अक्षा भज्यन्तां भुज्यन्तां दीव्यन्तामित्यादौ द्वितीयः। तत्र रथाङ्गविभीतकदेवनसाधनानामक्षपदप्रतिपाद्यानां भिन्नधर्मावच्छेदेन नानाक्रियान्वयात्। इदं च तन्त्रं विभक्त्यन्तानामेव। अत्र सर्वत्र बोद्धुरावृत्त्यैव बोधः। आवृत्तिश्च तत्तदर्थानुरोधेन पृथगनुसन्धानम्। तयैव हि बोद्धुस्तदर्थानुभव इति वदन्ति॥ तदसत्। उक्तरीत्या शब्दार्थतन्त्रयोर्व्यवस्थापने घटान्पश्येत्यादौ शब्दतन्त्रस्याक्षा भज्यन्तामित्यादावर्थतन्त्रस्य चानिष्टस्य प्रसङ्गात्। न हि घटान्पश्येत्यादावनेकव्यक्तिबोधने पृथक् शब्दानुसन्धानं जात्वपि कस्य चिदनुभवसिद्धम्। न वा अक्षा भज्यन्तामित्यादौ विजातीयानेकव्यक्तिबोधने तदभावः। येन तत्रेष्टापत्तिः स्यात्। तस्मादिह शब्दानां पर्यायपरिवृत्तिसहत्वेऽर्थतन्त्रमन्यत्रान्यदिति व्यवस्थापयितुं युक्तम्। पर्यायपरिवृत्तिसहत्वञ्च स्वप्रतिपाद्ययावदर्थाभिधायकपर्यायशब्दवत्त्वम्। घटान्पश्येत्यादावर्थतन्त्रम्। तत्र घटादिपदवाच्ययावदर्थाभिधायककलशादिरूपपर्यायप्रसिद्धेः। अक्षा भज्यन्तामित्यादौ च रथाङ्गविभीतकदेवनसाधनादिरूपानेकविजातीयपदार्थवाचकस्य पर्यायान्तरस्याप्रसिद्ध्या शब्दतन्त्रमेव। एवमक्षान्पश्येत्यादावपि। किञ्च बोद्धुरावृत्तिरपि न सर्वत्र, किन्त्वसहविवक्षाविषये विभक्त्यन्त एव। तत्र नानाक्रियान्वयानुरोधेन पृथगुपस्थितये प्रत्येकं शब्दानुसन्धानस्यावश्यकत्वात्। सहविवक्षाविषये तु प्रातिपदिकतन्त्रे सकृदुपस्थितानामनेकेषामप्यर्थानामेकधर्मावच्छेदेनैकस्मिन्धर्मिण्यन्वय इति न तत्रावृत्तिः। तत्र पृथक्छब्दानुसन्धाने सकृदेकधर्मावच्छेदेनोपस्थितिविरोधादिति व्यवस्थापयन्ति॥

तदेतत्सर्वं पर्यालोच्याह॥ **शब्दस्य पर्यायपरिवृत्तीत्यादि**॥ पर्यायस्य स्वप्रतिपाद्ययावदर्थाभिधायकस्य शब्दान्तरस्य या परिवृत्तिः पाक्षिकप्रयोगस्तस्य सहस्तथोक्तः पचाद्यच्, तद्भावस्तत्ता, तयेत्यर्थः॥ **आवश्यकमिति**॥ अस्य स्यादिति शेषः, एवञ्च जातिपक्षे भिन्नजातीयानेकबोधने व्यक्तिपक्षे चासहविवक्षायां तन्त्रेण निर्वाहे तथैवान्यत्राप्यस्तु किं जातिपक्षाश्रयेण सूत्रारम्भेण वेति भावः। अनभिधानाज्ञाने इत्यस्य भाष्यकारसूचितानभिधानापरिज्ञाने इत्यर्थः॥ **अनूद्यत इति**॥ तत्सामर्थ्यादेतद्विषये द्वन्द्वाप्राप्तिरिति तद्भावः। प्राचीनोक्तस्य प्रयुक्तानामित्यादेरुक्तिसम्भवं दर्शयितुमाह॥**अयं भाव इति**॥ **सन्दर्भेत्यर्थ इति**॥

एकस्यैव प्रयोगो यथा स्यादित्यनेन नानेनैकशेषो विधीयत इत्येतद्विरुद्धम् । समुदायादेकविभक्ताविति पक्षः प्रत्याख्यात इत्यनेन राम राम औ इति स्थिते इत्येतद्विरुद्धमिति विवेकः ॥ **अलमिति** ॥ प्रमाणविरुद्धानां प्राचीनोक्तीनामुपपत्तिपरिक्लेशादुपेक्षैव श्रेयसीति भावः ॥

अवयवावयविभावस्सप्तम्या न प्रतीयत इत्यत आह ॥ **अवयविन इत्यादि** ॥ **अजेत्र गृह्यत इति** ॥ श्रूतोऽप्ययम् न गृह्यते, अज्ग्रहणानुवृत्तिवैयर्थ्यात् ॥ **विशेष्यत्वे चेति** ॥ चकारेण तस्य पूर्वपरयोरिति परग्रहणेन ग्रहणं समुच्चीयते ॥ **प्रत्ययलक्षणसूत्रे इति** ॥ तत्र हि भाष्ये गामिच्छति गव्यतीत्यत्र गोरजादावमि विधीयमानमात्वं प्रत्ययलक्षणेन प्रसज्येतेत्यापाद्य नैवं विज्ञायतेऽजादावमीति, किं तर्ह्यमि विद्यमानेऽचीत्यर्थकमुक्तम् । एवञ्च यस्मिन्विधिस्तदादावल्ग्रहण इति परिभाषा नाश्रयणीयेत्युक्तप्रायम् । न चैतत्परिभाषाया अभावे निदेर्गुण इत्यादेरित्संज्ञकशवर्णे प्रत्ययस्थे परे गुण इत्येवं वाक्यार्थस्य वर्णनीयतया मेद्यत इत्यादावित्संज्ञकशवर्णस्य लुप्तत्वात्तत्परत्वाभावेन गुणाद्यनापत्तिरिति वाच्यम् । अनुबन्धकार्येषु न ल्यपीति लिङ्गादनल्विधावित्यस्याप्रवृत्त्या लोपेऽपीत्संज्ञकशवर्णपरत्वस्य स्थानिवत्त्वेन सुवचतया दोषाभावात् । कथमन्यथा तदादिविधावपि विशेषणतया वर्णमात्राश्रयणादित्संज्ञकशवर्णादित्वं प्रत्यये स्यात् । यदि च विधानात्पूर्वमेव प्रत्ययत्वयोग्यतामात्रेणेत्संज्ञायां लोपे च तद्विनिर्मुक्तस्यैव लक्ष्ये प्रवृत्तिस्तत्र चेत्संज्ञकशवर्णादित्वं स्थानिवत्त्वादिना सुलभम् । तत्रत्यस्तथाभूतो धातूत्तरवर्ती शवर्णस्तु दुर्लभ इत्युच्यते, तर्हि भवतु तावन्मात्रफलिका परिभाषा । विनापि परिभाषामिको झलित्यादाविव तदादिलक्षणा वेति युक्तमुत्पश्यन्तु सुधियः । यद्यप्यादेः परस्येत्यनेन परस्य विधीयमानं पूर्वरूपमादेरेव स्यान्न तु विशिष्टस्येति निरर्थक एवायमज्ग्रहणादिपरिक्लेशः, तथापि गव्यति गोप्राप्त इत्यादावनङ्गकार्यतया प्रत्ययलक्षणेन प्रसक्तमात्वं वारयितुमौतोऽम्शसोरित्यत्रावश्यमाश्रयितव्योऽसावनुवृत्तिसौकर्यार्थं, यस्मिन्विधिरिति परिभाषायाः प्रयोजनाभावप्रदर्शनार्थं च प्रकृतेऽप्याश्रित इति द्रष्टव्यम् ।

**अवयवावयविभावसंबन्धेति** ॥ स च संबन्धोऽध्याह्रियमाणवर्णान्वयी,

निर्दिष्टपरिभाषोपस्थापितपरस्येत्यंशे तु न तदन्वयः । तस्योत्सर्गत उपात्तविशेषणतायाः कॢप्तत्वात् ।

**नुम्ग्रहणाच्चेति** ॥ न ह्यनुस्वारःस्वरसहायमन्तरेण प्रयुज्यत इत्याशयः ॥ **प्रत्याहाराह्निके इति** ॥ ऋलृक्सूत्रे इत्यर्थः ॥ **वार्तिककृतेति** ॥ तेन ह्यड्व्यवाये णत्वेऽन्यव्यवाये प्रतिषेध इत्युपक्रम्य न वान्येन व्यवेतत्वादिति प्रत्याख्यातम् । ततश्चाडतिरिक्तव्यवायो निर्दिष्टपरिभाषया निवर्तिष्यत इति स्पष्टमेव प्रतीयते तदाशय इति भावः ।

**वृद्ध्यनापत्तेरिति** ॥ आमुष्यायण इत्यत्र तु न दोषः । औपगवादाविव घकालतनेष्विति ज्ञापकात्सुब्व्यवधाने प्रवृत्तावपि प्रातिपदिकादेव फग्विधानात् । नडादावमुष्येति पाठो लुगभावसूचनार्थो न तु विशिष्टात्प्रत्ययविधानार्थो मानाभावादिति भावः । राजायत इत्यादौ सुबन्ताद्विहिते क्यङि प्रकृतेरङ्गत्वेनाकृत्सार्वेति दीर्घलाभोऽपि प्रयोजनमिति द्रष्टव्यम् ।

**उत्तरार्थमिति** ॥ बहुलं छन्दसीत्यत्रानुवृत्त्यर्थमिति भावः ।

**ध्वनितमिति** ॥ तत्र हि भाष्ये नान्नलोप इति न्यासे यज्ञानामित्यादौ दीर्घात्परत्वान्नलोपप्रसङ्ग इत्युक्तम् । नामीत्यस्य नित्यत्वाभावे लोपात्परत्वात्सुपि चेत्यस्य प्रवृत्तेर्दुर्वारतया तदसङ्गतिरेवेति भावः ।

वस्तुतो नित्यत्वतात्पर्यकत्वे नामीति दीर्घात्परत्वान्नलोपस्ततः परत्वात्सुपि चेति दीर्घस्ततो नित्यत्वान्नामीति दीर्घ इत्येवं चक्रकप्रसङ्गे चक्रकेष्विष्टतो व्यवस्थेति नान्नलोप इति न्यासेऽपि स्यादेवोपपत्तिरिति भाष्यमसङ्गतं स्यात् । तस्मात्सुपि चेत्यंशे सन्निपातपरिभाषाविरोध एव मूलकारोक्तो भाष्यतात्पर्यविषय इति वदन्ति[1] ॥

---

१. **वदन्तीति** ॥ पूरणगुणेति सूत्रे कौमुद्यां गोर्धेनोरित्यत्र षष्ठीसमासस्य निषेधे षष्ठीसमासेन परत्वाद्बाधितस्य विशेषणसमासस्याप्रवृत्तिरित्याशयकमुक्तम् । तद्रीतिपर्यालोचने तु नामीत्यस्य नित्यत्वाङ्गीकारे सुपि चेत्येतद्बाधकतया प्रसक्तस्य नामीत्यस्य परत्वाल्लोपो बाधकः स्यात् । न च लोपस्य सुपि चेत्येतत्परत्वाद्बाधकं भवितुमर्हति । तत्र विशेषणसमासस्येव सुपि चेति दीर्घस्य स्वबाध्यबाधितत्वेन तद्विषये पुनः प्रवृत्त्य-

ननु कथमेकया षष्ठ्या सकृदनेकसंबन्धाभिधानमनुशासनविरोधात्तत्राह ॥ **तन्त्रेणेति** ॥ ओसस्तन्त्रेण निर्देश इति भावः । यद्यपि द्विवचनतन्त्रे द्वित्वद्वयमपि प्रतीयेत, तथापि सूत्रेषु लिङ्गसंख्ययोरविवक्षणाददोषः ॥ **अभिमान इति** ॥ लोके विभक्त्यन्तस्य प्रातिपदिकस्य वा तन्त्रं प्रसिद्धम् । न तु विभक्तिमात्रस्य, तदभ्युपगमे राज्ञ इत्यादावपि सकृदनेकसंबन्धप्रतीतिप्रसङ्गः । तस्मात्सूत्रशेषभाष्योक्तरीत्या प्रत्ययपदस्य तदवयवपरत्वमित्येव युक्तः पन्था: ॥ **[1]प्रमाणाभावादिति** ॥ यथासंख्यसूत्रमाद्यन्तौ टकितावित्यादौ स्वप्रवृत्तिविषये कथञ्चिद्द्वन्द्वस्य साधुत्वं बोधयेन्न तु तदप्रवृत्तिविषयेऽपीति भावः । तद्धितार्थोत्तरपदसमाहारे चेत्यत्र वैषयिके आधारे सप्तमी, विषयत्वं चानेकधा तेनाभीष्टसिद्धिरित्यन्यत्र विस्तरः। अन्वाचयशिष्टा आनुषङ्गिकत्वेन विहिता । तेन राज्ञ इत्यादौ केवलस्य भत्वसिद्धिः॥

**षष्ठीतत्पुरुषेऽपीति** ॥ निरुपपदात्सिचेर्विचीत्यादिः ॥ **इदमपीति** ॥ उत्तरपदत्वे चापदादिविधाविति वचनमुत्तरपदस्य कार्यित्वे पदान्तत्वप्रयुक्तविधावेव च यथा प्रवर्तते तद्वदिदमप्युत्तरपदस्य पदान्तत्वप्रयुक्तविधावेव प्रवर्तत इत्यर्थः । अत्र पक्षे कार्यित्वनिवेशस्यानुपयोगः । तथाविधोदाहरणानुपलम्भात् । परमबुधावित्यादौ भष्भावोऽपि पदान्तत्वप्रयुक्त एवेति पदत्वनिषेधस्सुलभः । ननु सुगण ईशौ सुगण्णीशावित्यत्र पदान्तत्वविधित्वाभावेन निषेधाप्रवृत्तावीशशब्दस्याजादिपदत्वनिबन्धनस्य ङमुडागमस्य प्रवृत्तावपि सुगण्णीशयोरित्यत्र समासस्याजाद्यसर्वनामस्थानस्वादिपरत्वेनोत्तरपदस्यापि भसंज्ञकतया पदस्याजादेर्विधीयमानो ङमुट् दुर्लभ इति चेन्न । पदत्वनिषेधसाहचर्यादवान्तरसुबन्तस्य भत्वमपि पदान्तत्वप्रयुक्तकार्यप्रतिबन्धकत्वेनैव प्रवर्तते, न त्वन्यथेत्यभ्युपगमेनादोषात् । अत

---

योगात् । एवञ्च तत्रत्यकौमुदीप्रदर्शितमतानुरोधेनायं शब्दरत्नग्रन्थ इत्येतन्मते चक्रकस्य प्रसक्त्यभावान्नामीत्यस्य नित्यत्वध्वननं सम्यगेवेति बोध्यम् ॥

१. **प्रमाणाभावादितीति** ॥ मूले चरितार्थमिति भावः इत्यनन्तरं "सौत्रत्वादिति ॥ न च द्वन्द्वसाधुत्वायादेशप्रत्ययसम्बन्धिसस्य स्थाने ष इति प्राथमिकबोधे सम्बन्धत्वेन षष्ठ्या जनिते पश्चात्तत्तल्लक्ष्यविषयकलक्षणकल्पनायां तत्तदुत्तरभिन्ना षष्ठी तेन तेन रूपेण सम्बन्धं बोधयिष्यतीति किं सौत्रत्वाश्रयणेनेति वाच्यम् । एवंरीत्या द्वन्द्वस्य साधुत्वे प्रमाणाभावादित्याशयात् ।" इत्यधिकः पाठः । परन्त्विदानीन्तनपुस्तकेषु न दृश्यते ॥

एवोत्तरपदत्वे चापदादिविधाविति वचनारम्भतत्प्रत्याख्यानयोर्न फलविशेषप्रयुक्तो विरोधः। एवं च निरुपपदात्सिचेर्विचि दधिसेचावित्यादौ षष्ठीसमासेऽपि षत्वनिषेधसिद्धिरिति न पञ्चमीसमासस्य प्रयोजनम्। भाष्यन्तु न प्रत्यासत्तेष्षत्वनिषेधः प्रधानं प्रयोजनमित्यभिप्रायकमतः कैयटोक्तमनभिधानमपि नातीव विरुद्धम्। बहुज्विषये षत्वनिषेधवचनमपि नाश्रयणीयमिति दिक्॥ **व्यतीहारसम्भवादिति**॥ व्यतीहारो विनिमयः। स च क्रियाया युगपदनेककर्तृकत्व इव पर्यायेणानेककर्तृकत्वेऽपि निर्बाध इति भावः॥ **पैदत्वसिद्धिरिति**॥ कार्यकालपक्षे इति शेषः। इदमेव युक्तम्। एकदेशविकृतन्यायेन यथोद्देशपक्षमाश्रित्य पदत्वसमर्थने ह्यधिकविकारसत्त्वेन कावित्यादेस्तदसिद्धिः।

**संविज्ञायन्त इति**॥ सं वि पूर्वाज्जानातेः कर्मणि ल्युट्, तद्गुणास्संविज्ञाना यत्रेति बहुव्रीहिः। संविज्ञानशब्दस्य क्रियाशब्दत्वेन विशेषणत्वेऽपि पूर्वनिपातप्रकरणस्यानित्यत्वात्परनिपात इति कश्चित्तन्न। अधिकरणल्युडन्ततामाश्रित्य तत्पुरुषेणैवोपपत्तौ बाहुलककर्मल्युडन्तेन बहुव्रीह्याश्रयणस्यायुक्तत्वात्। पूर्वनिपातप्रकरणमात्रस्यानित्यत्वे मानाभावाच्चेत्याहुः॥

**कार्यान्वयित्वादिनेति**॥ आदिपदेन तत्सन्निहितत्वम्। एवञ्च प्रकृतकार्यान्वयित्वेन तत्सन्निहितत्वेन वा यो ज्ञायते तद्विशिष्टान्यपदार्थबोधकस्तद्गुणसंविज्ञानस्तदन्यस्त्वतद्गुणसंविज्ञान इति भावः॥ **नागयज्ञोपवीतीति**॥ इदं बहुव्रीहिमत्वर्थीयोभयसाधारणमेकार्थत्वादिति बोध्यम्। एतेन कार्यान्वयवन्नियतसन्निधानमपि तद्गुणसंविज्ञानहेतुरित्युक्तम्। तद्गुण एवेत्यस्य तद्गुणसंविज्ञान एवेत्यर्थः। विनापि प्रत्ययं पूर्वोत्तरपदयोर्लोप इत्युत्तरपदभूतस्य संविज्ञानशब्दस्य लोपो द्रष्टव्यः॥ **प्रत्ययान्तरत्वमिति**॥ एवञ्च तयप्स्थानिकत्वाभावेन स्थानिवद्भावप्रयुक्तस्य प्रथमचरमेति विकल्पस्य प्राप्तिशङ्कैव नेति भावः। यत्तु प्रत्ययान्तरत्वे महाविभाषानिवर्तकं नित्यग्रहणं स्यादित्यहेतुको योगविभागः।

---

१. **पदत्वसिद्धिरितीति**॥ पुस्तकान्तरे एवमधिकः शब्दरत्नपाठः। "औ इत्यस्य परादिवद्भावेन सुप्त्वात्तदन्तत्वेन पदत्वसिद्धिरिति सिद्धान्तान्तरमपि सूचितम्। इदं चान्तादिवत्सूत्रे भाष्ये स्पष्टम्। तत्र हि वृक्षे इत्यादौ परादिवत्त्वेनैकारस्य सुप्त्वमाश्रित्य पदत्वं साधितम्" इति॥ इदानीन्तनपुस्तकेष्वयं पाठो न दृश्यते॥

तयबादेशत्वे तु सामर्थ्यविकल्पबोधकस्य विभाषाधिकारस्यादेशविधावप्रवृत्त्यैव नित्यत्वसिद्धावतिरिच्यमानं नित्यग्रहणं योगविभागे प्रमाणं स्यादिति तन्न। द्वित्रिभ्यामित्यत्रायच्सन्नियुक्तस्य विकल्पस्य निवृत्तये नित्यग्रहणस्यादेशपक्षेऽप्याव-श्यकतया योगविभागस्य सर्वथा व्याख्यैकसमधिगम्यत्वात्॥ **उभघटितादिति**॥ लुक्कृतापहारविषयादन्यद्द्विवचनं यस्माद्विहितं तदादेः परं यत्रेत्यर्थे मूलकृदापादित-दोषानुद्धारात्तत्कृतापहारविषयद्विवचनाभावो यत्रेत्याद्यर्थस्यावश्यकतायां तादृश-द्विवचनस्य वृत्तावेव सम्भवाद्वृत्तौ च सुबुत्पत्तेः पूर्वमयच्प्रवृत्तेरुभशब्दप्रकृतिकत्वं द्विवचनस्य न संभवतीत्याशयः॥ **अयजिष्यत इति**॥ उभयतीत्यादावित्यर्थः॥ **लुक्कृतापहारसम्भावनेत्यादि**॥ लुक्कृतापहारसम्भावनाविषयद्विवचनाभाववदन्य-त्वमयच्प्रवृत्तेर्निमित्तमिति निष्कर्षः॥ **अर्थानुवादकत्वमिति**॥ उभयगतिरिह भवतीत्यकृत्रिमस्याप्यत्र प्रायेण ग्रहणादीदृशस्य द्विवचनस्य परिग्रहे क्षत्यभावः। लुक्कृतापहारविषयत्वमपि कप्रत्ययस्य कथञ्चित्साम्भावनिकं संपादयितुं शक्यमिति तात्पर्यम्। नन्वेवं कल्पबादेः स्वार्थिकत्वेन द्विवचनतया तदंशे कथमयच्प्रवृत्ति-रत आह॥ **न भवत्येवेति**॥ उभशब्दपाठप्रत्याख्यानपरं प्रकृतभाष्यमेवात्र प्रमाणम्॥ **अप्रवृत्तये इति**॥ अवयव्यर्थकायज्विषये स्वार्थिकायच्प्रत्ययाप्रवृत्तये इत्यर्थः॥ **अनित्यत्वावश्यकत्वादिति**॥ एतेन पञ्चकपक्षे त्रतसिलोरिव कप्र-त्ययस्याप्यधिकबोधकत्वेन द्विवचनत्वानुपपत्त्या स्यादेवायच्प्रत्यय इत्यपास्तम्॥ **अलमिति**॥ सर्वस्वतन्त्रस्य भगवतो भाष्यकारस्य वचनेष्वस्मदादिभिर्दोषापादन-मज्ञानविलसितमेव। न हि प्रमाणमूर्धन्येषु तेषु दोषस्स्यादिति भावः॥ **उभयो मणिरिति**॥ अवयवद्वयारब्धसमुदायात्मको मणिरित्यर्थः॥ **तादृशार्थस्येति**॥ उपस्थितार्थस्य विना प्रमाणं परित्यागायोगादित्याशयः। सूत्रे लिङ्गवचनमतन्त्र-मिति तु विभक्तिबोध्यलिङ्गसंख्याविषय एवेति भावः। अथवा तदर्थमेव प्रमाण-प्रदर्शनमत एवेति॥ **स्त्रियामिति**॥ अन्यथा ह्यन्तरा निगमा इति पुंस्येवोदा-हरेदिति भावः॥ **पर्वताश्चेति**॥ उदयो मलयाचलोऽस्ताचलो हिमवानिति चत्वारो दिग्व्यवस्थापकाः पर्वताः॥ **संज्ञात्वं मत्वेति**॥ अधरशब्दस्याधोभाग-वर्तिन्योष्ठे प्राकृतस्सङ्केत इत्यत्र प्रमाणाभाव इति केचित्॥ **भाष्ये ध्वनित-मिति**॥ तत्र हि विकारावयवप्रत्ययान्ताद्विहितयोर्विकारावयवप्रत्यययोर्लुगिति पक्षमुपक्रम्य पलाशादिभ्यो वेत्यञन्तात्पालाशशब्दान्नित्यं वृद्धशरादिभ्य इति

विहितस्य मयटो लुकि पालाशीत्यत्रानुपसर्जनलक्षण ईकारो न प्राप्नोतीत्यापत्तौ माभूदेव मञ् योऽनुपसर्जनमिति, अञन्तादनुपसर्जनादित्येवं भविष्यतीत्युक्तम् । अनेन च स्वर्थविशेषणकान्यार्थबोधकत्वमुपसर्जनत्वम् । न तु विशिष्टार्थबोधकतामात्रमिति स्पष्टमेव प्रतीयत इति भावः ॥ **आत्मानमित्यर्थकेति** ॥ स्वशब्दोऽसावात्मीयत्वेन स्वरूपवाचको न त्वात्मवाचक इति मूलकाराशयं केचित् ॥

**एकव्द्यन्यतरा इति** ॥ एकत्वद्वित्वोभयधर्मप्रकारकसंशयविषयीभूता इत्यर्थेऽप्युपसर्जनत्वमेव । अन्यतरत्वञ्च भेदावच्छिन्नप्रतियोगिताकभेदवत्त्वम् । सर्वथैवान्यपदार्थप्रधानोऽयं बहुव्रीहिः । पूर्वसूत्रेण सिद्धमिति भाष्योक्तेः संशयविषयत्वेनान्यतरत्वेन वा बहूनामेवोपस्थितिरिति बहुवचनम् ॥ **उपसर्जनत्वाभावादिति** ॥ न ह्यलौकिकवाक्यप्रविष्टाल्लौकिको बोधो भवति ॥ येन तथाविधबोधजनकत्वलक्षणमुपसर्जनत्वं स्यादिति भावः ॥ **भाष्ये स्पष्टमिति** ॥ तत्र हि वाञ्छतेरप्रत्यये वान्, वाञ्छौ, वाञ्छ इति प्राप्नोति, वांशौ, वांश इति चेष्यते, यथालक्षणमप्रयुक्ते इत्युक्तम् । ननु वर्णमात्रनिमित्तकत्वेनान्तरङ्गस्तुगागमो नुमपेक्षया पूर्वं प्रवर्तेत इति कृतेऽपि सतुग्ग्रहणे वाञ्छतौ शादेशस्य सुवचत्वादनभिधानस्वीकारो न युक्त इति चेत्सत्यम् । नुम्विधौ धातुग्रहणसामर्थ्यान्नुमागमस्योपदेशिवद्भावस्तावदवश्यं वाच्यः । अन्यथा कुडि दाह इत्यादिभ्यः क्तिन्प्रत्यये सति नुमागमे कुण्टिरित्याद्यनिष्टप्रसङ्गः । इष्यते तु गुरोश्च हल इत्यकारप्रत्यये कुण्डेत्यादि ॥ न च धातुग्रहणस्य सिच इदित्त्वमादायाभैत्सीदित्यादौ नुम्निवारणार्थमावश्यकत्वात्कथमुक्तार्थलाभ इति वाच्यम् । सच्करणेनापि निर्वाहात् । न च सिच इदित्त्वाभावे सममंस्तेत्यादावनिदितामिति नलोपप्रसङ्ग इति वाच्यम् । हनस्सिजित्यनेन हन्तेर्नलोपार्थात्किित्त्वविधानाज्ज्ञापकात्सार्वधातुकसंबन्धिङ्कित्त्वनिमित्तकत्वेनानिदितामित्यस्याप्रवृत्तेः । एवञ्च मन्ता हन्तेत्यादावपि नलोपो न प्रवर्तते। टिलोपस्याभीयत्वेनासिद्धत्वाद्धेति तासिरपि तास एव कर्तुं शक्यः । तथा च धातूपदेशकाले प्रवर्तमानोऽसावन्तरङ्गतरो नुमागमस्तुगपेक्षयापि पूर्वं प्रवर्तेत इति सतुङ्निर्देशेनादेशाप्रवृत्तेर्न्याय्यमेवानभिधानमित्याहुः । तदप्रवृत्तिरेवेत्यस्य तुगागमाप्रवृत्तिरेवेत्यर्थः ॥ **राजा ऐनेय इति** ॥ यथा राजेत्यत्र प्रत्ययलक्षणेन पदत्वनिमित्तको नलोपो यथा ऐनेय इत्यत्र यस्येतिलोपस्य स्थानिवद्भावेन ङीप्सन्नियुक्तस्य

नकारस्यावस्थानं तद्वत्कंसं घातयतीत्यत्रापि क्लुकि प्रत्ययलक्षणेन कृन्निमित्तकस्य वधादेशस्यावस्थानसम्भवान्निमित्तविनाशाभावेन प्रकृतपरिभाषाया अप्रवृत्त्या प्रत्यापत्तिवचनस्य तन्निमित्तकत्वेनावश्यकत्वादनित्यत्वज्ञापकता न सम्भवतीति भावः ॥ **पूर्वकार्य एवेति** ॥ लुमच्छब्दप्रयोज्यलोपविषयस्य प्रत्ययस्य प्रकृतिभूतो यो लब्धाङ्गसंज्ञस्तदुद्देश्यकं प्रत्यये परतो जायमानं कार्यं नेति तदर्थः । अत एव पञ्चेत्यत्र पदत्वप्रयुक्तो नलोप इत्याद्यन्यत्र विस्तरः ॥ **पुष्ययोगे ज्ञीति** ॥ पुष्ययोगशब्दे प्रकृतिभूते जानात्यर्थे णिच् क्लुक् प्रकृतिप्रत्यापत्तिश्चेत्यादि तदर्थः ॥ **अकच्स्वरावेिति** ॥ प्रत्यवयवं संशयविनिर्मुक्तावकच्स्वरौ कर्तव्यावेवे-त्यर्थः ॥ **दिगिति** ॥ बहुव्रीहिविषयता परस्परसमभिव्याहारोत्तरमलौकिके वाक्ये, ततः प्रागेवान्तरङ्गत्वादकच्स्वरयोः प्रवृत्तेर्निषेधारम्भो व्यर्थः । सामर्थ्यात्परस्परसम-भिव्याहारात्प्रागपि तयोरप्रवृत्तिरिति चेत्सर्वेषामेव सर्वादीनां बहुव्रीहियोग्यत्वादव्य-वस्था स्यादतो वचनप्रत्याख्यानमेव वरमिति दिगर्थः ॥ ननु शब्दशक्त्या सूत्रा-र्थवर्णने न्यासग्रन्थविरोधेन किं कृतं स्यात्तत्राह ॥ **न्यासकारस्यापीति** ॥ **संवाद-माहेति** ॥ प्राचीन इति शेषः ॥ **उपस्थितिविषयत्वस्यैवेति** ॥ न तु बोध-विषयस्य तथात्वं मानाभावादिति भावः ॥ **पदद्वयेऽपीति** ॥ पर्यायेणेति भावः । अन्यथा बोधावृत्तिप्रसङ्गात् ॥ **न प्रवृत्तिरिति** ॥ एकार्थीभावारोपेण समाससंज्ञायां सामासिके लुकि समुदायान्ङेप्रत्यये तत्प्रवृत्तेरिति भावः ॥ **अभिमान इति** ॥ सूत्रस्य तन्निवर्तकत्वासम्भवोऽत्र बोजम् ॥ **तद्विशेषणत्वमिति** ॥ अन्यपदार्थविशे-षणत्वमित्यर्थः । प्रियसर्वशब्दो हि प्रीतिविषयसर्वसंबन्धीत्यर्थकः । न तु सर्वश-ब्दमात्रमिति तदाशयः । जहत्स्वार्थायामनर्थक एव सर्वशब्दः । पक्षान्तरे चावयवोऽपि विशिष्टार्थे वर्तत इत्ययुक्तमेतत् । तदाह ॥ **अभिमान इति** ॥ **मासेन कृतायेत्यादि** ॥ तृतीया तत्कृतेत्यादिना समासः । गुणशब्दो हि तत्र धर्ममा-त्रवाचीत्याशयः ॥ **मानाभावादिति** ॥ वर्णाश्रमेतरशब्देन साहित्यविशिष्टानां वर्णानामाश्रमाणामितरेषां च बोधनेऽपि प्राधान्येन कस्य चिदन्यस्यार्थस्यानुपपा-दनात्परमसर्वशब्दघटकसर्वशब्दस्यैव प्राधान्येन स्वीयसर्वार्थवाचकत्वरूपं सर्वा-र्थवाचकत्वमितरशब्दस्याक्षतमिति भावः । ननु जहत्स्वार्थायां वृत्तिघटकानामान-र्थक्यात्कथं परमसर्वादीनां सर्वनामत्वं, भूतपूर्वगत्या सर्वार्थवाचकत्वमादाय तदुप-पादने त्वतिसर्वादावपि तदापत्तेरुपसर्जननिषेधवैयर्थ्यम् । न च सर्वाद्यन्तस्य सर्वार्थ-

वाचकत्वेन संज्ञाविधानान्न दोष इति वाच्यम्। अत्यन्यास्सर्वे इत्यत्रापि तदापत्तेरिति चेत्सत्यम्। ईदृशेषु जहत्स्वार्थाया अभावः। "जहत्स्वार्था तु तत्रैव रूढिर्यत्र विरोधिनी" त्यभियुक्तव्यवहारात्। यद्वा प्रयोजनं सर्वनामाव्ययसंज्ञायामिति तदन्तस्य संज्ञाप्रतिपादनपरभाष्यप्रामण्यादाश्रीयमाणा भूतपूर्वगतिरुपसर्जनप्रतिषेधप्रत्याख्यानभाष्यबलादनुपसर्जनविषय एव, ततो न दोष इत्याहुः॥ **स्मृत्यन्तरेणेति**॥ न बहुव्रीहावित्यस्य समुदायनिषेधकत्वे खल्वकच्स्वरावित्यस्योपपत्तिः समुदायनिषेधश्च प्रथमार्थे सप्तमीं विना न सम्भवतीत्येतत्प्रकरणविषयकं प्रथमार्थे सप्तमीबोधकमनुशासनमनुमीयत इति भावः। ननु बहुव्रीहावित्येतद्विषयकभाष्योक्त्या प्रकरणमात्रविषयकस्मृत्यन्तरप्रयुक्तकल्पनमयुक्तं तत्राह॥ **साहचर्येणेति**॥ ननु साहचर्यं न शक्तिबोधकं, किन्तु बहुष्वर्थेषु प्रसृतायाश्शक्तेरेकत्र नियामकं, यथा रामलक्ष्मणावित्यत्र लक्ष्मणसाहचर्यमनेकेषु विद्यमानाया रामपदशक्तेर्दशरथापत्यमात्रबोधकतासम्पादकम्। ततश्च कथमिह साहचर्येण सप्तम्याः प्रथमार्थकत्वं स्यात्। लक्षणा तु सुब्विभक्तौ निषिद्धैव। तेन तयापि प्रकृते नोक्तार्थलाभ इत्यत आह॥ **किञ्चेति**॥ **फलाभावादिति**॥ एवञ्च तत्रागत्या सौत्रत्वात्प्रथमार्थिका सप्तमीत्याश्रयणीयत्वादत्राप्यर्थाधिकारसहचरितपरिभाषयोरनुग्रहाय तथैवाश्रयितव्यमित्याशयः॥ **अपास्तमिति**॥ उक्तरीत्या समुदायनिषेधकताया एव सूत्राक्षरैर्लाभेनावयवनिषेधकत्वायोगादिति भावः।

ननु महता प्रयासेनेकारप्रत्याख्यानमनुचितं, किञ्च महतो वंशस्तम्बाल्लट्वानुकृष्यत इति प्रत्याहाराह्निकस्थकात्यायनावहेलनपरभाष्यविरुद्धं चेत्यत आह॥ **प्रत्याख्यानेनेत्यादि**॥

**तदवयवस्येत्यादि**॥ आक्षेपो ह्यनुपपत्त्या भवति॥ ततश्च यत्राक्षिप्यमाणस्य सम्बन्धेनानुपपत्तिपरिहारस्स्यात्तत्रैव तत्संबन्धो नान्यत्रेति भावः। नन्वाक्षिप्यमाणस्य यजाद्यंशस्यावयवविशेषणत्वेऽपि समुदायस्य यजादिपरताया अव्याघातात्सिद्ध एवानुपपत्तिपरिहारस्तत्राह॥ **किञ्चेति**॥ **विधौ परिभाषेति**॥ उदीचामातः स्थाने इति सूत्रस्थेन षष्ठी स्थान इति परिभाषोपस्थित्या सिद्धेन स्थानेग्रहणेनेयमतिरिक्ता परिभाषा ज्ञाप्यत इति भावः॥ **इको गुणवृद्धी अचश्चेति**॥ तत्र सूत्रद्वये विधीयत इत्यध्याहारमूलकत्वादस्याः परिभाषाया

अन्यत्र न प्रवृत्तिरित्यर्थः । प्रत्युत प्रवृत्तौ दोषश्चेत्याह ॥ **उदात्तस्वरितयो-रित्यादि** ॥ अन्नन्तभसंज्ञकाङ्गावयवस्यातो लोप इत्येव सूत्रार्थः । अनन्त्यविकार-परिभाषया च तक्ष्णेत्यादौ न प्राथमिकाकारस्य लोपः । भाष्यं चेदमेकदेश्युक्ति-राकडारीयसंज्ञासु कार्यकालत्वायोगादित्यन्यत्र प्रपञ्चितम् ॥

**तेनेति** ॥ निमित्तवत्पदभिन्नपदाघटितत्वमखण्डपदत्वमिति प्राचीन-परिष्कारे तु भोगशब्दस्यान्तर्वर्तिनीं विभक्तिमाश्रित्य पदत्वाद्रेफषकारान्यतररूपनि-मित्तविहीनत्वाच्च तद्घटितस्य समानपदत्वाभावेन णत्वानुपपत्तिरिति भावः ॥ निमित्तानधिकरणेत्यादि विशेषणभूतसमानशब्दार्थपरिष्कारः । पद इत्यवशिष्टो विशेष्यांशः । तत्फलं रामनामेत्यादौ चरमवर्णविहीनस्य कस्य चित्खण्डस्याखण्डत्वे-ऽपि णत्वाभावः । न चैवं वृषण्वसुर्वृषणश्च इत्यत्र पूर्वपदस्य भसंज्ञकतया पदत्वा-भावादखण्डत्वेऽपि णत्वानापत्तिरिति वाच्यम् । वस्वश्वशब्दयोः पदत्वेऽपि निमित्त्यनधिकरणतया विशिष्टस्यैवाखण्डत्वलाभेनादोषात् ॥ **गन्धर्वगानमिति** ॥ न च गन्धर्वगानरूप्येणेत्यादौ तद्धितविशिष्टस्यापि निरुक्तपदघटितत्वादखण्डत्वानु-पपत्त्या णत्वासिद्धिरिति वाच्यम् । अखण्डत्वघटकयोर्निमित्तनिमित्तिनोश्चिकीर्षित-णत्वसम्बन्धिनोर्विवक्षणेन निर्वाहात् । इत्थं च चिकीर्षितणत्वनिमित्तानधिकरणतथा-भूतनिमित्त्यधिकरणस्वतन्त्रप्रयोगार्हघटितत्वे सति पदत्वं समानपदत्वमिति निष्कर्षः । नन्वेवं कारकषष्ठ्या समासेऽपि नृनमनशब्दान्तर्गतस्य नमनशब्दस्य पारिष्कारिकपदत्वाव्याघातेन विशिष्टस्याखण्डत्वाभावादेव णत्वाप्राप्त्या चारि-तार्थ्यासम्भवेन णत्वनिषेधार्थस्य तदीयक्षुभ्नादिपाठस्य ऋवर्णात्परस्य नस्य णत्व-मित्यर्थे ज्ञापकता भाष्यकारोक्ता न युक्ता स्यादत आह ॥ **क्षुभ्नादिष्वित्यादि** ॥ **संज्ञाभूत इति** ॥ आधुनिकसङ्केतेन वस्तुविशेषे स्वरूपं निमित्तीकृत्य विनि-युज्यमानोऽसाववयवार्थविहीनत्वादखण्डः । तत्र चोक्तार्थज्ञापनपरं भाष्यमेव मानम् । अन्यथा छन्दस्यृदवग्रहादिति प्राप्तणत्वनिवारकतया सार्थकत्वात् क्षुभ्नादिपाठस्य तदसङ्गतिरेव । सिद्धान्ते तु यदृच्छाशब्दान्तर्गतो नृशब्दो नावगृह्यत इत्यदोषः । नारायणशब्दान्तर्गतस्यायनशब्दस्य मन्वाद्युक्तनिरुक्तबलात्स्वातन्त्र्येण प्रयोगार्हत्व-विशिष्टस्याखण्डत्वानुपपादनेऽपि पूर्वपदात्संज्ञायामग इति णत्वं, योगरूढत्वादेव-मन्यत्रापीत्याहुः ।

**कादेशजुमोरिति** ॥ माथितिक इत्यत्र यस्येति लोपस्य कादेशे स्थानिवत्त्वमपीपचन्नित्यत्र जुसि णिलोपस्य चङन्त्यकारयोरेकादेशस्य वा स्थानिवत्त्वमिति भावः ॥ **उपदेशग्रहणासम्बन्ध इति** ॥ नन्वेकाजंशे तदसम्बन्धे विहितविशेषणेऽप्यावधिषीष्टेत्यत्र इण्णिषेधप्रसङ्गः । लिङ उपदेशेऽनुदात्ताद्धन्तेरेकाचो विहितत्वानपायात्सिद्धान्ते तु वधेरदन्तत्वेनोपदेशमात्रावच्छेदेनैकाच्त्वाभावाददोष इति चेन्मैवम् । वधिविधौ लिङीत्यस्य विषयसप्तमीत्वेन तत्र वधेरनेकाच एव लिङ्विधानात् । किञ्च वधेरुदात्तत्वेनोपदेशमात्रे तस्यानुदात्तत्वाभावाददन्तत्वाभावेऽपि ततो विहितस्य निषेधाप्रसक्तिरिति न दोषः । न च लावस्थायामडिति भाष्यकारीयव्यवस्थायामभैत्सीदित्यादावडागमविशिष्टादनेकाच एव सिज्विधानादिण्णिषेधानापत्तिरिति वाच्यम् । बहिर्भूतलुङ्निमित्तकस्याडागमस्य निषेधापेक्षया बहिरङ्गत्वेन तस्य सुवचत्वादिति दिक् ॥ **सर्वत्राकारो न विवक्षित इति** ॥ स्थानिन्यकारविशिष्टस्य तद्रहिते लक्षणया निवृत्तिः । प्रत्ययेषु न विधौ पररशब्दार्थ इति निषेधेन तदयोगादित्संज्ञया तन्निवृत्तिरित्याशयः । ननु ठकारमात्रस्यैव स्थानित्वे तदादेशस्येकादेशस्याल्त्वेन गृहीतस्थानिकत्वादनल्विधाविति निषेधेन तत्र स्थानिवद्भावप्रयुक्तप्रत्ययत्वादिकं दुर्लभं स्यादित्यपाय एवायमुपायस्तत्राह ॥ **इदमुपलक्षणमिति** ॥ **सन्निपातपरिभाषयेति** ॥ इकादेशनिमित्तकभसंज्ञाप्रयुक्तो यस्येति लोपो माथितिकेकादेशं प्रत्यनिमित्तमनया परिभाषयेति भावः ॥ **शास्त्रीयस्यैवेति** ॥ पूर्वपरशास्त्रबोधितयोः कार्ययोर्विरोधेनैकत्र प्रसक्तौ परशास्त्रबोधितं कार्यं भवतीति हि तदर्थः । ननु विप्रतिषेधे परमित्यत्र परशब्दश्श्रेष्ठवाची । अत एव पूर्वविप्रतिषेधकूटसंग्रहः । ततश्च व्याप्तिन्यायाल्लौकिकशास्त्रीयोभयकार्यग्रहणे बाधकाभाव इत्यत आह ॥ **नित्यः परयणादेश इत्यादि** ॥ व्यवस्थात्र प्रयोगक्रमः ॥ **अन्तरङ्गत्वेनेति** ॥ तत्र भाष्ये प्रयोगक्रमाधीनपूर्वोपस्थितनिमित्तकत्वरूपमन्तरङ्गत्वं पूर्वयणादेशस्योक्तमिति तद्रीत्या पूर्वसाहचर्यस्यापि पूर्वोपस्थितनिमित्तकत्वरूपमन्तरङ्गत्वं सुवचमिति भावः । नन्वेवं विभाषा गमहनेत्यत्र विन्दतेर्ग्रहणाय परीभूतविशिसाहचर्यस्य स्वीक्रियमाणं सकलग्रन्थकारसम्मतं प्राबल्यमनुपपन्नं स्यात्तत्राह ॥ **विभाषा गमहनेति** ॥ पूर्वभूतहनसाहचर्याश्रयणे लुग्विकरणपरिभाषाया बाधः । परसाहचर्याश्रयणे च बहिरङ्गपरिभाषायाः तत्र कृप्तानित्यत्ववती बहिरङ्गपरिभाषेत्यकृप्तानित्यत्ववती लुग्विकरणपरिभाषैवाश्रीयत इत्याशयः ॥

**नुदविदेति** ॥ तत्र हि परेणोन्दिना साहचर्याद्विन्तेर्ग्रहणमिष्टं न तु पूर्वेण नुदिना साहचर्याद्विन्दतेरिति स्पष्टमाकरे ॥ **व्याख्यानेनेति** ॥ इदं हेत्वन्तरम् । विनापि चकारमत्र समुच्चयो गामश्वमित्यादिवत् । विद विचारण इति प्रतिपदोक्तधातुपाठपठिताकारविशिष्टग्रहणलाभसम्भवमूलकेन व्याख्यानेन चेति तदर्थः । ननु सिजभ्यस्तेत्यत्रापि बहिरङ्गपरिभाषाया अनित्यत्वमाश्रित्य परसाहचर्यमाश्रियतां, पञ्चमीसमासपक्षानवलम्बाच्च लाघवमित्यत आह ॥ **प्रत्यैषिषन्निति** ॥ प्रतिपूर्वस्येणस्सन्नन्तस्य रूपम् । तत्र शबन्त्यकारयोरेकादेशस्य पञ्चमीसमासेन स्थानिवत्त्वमाश्रित्य जुसादेशाभावस्साध्य इति तदेतत्पञ्चमीसमासपक्षस्यासाधारणं प्रयोजनमित्याशयः । ननु जुस्विधावपि झेरिकारो न विवक्ष्यतामितश्चेत्यनेन प्रत्ययसम्बन्धिन इकारस्य लोपो भविष्यति, ततश्च झकारनिमित्तक एवायमदादेशवदिति स्थानिवद्भावेन झकारबुद्धेरल्विधित्वेन प्रतिषेधविषयत्वान्नोक्तदोषावकाश इति चेन्न । व्यत्यविद्रतेत्यादावात्मनेपदे प्रतिपदोक्तस्य जुसादेशस्य वारणाय स्थानिगतेकारस्यावश्यविवक्षणीयतया निरुक्तरीत्या दोषनिवर्तनायोगात् ॥ **क्लिष्टमिति** । यद्यपि पूर्वविधिशब्दे पञ्चमीसमासोऽपि क्लिष्टस्तथाप्यप्रसिद्धधर्मपुरस्कारेण सादृश्यकल्पनापेक्षया विधिग्रहणसामर्थ्येन सुप्सुपेतिसमासोपपादनं युक्तमिति तात्पर्यम् । तदाह ॥ **ततो वरमिति** ॥ ईषज्ज्याय इत्यर्थः ॥ **वक्तुं शक्य इति** ॥ नन्वेवमपरविधाविति व्यर्थम् । पूर्वपरयोः स्वस्य च विधौ स्थानिवत्त्वस्येष्टत्वात् । किञ्च यथाश्रुते पञ्चमीसमासेन सिद्धयोर्धिन्वन्ति कृण्वन्तीत्यनयोरेतन्न्यासोदाहरणत्वोपपादनपरभाष्यबलेन तदनादर एव तात्पर्यावगमादिदमयुक्तमिति चेत्सत्यम् । अपरविधावित्यस्याभावे प्रत्यासत्त्या स्वविधावेव स्थानिवत्त्वं स्यात् । तदुक्तौ तु प्रत्यासत्तेरयोगात्सर्वत्रैव स्थानिवत्त्वं सिद्ध्यति ॥ धिन्वन्तीत्यादेरेतन्न्यासोदाहरणत्वन्तु तत्पक्षस्यासार्वत्रिकत्वबोधनार्थमत एवैतन्न्यासप्रत्याख्याने भावसाधनविधिशब्दमाश्रित्य पूर्वस्य विधाने स्थानिवद्भवतीत्यर्थेनायन्नासन्नित्यादावाडागमो धिन्वन्ति कृण्वन्तीत्यादाविडागमाभावश्च साधितो भाष्ये । किञ्चापरस्येत्येव सिद्धौ विधिग्रहणस्य यथाश्रुत इव पञ्चमीसमासमन्तरा सार्थक्यालाभ इति विपश्चितो विभावयन्तु ॥ **अतिसङ्ग इति** ॥ हे गौरित्यादावेङ्ह्रस्वादिति सम्बुद्धिलोपादिरतिप्रसङ्गो द्रष्टव्यः । **अनित्यत्वेनेति** ॥ तद्बीजन्तु प्रविगणय्येति भाष्योदाहरणमन्यथा गणेरकारस्य पञ्चमीसमासपक्षेण

स्थानिवत्त्वेन लघुपूर्वाद्धलः परत्वाभावे णेरयादेशो दुर्लभ इति स्पष्टमेवेत्यन्यत्र विस्तरः । यणः प्रतिषेधो वाच्य इति वचनं संयोगान्तलोपसंयोगादिलोपोभयविषयकं, न वा झलो लोपादिति तत्प्रत्याख्यानवार्तिकस्य संयोगान्तलोपो झलो लोप इति भाष्यकारीयव्याख्यानस्वारस्यादित्यन्यत्रोक्तम् । अतश्चक्रयत्रेति न स्थानिवत्त्वप्रयोजनमित्याशयेन फलान्तरमाह ॥ **तक्षिरक्षिभ्यामिति** ॥ **उपसर्गविशेषणत्वे फलमिति** ॥ रेफविशेषणत्वे तु पल्ययत इत्याद्यसिद्धिः । अन्तादिवद्भावेन तु न निर्वाहः । उभयत आश्रयणे तन्निषेधात् । सत्त्वे वा पौर्वापर्यलक्षणस्य व्यपवर्गस्याशास्त्रीयतया तेनातिदेष्टुमशक्यत्वात् । अचः परस्मिन्नित्यनेन त्वशास्त्रीयस्याप्यतिदेशः, स्वरे निषेधादित्याहुः ॥ **ङ्युत्पत्तेः प्रागिति** ॥ गतिकारकोपपदानां कृद्भिस्सह समासवचनं प्राक्सुबुत्पत्तेरिति नियमादित्याशयः ।

**विशेषणविशेष्यभावसम्बन्धेनेति** ॥ अभेदस्तु न संसर्गः । नीलो घट इत्यादौ षष्ठीप्रसङ्गात् । ब्रह्मण आनन्दो राहोश्शिर इत्यादौ तु व्यपदेशिवद्भावमूलको भवति भेदसंसर्ग इत्यन्यत्र विस्तरः ॥ **वैयधिकरण्येनेति** ॥ तत्फलं झय इत्यस्य पदावयवाज्झयः परस्य मतोर्मस्य वत्वमित्यर्थे तटित्वानित्यादौ वत्वं, सामानाधिकरण्ये तु तसौ मत्वर्थ इति भत्वात्तदसिद्धिःस्पष्टैव ॥

**पूर्वनिपातापत्तेरिति** ॥ मध्यमपदलोपिसमासाश्रयणे नायं दोष इत्यभिप्रेत्याह ॥ **किञ्चेति** ॥ **विशेष्यासन्निधानादिति** ॥ ननु पदादिभिरादेशैराक्षिप्तानां पादादीनां शस्प्रभृतिभिः प्रत्ययैराक्षिप्तो विशेष्यं तदाद्यंश इति कुतस्तत्सन्निधानाभाव इति चेन्न । शस्प्रभृतिभिरादेशानुरूपाणां पादादीनां प्रकृतिविशेषाणामाक्षेपेणैवोपपत्तौ पृथगाक्षेपे मानाभाव इत्याशयात् ॥ **भ्रमवारणायेति** ॥ तं दोर्दक्षिणमुद्यम्य निशाचर उपाद्रवदिति पाठे तु नायं भ्रम इति बोध्यम् । इत्यदन्ताः ॥

**शोकव्यञ्जकमिति** ॥ देवयोनितया शोकविहीनत्वात्तद्व्यञ्जकशब्दविहीन इत्यर्थः । पाणिनीयैस्[1]तु रागाभिव्यञ्जकमनुरणनात्मकं हा इति शब्दं जिहीते

---

१. **पाणिनीयैस्त्विति** ॥ अत्रेदं बोध्यम् । पाणिनेरव्युत्पत्तिपक्षस्यैव सिद्धान्तिसिद्धत्वेन तन्मतेऽस्य क्रियाशब्दत्वाभावेन व्युत्पत्तिप्रदर्शनस्यैवाप्रसक्ततया पाणिनीयानां कीदृशी व्युत्पत्तिर्योग्येति विचारः काकदन्तपरीक्षातुल्य इति ॥

प्राप्नोतीति व्युत्पत्तिरुपदर्शनीया । युक्तं चैतत् । ईत्वमवकारादाविति वार्तिकतत्प्रत्याख्यानयोः फलैक्याय जहातेः क्विपोऽनभिधानावश्यकत्वात् । विच्प्रत्ययस्तु छान्दसः । कीलालप इति हेतुमनुष्येभ्य इति सूत्रस्थभाष्यबलाल्लोके तत्प्रवृत्तिस्तु कल्प्यमाना क्काचित्कत्वादगतिकगतिः । न च जहातेः क्विप्यपृक्तलोपस्यान्तरङ्गत्वादीत्वाप्रवृत्तिः प्रत्ययलक्षणसूत्रन्तु नियमार्थमतः कथमनभिधानमिति वाच्यम् । धीर्ध्यायतेर्दधातेर्वेति जनसनेति सूत्रस्थभाष्यस्वरसादीत्वप्रवृत्तावनित्याया अन्तरङ्गपरिभाषायाः प्रवृत्त्ययोगात् । यदि च तद्भाष्यबलादीदृशेषु क्विबीत्वयोरभीष्टत्वात्कथमनभिधानं, वार्तिकप्रत्याख्यानमपि फलान्तरसंग्रहार्थमेव । न तु फलाभेदायेत्युच्यते, अस्तु तावतापि जहातेः क्विपि हाहाशब्दासिद्धिस्तदवस्थैव, दुर्निवारत्वादीत्वस्येत्याहुः ॥ इत्यादन्ताः ।

**तन्त्रेणेति** ॥ अत्र विभक्त्यन्तयोरेव तन्त्रम्, न तु प्रातिपदिकयोर्नेनाशब्दयोरसारूप्याद्द्विवचनापत्तेश्च । एतेनेत्यस्यान्यं प्रत्यसिद्धत्वनिषेधेनेत्यर्थः । कृते कार्यान्तरं प्रत्यसिद्धत्वनिषेधस्त्वमुना घटेनेत्यादौ सुपि चेति दीर्घनिवृत्त्यर्थः ॥ **असिद्धत्वेऽपि वेति** ॥ वाशब्दो भिन्नक्रमः । परत्वेनेत्यनन्तरं द्रष्टव्यः । मुत्वात्पूर्वं निषेधारम्भात्स्मायादेशाभावः । नुमागमोत्तरमदन्तत्वाभावेन स्मैभावस्य नित्यत्वाभावेऽपि प्रतिपदोक्तत्वलक्षणमन्तरङ्गत्वमक्षतमेवेति चिन्त्यमेतत् । अमू इत्यत्र निषेधारम्भात्पूर्वमाङ्गुण इत्यस्याप्रवृत्तौ नुम्यमुनी इति स्यादमुयोरित्यत्र पूर्वमेत्वाभावे नुम्यमुनोरिति स्यादित्याशयः ।

**उच्चारणार्थानामपीति** ॥ उच्चारणार्थवर्णविशिष्टस्य तद्रहिते लक्षणया निर्वाहादनुवादे नेत्संज्ञाया उपयोगः । विधौ तु "न विधौ परश्शब्दार्थे" इति लक्षणाया निषेधादुच्चारणार्थवर्णनिवृत्तावित्संज्ञैव शरणमिति भाष्याशयः ॥ **अनुवर्तितत्वादिति** ॥ वस्तुतस्तदनुवृत्त्यभावेऽपि नोदात्तत्वप्रसक्तिरित्याह ॥ **शेषनिघातेनेति** ॥ अनुदात्तं पदमेकवर्जमित्यत्र पदग्रहणाद्यावतः पदत्वं तावत्सर्वमनुदात्तमित्यर्थस्याकरसम्मतत्वादित्याशयः ॥ **नात्रेति** ॥ ननु तिति प्रत्ययग्रहणमिति वार्तिकं भगवता प्रत्याख्यातमेव । किञ्च प्रत्ययाप्रत्यययोरिति परिभाषापि सिद्धान्ते नास्त्येव, तस्मात्कथमीदृशार्थलाभ इत्यत आह ॥ **आदेशेऽवित्यादि** ॥ **अनभिधानादिति** ॥ नस्तद्धित इत्यत्र तिविंशतेर्डितीत्यनुवर्त्य

वाक्यभेदेन विंशतेस्तिशब्दलोपस्तद्धित एव डितीति नियमाश्रयणे तु सत्यप्यभिधाने न दोष इत्याहुः ॥

**लाघवाभाव इति** ॥ पदद्वयस्य मात्राणां च तुल्यत्वादित्याशयः । ननु मास्तु शब्दलाघवं, प्रक्रियालाघवप्रयुक्तं ज्ञानलाघवमस्त्येवेति चेत्तत्राह ॥ **ङित्त्वसामर्थ्यादिति** ॥ एवञ्च नास्ति लाघवगौरवकृतो विशेष इति सामर्थ्यवर्णनमयुक्तमिति भावः ॥ **उशनसोऽनङिति** ॥ सम्बुद्धाविति शेषः । यत्तु सोर्डेति न्यासे विभक्तिनिमित्तकप्रकृत्युद्देश्यककार्यविषयस्य विभक्तौ लिङ्गविशिष्टाग्रहणमित्यस्याप्रवृत्त्या लिङ्गविशिष्टपरिभाषया सखीशब्दादपि डादेशप्रसङ्ग इति तन्न । शुन्येत्यादौ विभक्तिस्वरस्य लिङ्गविशिष्टपरिभाषया प्रसक्ते न गोश्वन्निति प्रतिषेधे विभक्तौ लिङ्गविशिष्टाग्रहणमिति निषेधोपपादनपरयुवोरनाकाविति सूत्रस्थभाष्यप्रामाण्येन विभक्त्युद्देश्यककार्येऽपि निषेधप्रवृत्तेर्निर्विवादत्वादिति बोध्यम् ॥

**उचितमिति** ॥ ननु षष्ठीनिर्देशस्य ह्यादेशा उच्यन्त इति स्थानिवत्सूत्रभाष्यादादेशविधौ षष्ठ्या एव न्याय्यत्वात्कथमौचित्यमिति चेन्न । नाभिनभं च विरागविरङ्गं चेत्यादाविव पाश्चात्यबोधे कल्प्यमानषष्ठ्यन्तताम‌ादाय तदुपपत्तेः । न च प्रथममेव षष्ठ्यन्तत्वकल्पनायां पाश्चात्यबोधानुपयोगाल्लाघवं, प्रथमान्तत्वे तु तदभ्युपगमे गौरवमिति वाच्यम् । प्रथमतो बहुषु पदेषु षष्ठ्यन्तत्वेन विपरिणामाभावप्रयुक्तलाघवसद्भावेन पाश्चात्यगौरवस्य फलमुखतया दोषाधायकत्वायोगात् । अतः प्रथमान्तता युज्यत एवेति दिक् ॥ **तदादिनियमसत्त्वादिति** ॥ स्त्रीप्रत्यये चानुपसर्जनेनेत्युक्तिरुपसर्जनानुपसर्जनसाधारण्येन गृह्यमाणे स्त्रीप्रत्यये तदाद्यंशस्योपसर्जनविषये प्रवृत्तिरनुपसर्जने तु नेति परिभाषार्थः । इत्थं च प्रदेशेषु वाक्यभेद एव। प्रकृते च सुतिस्याक्षिप्ततदाद्यंशं विशेष्यमादाय ङ्यापोरेक एव तदन्तविधिः । ततश्चोपसर्जनीभूतङ्याबाक्षिप्ततदादिरूपो यस्सुतिस्याक्षिप्ततदादिरुपसर्जनीभूतङ्याबन्तस्ततः परस्येत्यर्थस्य पर्यवसानादतिखट्व

---

१. **आहुरिति** ॥ वस्तुतस्तु मण्डूकानुवृत्तिवाक्यभेदनियमानामाश्रयणन्तु गौरवपराहतमत औकारस्य ङित्त्वमाश्रित्याद्ग्रहणप्रत्याख्याने सप्तम्यन्तविंशतौ शङ्कासमाधानयोरकरणेनानभिधानाश्रयणमेव युक्तमिति बोध्यम् ॥

इत्यादौ न दोष इत्याशङ्काभिप्रायः । गङ्गेव मनुष्यो गङ्गा, नदीव मनुष्यो नदीत्यादावुपसर्जनवाक्यप्रयोजनं द्रष्टव्यम् ॥ **एतत्सिद्धयर्थमिति** ॥ बहुश्रेयसीसिद्धयर्थमित्यर्थः । प्रत्ययग्रहणपरिभाषया ङ्याबाक्षिप्ततदादेशशब्दस्वरूपं विशेष्यमादाय ङ्यापोस्तदन्तविधौ सुतिस्याक्षिप्ततदादेशशब्दस्वरूपं विशेष्यमादाय येन विधिरितिपरिभाषया पुनस्तदन्तविधौ ङ्याबन्तान्तादित्यर्थस्यावश्यकत्वेनेति व्युत्क्रमेण सम्बन्धः ॥ **व्यपदेशिवद्भावेनेति** ॥ तदन्तविधिद्वये स्वीक्रियमाणे स्त्रीप्रत्यये चानुपसर्जनेनेति परिभाषाप्रवृत्तिप्रयुक्तवाक्यभेदस्यानुपयोगादेकमेव ङ्याबन्तादिवाक्यमुपसर्जनानुपसर्जनसाधारणतया लोपसम्पादकमित्यभिसन्धिः । तदन्तविधिद्वयमन्तरापि दीर्घग्रहणव्यावर्त्यं सुलभम् । तदन्तविधिद्वयन्तु बहुश्रेयस्यर्थमेव लक्ष्यानुरोधीत्याशयेनाह ॥ **श्रविष्ठासु जातश्श्रविष्ठ इति** ॥ दीर्घाबन्तत्वन्तु न स्थानिवत्त्वलभ्यम् । विशेषणतया वर्णमात्राश्रयणात् । नाप्यचः परस्मिन्नित्यनेन पञ्चमीसमासपक्षमाश्रित्य तल्लाभः । पञ्चमीसमासपक्षस्यानित्यत्वाल्लुकि प्रतिषेधाच्च । प्रत्ययलक्षणसूत्रन्तु नियमार्थं न तु विशेषणतया वर्णाश्रयणे विध्यर्थमिति भावः । एवं फल्गुन्यां जातः फल्गुन इति ङ्यन्तस्योदाहरणं द्रष्टव्यम् ॥ **देवदत्तेरिति** ॥ मूलोक्ते पञ्चमीसमासेन स्थानिवत्त्वशङ्का स्यात् । क्वौ लुप्तमित्यस्यासार्वत्रिकत्वात् । इह तु न कोऽपि प्रतिबन्ध इत्याशयः ॥ **उपस्थितत्वादिति** ॥ अतिव्याप्तिवारणे केवलं प्रश्लेषेण दीर्घग्रहणप्रत्याख्यानमेव नोपायः । किन्तु यथाश्रुते प्रत्यासत्तिरपि । अत एव प्रत्याख्यानस्यारम्भसमानफलकत्वमिति मन्यते ॥ **भाष्यप्रामाण्येनेति** ॥ तत्र हि नाग्लोपीति सूत्रे प्रत्याहारग्रहणाद्वृद्धेर्लोपो बलीयान् वृद्धयुत्तरं लोपे सत्याकारव्यतिरिक्त एतत्प्रत्याहारघटको न सम्भवतीति व्यर्थं प्रत्याहारग्रहणमित्युक्तम् । इगुपधेभ्यो धात्वर्थणिचि प्रत्याहरग्रहणस्य सार्थकतया कथमुक्तार्थलाभ इति तेषामनभिधानमावश्यकमिति भावः ॥ **अनुनासिकोकारपाठादिति** ॥ न च गुणानामभेदकत्वेन सानुनासिकोच्चारणेऽपि निरनुनासिकोकारविशिष्टस्य सुनोतेर्ग्रहणमिति वाच्यम् । शुद्धस्यैवोच्चारणेन सिद्धावनुनासिकोच्चारणात्मकेन यत्नेन तद्विवक्षया निर्वाह इत्याशयात् ॥ **विभक्तिसंयोगान्तलोपस्येति** ॥ एतेन सावपि पदमिति पक्षे गोमानित्यादौ तकारस्य संयोगान्तलोपे नकारविभक्त्योरानन्तर्यादुक्तज्ञापकेन तकारस्थानिकसंयोगान्तलोपस्यासिद्धत्वाभावाद्राजेत्यादाविव नलोपप्रसङ्ग इत्यपास्तम् । तद्धानासामिति निर्देशश्च प्रकृतार्थे प्रमाणमिति बोध्यम् ॥

**वारं वारमिति** ॥ लक्ष्यभेदाल्लिट्स्वित्यादौ चर्त्वमिव पुनः पुनः प्रवर्तत इत्याशयः ॥ **अत्र पाठेनेनि** ॥ इकोचीत्यच्ग्रहणेनोत्तरार्थेनापि न लुमतेति निषेधानित्यत्वं यथा ज्ञाप्यते तद्वदिति द्रष्टव्यम् ॥ **प्रत्याख्यानेऽपीति** ॥ सम्बोधनविभक्त्यन्तस्य विधेयभूतक्रियान्वयनैयत्येन समासघटकत्वायोगात्सम्बुद्ध्यन्तस्योत्तरपदपरत्वासम्भवस्तद्बीजम् ॥ **अनाप इत्युक्तमिति** ॥ भाष्यकृता च योगविभागमाश्रित्य प्रत्याख्यातम्। यद्याबन्तादाचारक्विप्स्यात्तर्हि तत्प्रकृतिककर्तृक्विबन्ताच्छसादावाबन्तत्वाद्वार्तिकमतेनाप्रवर्तमानोऽप्यातो लोपः प्रत्याख्याने धातुत्वाविशेषात्स्यादेवेति तदारम्भप्रत्याख्यानयोः फलभेद इत्याशयः ॥ **यङ्लुक् नास्त्येवेति** ॥ क्रियासमभिहारस्य धात्वेकसमधिगम्यत्वादाक्षेपेणैवोपपत्तावतिरिच्यमानं धातुग्रहणमौपदेशिकप्रतिपत्त्यर्थमिति नामधातुभ्यो यङ एवाभावात्कःप्रसङ्गस्तत्र लुक इति तात्पर्यम्। यङ्लुकश्छान्दसत्वेन लोके यत्नलभ्यत्वाद्भाष्योदाहृतव्यतिरिक्त औपदेशिकधातुप्रकृतिक एव नास्ति, नामधातुप्रकृतिकस्तु सुतरां, वेदे तु सति प्रयोगे बाहुलकादेव सकलार्थसिद्धिरित्याशयमन्ये। अचेकेदित्यत्र सूत्रकारमते लोपप्रसङ्गः। प्रश्लेषेण दीर्घग्रहणं प्रत्याचक्षाणस्य भगवतो भाष्यकारस्य मते तत्प्रसक्तिरेव नेत्याशयेनाह ॥ **ईकाररूपत्वाभावादिति** ॥ एवं च ङ्याबन्तात्तिस्योरसम्भव इति प्राचीनोक्तं युक्तमेवेति तत्त्वम्। **कृते चेति** ॥ इदं पूर्वरूपार्थम्।

ननु नलोपात्प्रागेव संयोगान्तलोपः किं न स्यादत आह ॥ **संयोगान्तलोपस्यासिद्धत्वादिति** ॥ **नलोपविषये इति** ॥ नलोपे कर्तव्ये कृते चेत्यर्थः ॥ **कर्त्र्येति** ॥ कर्तृ ई आ इति स्थिते पूर्वं पूर्वयणादेशे तस्यान्तोदात्तकर्तृशब्दसम्बन्ध्यृकारस्थानिकत्वेनोदात्तयणो हल्पूर्वादिति ङीप उदात्तत्वे तत्स्थानिकं यणमादाय टाया उदात्तसाधनार्थमयं विचारो भाष्यकैयटयोः। पक्षान्तरेऽपि न दोष इत्याह ॥ **आरोपे मानाभावादिति** ॥ विषयगतं पौर्वापर्यमारोप्य पूर्वपक्षिणश्शङ्का, न त्वसौ सिद्धान्त इति तदवलम्बात्प्रकृते तदारोपो न युक्त इति तात्पर्यम् ॥ **दत्वरुत्वविधायकाभ्यामिति** ॥ ईदृशस्य सकारस्य संयोगादिलोपप्रवृत्तौ तिप्सम्बन्धिनं तकारमादाय सिद्धमचकादित्यादिरूपमिति व्यर्थं तिप्यनस्तेरिति सूत्रम्। तथा संयोगादिलोपे धातुसकाराभावेन तद्बोध्यविकल्पस्य प्रवृत्त्ययोगात्तिप्सम्बन्धिनस्सकारस्य ससजुषोरिति रुत्वेनैकमेव विसर्गान्तमचकादित्यादि

रूपं स्यादिति व्यर्थं सिपि धातोरुर्वेति सूत्रमपीत्याभ्यां वक्ष्यमाणोऽर्थो ज्ञाप्यत इत्याशयः। ननु संयोगादिलोपापवादतया दत्वपक्षे "सलिलं सर्वमा इद" मित्यत्रानस्तेरिति पर्युदासबलात्संयोगादिलोपस्य निवृत्तिरिति युज्यते वक्तुम्। तदभावे पर्युदासस्याप्यभावात्संयोगादिलोपप्रवृत्तावनिष्टप्रसङ्ग इति चेन्न। स्कोरित्यत्र तिप्यनस्तेरिति पर्युदासेनैवोपपत्तौ दत्वविधिवैयर्थ्यस्य दुर्वारत्वात्। न च सामर्थ्यात्सान्तस्य धातोर्यस्सिप् तदन्तस्य रुर्वेत्यर्थेन सिप्सम्बन्धिनस्सकारस्य पक्षे ससजुषोरिति रुत्वनिवृत्तिकल्पनया सिपि धातोरुर्वेत्यावश्यकमिति वाच्यम्। प्रकरणाद्धातुसम्बन्धिनस्सकारस्य रुत्वविकल्पविधायकस्य सामर्थ्येन प्रत्ययसम्बन्धिनस्सकारस्य रुत्वविकल्पबोधकत्वकल्पनापेक्षया वक्ष्यमाणांशज्ञापनस्यैव लघुत्वात्॥ **कसाहचर्येण चेति**॥ प्रकृतिप्रत्ययोभयसम्बन्धिपदान्तसंयोगादिः ककारस्तु दुर्लभः। सङीति वक्तव्यमिति वार्तिकप्रयोजनप्रत्याख्यानप्रशंसायामष्टमद्वितीये काष्ठशगेव नास्ति कुतोऽयं काष्ठशग्स्थातेति भाष्योक्त्या ककारान्तेभ्यो धातुभ्यः क्विविचोरनभिधानबोधनादित्याशयः॥ **न किञ्चिल्लाघवमिति**॥ राजेत्यादौ संयोगान्तलोपात्पूर्वं नलोपाभावाय न ङिसम्बुद्ध्योरित्यस्य ज्ञापकत्वाश्रयणं, सुपीरित्यादौ संयोगादिलोपाप्रवृत्तये चायं प्रयत्न इति नास्ति लाघवमिति भावः। ज्ञानगौरवाच्छब्दगौरवमधिकमित्यभिमन्यमानं प्रत्याह॥ **किञ्चेति**॥ **सप्तम्येव युक्तेति**॥ षष्ठ्यन्तत्वपक्षे वा नपुंसकानामिति विकल्पो वाचनिकः, सप्तम्यन्तत्वे तु न लुमतेतिनिषेधानित्यत्वमूलकतया यौक्तिक इति युक्तत्वमस्य पक्षस्य, तदाह॥ **ङिग्रहणाच्चेति**॥ ननु वा नपुंसकानामित्यस्य वाचनिकत्वमभ्युपेत्य हल्ग्रहणमेव प्रत्याख्यायतां तत्राह॥ **अपूर्ववचनकरणेनेति**॥ **इति सूत्रमस्त्विति**॥ बिभर्ति बिभर्षीत्यादौ तिस्योर्हल्रूपत्वाभावादेव लोपाप्राप्तावपृक्तग्रहणं न कर्तव्यम्। सुतिस्यवयवो हलित्यर्थस्तु दुर्लभष्षष्ठ्या अभावाल्लक्षणायां मानाभावाच्चेत्याशयः। ननु तिस्योर्ग्रहणं व्यर्थमभिनोऽत्रेत्यादौ संयोगान्तलोपो रोरुत्व इति वचनेन निर्वाहादत आह॥ **अबिभा राज्यमिति**॥ यदि तु न मु न इत्यत्र नेति योगं विभज्य योगविभागस्येष्टसिद्ध्यर्थत्वात् ढ्रलोपदीर्घे सामान्यतः त्रिपाद्या असिद्धत्वं नेति व्याख्येयम्। अत एव लण्सूत्रस्थमजर्घा इति भाष्योदाहरणं संगच्छते, अन्यथा दश्चेति रुत्वस्यासिद्धत्वाद्रेफलोपप्रयोजकरेफपरत्वाभावेन दीर्घाप्रवृत्तौ तदसङ्गतिरेव। एवञ्चाबिभा राज्यमित्यादौ दीर्घो निर्बाधः।

कथमन्यथा पितू राज्यमित्यादौ रात्सस्येति लोपे तत्प्रवृत्तिस्स्यादित्युच्यते, तदा हल्ङ्यापस्सोरिति मूलोक्तं युक्तमेवेत्युपलक्षणप्रयोजनं मृग्यमित्याहुः ॥

**प्रथमान्ततया इति** ॥ णलुत्तमो वेति सूत्रस्वरसाण्णिदिति तृतीयान्ताद्वतौ योऽर्थस्तदर्थकमित्याशयः ॥ **अभिमान इति** ॥ एतेन प्रकृते सर्वनामस्थानपदसम्बन्धसूचकः परत्र स्वसम्बन्धसूचकश्चायं सप्तमीनिर्देश इत्युक्तप्रायम् ॥

**इदं सर्वमिति** ॥ सुसख्यादेर्घित्वप्रतिपादनमित्यर्थः । सिद्धान्ते तु पर्युदाससमर्पकस्य सखिशब्दस्यावयवलक्षणया सख्यवयवभिन्नाविदुतौ तदन्तौ वा घिसंज्ञावित्यर्थान्नैतादृशेषु घित्वप्रसङ्गः । अत एव यस्येति सूत्रे भाष्ये सख्यशिश्वीतिविहितङीषन्तोत्तरपदकस्यातिसखिशब्दस्य घिसंज्ञासम्पत्तिरीकारे परत इकारलोपप्रयोजनमित्युक्तम् । सखिभिन्नावयवाविदुतौ सखिभिन्नाविदुदन्तौ वा घिसंज्ञावित्यर्थे हि लोपाभावेऽपि समुदायस्य सखिभिन्नत्वेन घित्वप्रवृत्तेरव्याहततया तदसङ्गतिरेव । किञ्च वर्णसंज्ञापक्षे सखिभिन्नावयवाविदुतावित्यर्थे सखिभिन्नस्य तत्सदृशस्य प्रातिपदिकस्य ग्रहणात्कृतं सख्येत्यादौ दोषाभावेऽपि षष्ठ्या आक्रोशे इत्यलुकि सख्युः कुलमित्यादौ समुदायमाश्रित्य सखिभिन्नावयवत्वात्घिसंज्ञाप्रवृत्तिर्दुर्वारा । तदन्तपक्षैकफलतासम्पत्तये तथाभूतानामनभिधानमिति तु सत्यामुपपत्तावयुक्तम् । न च लिङ्गविशिष्टपरिभाषया लोपेऽपि सखिशब्दत्वमाश्रित्य समुदायस्य सख्यवयवभिन्नेकारान्तत्वाभावाद्धित्वानुपपत्तिरेवेति वाच्यम् । अनित्यायास्तस्याः परिभाषायाः प्रकृते भाष्यकारैरनादरणात् । लोपे तु सखिशब्दस्य लाक्षणिकत्वान्न तत्र घित्वपर्युदासप्रसक्तिः । तस्मात्सुसख्यतिसख्यादेस्सखिशब्दान्तस्य घित्वमयुक्तमेव । किम्बहुना लक्ष्मीवाचकेकारेण समस्तस्य सखीशब्दस्यात्यादय इति समासे निष्पन्नस्यातिसखीशब्दस्यापि सत्यभिधाने घित्वमनिष्टमेवेति सुधियो विभावयन्तु ॥

**नियतविषयेत्यादि** ॥ त्वादीनामवान्तरधर्मप्रकारकसंशयानुत्थापकत्वं नियतम् । बहुत्वस्य तु बहवो गताः कतीति न ज्ञायन्त इति प्रतीतेस्तदभावात्संख्यात्वाभाव इत्याशयः ॥

**उभयमपीति** ॥ लक्षणया षट्छब्दः षट्संज्ञकशब्दप्रतिपाद्यपरः । तत्र विशेषणतया षट्संज्ञकशब्दः, प्राधान्येन तत्प्रतिपाद्यश्चोभयं विवक्षितमिति भावः । ननु शब्दात्मकयोर्जश्शसोः कथमर्थतः परत्वं तत्राह ॥ **स्वगतसंख्यानुवादकेत्यादि** ॥ अयं भावः । विभक्तिगतपरत्वावधित्वस्य षट्संज्ञकशब्दगतस्य तदर्थे स्वाश्रयनिष्ठशक्तिनिरूप्यत्वसम्बन्धादारोपः । एवंभूतस्याप्यवधित्वस्य प्रकृतसूत्रस्थाद्बहुवचनात्पञ्चम्यनुशासने दिक्छब्दार्थनिरूपितावधित्वसम्बन्धाभिधायकदिग्योगशब्देन ग्रहणं कल्प्यते । अर्थश्चायं प्रधानभूत एव ॥ प्रधानाप्रधानयोरिति न्यायात् । ततश्च तथाभूतार्थनिष्ठावधित्वनिरूपकस्य विभक्तिगतपरत्वस्य तद्गुणसंख्यानुवादकत्वसमनैयत्यात्तद्रूपतया पर्यवस्यतीति, तदाह ॥ **गौणमिति** ॥ **प्राचामनुरोधेनेति** ॥ प्रायः प्राचीनानां प्रमाणविरहितस्वतन्त्रकल्पनाभिनिवेशादियमपि तथाविधैवेत्यर्थः । ननु प्रकृतसूत्रस्थबहुवचनात्मकप्रमाणसहकृतत्वात्कथमस्याः कल्पनायाः प्राचीनसम्मतस्वतन्त्रकल्पनात्वं तत्राह ॥ **बहुवचनमिति** ॥ **तिसृभ्य इति** ॥ ननु तिसृभ्यो जस इति जसो विधीयमानस्यान्तोदात्तस्य प्रियतिस्र इत्यादौ गौणे प्रसक्तस्य निरुक्तरीत्या व्यावृत्त्यर्थमेव तत्र बहुवचनम् । तदुक्तं कात्यायनेन 'जस्ग्रहणानर्थक्यमन्यत्राभावादिति' ॥ बहुवचनबलात्तिसृस्वरः प्रधान एव प्रवर्तते । प्रधाने च तिसृशब्दो नित्यबहुवचनान्तः । तत्र झलादौ झल्युपोत्तममिति प्रवर्तते । नामि षट्त्रिचतुर्भ्यो हलादिरिति शस्युदात्तयणो हल्पूर्वादिति च सिद्धमन्तोदात्तत्वम् । सर्वनामस्थानत्वाज्जस्युदात्त यण इत्यस्याप्रवृत्तावारभ्यमाणस्तिसृस्वरो विनापि जस्ग्रहणं तत्रैव प्रवर्तत इत्यनुपयुक्तं जस्ग्रहणमिति हि तदाशयः । न च तदुत्तरमुपसमस्तार्थमेक इत्यतितिस्राविस्यादिगौणद्विवचनव्यावृत्त्या तस्य भाष्यकृता सार्थक्यसमर्थनादुत्तरमुनेः प्रामाण्याच्चाभीष्टमेव गौणे तिसृस्वर इति नेदं युक्तमिति वाच्यम् । एकेत्युक्त्या तस्यैकदेशयुक्तित्वात् । न चास्य स्वरसूत्रस्याङ्गपदाधिकारीयत्वाभावात्तदन्तविधेर्दुरुपपादतया कथं गौणे प्रसक्तिरिति वाच्यम् । जस्प्रत्ययाक्षिप्ततदाद्यंशमादाय तदन्तविधेस्सुवचत्वात् । तदन्तविध्यभावेऽपि समासे जसस्तिसृशब्दात्परत्वस्याव्याघाताच्च । तस्मात्कथमिह बहुवचनवैयर्थ्यमित्याग्रहेऽप्याह ॥ **षट्संज्ञकानामिति** ॥ ननु बहुत्वेऽपि षट्संज्ञकानां जातिनिर्देशेनैवोपपत्तौ बहुवचनमनुपयुक्तं तत्राह ॥ **न हीत्यादि** ॥ **उचित इति** ॥ लाघवमौ-

चित्ये हेतुमुद्भाव्य प्रकारान्तरमाह ॥ **आचार्यशैली वेति** ॥ ननु धातोरेकाच उपसर्गे घोः किरिति वर्तत एवाचार्यशैलीत्याशयेनाह ॥ **बहुवचनान्तस्यैवेति** ॥ नन्वात्रार्थे फलाभाव इत्यत आह ॥ **चेति** ॥ तेनारोपितावधित्वरूपगौणसम्बन्धे पञ्चम्यनुपपत्तिस्समुच्चीयते । न हि गौणेष्वर्थेषु विभक्त्यनुशासनानि प्रवर्तन्ते । अत एव गङ्गायां घोष इत्यत्र भगीरथरथखातावच्छिन्नप्रवाहरूपगङ्गापदार्थे तीरगतघोषाधिकरणत्वारोप इति मते सप्तम्यधिकरणे चेत्यत्र स्वरितत्वप्रतिज्ञानात्सप्तमी समर्थिता भाष्ये । ननु प्रकृतसूत्रस्थाद्बहुवचनादिहापि गौणावधित्वे पञ्चमीति चेत्, जातिनिर्देशेऽपि पैक्षान्तरेणोपपन्नेन बहुवचनेन भाष्यविरुद्धापूर्वकल्पनाभिनिवेशो न युक्तः । न च रामेति द्व्यक्षरं नाम मानभङ्गः पिनाकिनः इत्यादिव्यवहारोपपत्तये स्वीकर्तव्येन शब्दार्थयोस्तादात्म्येन यदेव शब्दगतं विभक्तिनिष्ठपरत्वावधित्वं तदेवार्थगतमित्यारोपानपेक्षणाद्गौणत्वाभाव इति वाच्यम् । तत्तादात्म्यस्य यश्शब्दस्सोऽयमर्थो योऽर्थस्स शब्द इत्येवमात्मकानादिसिद्धव्यवहारमूलकाध्यासिकसाध्यत्वेन तन्मूलकस्याप्यर्थगतावधित्वस्य गौणत्वानपायात् । किञ्च तादात्म्यं भेदे सति तदभावः । तत्र द्वयोरप्यंशयोर्वास्तविकयोः परस्परविरोधेनैकत्र समावेशासम्भवाद्भेदाभावोऽध्यासविषयः, भेद एव तु न तथा । तस्य यत्किञ्चिद्धर्मपुरस्कारेण सिद्धत्वात् । अत्यन्ताभिन्ने तादात्म्यव्यवहारस्यानिष्टत्वाच्च । अपि च प्रक्रियानिर्वाहार्थमेतादृशार्थगतावधित्वस्वीकारे स्वं रूपमित्येतत्सूत्रस्थाकरविरोधः । तत्र ह्यग्नेर्ढगित्यादौ ढगादिगतपरत्वावधित्वस्याग्निशब्दार्थाङ्गारादौ बाधात्सामर्थ्येन तादृशार्थप्रतिपादकोपस्थिताग्निशब्दादेव ढगादिप्रवृत्तिरिति व्यर्थं सूत्रमित्युक्तम् । उक्तरीत्या तदुपपत्तौ सामर्थ्यवर्णनमयुक्तमेव । ततश्चात्र प्रकारान्तरमेव गौणव्यावृत्तये परिग्रहीतुं न्याय्यमित्याह ॥ **तस्मादिति** ॥ **विहितविशेषणमिति** ॥ षट्संज्ञकेभ्यो विहितयोरङ्गसंज्ञानिमित्तयोर्जश्शसोर्लुगिति तदर्थ इत्याशयः ॥ **न मानमिति** ॥ नन्वेवमेकत्विनो द्वित्विन इत्यादावपि मत्वर्थीयविषये षट्संज्ञाप्रवृत्त्या लुक्प्रसङ्ग इति चेन्न । षान्तसाहचर्येण नान्तस्यापि तद्धितान्तत्वनिबन्धननान्तत्व्यतिरिक्तस्यैव ग्रहणमित्याशयात् ॥ **सर्वादीनीति सूत्रे इति** ॥ तत्र हि भाष्येऽङ्गाधिकारे यदुच्यते गृह्यमाणविभक्तेस्तद्भवति । यद्येवं

---

१. पक्षान्तरेण ॥ जात्याख्यायामित्यनेन सूत्रेणेत्यर्थः ॥

परमत्रञ्च परमत्सत षड्भ्यो लुगिति लुम प्राप्नोति, नैष दोषः । षट्प्रधान एष समास इत्युक्तम् ॥

ननु विशेषणतया वर्णाश्रयणे विध्यर्थत्वसम्भवे कथं प्रत्ययलक्षणसूत्रस्य नियमार्थत्वमित्याशङ्कां परिहरति ॥ तृणह इत्यादि ॥ तृणह इमागमः स्याद्धलादौ पिति सार्वधातुक इत्यतृणहमित्यादिव्यावृत्त्यर्थो यथाश्रुते वाक्यार्थः । एवञ्चातृणेडित्यत्र नित्यत्वाद्धल्ङ्यादिलोपे स्थानिवत्त्वेन तत्प्रवृत्तौ विशेषणतया वर्णाश्रयणमित्याशयः ॥ अचि नेत्यनुवृत्त्यैति ॥ नाभ्यस्तस्याचीत्यतस्तदनुवृत्तिः, प्रागुक्तार्थे तु हल्ग्रहणानुवृत्तिरुतोवृद्धिरित्यत इति द्रष्टव्यम् ॥ नियमेनेति ॥ अजादौ ङिति चेदङ्येवेति तु न नियमस्सामान्ये पक्षपातादित्याशयः ॥ मित्रशीरिति ॥ आङश्शास इच्छायामिति पठितस्त्वस्मादतिरिक्तः, प्रकृते चाङी-त्येतत्साहचर्यात्परस्मैपदिन एव ग्रहणमिति वदतामाशासः क्वावुपसंख्यानमिति वार्तिकबलादाशीरित्यस्य सिद्धिः । अस्यैव धातोराङः परस्येच्छायामात्मनेपदार्थ-मन्यत्रानुवाद इति मते तस्य वार्तिकस्याशास्त इत्यादावित्त्वाभावाय नियाम-कत्वेऽपि नियमशास्त्राणां विधिमुखेन प्रवृत्त्या नास्ति तत्र वर्णाश्रयणमिति भावः । अत्राद्यपक्ष एव ज्यायान् । अनूद्यमानानामुपसर्गान्तरसमभिव्याहारे तदतिरिक्तार्थे च प्रवृत्त्यभावस्य स्वभावसिद्धतया नमोवाकं प्रशास्महे इत्यादेरनुवादपक्षे साधु-त्वस्य दुर्वचत्वात् ॥ अन्यत्रापीति ॥ ईत्वमवकारादाविति वार्तिकस्यादिग्रहण-बलेन व्यपदेशिवद्भावानधीनतदादित्ववत्येव निषेधपरतया वार्तिकनये क्विपि वात-प्रमीरित्यादावीत्वस्याभीष्टत्वेन तत्प्रत्याख्याने बहिरङ्गपरिभाषाया अनित्यत्वात्परत्वे-नापृक्तलोपात्पूर्वमीत्वप्रवृत्तिः । अनभिधानं तु न युक्तम् । अत एव धोध्यायतेर्द-धातेर्वेति जनसनेतिसूत्रस्थं भाष्यमुपपद्यत इत्याशयः ॥ द्वितीयप्रत्ययग्रहणा-दिति ॥ अन्यथा तल्लक्षणमित्येव ब्रूयादित्याशयः । सूत्रं तु प्रत्ययनिमित्तकमेव प्रत्ययलोपे, न तु प्रत्ययस्थानिकमित्यर्थेन नत्रभिन्न इत्यादौ भिसादीनां लुकः स्थानि-वत्त्वेनैसाद्यभावार्थमिति बोध्यम् ॥ तदनित्यत्वस्यापीति ॥ यद्यपि भाष्ये सोर्मनसी अलोमोषसी इत्यनेनोत्तरपदाद्युदात्तत्वमापादितम् । सिद्धान्ते तु नन्तुभ्यामित्यु-त्तरपदान्तोदात्तत्वमभीष्टम्, तथापि मन्साहचर्याच्छ्रूयमाणासन्तस्यैव ग्रहणे दोषा-भावेन परिभाषानित्यत्वेनैव भाष्यस्य योजनीयतया तुल्यत्वेन दीर्घापादनमित्याहुः ।

केचित्तु निर्दिश्यमानस्यासन्ताङ्गावयवस्यास उपधाया दीर्घ इत्यर्थस्य न्याय्यतया सुट्टषच्छब्दस्य स्थानिवत्त्वेनासन्तत्वेऽपि तदवयवस्यास उपधाया दुर्लभत्वेन दीर्घप्राप्तेर्भाष्योक्तमेव युक्तमित्याहुः[1]।

**स्थानिवदित्यनुवृत्त्यैवेति** ॥ यद्यप्यत्र प्रत्ययलोपे स्थानिवदित्यर्थे नखभिन्न इत्यादावैसाद्यादेशप्रसङ्गो दुर्वारस्सिद्धान्ते तु प्रत्ययवदित्येव सिद्धे लक्षणपदोपादानात्प्रत्ययनिमित्तकमेव न तु तत्स्थानिकमित्यर्थाददोषः। ततश्च तल्लक्षणमित्येव सिद्धे प्रत्ययग्रहणादुक्तार्थलाभ इति वक्तुं युक्तम्। तथापि प्रत्ययलोप इत्युपमेये सप्तमीदर्शनात्सामर्थ्याच्छब्दाधिकारेणानुवर्तमाने स्थानिवत्पदे सप्तम्यन्तादेव वतिरिति निमित्तनिमित्तिभावावगत्या कथञ्चिदिष्टार्थलाभ इत्याशयादेवमुक्तमिति बोध्यम्। ननु यत्किञ्चिन्निष्ठप्रकारतानिरूपितविशेष्यत्वमुतान्यनिष्ठविशेष्यतानिरूपितप्रकारतानापन्नत्वं वा वर्णगतं प्राधान्यम्। उभयथापि गवे हितं गोहितमित्यत्र प्रत्ययलक्षणेनावादेशो दुर्वारः। एचोऽयवायाव इत्यत्राजुपश्लिष्टस्यैचोऽयवायाव आदेशा इत्यर्थे न ह्यन्यनिष्ठविशेषणतानिरूपितं विशेष्यत्वं निमित्तभूतेऽच्यस्ति, विशेषणान्तराभावात्। नाप्यन्यनिष्ठविशेष्यतानिरूपितविशेषणत्वाभावः, स्थानिभूतस्यैचो विशेषणत्वात्। तस्मात्किं तत्प्राधान्यं तत्राह ॥ **वर्णस्य तत्त्वमिति** ॥ **इतराविशेषणत्वमिति** ॥ भेदसंसर्गानवच्छिन्नविशेषणत्वाभाव इति तदर्थः। तेनैचोऽयवायाव इत्यत्र निमित्तस्याचो भेदसंसर्गेणैव स्थानिविशेषणत्वमित्यदोषः ॥ **उत्क्रामेति** ॥ उत्पूर्वात्क्रमेर्लोटो हेर्लुकि रूपम् ॥ **दीर्घसिद्धिरिति** ॥ अन्यथा पूर्वोपस्थितनिमित्तकत्वेनान्तरङ्गत्वात्प्रथमं प्रसक्तो दीर्घोऽन्तरङ्गानपीति न्यायेन लुका बाधितो लुगुत्तरमुक्तनिषेधेन न स्यादित्याशयः। उतश्च प्रत्ययादिति हेर्लुकि कुर्वित्यत्रात उत्सार्वधातुक इति करोतेरुत्वं प्रयोजनम्। सार्वधातुकपरकोप्रत्ययनिरूपिताङ्गत्ववतस्तद्विधानादिति नोक्तम्। आभीयासिद्धत्वेन निर्वाहात्। तत्प्रत्याख्याने तूक्तरीतिरेव शरणमिति बोध्यम् ॥ **अव्यवहितप्रकृत्युद्देश्यककार्ये इति** ॥ निर्दिष्टपरिभाषयेति शेषः ॥

---

१. **आहुरिति** ॥ परे त्वल सूत्रे निर्दिश्यमानपरिभाषाप्रवृत्तौ निर्दिश्यमानस्यासो दीर्घ इत्यर्थेऽचश्चेति परिभाषयाऽकारस्यैव दीर्घसिद्धावुपधाग्रहणानुवृत्तेः फलाभावेनोपधाग्रहणमनुवर्तयतामत्र सूत्रे निर्दिश्यमानपरिभाषाया अप्रवृत्तावेव तात्पर्यस्य कल्पनीयतया प्रकृते दीर्घापादनमपि सम्यगेवेति मूलकाराशयमुद्भावयन्ति ॥

इति दिगिति ॥ यद्यपि वार्तिकमते सुदृषदित्यत्र स्वरदोषप्रसक्तिं साहचर्यमेव वारयति । बोभवीतीत्यादौ यङ्लुकि ङित्त्वनिबन्धनमात्मनेपदमपि न भवति । चर्करीतं चेत्यदादौ परस्मैपदेषु विशिष्य पाठाच्छान्दसत्वाच्च । किञ्च प्रत्ययलक्षणस्यानल्विधावित्येतदपवादतया तस्य प्रसज्यप्रतिषेधपरत्वादपवादविषयपरिहारेणोत्सर्गस्य वाक्यार्थनिर्णयस्यौचित्याच्च निषेध्यसमर्पकस्यादेशशब्दस्य प्रत्ययलोपातिरिक्तपरतया तदनुरोधादर्थाधिकाराच्च विधिकोटावप्यादेशस्तथाभूत एवेति प्रत्ययलोपे स्थानिवत्त्वाप्रवृत्तिरिति न काप्यनुपपत्तिस्तथापि वार्तिकमते प्रत्ययगतं प्राधान्यं यदि सर्वदा विशेषणताराहित्यं तदा प्रत्ययनिमित्तकस्यैवानेनापेक्षितत्वाद· प्रसिद्धिः । तादात्म्यानवच्छिन्नविशेषणताराहित्यं तदिति चेद्राजेत्यादौ हल्ङ्यादिलोपोत्तरमपेक्षितं सुबन्तत्वनिबन्धनपदत्वं दुर्वचम् । ततश्च वर्णनिरूपितविशेषणताराहित्यं तदिति विवक्षायां क्लेशः । यदि तु विशेषणतया वर्णाश्रयणे विध्यर्थत्वादस्य सूत्रस्य तदतिरिक्ते स्थानिवत्त्वेनैव तत्तत्कार्यलाभ इत्युच्यते, तर्हि भुवं प्राप्तो भूप्राप्त इत्यादावुवङादिप्रापकस्य प्रत्यलक्षणस्यानन्तरस्येतिन्यायेन निवारकतया कृतार्थस्य न लुमतेत्यस्य स्थानिवद्भावविषये प्रवृत्त्यनौचित्यात्कतीत्यादौ स्थानिवत्त्वेन गुणाद्यापत्तिः । अनन्तरस्येति न्यायस्य लक्ष्यानुरोधादनाश्रयणे तु सुरूपा ब्राह्मणीत्यादौ स्थानिवत्त्वेनान्तर्वर्तिनस्सोरुगित्त्वमाश्रित्य ङीबापत्तावनुबन्धकार्येष्वनल्विधाविति प्रतिषेधः क्वचिदाश्रयणीय इति क्लेशः । किञ्चाण्योऽकारस्तदन्तादित्यर्थेऽपि तथाभूतस्याकारत्वस्य प्रत्ययत्वव्याप्यतया प्रत्ययस्यैव प्राधान्याच्चित्रायां जाता चित्रेत्यादौ दोषवारणाय प्रत्ययत्वव्याप्यधर्मो वर्णत्वव्याप्यधर्मानवरुद्धो विवक्षणीय इत्यपि क्लेश इति मतान्तराभिनिवेशो भाष्यकृत इत्याहुः ॥

उपलक्षणमिति ॥ बहुवचनस्यार्थप्राधान्यबोधकताया अधुनैव निराकृतत्वादन्यथा व्याख्यायते । विहितविशेषणाश्रयणे न मानमित्याशयः । गौणमुख्यन्यायोऽपि नोपसर्जने त्रयादेशं व्यावर्तयतीत्याह ॥ **गौणमुख्यन्यायस्त्विति** ॥ **पदकार्यविषय एवेति** ॥ नन्वत्रार्थे किं प्रमाणं तत्राह ॥ **अप्रसिद्धत्वरूपस्येति** ॥ अप्रसिद्धत्वमाधुनिकसङ्केतविषयत्वम् । गौणलाक्षणिकत्वं च सादृश्यमूलकलक्षणाप्रयोज्यत्वम् । इत्थं च सूत्रकृता पूर्वादीनां सर्वनामत्वे संज्ञापर्युदासोपक्रमात्परिनिष्ठितस्य पदान्तरसम्बन्ध एवान्वयानुपपत्तिप्रयुक्तलक्षणाप्रसक्तेश्च पदकार्यविषयत्वमस्य

न्यायस्येति तत्त्वम्। अत एव गौर्नाम कश्चिद्गौर्वाहीक इत्यादयः प्रयोगाः। अन्यथा हि णित्त्वमत्र दुर्वचं स्यात्। अत्र विभक्त्यनिमित्तकत्वे सति स्त्रीत्वानिमित्तकत्वं पदकार्यत्वम्। गोतो णिदित्यादेर्विभक्तिनिमित्तकस्य पदकार्यत्वाभावाय सत्यन्तम्। स्थौल्यगुणयोगादन्यत्र प्रयुज्यमानान्नागशब्दाज्जानपदादिसूत्रेण विधीयमानस्य ङीषः पदकार्यत्वाभावाय विशेष्यदलमिति बोध्यम्॥ **एतद्भ्रमनिवृत्त्यर्थमिति**॥ औडुलोमिशब्दस्यैव कथं चिदकारोन्तादेशो वृद्ध्यभावश्चेत्येवंरूपभ्रमनिवृत्त्यर्थमित्यर्थः॥ इति इदन्ताः॥

**प्रत्याख्यातमिति**॥ अधिकफलसंग्रहार्थमत्र प्रत्याख्यानम्। न तु वार्तिकप्रयोजनानामन्यथासिद्धिमात्रेणेत्याशयः। किञ्च वार्तिकसत्त्वेऽप्यादिग्रहणादनतिदिष्टतदादित्ववत एव प्रतिषेधविषयतया क्लिलोपोत्तरं भवत्येवेत्वमतो नास्त्यारम्भप्रत्याख्यानयोः फलविशेष इति प्रागुक्तं न विस्मर्तव्यम्॥ **असिद्धत्वादिति**॥ आभीयत्वेनेति शेषः॥

ननु ङ्यादिष्विति बहुवचनमयुक्तमूङ एवैकस्यादिपदग्राह्यत्वादत आह॥ **प्रयोगाभिप्रायेणेति**॥ **तदवयवे लक्षणेति**॥ एतेन विद्वत्पत्नीतरेत्यादौ तदन्तसंज्ञायामुगितश्चेति ह्रस्वविकल्पापत्तिर्विशिष्टस्य नदीसंज्ञकस्योगिदन्तात्परत्वात्। वर्णसंज्ञायां तु नदीसंज्ञकस्येकारस्य ततः परत्वाभावान्न तत्प्रवृत्तिरिति पक्षयोः फलविशेष इत्यपास्तम्। तदन्तसंज्ञापक्षेऽपि नद्यवयवस्य ह्रस्वभाविनस्ततःपरत्वाभावात्। किञ्च ह्रस्वविधौ विहितविशेषणमाश्रयितव्यमिषुमच्छब्दादिप्रकृतिकाणन्तत्वप्रयुक्ते ङीप्यैषुमतितरेत्यादौ ह्रस्वविकल्पवारणार्थमिति स्पष्टं युवोरनाकावित्यत्र भाष्ये। ततश्च नदीसंज्ञकस्योगिदन्ताद्विशिष्टस्य विधानासम्भव एव तत्र लक्षणायां गमकम्। प्रतिपदोक्तपरिभाषया तु न ह्रस्वविकल्पो व्यवस्थापयितुं शक्यः। विशिष्टस्य प्रतिपदोक्तत्वासम्भवात्। वर्णसंज्ञापक्षेऽपि भोगवद्गौरिमतोः संज्ञायामिति शार्ङ्गरवादिपाठप्रयुक्ते ङीनि भोगवतितरेत्यादावभीष्टस्य विकल्पस्य दौर्लभ्यापत्तेः। स्थानिवद्भावोऽप्यैषुमतितरेत्यादौ दुर्लभः। बहिर्भूततरबादिनिमित्तकस्य तस्य बहिरङ्गत्वेनासिद्धतया तथाभूते कार्ये स्थानिवत्त्वायोगात्। नदीबन्धुनीत्यादौ लक्षणाया अनुपयोग एव। अयं च पक्षो लक्षणापेक्षितत्वात्क्लिष्टः। वर्णयोरेव नदीसंज्ञेति पक्षे तु वर्णग्रहणे कृतेन तदन्तविधिनैव निर्वाहा-

न्नग्रृत इत्यादौ नास्ति परिक्लेशः । जाग्रदीश्वरीत्यादौ समासीयोत्तरपदाद्यवयवस्य शतुरनुमोनद्यजादीत्युदात्तत्वव्यावृत्तये पक्षद्वयेऽपि विभक्तिसाहचर्यमेव शरणमथवा विहितविशेषणम् । अत एव जाग्रत् ई लक्ष्मीर्जाग्रदीत्यत्र न दोष इति दिक् ॥ **संगच्छत इति** ॥ घिसंज्ञा तु वर्णयोस्तदन्तयोर्वा, तत्र नास्ति कश्चित्परिक्लेशः । परं तु वर्णसंज्ञायामेव भाष्यवार्तिककारयोर्निर्भरः । उपदर्शितवार्तिकस्वरसादाकडारसूत्रस्थभाष्यस्वरसाच्च । तत्र हि भाष्ये विश्च ना च विनरौ तयोर्भावो वैनत्रमित्यत्र द्वन्द्वे घीति पूर्वनिपाताच्च इगन्ताच्च लघुपूर्वादित्यण्प्रत्ययश्च घिसंज्ञालघुसंज्ञोभयसमावेशप्रयोजनमाकडारसूत्रारम्भाच्च न सिद्ध्येदित्याशङ्क्य घिसंज्ञानुवादेन लघुसंज्ञा विधीयत इति समाहितम् । तदन्तसंज्ञापक्षे तु भिन्नविषयतया सूत्रारम्भेऽपि समावेशस्य सुगमत्वात्तदसङ्गतिरेवेति ध्येयम् । अकृतव्यूहपरिभाषाया अनित्यत्वादनाश्रयणं, शास्त्रे वा तदनाश्रयणमित्याशयेनाह ॥ **अन्तरङ्गत्वादिति** ॥ **अभिमानेन वेति** ॥ प्रकृतशास्त्रप्रवर्तकाचार्यतात्पर्यविरोध एवास्यार्थस्याभिमानविषयत्वे हेतुरित्याशयस्तदाह ॥ **भाष्यकृता त्विति** ॥ **तस्य संज्ञायामिति** ॥ वृत्तेः पूर्वं तदुत्तरं वा नदीसंज्ञायां प्रवृत्तायामित्यर्थः । कुमारी शब्दे क्यजन्तात्क्विप् । खरकुटीशब्दे त्विवे प्रतिकृताविति कनो लुम्मनुष्य इति लुक् । **प्रत्याख्यातमिति** ॥ यथोद्देशकार्यकालयोरुभयोरपि पक्षयोरित्यर्थः । कथं प्रत्याख्यातं तत्राह ॥ **अवयवस्त्रीविषयत्वादिति** ॥ **अभावश्चेति** ॥ अत एव राजकुमारीत्यादौ नदीत्वम् । अन्यथोत्तरपदस्यानर्थक्याद्विशिष्टस्य तन्मात्रबोधकत्वाभावाच्च तदनुपपत्तिरेवेति भावः । नन्ववयवत्वस्य समुदायसापेक्षत्वात्समासीयोत्तरखण्डस्य भवतु समासात्मकसमुदायनिरूपितमवयवत्वम् । क्विलुब्विषये तु प्रकृत्यतिरिक्तस्य समुदायस्य विनष्टत्वात्कथमनेन तदंशे प्रत्याख्यानसम्भव इत्यत आह ॥ **अवयवशब्देनेति** ॥ **इच्छादिविशेषणतयेति** ॥ ननु प्रधानाप्रधानयोरिति न्यायेन प्राधान्यतो नित्यस्त्रीत्वाभिधायकस्यैव नदीत्वं युक्तम् । अन्यथा वर्षाभूशब्दस्य दर्दुरवाचकत्वे पुंसि वर्तमानस्यापि विशेषणतया नित्यस्त्रीत्वबोधकत्वेन नदीत्वप्रयुक्तकार्यप्रसङ्गः । इत्थञ्च कार्यकालपक्षे बहुश्रेयस्यादौ क्विलुब्विषये च वृत्तिप्रतिपाद्यान्यपदार्थविशेषणतया नित्यस्त्रीत्वाभिधायकस्य श्रेयस्यादेर्नदीत्वस्याप्राप्तस्य समर्थनाय वार्तिकमारब्धव्यमेवेति कथं प्रत्याख्यानमिति चेत्सत्यम् । नित्यस्त्रीत्वं च प्राधान्येन लिङ्गान्तरानभिधाय-

कत्वम्। लिङ्गस्य प्राधान्यमाश्रयद्वारकम्, न तु स्वतः, तस्य द्रव्यविशेषणतायाः कॢप्तत्वात्। अभिधायकत्वं च शक्तिमत्त्वमेव। इत्थञ्च यत्किञ्चिन्निरूपितप्रकारताव्यधिकरणस्त्रीत्वातिरिक्तलिङ्गनिरूपितविशेष्यतानवरुद्धस्त्रीत्वनिरूपित-स्वार्थनिष्ठविशेष्यतावगाहिशक्तिमत्त्वं नित्यस्त्रीत्वमिति पर्यवसन्नम्। बहुश्रेयस्यादौ वृत्त्युत्तरमपि तथाभूतशक्तिमत्त्वमवयवस्यास्त्येव। बोधश्च समुदायशक्तिजन्यपदार्थोपस्थितिप्रयुक्तो विशिष्टार्थविषयक एव। समुदायशक्तिजन्यपदार्थोपस्थितेरवयवशक्तिजन्यां पदार्थोपस्थितिं प्रति प्रतिबन्धकत्वात्। तदुच्यते ॥ अवयवप्रसिद्धेस्समुदायप्रसिद्धिर्बलीयसीति ॥ जहत्स्वार्था तु यत्रावयवशक्तिसमुदायशक्त्योः परस्परविरुद्धपदार्थोपस्थापकता तत्रैव। 'जहत्स्वार्था तु तत्रैव रूढिर्यत्र विरोधिनी,'त्युक्तेः। भवतु वा सार्वत्रिकी। उत्तरपदे तदभाव इति सम्प्रदायः। तथा च पक्षद्वयेऽपि वृत्ताववयवस्य नदीत्वं निर्विवादमेवेति प्रत्याख्यानं कार्यकालयथोद्देशपक्षोभयसाधारणम्। अत एव भाष्येऽवयवस्त्रीविषयत्वात्सिद्धमवयवोऽत्र स्त्रीविषयः। तदाश्रया नदीसंज्ञा भविष्यतीत्युक्तम्। यथोद्देशमात्राभिप्रायकत्वे तदाश्रया नदीसंज्ञा वर्तत एवेति वदेत्। पक्षविशेषमप्युपन्यस्येत्। वर्षाभूःप्रभृतिष्ववयवस्य समुदायस्य वा निरुक्तशक्तिमत्त्वरूपस्य नित्यस्त्रीत्वस्याभावेन नदीसंज्ञाया अप्रवृत्तेर्नास्ति प्रधानाप्रधानन्यायोपयोग इत्याशयो विभावनीय इत्याहुः।

केचित्तु आकडारीयसंज्ञासु कार्यकालपक्षाभावस्य परमसिद्धान्ततया तदनुरोधेन वचनारम्भः, प्रत्याख्यानं चोक्तयुक्त्या न युक्तम्। नदीसंज्ञा भविष्यतीति भाष्यन्तु कार्यविशेषसंपत्त्यर्थमित्यध्याहारेण सुयोजम्। अतोऽत्र भाष्यवार्तिकयोर्यथोद्देश एवाभिप्राय इति न काप्यनुपपत्तिरित्याहुः[1]।

---

१. आहुरिति ॥ परे त्वाकडारीयसंज्ञासु कार्यकालपक्षाभावस्य परमसिद्धान्तत्वोक्तिरयुक्तैव। ष्यङस्सम्प्रसारणमिति सूत्रे भसंज्ञाविषये कार्यकालपक्षस्य प्रदर्शितत्वात्। न च संज्ञाशास्त्राणां पदैकवाक्यतायां असम्भवेन तत्प्रतिपादकस्यैतद्भाष्यस्यैकदेश्युक्तित्वमावश्यकमिति तद्भाष्यबलेन संज्ञासु कार्यकालपक्षाश्रयणमयुक्तमिति वाच्यम्। पदैकवाक्यताप्रयुक्तस्याप्रामाण्यस्यांशतः कल्पनेऽपि सर्वस्याप्रामाण्यकल्पने मानाभावात्। अत एव नदीसंज्ञासूत्रे शेखरे क्यजन्तात्क्विपि निष्पन्ने कुमारीशब्दे कार्यकालपक्षे प्रकृतिभूतकुमारीशब्दस्य नित्यस्त्रीत्वेन नदीसंज्ञा समर्थिता। अत एव "अवयवस्त्रीविषय-

**भिन्नवचनत्वेऽपीति** ।। विशेष्यवाचकप्रकृतिकविभक्तिप्रतिपाद्यसंख्या-विरुद्धसंख्याया यत्र विवक्षा तत्रेति शेषः। वेदाः प्रमाणमित्यत्र हि यावद्वेदगतं प्रमितिकरणतावच्छेदकं वेदत्वसामान्यमेकमिति बोधनाय विशेषणे तद्विवक्षा। य्वोरित्यत्राप्यस्त्येव सा प्रत्येकान्वयलाभाय। यत्र तादृशविवक्षाया अभावः, तत्र समानवचनकत्वमेव नीलो घट इति न तु कदाचिन्नीलौ नीला वा घट इति विभिन्नवचनकत्वमिति तत्त्वम्।

**असिद्धत्वादिति** ।। बहिरङ्गत्वेनेति शेषः। वलि लोपेऽन्तरङ्गपरिभाषा न प्रवर्तत इति त्वयुक्तमेव। उपदेशसामर्थ्येन व्रश्चन इत्यादौ लोपातिप्रसङ्गवारण-प्रशंसायां वृश्चतीत्यादौ बहिरङ्गसंप्रसारणादेरसिद्धतया वलि लोपोपपादनपरभाष्या-सङ्गत्यापत्तेः। अरिय्रियादित्यादौ यलोपापत्तेश्च। अचः परस्मिन्निति स्थानि-वत्त्वेन तु न निर्वाहः। समुदायभूतस्य रीङस्तेनातिदेशेनाच्त्वेऽपि तदवयवस्य वल्त्वानपायात्। स्पष्टा चेयं रीतिरचः परस्मिन्नित्यत्र भाष्ये इत्यन्यत्र विस्तरः ।।

---

स्वारस्यम्। अवयवो यः स्त्रीप्रत्ययस्तदाश्रया नदीसंज्ञा भविष्यति'' इति भाष्यं स्वर-सतस्सङ्गच्छते। यथोद्देशेनेदमिति कैयटस्तु चिन्त्य एव। भविष्यतीत्यक्षरस्वारस्यभङ्गा-पत्तेः। कार्यविशेषसम्पत्त्यर्थमित्यध्याहारेण योजने तु क्लेशः। उत्तरत्राकडारीयसंज्ञानां कार्यकालत्वाभावादिति शेखरोक्तिस्तु केचिदित्युक्त्या स्वानभिप्रेतत्वसूचनेन कैयटाशय-वर्णनपरैव। आकडारस्थभपदसंज्ञादिविषये यथोद्देश एवेति परिभाषेन्दुशेखरोक्तिरपि केचिदित्युपक्रमेणारुचिग्रस्तैव। किञ्चेयं रीतिरयादिभ्यः परैव प्रगृह्यसंज्ञेति यथाश्रुतभा-ष्यपर्यालोचनया सिद्धे संज्ञानां विधिदेशीयत्वे प्रसक्तस्य संज्ञानां पौर्वापर्यविपर्ययस्य वारणाय कैश्चिदादृता। तथा च तेषां मतेऽपि संज्ञानां विधिदेशीयत्वेन यत्र दोषप्रस-क्तिस्तत्र कार्यकालत्वानङ्गीकारेऽप्यन्यत्र तदनङ्गीकारे मानाभावः। अत एवैकदेश-विकृतन्यायावतरणे रामावित्यादौ कार्यकालपक्षे कथं पदत्वमिति ग्रन्थ उपपद्यते। वस्तुतोऽदसो मादिति सूत्रस्थस्य 'अयादिभ्यः परैव प्रगृह्यसंज्ञा' इति भाष्यस्य प्रगृह्य-संज्ञाप्रयुक्तप्रकृतिभावः पर इत्येवमर्थकतया उद्योते परे त्वित्यादिना नागेशेन स्वसिद्धान्त-तया योजितत्वेन संज्ञानां विधिदेशीयत्वस्यैवाभावेन तत्पुरस्सरेण प्रवृत्तस्य यथोद्देश एवेति निष्कर्षस्य सर्वथा नागेशासम्मतत्वं स्फुटमेवेति अस्य परमसिद्धान्तत्वकथनं केवलं साहसमात्रमेव। किञ्च वाक्यार्थचन्द्रिकायां केचिदित्यादिना यथोद्देशपक्ष एवेति निष्कर्षं निराकुर्वताऽनेन ग्रन्थकृता अत्र पुनः केचिदित्यादिना तन्निष्कर्षस्य परमसिद्धा-न्तत्वेन कथनं विस्मयमादधाति तत्तद्ग्रन्थपरिशीलनशालिनामित्यलमित्याहुः।

उत्थिताकाङ्क्षत्वादिति ॥ प्राधान्यप्रयुक्तादप्यन्वयादुत्थिताकाङ्क्षत्वप्रयुक्तः प्रबल इति व्याख्यातारः ॥

लक्ष्यानुसाराच्चेति ॥ लक्ष्यानुसारिहेतुकाद्व्याख्यानादित्यर्थः। नन्वभीष्टकल्पनया लक्ष्यसमर्थनं लक्षणैकचक्षुष्काणामयुक्तमित्यालोच्याह ॥ अत एवेति ॥ उक्तोपायेनेति ॥ एवञ्चेदं व्याख्यानं भाष्यकारपरिशीलितमेवेत्यत्रत्यक्लेशो नास्माकं दोषापादनहेतुरिति तात्पर्यम् ॥ विशेषावगतिहेतुत्वेनेति ॥ यथा सवत्सा धेनुरित्यतस्तदीयगर्भसंभूतवत्सवैशिष्ट्यं प्रतीयते, तद्वदवत्सा धेनुरित्यतोऽपि तथाविधवत्सराहित्यमेवानुभवसिद्धमित्याशयः ॥ परिमाणाख्यायामिति सूत्रे इति ॥ तत्र हि भाष्ये सर्वग्रहणप्रयोजनमपवादभूतयोरजपोर्विषये प्रवृत्तिरित्युपक्रम्येदमुक्तमित्थञ्च तण्डुलनिचायधान्यनिष्पावादेरसंज्ञात्वेन परिमाणाख्यायामित्येव सिद्धेर्नेदं सर्वग्रहणस्य प्रयोजनमिति भगवदाशयः ॥

येन नाप्राप्त्यभावेनेति ॥ इदं तु चिन्त्यम्¹। प्रकृतन्यायमूलकतया संज्ञाविषयत्वसम्पत्तेः। पूर्वमसंज्ञायामपि प्रवर्तमानयोरजपोरकर्तरि चेत्यनेन येन

---

१. चिन्त्यमिति ॥ अत्रेदं तत्त्वम्। "परिमाणाख्यायामिति सूत्रे" इत्यादिग्रन्थो धातुग्रहणस्याङ्गविशेषणत्वाभावे हरिमित्यादौ परममूलोक्तस्य दोषस्य निरासार्थं प्रवृत्तः खण्डनकारस्य। उत्सर्गसमानदेशा इति न्यायस्यासिद्धवत्सूत्रभाष्यसम्मतत्वं, युष्माकाद्यादेशज्ञापितत्वं चाप्रदर्श्य परिमाणाख्यायामिति सूत्रभाष्यमूलकत्वं वदतः खण्डनकारस्यायमाशयः। अकर्तरि चेत्यत्र संज्ञाग्रहणसत्त्वपक्षेऽजपोरसंज्ञायां चारितार्थ्येन येन नाप्राप्त्यभावाद्यथाजातीयकश्चोत्सर्गस्तथाजातीयकेनापवादेन भवितव्यमिति भाष्योक्तेरसाङ्गत्यापत्त्या अत्र न्याये उत्सर्गापवादशब्दौ तत्त्वेनाभिमतपरावित्यवश्याभ्युपगन्तव्यतया प्रकृते "अचिश्नु" "एरनेकाच" इत्यनयोरुत्सर्गापवादत्वेनाभिमतावित्यस्त्येव न्यायविषयतेति तेन न्यायेन हरिमित्यादौ न दोष इति ॥

शब्दरत्नकृत्तु नैतद्भाष्यमूलकोऽयं न्यायः। भाष्यस्यास्यैकदेश्युक्तित्वेन न्यायमूलकत्वायोगात्। किन्त्वसिद्धवत्सूत्रभाष्यमूलको युष्माकाद्यादेशज्ञापितश्चायं न्यायः। न्यायप्रवृत्तेः पूर्वं ययोरुत्सर्गापवादभावस्तद्विषयक एवायं न्यायः। अस्ति च न्यायप्रवृत्तेः पूर्वमप्येत्वाल्लोपयोरुत्सर्गापवादभाव इति एधीत्यत्रानेन न्यायेनैत्त्वस्याल्लोपसमानदेशत्वं, न तु सकारस्थानिकत्वमिति नैतदर्थमसिद्धवत्सूत्रम्। न्यायप्रवृत्त्युत्तरं यत्रोत्सर्गापवादभावः, न्यायस्य तद्विषयत्वाङ्गीकारे न्यायेन समानदेशत्वनिर्णये उत्सर्गापवादभावः, तत्त्वे च न्यायेन समानदेशत्वनिर्णय इत्यन्योन्याश्रयप्रसङ्गः। अतोऽत्रोत्सर्गाप-

नाप्राप्त्यभावस्य तुल्यतया तदंशे न्यायोपपादनपरभाष्यानुपपत्तेः । किञ्च यत्किञ्चिन्निमित्तवैकल्येनातिप्रसक्तस्यापवादस्यातिव्याप्तिपरिहारायोत्सर्गसाजात्येन निमित्तपरिपूर्तिरिति प्रकृतन्यायशरीरम् । ततश्च न्यायप्रवृत्तेः प्रागपवादत्वस्य सर्वत्रैवानुपपन्नत्वादसम्भव एव स्यात्तस्मादुत्सर्गापवादशब्दावत्र न्याये तत्त्वेनाभिमतपरावित्यस्त्येव प्रकृते न्यायविषयता, यद्यभ्युपगम्यते न्याय इत्याहुः ॥

**स्पष्टप्रतिपत्तये इति** ॥ अन्यथा प्रत्यासत्तिवशादिकारे धात्ववयवत्वस्येव यत्किञ्चित्संयोगपूर्वकत्वस्यापि प्रसक्तस्य न भूसुधियोरिति ज्ञापकेन निवृत्तिकल्पनायां क्लेश इत्याशयः ॥ **पूर्वविप्रतिषेधेनेति** ॥ अपरनिमित्तकत्वादपृक्तलोपस्यान्तरङ्गत्वेऽप्यनित्यत्वात्परिभाषाया अनाश्रयणमिति बोध्यम् ॥ **घित्वाङ्गत्वेत्यादि** ॥ स्वमते संज्ञाकृतबहिरङ्गस्यानाश्रयणेऽपि मूलकारानुरोधादेवमिदमुक्तमिति ध्येयम् ॥ **दुर्लभत्वादिति** ॥ इको यणचीत्यस्य त्वियङपवादः ॥ इति ईदन्ताः ।

**फलितेति** ॥ एतेन नेह प्रयोगनियम आरभ्यत इति वृद्धिसूत्रभाष्येण न

---

वादभावनिर्णयमन्तरा न्यायप्रवृत्तेरयोगात्समानदेशत्वानिर्णये येन नाप्राप्त्यभावाद्धरिमित्यादौ दोषो दुर्वार एवेत्यभिप्रैति ।

नन्वेवं परिमाणाख्यायामिति सूत्रस्थभाष्यानुपपत्तिरिति चेन्न । तस्यैकदेश्युक्तित्वेनादोषात् । तथा हि । तत्र हि भाष्येऽकर्तरि चेति सूत्रे संज्ञाग्रहणप्रत्याख्यानादेकः पाक इत्यादेस्तेनैव सिद्धौ परिमाणाख्यायामिति सूत्रमजपोरपवाद इति सिद्धान्तितम् । तत्पक्षेऽजपोरकर्तरि चेति शास्त्रापवादत्वं स्पष्टमेव । संज्ञाग्रहणसत्त्वेऽजपोरसंज्ञायां चारितार्थ्यं संज्ञाग्रहणस्य दुष्टत्वं चापर्यालोच्य पूर्वस्मिन्पक्षे स्थितमुत्सर्गापवादभावमात्रमपवादस्योत्सर्गसमानदेशत्वं च मनसि निधाय "अथ संज्ञाग्रहणं क्रियते, एवमपि न दोषः" इत्यादिभाष्यं प्रवृत्तमित्यस्यैकदेश्युक्तित्वं स्पष्टमेव । एवञ्चैकदेश्युक्तभाष्यबलान्न्यायस्यान्योन्याश्रयदोषदुष्टविषयव्यवस्थाकल्पना न युक्ता । यत्तु न्यायप्रवृत्तेः प्रागपवादत्वस्य सर्वत्रैवानुपपन्नत्वादसम्भव एव स्यादिति तन्न । एधीत्यादौ न्यायप्रवृत्तेः प्रागप्यपवादत्वसम्भवस्य पूर्वमुपपादितत्वात् । प्रत्ययोत्तरपदयोश्चेत्यस्य त्वममादिबाधकत्वस्य न्यायप्रवृत्तेः प्रागपि सम्भवाच्चेति सुधियो विभावयन्त्वित्याहुः ॥

१. **घित्वाङ्गत्वेत्यादीति** ॥ "तद्विषये प्रकृतिप्रत्ययघित्वाङ्गत्वसापेक्षगुणापेक्षया तदवयवमात्रापेक्षस्यान्तरङ्गत्वेन" इत्येवं क्वचित् शब्दरत्नपाठो दृश्यते । तदनुसारेणेदं प्रतीकम् ।

२. **फलितेतीति** ॥ नियमार्थमिति प्रतीकानन्तरं "फलितप्रयोगनियमार्थमि-

विरोधः। तस्य वाच्यवृत्त्या प्रयोगनियमाभावप्रतिपादनपरत्वात्। अन्यथा फलविधया साधुरेव प्रयोक्तव्यो न त्वसाधुरित्येवमात्मकप्रयोगनियमोपपादने सर्वत्रैव शास्त्रतात्पर्याद्वचनव्याघातापत्तिः। किञ्च संस्कृत्य संस्कृत्य पदान्युत्सृज्यन्ते तेषां यथेष्टमभिसम्बन्धो भवति। आहर पात्रं पात्रमाहरेत्यग्रिमभाष्यस्वारस्याद्वाक्यप्रयोगीयपौर्वापर्यनियमाभावप्रतिपादनपरं तत्। अतो न काप्यनुपपत्तिः। उपदर्शितार्थसिद्धये न क्रोष्टुः स्त्रियां च क्रोष्टा हलि तृतीयादाविति न्यासे पदलाघवाभावः। प्रियक्रोष्टूनीत्याद्यसिद्धिश्चेति बोध्यम्॥

आद्यत्रयस्येति॥ चिकीर्षित इत्यादौ पूर्वत्र सन्प्रकृतौ विद्यमानस्य ञित्त्वरूपस्यात्मनेपदनिमित्तस्य पूर्ववत्सन इत्यनेन सन्नन्तेऽप्यतिदेशात्क्रियाफलस्य कर्तृगामितायां विशिष्टादात्मनेपदम्। कार्यातिदेशस्त्वसम्भवी, सन्प्रकृतेस्तदभावात्परगामित्वेऽप्यात्मनेपदप्रसक्तेश्च। कर्तव्यमित्यादौ च समुदायावयवयोर्द्वयोरपि सतोरुदात्तत्वस्य सम्पादको य आदित्वव्यवहारस्स औपगवादावसहायेऽप्याद्यन्तवदित्यनेनातिदिश्यते॥ यथा शुभस्पतिरित्यत्र शुभ इति षष्ठ्यन्तस्य सुबामन्त्रित इत्यनेनामन्त्रितपतिशब्दाङ्गतादात्म्यातिदेशाच्छवर्णोकारस्य षाष्ठिकामन्त्रिताद्युदात्तत्वलाभः। कालेभ्यो भववत् गोतो णित् स्त्रियाः पुंवदित्यन्त्यत्रयस्य। तत्र कालवाचकेभ्यो भवार्थे प्रत्ययविधायकं यच्छास्त्रं तदेव तेभ्यस्सास्य देवतेत्यर्थे प्रत्ययविधानाय कालेभ्यो भववदित्यनेनातिदिश्यते। तेन देवतार्थेऽपि प्रावृष एण्य इत्यादीनां प्रवृत्त्या प्रावृषेण्यादीनां सिद्धिः। कार्यातिदेशे चात्रोपाधिसाङ्कर्यप्रसङ्गः। गोतो णिदित्यनेन गौरित्यादौ णित्कार्यस्य वृद्धेरतिदेशः। निमित्तातिदेशे तु तद्गतकृत्त्वतद्धितत्वयोरप्यतिदेशप्रसक्तौ विशिष्टस्य प्रातिपदिकत्वापत्तिः। स्त्रियाः पुंवदित्यनेन वातण्डयुवतिर्दारदबृन्दारिकेत्यादौ स्त्रीवाचकस्य वतण्डीदरदादेः पुंवाचकशब्दस्वरूपातिदेशः। अतिदेशान्तरैश्चाभीष्टासिद्धिरित्यादि स्वयमूहनीयम्॥ ज्ञापयितुमिति॥ कार्यसामान्यप्रवृत्तिकल्पनामपेक्ष्यातिदेशविशेषकल्पनायां लाघवं प्रतिपदोक्तन्यायविरोधानुपहितत्वादित्याशयः॥ अर्थातिदेशं मुक्त्वेति॥ वस्तु-

---

त्यर्थः'' इत्येवं मूलपाठः क्वचिद् दृश्यते। तद्गीत्येदम्। इदानीन्तनपुस्तकेष्वन्यथा दृश्यते।

१. अर्थातिदेशं मुक्त्वेतीति॥ "अर्थातिदेशं मुक्त्वेद''मिति शब्दरत्नपाठाभिप्रायेणेदम्। इदानीन्तनपुस्तकेष्वन्यथा दृश्यते।

तस्सप्तविधोऽसावतिदेशः । तदुक्तम् । “ कार्यरूपनिमित्तार्थशास्त्रतादात्म्यशब्दिताः । व्यपदेशश्च सप्तैतानतिदेशान्प्रचक्षत ” इति ॥ उत्तम एकवच्च स्त्रीपुंवच्चेत्यर्थातिदेशस्योदाहरणम् । तत्रैकवच्चेत्यनेनोत्तमपुरुषस्यैकत्वातिदेशाद्वयमोदनं भोक्ष्यध्व इति त्वं मन्य इत्यत्र तत्समानाधिकरणाद्युष्मच्छब्दादप्येकवचनलाभः । तथा च गार्गी च गार्ग्यायणौ च गर्गा इत्यत्र पुंस्त्वातिदेशात्तद्विरुद्धस्त्रीत्वनिवृत्त्या बहुत्वे तदभावनिबन्धनालुक्प्रवृत्तिश्चेति बोध्यम् । अतस्मिन्तत्त्वबुद्धिरतिदेशः । आहार्यारोपोऽप्ययमारम्भसामर्थ्याच्छास्त्रस्य प्रवृत्तौ निवृत्तौ च प्रयोजक इति सिद्धान्तः ॥ **युक्त्यन्तरमिति** ॥ कार्यार्थत्वादतिदेशानामुद्देश्यतया कार्यस्य प्राधान्यमिति तदतिदेशः प्रधानम् । तस्यापि रूपसिद्ध्यर्थत्वात्ततोऽपि प्रधानं रूपातिदेश इत्याशयः ॥ **सामर्थ्यादिति** ॥ रूपमत्र वर्णानुपूर्वी, स्वरस्य वर्णधर्मत्वेऽपि तद्घटकत्वाभावाद्रूपातिदेशेन तदसिद्धावपि चकारबलेनान्तोदात्तत्वगुणविशिष्टमेव रूपमतिदिश्यत इति स्पष्टं भाष्ये ॥ **इति शेष इति** ॥ ततश्च संज्ञाशब्दानामुणादिनिष्पन्नानामन्येषां तृन्तृजन्तानां नेति नियमाकारः ॥ **धातृशब्दस्येति** ॥ अवयवार्थस्याप्रतीतेर्ब्रह्मणि केवलरूढोऽयमिति संज्ञात्वे नास्ति विप्रतिपत्तिः ।

ननु तृन्तृचौ शंसिक्षतादिभ्यस्संज्ञायां चानिटावित्युणादिसूत्रे शंसादिक्षताद्भ्योराकृतिगणतया धातृशब्दस्यापि व्युत्पादनसम्भवात्कथमुणादिव्युत्पन्नानामित्यनेन तद्व्यावृत्तिः । न च पाणिनीये ये न व्युत्पन्नाः किन्तूणादावेव तेषामिति तदर्थः । धातृशब्दस्तु संज्ञातदितरसाधारणेन ण्वुल्तृचावित्यनेन पाणिनीयेऽपि व्युत्पादयितुं शक्यत्वाद्युज्यत एव तद्व्यावृत्तिरिति वाच्यम् । तथा सति नेष्टृप्रभृतीनां पोतृपर्यन्तानां तृन्निति सूत्रे पाणिनीयतन्त्रे कात्यायनेन व्युत्पादिततया साजात्यविरोधेनोक्तनियमानुपपत्तेः । न च नप्तृप्रशास्तृग्रहणमेव नियमार्थं, तयोः पाणिनीये व्युत्पादनाभावात् । अन्येषां तु प्रपञ्चार्थमेव ग्रहणमतो नास्त्यनुपपत्तिरिति वाच्यम् । एवमपि बहुलमन्यत्रापीत्यनेनोणादिषु संज्ञामनपेक्ष्य व्युत्पादितानां हन्तृमन्तृप्रभृतीनां पाणिनीयेऽपि तृन्नन्तत्वेन तृजन्तत्वेन च व्युत्पादयितुं शक्यत्वादुक्तविशेषणेनैव तद्व्यावृत्तिसिद्ध्या नियम्यकोटौ संज्ञाशब्दानामित्यस्य वैयर्थ्यादिति चेदत्राहुः । शास्तृशब्दो बुद्धदेवाभिधायी रूढिशब्दो ऽन्यत्र

यौगिकः। तदुक्तं मेदिनीकोशे शास्ता समन्तभद्रे ना शासके पुनरन्यवदिति, ॥ एवञ्च शासकवाचिनः क्रियाशब्दस्य तस्य संज्ञात्वाभावेन निरुक्तनियमविषयतां व्यावर्तयितुं तच्छरीरे संज्ञाशब्दानामित्यस्य निवेशः। न ह्ययं पाणिनीयतन्त्रे व्युत्पादयितुं शक्यः। उदात्तत्वेन शासेरिडागमाभावस्य दुर्वचत्वात्। उणादौ च तृन्तृचावित्येतत्सूत्रघटकस्य संज्ञायां चेति चकारस्य सूत्रानुपात्तसंज्ञेतर-समुच्चायकत्वे बहुलमन्यत्रापीति तस्यैव प्रपञ्चः। सूत्रोदीरितेडागमाभावसमुच्चाय-कत्वे त्वतिरिक्तम्। उभयथाप्यनिड्ग्रहणाद्वा तदभावः सिद्धः। ततश्च संज्ञा-शब्दानां पाणिनीयतन्त्रप्रतिपादितव्युत्पत्तिविहीनानामन्येषां तृन्तृजन्तानां नेति नियमो निर्बाधः। यद्वा संज्ञाभूतानामौणादिकशास्त्रविहितविशेषोपहितानां तृन्-तृजन्तानामन्येषां नेति नियमः। धातृशब्दस्तु ब्रह्मणि संज्ञाभूतोऽप्यौणादिक-शास्त्रबोधितविशेषानुपहिततया नैतन्नियमविषयः। नेष्टृप्रभृतीनां पाणिनीयत्वेऽप्यौ-णादिकशास्त्रबोधितविशेषोपहितत्वस्य निर्विवादत्वान्नैतादृशनियमसम्पादकत्वविरोधः। होतृशब्दस्याप्याद्युदात्ततया निपातनेन तृन्नन्त एवायं न तु कदाचित्तृजन्त इत्येवमात्मको विशेषोऽस्त्येव। भवतु वा तावन्मात्रस्य प्रपञ्चार्थं ग्रहणमतो न काप्यनुपपत्तिरिति।

नव्यास्तु नास्त्येतादृशनियमोपयोगः। न च मातृपितृभ्रात्रादिषु दीर्घ-व्यावृत्तिस्तदुपयोग इति वाच्यम्। ण्वुल्तृचाविति सूत्रस्थभाष्यप्रामाण्येन तेषां निरनुबन्धकतृप्रत्ययान्तत्वावगमात्तृन्नन्तत्वतृजन्तत्वान्यतरधर्मानाक्रान्तत्वेन दीर्घा-प्रसक्तेः। तत्र हि भाष्ये तृचश्चकारस्य प्रयोजनकथनावसरे तदभावे दीर्घविधावप्तृन्तृ इति व्यवहर्तव्यतया मातरौ मातर इत्यत्रापि दीर्घः प्राप्नोतीत्याशङ्क्य नप्तृग्रहणाद-स्यैव योनिसम्बन्धवाचिनो दीर्घो नान्येषामिति परिहृतम्। मातृभ्रात्रादीनां योनि-सम्बन्धवाचिनां तृजन्तत्वे च निरनुबन्धकपरिभाषया दीर्घाप्रवृत्त्या नियमाश्रयण-मसम्बद्धमेव स्यात्। तस्मादयुक्त एवायं नियमः। न च बुद्धदेवाभिधायकस्य शास्तृशब्दस्य संज्ञाभूतस्य तृजन्तस्य, शंस्तृशब्दस्य च तृन्नन्तस्य तथाविधस्य दीर्घव्यावर्तनेन साफल्याद्युक्त एवायं नियम इति वाच्यम्। ग्रसितस्कभितेत्यादिना सप्तमे छन्दस्येव तयोरिडभावनिपातनेन भाषायां तथाभूतयोरसाधुत्वप्रतीतेश्छन्दसि बाहुलकेन सकलार्थसिद्धेश्च तदर्थं नियमस्यानावश्यकत्वात्। भाष्येऽपि दीर्घविधौ

तृन्तृचोः स्थाने तृग्रहणे सामान्यग्रहणाविघातार्थस्तृचश्चकार इति व्यवस्थाप्य मातृप्रभृतिष्वतिव्याप्तिवारणाय नप्तृग्रहणाद्योनिसम्बन्धमात्रविषयको नियम आश्रितो न तु शास्तृशंस्त्रोस्तन्निवृत्तये कश्चन यत्न आश्रितः। एवञ्च भाषायां तयोरप्रयोग इति स्पष्टमेव। तस्माद्यथान्यासे प्रशास्तृग्रहणं व्युत्पत्तिपक्षे प्रपञ्चार्थम्। अव्युत्पत्तिपक्षे तु विध्यर्थम्। नप्तृग्रहणन्तु पक्षद्वयेऽपि विध्यर्थम्। व्युत्पत्तिपक्षेऽपि तृप्रत्ययान्ततया दीर्घाप्राप्तेः। नेष्ट्रादीनां तु पोतृपर्यन्तानां पक्षद्वयेऽपि प्रपञ्चार्थं ग्रहणं, पाणिनीयेऽपि तेषां व्युत्पादनेनाव्युत्पन्नत्वायोगादिति निष्कर्ष इत्याहुः॥

**कार्यैक्ये इति**॥ क्रोष्टेत्यादौ सर्वनामस्थाने चासम्बुद्धावप्तृन्नित्याभ्यामुभाभ्यामप्येकस्यैव दीर्घस्य युगपत्साधुत्वेन बोधनसम्भवात्प्रत्ययोद्देश्यकहल्ङ्यादिलोपस्य प्रकृत्युद्देश्यकस्य दीर्घस्य च यौगपद्येन प्रवृत्तौ बाधकाभावाच्च नास्ति विप्रतिषेधशास्त्रप्रवृत्तिप्रयोजको विरोध इत्याशयः।

केचित्तु हल्ङ्यादिलोपदीर्घयोर्यौगपद्येन प्रवृत्तावस्त्येव विरोधः। सुप्रत्ययस्य लोपस्थानित्वदीर्घनिमित्तत्वयोर्युगपदुपपादयितुमशक्यत्वात्। अत एवेको गुणवृद्धी अलोन्त्यस्येत्यनयोः परिभाषयोर्विप्रतिषेधविचारे नावश्यं द्विकार्ययोग एव विप्रतिषेधः, किन्तर्ह्यसम्भवोऽपि, स चास्त्यत्रासम्भव इति मेद्यति मेद्यत इत्यादौ विप्रतिषेधोपपादनपरं भाष्यमुपादाय कैयटेनोक्तम्। मिदेर्गुण इत्यत्र मिदेरित्येका षष्ठी, सा यद्यवयवसम्बन्धे तदेकारस्य गुणेन भाव्यम्। अथ स्थानषष्ठी तदालोन्त्यस्येति वचनाद्दकारस्य। न चास्ति सम्भवो युगपदुभयोर्गुणस्येत्यर्थ इति॥ एवं च यत्र स्थानित्वावयवित्वयोर्युगपदेकस्यासम्भवस्तत्र विप्रतिषेध इति स्पष्टमेवाभिहितम्। ततोऽत्र न किञ्चिद्वैषम्यम्। अत एव शिष्टादित्यत्र हेर्निमित्तत्वकार्यित्वयोर्यौगपद्यासम्भवरूपं विरोधमाश्रित्य तातङा शाभावस्य बाधनमप्युपपद्यते। तस्मादत्र हल्ङ्यादिलोपात्पूर्वं पश्चाद्वा दीर्घप्रवृत्तौ विशेषाभावेनैव परत्वस्य व्यवस्थापकत्वानुपपत्तिर्न तु विप्रतिषेधाभावेनेति वदन्ति[1]॥

---

१. वदन्तीति॥ अत्रेदं बोध्यम्। मूले परत्वादित्यनेन 'परत्वादप्तृन्निति दीर्घ एव न्याय्य, इति मनोरमाग्रन्थस्थं परत्वादित्यनुक्रियते। न तु 'हल्ङ्यादिलोपात्परत्वादुपधादीर्घ' इति पूर्वग्रन्थस्थं परत्वादिति। अग्रिमं चेत्यनेन रमाशब्दप्रघट्ट-

**विशेषविहितत्वादिति** ॥ इदमग्रिमपरत्वांशे[1] द्रष्टव्यम्। तत्र नान्तत्वापेक्षया तृजन्तत्वस्य विशेषधर्मत्वात्। पूर्वत्र तु तृजन्तत्वसुप्रत्ययत्वयोर्द्वयोरपि विशेषधर्मतया नोक्तयुक्तेरवकाशः ॥ **तेनैवेति**[2] ॥ अपवादत्वाभावज्ञापनेऽपि पूर्वविप्रतिषेधकल्पनामन्तरेण न निर्वाहः। नुडागमज्ञापने तु न किञ्चिदन्यत्कल्प्यमिति लाघवमिति तात्पर्यम् ॥ इत्युदन्ताः ॥

**सामर्थ्येनैवेति** ॥ नन्वनुस्वारस्यैवापूर्वत्वेन निपातने तस्य त्रैपादिकत्वाभावादसिद्धत्वाभाव इति तद्गतेनाक्षरसमाम्नायिकपाठप्रयुक्तेनाच्त्वेन प्राप्तस्य यणादेशस्याभावोऽपि निपातनीयः। सुब्निपातनपूर्वकमनुस्वारनिपातने तु तस्य परसवर्णनिमित्तकत्वेनानुवादो नश्चापदान्तस्य झलीत्यनेन प्राप्तस्यैवेत्यसिद्धत्वस्य सुवचतया तद्गताच्त्वनिमित्तकत्वेनासिद्धकाण्डीयकार्यप्रवृत्त्ययोगान्नास्ति यणादेशाभावनिपातनापेक्षा। ततश्च निपातनद्वयस्योभयसाधारणतया लाघवगौरवविचारस्य

---

कस्यस्यैङ्ह्रस्वादिति लोपस्यैव परत्वेन न्याय्यत्वादिति भाव इति ग्रन्थो विवक्षितः। अत एव कार्यैक्ये इत्युत्तरग्रन्थस्सङ्गच्छते। हल्ङ्यादिलोपात्परत्वादुपधादीर्घ इत्यस्य ग्रहणे तु कार्यैक्याभावात्तदसङ्गतिः स्पष्टैव। उत्तरत्र परत्वादुत्कृष्टत्वाद्विशेषविहितत्वेन शीघ्रोपस्थितिकत्वादिति ग्रन्थोऽप्येवं व्याख्यान एव सङ्गच्छते। सर्वनामस्थाने चेत्यस्य विशेषविहितत्वाभावात्। एवं स्थिते कार्यैक्ये इति ग्रन्थस्य "हल्ङ्यादिलोपात्परत्वादुपधादीर्घ" इत्येतद्ग्रन्थपरत्वमपि मनसि निधाय प्रत्ययोद्देश्यकहल्ङ्यादिलोपस्य प्रकृत्युद्देश्यकस्य दीर्घस्य चेत्याद्याशयमुपवर्ण्य तत्खण्डनाय केचिदित्याद्याहुरित्यन्तग्रन्थोपन्यसनं निमित्तादपराद्धेषोर्धानुष्कस्य वल्गितमनुकरोतीति ॥

१. **अग्रिमपरत्वांशे इति** ॥ इदं व्याख्यानं परममूलस्थस्य हल्ङ्यादिलोपात्परत्वादुपधादीर्घ इति ग्रन्थस्थस्य परत्वादित्यस्य मूलस्थं परत्वादितीति प्रतीकमिति भ्रान्त्या। अस्मदुक्तदिशा परत्वादप्तृन्नित्येव न्याय्य इति परममूलस्थस्य प्रतिकमिति स्वीकारे उभयांशेऽपि सम्भवति। अत्र नान्तत्वापेक्षया तृजन्तत्वस्य, उत्तरत्र हल्ङ्यादिशास्त्रीयोद्देश्यतावच्छेदकसुप्त्वापेक्षया एङ्ह्रस्वादिति शास्त्रीयोद्देश्यतावच्छेदकसम्बुद्धित्वस्य च विशेषधर्मत्वादित्यादि सुधीभिराकलनीयमित्याहुः ॥

२. **तेनैवेतीति** ॥ "यद्यपि 'न तिसृ' इति ज्ञापकेन तदपवादत्वाभावकल्पनया विप्रतिषेध उपपद्यते, तथापि ज्ञापकानुसरणस्यावश्यकत्वे तेनैव तं संसाध्य दूषयितव्येत्यर्थः" इत्येवं क्वचिच्छब्ददरत्नपाठः, तद्रीत्यायं ग्रन्थः। इदानीन्तनपुस्तकेष्वन्यथा दृश्यते।

दुर्वचत्वेन कथं सामर्थ्यमिति चेत्सत्यम् । इको यणचीत्यत्र निमित्तिसाहचर्यान्निमित्तमप्ययोगवाहव्यतिरिक्तमेव ग्रहीष्यते । न हि तस्याचपरत्वसम्भवः । येन यन्निमित्तित्वं स्यात् । एवञ्च यणादेशाप्रसक्तेस्तदभावनिपातनानपेक्षणात्केवलानुस्वारनिपातने लाघवमिति विभाव्यताम् ॥ **यण् भाव्यमिति** ॥ इको यणचीति शास्त्रविहितोऽयं यण् । ओस्सुपीत्यस्यापि धातुत्वनिबन्धनत्वादिति भावः ॥ **माधवश्चिन्त्य इति** ॥ अयं माधवो दृभी ग्रन्थ इत्यत्र ऊप्रत्ययो नुमागमश्च निपात्यत इति ये व्याचक्षते तन्मतमुपक्रम्य प्रवृत्त इति चिन्त्यताम् । स्वमते तु दृढशब्दस्य दृन्नादेशो भुवः कूप्रत्यय इति प्रतिपादनान्नास्ति चिन्त्यतेत्याहुः ।

अत्रायं निष्कर्षः । उज्ज्वलदत्तमते पवर्गद्वितीयोपधो वृत्त्यन्तरे तद्वर्गीयचतुर्थोपधो दशपादीमते स एवानुस्वारमध्यो माधवमते नकारमध्यः । तत्र दृम्फधातुप्रकृतिके तस्मिन्नुज्ज्वलदत्तमते भूशब्दाभावादितरमतयोर्दृभधातुप्रतिके तस्यानर्थक्याच्च दृन्करेत्यस्याप्राप्तिः । माधवमते तु भूधातोः कूप्रत्यये निष्पन्नोऽयमिति पूर्वान्तवत्त्वेन भूधातुतया वार्तिकविषयः । श्रीपतिस्तु भूधातोः क्विप्प्रत्ययोऽसौ न तु कूप्रत्ययः । निपातनमुणादौ दृनोऽव्ययस्य नलोपाभावार्थमिति मन्यमानो विनैव पूर्वान्तवत्त्वं वार्तिकविषयतामिच्छतीति वदन्ति ॥ इत्यूदन्ताः ।

**तपरकरणेनेति** ॥ तस्य वर्णधर्मत्वात्संघाते कृतमेकदेशस्याविवक्षार्थं सम्पद्यत इति तत्त्वम् ॥

**भिन्नलिङ्गानामिति** ॥ 'अर्थोऽभिधेयरैवस्तुप्रयोजननिवृत्तिष्वि'ति कोशाद्विभवशब्दस्याबन्तत्वेन घञजपाः पुंसीत्यनुशासनाच्च पूर्वोत्तरपदयोः पुस्त्वं निर्बाधमिति भावः ॥ **अरुचिबीजमिति** ॥ विग्रहप्रदर्शनपरं भाष्यमचः परस्मिन्निति सूत्रस्थभाष्यकारीयप्रयोगश्च तद्बीजमित्याशयः ॥ इत्यजन्ताः पुंलिङ्गाः ।



# अथाजन्ताः स्त्रीलिङ्गाः ।

**ध्वनितं चेदमिति** ॥ लिङ्गबोधकप्रत्ययविशिष्टे प्रातिपदिकधर्माणामतिदेशबोधनं कुण्डोध्नीशब्दस्य बहुव्रीहित्वप्रतिपादनेन भाष्ये ध्वनितमित्यर्थः । ननु परस्परविषयपरिहारेण चरितार्थयोः पूर्वपरयोरेकत्र यौगपद्यासम्भवे परत्वं व्यवस्थापकम् । इह तु न तथा । एत्वस्य हल्ङ्यादिलोपाप्राप्तिविषये चारितार्थ्याभावात्ततश्च कथं प्रकृते परत्वं व्यवस्थापकं स्यादत आह ॥ **असम्बुद्धाविरयादि** ॥ **अभिमन इति** ॥ उत्सर्गशास्त्रीयप्रवृत्त्युत्तरं चारितार्थ्येऽपि तत्प्रवृत्तिकालिकं निरवकाशत्वं केन वार्यताम् । अन्यथा तक्रकौण्डिन्यन्याय एव विलीनस्स्यादिति भावः । तदाह ॥ **न्यायविरोध इति** ॥ कथमन्यथा द्वितीयद्विर्वचनेन प्रथमद्विर्वचनस्य बाधनं स्यात् । उत्सर्गप्राप्त्युत्तरकालिकचारितार्थ्यविशिष्टं तत्प्राप्तिकालिकं निरवकाशत्वमेव तद्बीजमित्याशयः ॥ **अपवादत्वादिति** ॥ प्रतिपदोक्तत्वमत्रापवादत्वे हेतुः । न तु शीघ्रोपस्थितिकत्वप्रयुक्तेऽन्तरङ्गत्वे, तस्यापि सर्वथाचारितार्थ्यविषयत्वादिति तत्त्वम् ॥ **यौगपद्यसम्भवेऽपीति** ॥ युगपदुभाभ्यामप्येकस्यैव लोपस्य साधुत्वबोधने बाधकाभाव इत्याशयः ॥

**समुदायावयवयोरिति** ॥ इदं प्राचीनानामुक्तिसम्भवप्रदर्शनम् । न तु वास्तवार्थ इति स्पष्टमेव ॥ **क्तक्तवतू निष्ठेति** ॥ तत्र हि सूत्रे भाष्यकारेणोक्तम् । प्रयोगे सर्वत्रैवानुबन्धलोपात्तशब्द एवावतिष्ठत इति लूनो गीर्ण इत्येव निष्ठा न तु लोतो गर्त इत्यत्र विनिगमकाभावादतिप्रसङ्ग इति वार्तिककृदारब्धस्य समानशब्दानां प्रतिषेध इत्यस्य प्रत्याख्याने यद्यपि लुप्यते जानाति त्वसौ सानुबन्धकस्येयं संज्ञा कृतेति । तद्यथा इतरत्रापि कतरद्देवदत्तस्य गृहमदो यत्रासौ काक इति उत्पतिते काके यद्यपि गृहं नष्टमन्ततस्तमुद्देशं जानातीति । तेन सानुबन्धकनिर्देशेषूपदेशमाश्रित्य स्वरूपपरिज्ञानमिति स्पष्टमेवोक्तम् ॥ **तस्यैवेति** ॥ इदं च प्रत्यासत्तिलब्धम् ॥ **तात्पर्याभावादिति** ॥ समुदायोपदेश एवर्षितात्पर्यमवयवानां तु नान्तरीयक उपदेश इति हलन्त्यमित्यत्र भाष्ये ॥ **आटश्चेत्यसङ्गत-**

मिति ॥ स एव निर्देशः प्रकृतार्थे प्रमाणम् । अवयवस्य समुदायानुबन्धप्रयुक्त-कार्याभावादेव ऋतेरीयङि यङ्निमित्तककार्याभाव इत्याहुः ॥

अन्तरङ्गत्वादिति ॥ याट्परत्वानुवादेनासुङ्विधानात्ततः पूर्वं याडित्यपि बोध्यम् ॥ इत्यादेवेति ॥ अदस्यै इत्यादेरपि पक्षे वक्ष्यमाणरीत्या प्रसक्तेरिति भावः ॥ पूर्वं मुत्वे इति ॥ इदमभ्युपगम्यवादेन । विभक्तिकार्यापेक्षया त्रैपादि-कस्य तस्य पूर्वं प्रवृत्त्ययोगात् । यद्वा न मु न इत्यत्र योगं विभज्य तस्येष्ट-सिद्ध्यर्थत्वात्क्वचिदसिद्धत्वाभाव इत्यभ्युपगम्य पूर्वं मुत्वप्रवृत्तावप्यसुङादेशेनोकार-परिहारे तत्सन्नियुक्तत्वेन मकारनिवृत्तौ लक्ष्ये लक्षणस्येति न्यायेन पुनर्मुत्वाप्रवृत्त्या रूपासिद्धिरित्यर्थः ॥ व्याख्यानभेदेनेति ॥ सकारान्तभिन्नस्य सकारस्थानिका-कारवतो वेत्येवमात्मकेनासान्तशब्दव्याख्याभेदेनेत्यर्थः । यद्यप्यदसस्त्यदाद्यकारष्टा-बेकादेशेनापहृतस्सोऽप्यसुङादेशेनेति स्थानिवद्भावेनैव तथाभूताकारवत्त्वमदसो वक्तव्यमल्विधौ च स्थानिवद्भावो निषिद्ध इति प्रकृते द्वितीयव्याख्याया अप्र-सङ्गस्तथापि यस्यादसस्सकारस्याकारस्तस्येत्यर्थेन स्थानिवद्भावानपेक्षणादस्त्येव द्वितीयव्याख्याया अपि प्रवृत्तिरित्याशयः । ननु यस्यादसस्सकारस्याकार इत्यर्थे मुत्वप्रवृत्तावप्यसुङस्सकारस्यादेशरूपत्वस्य प्रत्ययावयवत्वस्य वा दुर्वचत्वेन षत्वा-प्राप्त्या कथं रूपसिद्धिरत आह ॥ आप्स्थानिकत्वेनेति ॥ एकादेशस्य परादि-वद्भावेनाप्त्वमत्र स्थानिन इति बोध्यम् ॥ ज्ञापकमिति ॥ एतत्फलमदमुयङि-त्यादिसिद्धिः । वस्तुतोऽत्र मुत्वस्य कथञ्चिद्व्याख्याभेदेन प्रवृत्तावपि रूपासिद्धि-रसुङितिन्यासे दुर्वारेत्याह ॥ परे त्विति ॥ संज्ञाकृतेति ॥ शब्दशास्त्रे प्राधान्या-त्सप्तम्याद्यन्ततया परिगृहीतं शब्दरूपमेव निमित्तमङ्गशब्देन परिभाषायामुपादेयम् । न त्वर्थस्संज्ञा वा । प्रकृते चाबन्तस्य सर्वनाम्नो ङिति सुप्यसुडित्यर्थे सर्वनाम-संज्ञाकृतमेव बहिरङ्गत्वमसुङादेशस्य प्रतिपादनीयं, तच्च नेष्यत इत्याशयः ॥ नित्यत्वादिति ॥ प्रकृतेरसुङ्प्रत्ययस्य याडिति यौगपद्यसम्भवात्परत्वं न व्यव-

---

१. अभिमान इति ॥ परान्नित्यस्य प्रबलत्वेनातुल्यबलतया तत्र विप्रतिषेध-शास्त्रं न व्यवस्थापकम् । अत एव यत्र भाष्ये परत्वान्नित्यत्वादित्युच्यते, तत्र परत्वा-दित्यस्य विप्रतिषेधसूत्रकैयटसम्मतैकदेश्युक्तित्वं परिभाषेन्दुशेखरोक्त सङ्गच्छते । एतदा-शयेनैवात्र नित्यत्वादित्युक्तम् । अतोऽस्य ग्रन्थस्यान्यथाशयमुपवर्ण्याभिमानिकत्वकथन-मयुक्तमेवेति बोध्यम् ।

स्थापकमित्यभिमानः ॥ **असिद्ध्यापत्तेरिति** ॥ चानुकृष्टं नोत्तरत्रेति परिभाषा तु कुलिजाल्लुक्खौ चेति सूत्रस्थभाष्यविरुद्धत्वान्नात्र शास्त्रे आश्रयितुं युक्ता । अत एव तृतीया च होरित्यत्र चेनानुवर्तमानाया अपि द्वितीयाया अन्तरान्तरेणेत्यत्र सम्बन्धः । स्वादुमि णमुलिति सूत्रादनुवृत्तिसम्भवादव्यये यथाभिप्रेतेत्यत्र क्त्वा चेत्येव सिद्धे णमुल्ग्रहणमुत्तरत्र सम्बन्धाविच्छित्त्यर्थं सदुक्तार्थे ज्ञापकमित्यपि न । क्त्वामात्रस्य समानकर्तृकयोरित्येव सिद्धेरारम्भसामर्थ्यादेवोत्तरत्र णमुलनुवृत्तेस्सुवचतया स्वांशे चारितार्थ्याभावात् । इत्थं द्वितीयातृतीयाशब्दयोर्विकल्पेन पाक्षिकस्तयोर्द्वयोरप्यभावो दुर्वार इत्याशयः । ननु सिद्धान्ते तीयस्य ङित्सूपसंख्यानमिति वार्तिकेन पुन्नपुंसकयोरावश्यकेन स्त्रियामपि निर्वाहमाश्रित्य भाष्ये प्रत्याख्यातमिदं सूत्रमतो नोक्तदोषावकाशः । यौगपद्यसम्भवेन विरोधाभावादेव परत्वं न व्यवस्थापकमिति मन्यमानस्य परत्वपरिपन्थितया पूर्वप्रवृत्तिनियामकं नित्यत्वं कथं वा व्यवस्थापकं स्यात् । अतः पाठक्रमेण प्रथममेव याटः प्रवृत्तौ नास्त्यनुपपत्तिरत आह ॥ **किञ्चेति** ॥ ननु विषयभेदेन यौगपद्यसम्भवात्कथमागमादेशयोरपवाद्यापवादकभावस्तत्राह ॥ **अचिरान्नुडिति** ॥ **इष्यत एवेति** ॥ अत एव मिदचोन्त्यात्सूत्रे भाष्ये सत्यपि सम्भवे बाधनं भवतीत्युक्तम् । एतेन भिन्नफलत्वादागमादेशयोर्नास्ति बाध्यबाधकभाव इति छ्वोरिति सूत्रे कैयटोक्तमयुक्तमित्युक्तप्रायम् । **अत्रङ्सूत्रे इति** ॥ गोरग्वचनं स्वरसिद्ध्यर्थमिति वार्तिकव्याख्यावसरे इति शेषः ॥ **उदात्तत्वापत्तिरिति** ॥ इष्यते तु तत्रोदात्तादनुदात्तस्य स्वरित इत्यस्य प्रवृत्तिः ॥ **व्याख्यानादिति** ॥ इदमेवास्यङादेशपक्षेऽपि शरणम् ॥ **मण्डूकानुवृत्तिरिति** ॥ अयमेवात्र पक्षे दोषः । यद्यप्यसुङादेशपक्षेऽपि याट्ग्रहणमनुवर्त्य सप्तम्या विपरिणम्य सर्वनाम्नो याट्यसुङित्यर्थे नास्ति दोषः । तथापि विभक्तिविपरिणामे प्रमाणाभाव इत्येतावता तदुपेक्षेति बोध्यम् ॥

ननु सामान्यस्योद्देश्यतया विशेष्यत्वं विशेषस्य च विधेयतया विशेषणत्वं च लोकसिद्धम् । यथा घटो नील इति ॥ प्रकृते च सामान्यभूता, प्रसिद्धा, पूर्वा दिक् । तत्रोत्तरत्वप्रकारकज्ञानविशेष्यत्वरूपो विशेषो विधेय इत्युत्तराशब्दस्य विशेषणतया नास्ति पूर्वनिपातवैपरीत्यमत आह ॥ **अयं भाव इति** ॥ **यत्तच्छब्दाभ्यामिति** ॥ यच्छब्दोपात्तस्योद्देश्यत्वं तच्छब्दोपात्तस्य च विधेयत्वमित्यर्थः ।

तदुक्तमभियुक्तैः । यच्छब्दयोगः प्राथम्यमित्याद्युद्देश्यलक्षणमिति ॥ **योत्तरत्वेति** ॥ यत्तु "दिग्वाचकस्योत्तराशब्दस्य भाषितपुंस्कत्वाभावान्न सर्वनाम्नो वृत्तिमात्रे पुंवत्त्वमित्यस्य प्रसङ्ग इति" तन्न । उत्तरत्वविशिष्टं हि दिक्त्वं दिग्वाचकस्य तस्य प्रवृत्तिनिमित्तम् । तत्र दिङ्मात्रवर्तिना दिक्त्वेन भाषितपुंस्कत्वाभावेऽपि दिग्देशसाधारणेनोत्तरत्वेन भाषितपुंस्कत्वस्य निर्विवादत्वात् । कथमन्यथोत्तरस्याश्च पूर्वस्याश्च दिशोन्तरालं दिगुत्तरपूर्वेत्यादौ तत्प्रवृत्तिस्स्यात् । अतोऽत्र युक्तमेव पुंवत्त्वमेवमुत्तरत्रापीत्याहुः ॥ **गुणवाचकत्वेनेति** ॥ न केवलमत्र शास्त्रे विशेष्यं विधेयं, विशेषणमुद्देश्यमिति व्यवस्थापयितुं शक्यमुद्देश्यविधेयभावस्य वैवक्षिकत्वेन पूर्वनिपातनियमानुपपत्तेः । न वा सामान्यविशेषभावेनोद्देश्यविधेयभावस्य व्यवस्था सम्भवति । घटः प्रमेयो देवदत्तो ब्राह्मण इत्यादिव्यवहारदर्शनात् । किन्तु जातितदितरप्रवृत्तिनिमित्तकयोरेकद्रव्यनिष्ठतायां जातिप्रवृत्तिनिमित्तकं विशेष्यमन्यद्विशेषणम् । एवं व्याप्यव्यापकजातिप्रवृत्तिनिमित्तकयोर्व्यापकजातिप्रवृत्तिनिमित्तकं विशेष्यमितरद्विशेषणमिति कृष्णतिलश्शिंशपावृक्ष इत्यादिप्रयोगनियमोपपत्तये विशेषणं विशेष्येण बहुलमिति सूत्रे भाष्ये व्यवस्थापितमत्रानुसन्धेयम् । इत्थं च यस्य लाक्षणिकत्वं तस्य पूर्वनिपात इत्याशयः । एतेन योत्तरा सा पूर्वेति विग्रहेऽपि प्रसिद्धायामुत्तरस्यां दिश्यप्रसिद्धं पूर्वत्वप्रकारकज्ञानविशेष्यत्वं विधेयमिति केषांचिदुक्तिः प्रत्युक्तेत्याशयेनाह ॥ **उत्तरस्यामित्यादि** ॥ ननु वैवक्षिकत्वादुद्देश्यविधेयभावस्य पाक्षिको दोषः कथं परिहर्तव्य इत्यत आह ॥ **न विधावपीति** ॥ विधेयबोधके पदे शब्दशक्तिगम्यादन्योऽर्थो न विवक्षणीय इत्यर्थः ॥ **स्पष्टं चेदमिति** ॥ नन्वव्युत्पन्नस्य सहायवाचिनो द्वितीयशब्दस्य स्त्रियां स्याड्विकल्पार्थमावश्यकं सूत्रमिति कथमकर्तव्यता, तत्राह ॥ **साहचर्येणेति** ॥ तृतीयशब्दस्यार्थान्तरवाचिनः प्रसिद्ध्यभावात्तीयप्रत्ययान्तयोरेव तयोरुभयोर्ग्रहणमित्याशयः ॥ **अनभिधानादिति** ॥ सूत्रप्रत्याख्यानपरं भाष्यमत्र शरणम् ॥ **सिद्धमिति** ॥ इत्थं चानभिधाने न मानमित्याशङ्काभिप्रायः ॥ **नित्यत्वाङ्गीकारादिति** ॥ मानपश्चङ्गयोः कन्लुकौ चेति सूत्रस्थेन लुग्ग्रहणेनेदं ज्ञाप्यते । तद्धि षष्ठाष्टमाभ्यां ञचेति विहितयोर्ञानोः पक्षे लुगर्थं, महाविभाषासम्बन्धे तु कनश्चकारानुकृष्टयोस्तयोश्च विकल्पे पाक्षिकष्षष्ठोष्टम इत्यन्तोदात्तप्रयोगो निर्बाध इति तद्वैयर्थ्यं स्पष्टमेव । यद्यपि तत्र

सूत्रे विभाषाधिकारसम्बन्धाभावज्ञापनेनापि लुग्ग्रहणं कृतार्थं, तथापि प्रमाणानां सामान्ये पक्षपाताद्भागार्थे प्रत्ययविधायके सर्वत्र तद्सम्बन्धो ज्ञाप्यत इत्याशयः। तदनभ्युपगमेऽप्याह ॥ आद्युदात्तस्येति ॥ अनो नित्त्वादाद्युदात्तत्वमिति बोध्यम्।

**सापेक्षत्वेऽपीति** ॥ चतुर्थी तदर्थेत्यनुशासनादर्थशब्देन समस्यमान-चतुर्थ्यन्तपुत्रशब्दार्थस्य विशेषणतया समासाघटकार्हच्छब्दार्थसाकाङ्क्षत्वेऽपी-त्यर्थः। पुत्रार्थमिति क्रियाविशेषणम्। प्रयुज्यमानस्येत्यध्याहारः। एवञ्चार्ह-त्पुत्रोपकारकप्रयोगविषयस्य मातृशब्दस्य मातजादेश इत्यक्षरार्थः। तत्र विशि-ष्टोपकारकत्वस्य विशेषणोपकारकत्वाधीनतया पुत्रसम्बन्धिश्लाघ्यत्वोपकारकत्वं प्रयोगे पर्यवस्यति। शिखी ध्वस्त इत्यत्र ध्वंसे शिखाप्रतियोगिकत्वमिवेत्याशयः। तदाह ॥ **अर्हत्त्वं चेति** ॥ **मातृद्वारकमेवेति** ॥ प्रकरणादिना श्लाघ्यत्वेन प्रतीतस्य स्वरूपकीर्तनमात्रप्रयोजनकतया मातृशब्दप्रयोगे नायमादेश इति सूचयितुमेवकारः। इदञ्चार्थशब्दोपादानाल्लभ्यते। तद्वारकत्वाभावतात्पर्यकत्वे हि पुत्रेऽर्हतीत्येव ब्रूयादिति तात्पर्यम् ॥ **नन्वाकारोऽयमिति** ॥ न ह्यत्राकारत्व-मतिदेशतो लभ्यमल्विधित्वात्। किन्त्वाप्त्वमेव, येनोक्तयुक्तेरवकाशस्स्यादिति भावः ॥ **अभिपान इति** ॥ वर्गग्रहणे प्रकृतपरिभाषाया अप्रवृत्तौ प्रमाणाभावः। प्रगृह्यसंज्ञाप्रकरणभाष्यविरोधश्चेति। क्षापयतीत्यादौ पुगागमसम्पत्तये तदप्रवृत्ते-रावश्यकत्वे भुवश्च महाव्याहृतेरिति सूत्रे महाव्याहृतिग्रहणेन सामान्यतस्तद-नित्यत्वस्यैव ज्ञापनीयत्वादौत्सर्गिकप्रवृत्त्या प्रकृते न दोष इत्युक्तावयुक्तमेव प्राचीनोक्तमित्याशयः।

ननु यू स्त्र्याख्यावित्यत्र ह्रस्वयोरग्रहणे हि प्रकृते नदीत्वस्याप्राप्तिस्तत्रैव किं प्रमाणमत आह ॥ **अत एवेति** ॥ **नेति निवृत्तमिति** ॥ ह्रस्वयोरपि नदीत्वप्राप्तौ नञो निवृत्तिप्रतिपादनमयुक्तमिति भावः ॥ **लाघवानुरोधेनेति** ॥ यद्यपि निषेधस्य विधेर्वा विकल्पे नास्ति कश्चित्फलविशेषः। तथापि निषेधस्य विध्यालिङ्गितस्यैव प्रतीतेस्तद्विकल्पे वाक्यर्थगौरवम्। विधिविकल्पे तु निषेधस्या-प्रविष्टत्वाल्लाघवमिति भावः ॥ **स्वारस्येनेति** ॥ भाष्ये विषयशब्दवाच्यस्या-वधारणस्यैवकारो द्योतकस्तस्य च नित्यशब्दोऽनुवादकः। अवधारणं चात्रायोग-व्यवच्छेदलक्षणो नियमः। स च प्रकृते स्त्रीत्वबोधकत्वाभावस्य व्यवच्छेदः।

तादृशाभावस्य लिङ्गान्तरबोधकत्वसमनियतत्वात्तद्व्यवच्छेदे लिङ्गान्तरविशिष्टार्थबोधकत्वस्यैव व्यवच्छेदः पर्यवस्यतीत्याशयः । तदेतदाह ॥ **लिङ्गान्तरेत्यादि** ॥ **भिन्नक्रम इति** ॥ पाठक्रमाद्भिन्नोऽन्वयक्रमो यस्य तथाभूत इत्यर्थः । स्त्रीविषयावित्यस्य स्त्रीत्वविशिष्टार्थबोधकावित्येवार्थ इत्यपि बोध्यम् । **नित्यमिति** ॥ स्त्रीत्वविशिष्टार्थबोधकसमानाधिकरणपदसमभिव्याहाराभावकालिकस्त्रीत्वविशिष्टार्थ - बोधकत्वाभावव्यवच्छेदार्थं सर्वदेत्यर्थकमव्ययं, तदर्थानुवादक एवकार इत्याशयः । तदेतदभिप्रेत्याह ॥ **पदान्तरं विनापीत्यर्थ इति** ॥ असति बाधके क्रमिकान्वयस्य त्यागायोगादत्र कैयटोक्तमेव युक्तम् । न च कैयटोक्तव्याख्यायां विषयशब्दैवकारयोर्नित्यमित्यस्य च तुल्यार्थत्वादन्यतमेनैव निर्वाहे तदितरवैयर्थ्यमिति वाच्यम् । समासाच्च तद्विषयादित्यादौ विषयशब्दस्य बोधकमात्रपरत्वेनापि दर्शनादवधारणार्थबोधकतासम्पत्तये निपातस्यैवकारस्य तद्द्योत्यार्थान्तरव्यवच्छेदाय तद्विवरणात्मना नित्यमित्यस्य च सार्थक्यात् । स्वोक्तीनामपि विवरणस्य भाष्यशैलीसिद्धत्वान्न किञ्चिदपूर्वम् । पक्षान्तरेऽपि कथमन्यथा नित्यमित्यस्यैवकारस्य च सार्थक्यमुपपादनीयमित्याहुः ॥ **व्यावर्त्याभाव इति** ॥ यद्यपि हरदत्तमते प्रभुपतिशब्दप्रवृत्तिनिमित्तयोः प्रभुत्वपालकत्वयोर्ग्रामनयनादिवदुत्सर्गतः पुन्धर्मतया पदान्तरं विना स्त्रियां वर्तमानत्वायोगेन तयोश्शब्दयोर्व्यावर्त्यत्वसम्भवस्तथापि व्याख्यानादेव पक्षद्वयेऽपि नित्यस्त्रीलिङ्गावित्यर्थकस्य स्त्र्याख्यावित्यस्य ह्रस्वघटितवाक्ये सम्बन्धाभाव इति बोध्यम् । **नित्यस्त्रीत्वार्थकमपहायेति** ॥ स्त्र्याख्याविति ह्रस्वघटितवाक्ये सम्बध्यमानं शब्दाधिकारात्स्त्रीवाचकावित्यर्थकं सम्पद्यते, स्त्रीशब्दमात्रस्याख्यापदव्यतिरेकेण सम्बन्ध इति तु न युक्तमेकदेशे स्वरितत्वप्रतिज्ञायामत्रैकदेशस्य सम्बन्धः । पूर्वत्र विशिष्टस्येति व्याख्यानेनैव निर्णेयतया लाघवाच्छब्दाधिकारस्यैव कल्पयितुं युक्तत्वादित्याशयः ॥

**केनापीति** ॥ रभावविषये सर्वत्रैकस्य कस्याप्यप्राप्तेरिति भावः ॥ **व्यवस्थापकाकाङ्क्षयेति** ॥ व्यवस्थासन्देहो ह्याकाङ्क्षामूलम् । स च सन्देहः प्रकृतेऽप्यस्त्येवेति कुतस्तदाकाङ्क्षया व्यवस्थापकन्यायानां प्रवृत्तिर्न स्यादिति भावः । **वार्तिकमिति** ॥ मध्येपवादन्यायेन दीर्घोत्वयोरपवादो रादेशो न तु गुणस्येति वार्तिककृदाशयः । यद्वा रादेशोऽयमनन्तरस्येति न्यायादुत्वस्यापवादो

दीर्घस्य परत्वाद्बाधकस्ततोऽपि परत्वाद्गुणो बाधकस्स्यादिति तदाशयः ॥ **ध्वनितत्वेनेति** ॥ तत्र हि भाष्ये नुमचिरेति वार्तिकमुपक्रम्य रादेशांशे सामान्यचिन्तया बाध्येन नुटा विप्रतिषेधायोग इति वार्तिकमनादृत्य न तिसृचतसृ इति ज्ञापकेन नुडागमे रादेशप्रतिषेध इत्युक्तम् । तेन प्रकृतवार्तिकस्यापि तुल्यरीत्या प्रत्याख्यानमनुक्तमपि प्रतीयत इत्याशयः । ननु भाष्ये बाध्यसामान्यचिन्ताश्रयणपूर्वकत्वेनापूर्वरादेशप्रतिषेधवचनकल्पनया पूर्वविप्रतिषेधप्रत्याख्यानमपेक्ष्य विशेषचिन्ताबोधनद्वारेण पूर्वविप्रतिषेधस्यान्यथासिद्धस्य ज्ञापनमेव युक्तमत आह ॥ **सामान्यचिन्ताश्रयण एवेति** ॥ न तिसृचतसृ इत्यनेन विशेषचिन्ताज्ञापनपूर्वकं पूर्वविप्रतिषेधवचनद्वयकल्पनापेक्षया सामान्यचिन्ताज्ञापनपूर्वकं रादेशप्रतिषेधस्यैकस्य कल्पने लाघवमित्याशयः । तदाह ॥ **औचित्यादिति** ॥ यद्वा तस्येत्यस्य जसि रादेशो वक्तव्य इति वार्तिकस्येत्यर्थः । विशेषचिन्ताश्रयणे परत्वाद्गुणेन बाध्येत, ततस्सामान्यचिन्तामाश्रित्य रादेशो वक्तव्य इत्येवार्थो न त्वन्यथा गौरवपराहतत्वादित्याशयः ॥

**तात्पर्यग्राहकस्येति** ॥ त्रिशब्दस्य विशेष्यनिघ्नतया स्त्रीत्वविशिष्टविशेष्यवाचकपदसमभिव्याहारं प्रकरणं वा विना स्वातन्त्र्येण स्त्रीत्वबोधकतायाः क्वाप्यदर्शनादिति भावः ॥ **अन्तरङ्गाभावादिति** ॥ इत्थं चान्तरङ्गे चरितार्थस्य बहिरङ्गे तस्मिन्नप्रवृत्तिरित्याशङ्काया अनवकाश एवेत्याशयः । अर्थनिमित्तकत्वेनान्येषां बहिरङ्गत्वमनिच्छतामर्थस्यान्तरङ्गबहिरङ्गविचारो न विरुद्ध इति बोध्यम् ॥ **जहत्स्वार्थावृत्तेरभाव इति** ॥ "जहत्स्वार्था तु तत्रैव रूढिर्यत्र विरोधिनी"त्यभियुक्तैरावेदितत्वादिति भावः । यदि च तुशब्दैवकारयोस्सम्बन्धव्युत्क्रमेण यत्र तु रूढिर्विरोधिनी तत्र जहत्स्वार्थैवान्यत्र तूभयमित्यभियुक्तवचनार्थ इत्युच्यते तावतापि नेष्टसिद्धिरित्याशयेनाह ॥ **किञ्चेति** ॥ जहति स्वान्यवयवपदानि यं स जहत्स्वस्तथाभूतोऽर्थो यस्यास्सा जहत्स्वार्था, तदन्या त्वजहत्स्वार्थेति तद्व्युत्पत्तिर्द्रष्टव्या । अन्त इत्यस्याजहत्स्वार्थापक्षे इत्यर्थः ॥ **न चेत्यादि** ॥ यतस्तुल्यमतस्तादृशाशय इति न वाच्यमित्यन्वयः । समुदायशक्यत्वादिति तौल्यहेतुः ॥ **तुल्यमिति** ॥ पक्षद्वयेऽप्येकार्थीभावपर्यासेर्विशिष्ट एवाभ्युपगमादित्याशयः । ततश्च समासघटकस्य त्रिशब्दस्य प्रियत्रिरित्यादौ पुन्नपुंसकान्यतरमात्रविषयक-

प्रतीतिजनकतापर्याप्त्यधिकरणत्वं प्राचीनोक्तं युक्तमेव। परं तु जहत्स्वार्थायामारोपितमजहत्स्वार्थायामनारोपितं तदित्यन्यत्। एवमेव वृत्तिघटकयोस्त्रिचतुर्शब्दयोः स्त्रियां वर्तमानत्वम्। तच्च स्त्रीत्वविशिष्टार्थविषयकप्रतीतिजनकतापर्याप्त्यधिकरणत्वमेवेति पक्षद्वयेऽपि प्रियतिसा ब्राह्मण इत्यादयो निर्बाधकाः प्रयोगाः। स्त्रीनिष्ठसंख्यासमर्पकयोरित्यर्थे जहत्स्वार्थायामारोपेण निर्वाहेऽपि त्रिशब्दस्य तन्निष्ठसंख्यायां लक्षणाश्रयणादन्यो न कश्चिद्विशेष इत्याहुः॥

**पूर्वपदप्रकृतिस्वर इति**॥ इगन्तकालकपालभगालशरावेषु द्विगाविति विहित इत्यर्थः॥ **अन्तरङ्गत्वादिति**॥ विशिष्टसमुदायात्मकाङ्गनिमित्तको बहिर्भूतविभक्तिनिमित्तकश्च नुमागमो बहिरङ्ग इत्याशयः। नन्वतिराभ्यामित्यत्र कृते नुमि निर्दिश्यमानस्य व्यवधानादात्वानापत्तिरत आह॥ **अतिराभ्यामिति**॥ **वृद्धिशब्देनेति**॥ प्रत्यासत्त्या तथाभूताया एव वृद्धेर्वार्तिके ग्रहणमयं तु न तथेति भावः॥ **न स्वरे विशेष इति**॥ बहूनां कुलानामित्यत्र पूर्वविप्रतिषेधेन नुटि सकृद्गतिन्यायेन नुमोऽप्राप्तेः। षट्त्रिचतुर्भ्यो हलादिरित्यस्याप्यप्राप्तिरिति बोध्यम्। न च शयवासेत्यलुकि वारिषुशयेत्यत्र नलोपस्य संज्ञायामसिद्धत्वेन गुरुसंज्ञायां रेफोत्तरवर्तिन इकारस्य गुरोरनृत इति प्लुतस्यान्नुमभावे तु नेति विशेष इति वाच्यम्। ज्ञापनपरभाष्यप्रामाण्येनैतादृशानामनभिधानादिति वदन्ति॥ ननु प्रियतिसृ इत्यत्रानित्यत्वेन न लुमतेत्यस्याप्रवृत्तौ तिस्रादेशवदनङादेशोऽपि किं न स्यादत आह॥ **तथैव भाष्ये इति**॥ इदमनित्यत्वं भाष्यप्रामाण्यात्कार्यविशेषपुरस्कारेण प्रवृत्त्यप्रवृत्तिरूपमपीत्याशयः॥ **चो हेताविति**॥ न तु समुच्चये, तथासति न यासयोरित्यस्य सत्येव परिभाषाविरोधे टाप्रत्ययस्यापूर्वत्वेन ज्ञापकत्वकल्पनायां क्लेश इत्याशयः।

**क्वचिद्दृष्टाविति**॥ इदं च निषेधारम्भसामर्थ्याल्लभ्यते। अन्यथा हि वेयङुवङ्स्थानावस्त्रियावित्येव वदेत्। नञं च न ब्रूयादिति बोध्यम्॥ **अप्रयोजकमिति**॥ स्त्रीत्वाविवक्षायां विरहदुःखायोगात्। परं तु नदीसंज्ञानिषेधपरिज्ञाननाशकस्सीताविरहजश्शोको रामभद्रस्यासीदिति सूचयितुमेतादृशो भट्टैः प्रयोग इति युक्तमत्रोत्तरमित्याशयः।

केचित्तु साधुशब्दस्वरूपनिरूपणोद्देशेनैव भट्टेः काव्यनिर्माणोद्योगादनुकरणरूपेणाप्यसाधुशब्दप्रयोगस्तस्यानुचितस्तस्मादयं लेखकस्य प्रमादस्सुभ्रूरित्येव तु पाठः। यद्वा भ्रूशब्दोऽयमूङ् च गमादीनामितिवार्तिकेन क्विबन्ततया भ्रमेश्च डूरित्यौणादिकसूत्रेण डूप्रत्ययान्ततया च शास्त्रे द्विधा निष्पन्नः। डूप्रत्ययान्तस्य धातुत्वाभावेऽपि विशिष्य ग्रहणादुभयविधस्याप्युवङादेशो निर्बाधः। नदीत्वनिषेधे च साहचर्याद्धात्ववयवस्यैवोकारस्य ग्रहणं, न ह्यधात्ववयव इयङादेशस्थानभूत ईकारस्सम्भवति। स्त्रीशब्दस्य पर्युदस्तत्वात्तस्मान्नदीत्वनिषेधस्य भ्रूशब्दे पाक्षिकत्वं पर्यवस्यतीति युक्त एव ह्रस्वान्तप्रयोगो भट्टेरेवमन्यत्रापीत्याहुः॥

॥ इत्यजन्ताः स्त्रीलिङ्गाः॥



# अथाजन्ता नपुंसकलिङ्गाः ।

**एकवाक्यतयेति** ॥ तत्पक्षे झलन्तस्य संयोगान्तस्य लोप इत्येक एव वाक्यार्थ इत्यञ्जलि मकारे लोपाप्राप्तेर्ज्ञानमित्यादौ द्वित्वमन्तरापि प्रसक्तं मकारद्वयश्रवणं वारयितुममादेश इत्याशयः ॥ **वाक्यभेदेनेति** ॥ अमो मशिति सूत्रस्थं भाष्यं चेह प्रमाणं, तत्र हि मकारद्वयात्मकमादेशमाश्रित्य मशश्शित्त्वं प्रत्याख्यातम् । यदि तदुदाहरणे मद्वयादेशोत्तरं संयोगान्तलोपाप्रवृत्त्या तच्छ्रवणं स्यात्तदा प्रत्याख्यानस्यारम्भसमानफलकता न सिद्ध्येदिति तदसङ्गतिस्स्पष्टैवेत्याशयः । यद्यपि मद्वयादेशे वधीमित्यादौ संयोगान्तलोपस्यासिद्धत्वादपृक्तत्वलक्षण ईडागमो न प्राप्नोतीत्याशङ्क्य यकारमकारसङ्घातोऽयमादेशो लोपो व्योर्वलीति यकारलोप इति सिद्धान्तितम् । तथापि संयोगान्तलोपानुपपत्तेरनुद्भावनात्पूर्वपक्षस्य प्रकृतार्थे प्रामाण्यं निर्बाधमिति बोध्यम् ॥ **अन्तरङ्गत्वादिति** ॥ यद्यपि बहिरङ्गपरिभाषायामङ्गशब्देन सप्तम्याद्यन्तत्वेनोपादीयमानं शब्दस्वरूपमेव निमित्तं गृह्यते शब्दशास्त्रे तस्य प्राधान्यादिति बह्वपेक्षत्वलक्षणबहिरङ्गत्वस्य बहुशस्स्वयं निराकृतत्वाद्विभक्तित्वज्ञानसापेक्षतामात्रेण जरसादेशस्य विभक्त्यादेशेभ्यो बहिरङ्गत्वमयुक्तम् । जराया इति सूत्रस्थं अजरांसीत्यत्र नुम्जरसोर्विप्रतिषेधविचारोऽपि भाष्यकारस्य न प्रकृतोपयोगी, किन्तु शिभावस्य नित्यत्वेन प्रथमप्रवृत्तेर्विघटकः । यतश्शिभावोत्तरं नुमागमं परत्वाज्जरसादेशो बाधते ततश्शिभावजरसोरुभयोरपि नित्यत्वेन परत्वस्यैव व्यवस्थापकतया प्रथमतो जरसादेश इत्यर्थकत्वेन तद्भाष्यस्य सुवचत्वात् । तथापि तत्सूत्र एव नपुंसकप्रथमैकवचने सोरमादेशे सन्निपातपरिभाषया जरसादेशाभाव इति व्यवस्थायां द्वितीयैकवचनेऽप्यमादेशोत्तरं तया परिभाषया तादृशादेशो न स्यादित्येकदेशिन आक्षेपस्य भाष्ये इष्टमेवैतत्संगृहीतमतिजरमित्येव भवितव्यमिति निराकरणादिह विभक्त्यादेशानां पूर्वविप्रतिषेधेन प्रथमप्रवृत्तिरावश्यकीति तत्त्वम्[1] । तदाह ॥ **जरसभाव इति** ॥ मकारादेशे तु परिभाषाप्रवृत्तिमन्तरैव निमित्ताभावादादेशाप्रवृत्तिरित्यपरमनुकूलमिति भावः ।

---

१. **तत्त्वमिति** ॥ वस्तुतो नुम्जरसोर्विप्रतिषेधविचारपरं भाष्यमपि विभक्त्यादेशानां पूर्वं प्रवृत्तिरित्यत्र प्रमाणं भवितुमर्हति । न च शिभावस्य नित्यत्वेन प्रसक्तौ

ननु मकारादेशे हे ज्ञानेत्यादावदन्ताङ्गसम्बुद्धिसन्निपातेन जातस्य तस्य तथाविधसन्निपातविघातकत्वायोगादेङ्ह्रस्वादिति सम्बुद्धिलोपानापत्तिरमादेशे तु मकारलोपेऽप्यकारस्यावशेषान्न तद्विघात इति चेत्तर्हि गुणात्सम्बुद्धेरित्येव सिद्धे लोपविधौ ह्रस्वग्रहणेन सम्बुद्धिलोपे सन्निपातपरिभाषाया अप्रवृत्तिबोधनेन हे नदि हे गौरीत्यादाविव सम्बुद्धिलोपो निर्बाधः। परन्तु भाष्याननुगृहीतत्वादयुक्तोऽयं पक्ष इत्याहुः॥

**व्यावर्त्याप्रसिद्धेरिति**॥ यद्यपि ह्रस्वदीर्घयोरु इति समाहारद्वन्द्व इत्यदसोसेरिति सूत्रस्थप्राचीनपक्षपरिहाराय शेखरोक्तरीत्या परनिमित्तकत्वाभावप्रयुक्तेनान्तरङ्गत्वेन पर्जन्यवल्लक्षणप्रवृत्त्या वासुदेववाचकाकारस्याऽङा सहाव्ययीभावे ह्रस्वे कृते सवर्णदीर्घप्रवृत्त्या व्यावर्त्यसम्भवः। न चाव्ययीभावत्वप्रयुक्तेनाव्ययत्वेनाव्ययादाप्सुप इति लुकि न तत्र स्वमोस्सम्भव इति वाच्यम्। परत्वान्नपुंसकत्वप्रयुक्तस्य स्वमोर्लुगित्यस्यैव प्रसक्त्या तदपवादत्वेनामादेशस्य दुर्वारत्वात्। न चामादेशोत्तरमव्ययादाप्सुप इत्यस्य प्रवृत्त्या फलाभाव इति वाच्यम्। तपरकरणेन सकृद्गतिन्यायाभ्यनुज्ञाबोधनेन तदप्रवृत्तेः। तथापि सामासिकलुकः पूर्वमेव प्रसक्त्या सवर्णदीर्घस्यापि प्रकृते पूर्वोपस्थितनिमित्तकत्वप्रयुक्तेनान्तरङ्गत्वेन तुल्यतया परत्वस्यैव व्यवस्थापकत्वेन सवर्णदीर्घोत्तरमेव ह्रस्वप्रवृत्तेस्तदप्रसिद्धिरित्याशयः। अत एव निपात एकाजनाङिति सूत्रे शेखरे तत्रत्यानाङ्ग्रहणस्य पर्युदासपक्षगतदोषपरिहारार्थमा आत् अमित्युदाहरणमुपन्यस्तमिति दिक्॥

**विभक्तित्वाश्रयणेनेति**॥ विभक्तिस्थानिकस्य विभक्तितया शीरूपविभक्तावित्यर्थे विशेष्यगतस्त्रीत्वानुरोधेन तथा निर्देश इति भावः॥

---

प्रथमप्रवृत्तिं विघटयितुं जरसादेशस्यापि नित्यत्वमुपपादयितुं तद्भाष्यं प्रवृत्तमिति वाच्यम्। उक्तविचारमन्तरापि जरसादेशस्य क्वचित्कृताकृतप्रसङ्गित्वमात्रेणापि नित्यतेत्यनेन नित्यत्वस्य सिद्धतया विप्रतिषेधेन नुम्बाधकत्वोपपादनपूर्वकनित्यत्वोपपादनस्यानावश्यकत्वात्। "नुमोऽनङ्जरसौ विप्रतिषेधेन" इति वार्तिकस्यानङ्विषये तत्प्रवृत्तिफलकत्वस्यैव वक्तव्यतया जरसादेशविषयेऽन्यादृशफलकत्वस्यार्धजरतीयत्वेनानौचित्याच्च। एवञ्च मूलोक्तभाष्यस्य प्रामाण्यासम्भवाभ्युपगमो नातीवादरणीय इति बोध्यमिति दिक्।

**येनानुबन्धेनेति** ।। धर्मिग्राहकसाजात्यलब्धमेतत् । इयं च परिभाषा ययतोश्चातदर्थे इत्यत्र ग्रहणाभावार्थेन वामदेवाड्ड्यड्ड्याविति सूत्रस्थेन यप्रत्ययस्य डित्त्वेन ज्ञाप्यते ।।

**प्रामाण्यज्ञापनमिति** ।। एकदेशानुमत्या प्राक्तनशिष्टोपदिष्टोऽयं मार्गो न त्वपूर्व इति प्रकृतशास्त्रस्य प्रामाण्यलाभ इति बोध्यम् ।।

**आदेशेनुवर्तत इति** ।। परिभाषायां सन्निपातशब्दस्सम्बन्धपरः । स च सम्बन्धो व्यपवर्ग इव विशेषणविशेष्यभावोऽपि, विनिगमनाविरहात् । यादेशविधाववर्णस्य ह्रस्वत्वेनाकारत्वेन च विशेषणविशेष्यभावो निमित्तम् । दीर्घप्रवृत्तौ च ह्रस्वत्वप्रतियोगिकविशेषणविशेष्यभावरूपसम्बन्धविनाशेऽप्यवर्णत्वसामान्यप्रतियोगिकस्तथाविधसम्बन्ध आदेशद्वारेणावतिष्ठत इति भावः ।। **गुणेनेति** ।। सार्वधातुकार्धधातुकयोरित्याकारस्यान्तरतम्यादकार एव गुण इति भावः ।। **व्यर्थमिति** ।। आकारनिवृत्त्यर्थमिको गुणवृद्धीति सूत्रस्थमिग्ग्रहणं व्यर्थमित्यर्थः ।।

**उक्तभावश्चेति** ।। नन्वेतावता यादेशस्सन्निपातपरिभाषया भसंज्ञाद्वारेणात्वसन्निपातविघातकमातोलोपं प्रत्यनिमित्तमित्यर्थः पर्यवसन्नस्तत्रेदं वक्तव्यम् । जातिपक्षे व्यक्तिविशेषानुपहिताकारत्वादिजातेरेव प्रधानतया व्यक्तिगततदीयविशेषणविशेष्यभावसन्निपातस्य यादेशविधिनिमित्तताया दुर्वचत्वेन तथाविधसन्निपातस्य दीर्घोत्तरमनुवर्तमानस्य लोपेन निवृत्तिमाश्रित्य परिभाषाविरोधप्रतिपादनमनुचितम् । किञ्च दीर्घनिमित्तभूतपौर्वापर्यलक्षणसन्निपातविघातकमातोलापं प्रति दीर्घस्य साक्षान्निमित्तत्वविघटकत्वेन परिभाषाप्रवृत्तेरुपपत्तौ यादेशस्य भसंज्ञाद्वारेण पारम्परिकलोपनिमित्तत्वविघटनेन तत्प्रवृत्तिप्रतिपादनमनुपयुक्तमित्यतः प्रकारान्तरेण परिभाषाविरोधं प्रदर्शयन्ति ।।

**परे त्विति** ।। व्याप्यात्वजातिश्चात्र दीर्घप्लुतान्यत्वविशिष्टाकारत्वजातिस्तत्र सुपि चेति दीर्घेण वैशिष्ट्यांशविनाशेऽप्यकारत्वजातेरव्याघातात्तदीय यञादिपौर्वापर्यविघातकस्यातोलोपस्य परिभाषाविषयत्वं निर्बाधमिति तात्पर्यम् । ननु प्रकृतशास्त्रे विशिष्टं शुद्धादतिरिच्यते, अत एव तपरसूत्रमत्र पक्षे चरितार्थमन्यथा

प्रदेशेषु सामान्यजातेरप्यभेदेन ग्रहणे तदसङ्गतिरेव। किञ्च तस्यापत्यमिति सूत्रे भाष्यकारैरुक्तमदन्तप्रातिपदिकसम्बन्धिविशिष्टापत्यरूपार्थस्योक्तत्वेऽपि सामान्यभूतस्यापत्यार्थस्यानुक्तत्वरूपं शेषत्वमिति। तच्च विशिष्टशुद्धयोरनतिरेके न संगच्छते। अपि च ह्रस्वत्वसमनियता व्यापकजात्यपेक्षया विलक्षणैव काचिदकारत्वजातिः। पृथिवीत्वव्याप्यघटत्वादिवत्। ततश्च तपरसूत्रस्य जातिपक्षे नियामकतया दीर्घविधावत इत्यनेन विशेषजातेरेव स्थानित्वेन बोधनात्तस्याश्च स्वाश्रयद्वारा दीर्घादेशेन निवृत्तौ तदीयसन्निपातस्य दुरुपपादत्वेन तद्विघातकत्वमाश्रित्य लोपस्य परिभाषाविषयत्वमयुक्तमिति चेत्तर्हि दीर्घविधावत इति तपरकरणेन विशेषजातेरेव बोधनेऽपि तदाश्रयव्यक्तौ वस्तुसती सामान्यजातिरप्युपतिष्ठत एव, सापि दीर्घविधौ तद्भावभाविततामात्रेण निमित्तं, परिभाषायां च शब्देनोपात्तस्यैव निमित्तत्वमिति नाग्रहस्तत्र च गापोष्ठगिति सूत्रस्थमेव भाष्यं प्रमाणमथवा दीर्घाणां दीर्घेण फलाभावात्प्लुतस्यासिद्धत्वाच्च व्यावर्त्यालाभेन तत्र तपरत्वमविवक्षितम्। सामान्यजातिरेव निमित्तत्वेनाश्रीयते ततश्च सामान्यजातेर्दीर्घोत्तरमप्यव्याहतत्वेन तद्विघातकत्वादातोलोपस्य परिभाषाविषयत्वमिति विभावनीयमित्याहुः।

यत्तु श्रीपायेत्यादौ लाक्षणिकत्वादातोलोपाभावः। ओत्सूत्रभाष्यप्रामाण्याच्च वर्णग्रहणेऽपि लक्षणप्रतिपदोक्तपरिभाषाप्रवृत्तेर्निर्विवादत्वादिति वदन्ति। तदसत्। आतो लोपस्य विषये तत्परिभाषाप्रवृत्तौ पशुष इत्यादि वैदिकप्रयोगविरोधापत्तेः। पशुशब्दोपपदकात्सनोतेर्विटि विड्वनोरित्यात्वे पशुषाशब्दस्तस्मादिह सन्निपातपरिभाषैव लोपनिवारणे शरणमिति दिक्॥

**उपलक्षणमिति**॥ अन्तरङ्गानपीति परिभाषायामपिशब्दः परनित्ययोस्समुच्चायक इति तया वार्तिकस्य गतार्थता, पूर्वविप्रतिषेधाश्रयणे हि क्लेश इत्याशयः॥ **वार्तिकानुरोधेनेति**॥ इदमुपलक्षणं, तत्रत्यभाष्यानुरोधस्य। **त्यदादिभ्यश्चेति**॥ 'स्वमोर्लुक्च त्यदादीनां कृते ह्यत्वे न लुग्भवेदि' ति श्लोकवार्तिकस्यायमर्थतोऽनुवादः।

केचित्त्वन्तरङ्गानपीति परिभाषायाः प्रत्ययोत्तरपदयोश्चेति सूत्रस्था मपर्यन्तानुवृत्तिर्ज्ञापिका। सा हि त्वदीयो मदीय इत्यादावन्तरङ्गत्वात्तवममादिप्रवृत्तौ

वैयर्थ्यादिमां परिभाषां ज्ञापयति ॥ ज्ञापितायामस्यां लुक इव तत्प्रयोजकतद्धितादेरप्यनया प्राबल्यबोधनात्प्रथमतो लुकि तवममादेरप्राप्तौ मपर्यन्तस्यादेशार्था तदनुवृत्तिर्भविष्यतीति स्पष्टं भाष्ये। इत्थं च धर्मिग्राहकसाजात्यादस्या अन्तरङ्गबाधकत्वमेव युक्तम्। परिभाषायामपिशब्दस्तु बहिरङ्गसमुच्चायकः। यथा बहिरङ्गान्विधीनन्तरङ्गो लुग्बाधते, एवमन्तरङ्गानपि विधीन् बहिरङ्गो लुग्बाधत इति तदर्थात्। अथान्तरङ्गपरिभाषाया अनित्यत्वेन प्रकृतपरिभाषायास्सिद्धिस्तदा सुतरामेव परनित्ययोर्बाधकत्वं परिभाषया न लभ्यते। यदि च पूर्वविप्रतिषेधसिद्धं लुकः परबाधकत्वं परिभाषायामपिशब्देन क्रोडीक्रियते, नित्यत्वं तु त्यदाद्यत्वस्य लुकि कृते न लुमतेतिनिषेधेन प्रवृत्तिविघातादयुक्तमेवेत्युच्यते, तर्हि वार्तिकस्यैव तत्सिद्धत्वं न विरुद्धम्। सर्वथा परिभाषाया अपूर्वत्वमनिष्टम्। अत एव भाष्ये परिभाषामाश्रित्य वार्तिकं न प्रत्याख्यातम्। तस्मादत्र मूलोक्तमपि नात्यन्तमयुक्तमित्याहुः[1] ॥

नब्विषयस्येत्यस्य नपुंसकत्वविशिष्टार्थबोधकस्येत्यर्थः। नबिति नपुंसकस्य प्राचां संज्ञा। शान्तनवाचार्यकर्तृत्वात्फिट्सूत्राणां भिन्नकर्तृकत्वं बोध्यम्। ननु पुंवदित्यनेन नपुंसकत्वप्रयुक्तकार्याभावोऽत्रातिदिश्यते, स चाभावः प्रकरणान्तरस्थितस्य ह्रस्वस्येव भिन्नकर्तृकस्य स्वरस्याप्यतिदिश्यतां व्याप्तिन्यायादत आह ॥ **विषयपदेनेति** ॥ नपुंसकत्वेन दृष्टस्य नपुंसकत्वे तदभावे वा इसन्तभिन्नस्यादिरुदात्त इत्यर्थान्नपुंसकत्वाभावेऽपि प्रवर्तमानस्य तन्निमित्तकत्वाभावेन स्वराभावो नातिदेष्टुं शक्य इति तात्पर्यम्।

---

१. आहुरिति ॥ परे त्वत्र धर्मिग्राहकसाजात्यं परबाधकत्वेऽपि समम्। किञ्चोक्तव्यवस्थायां न किञ्चित्फलम्। प्रत्युत पूर्वविप्रतिषेधवार्तिकमप्यपूर्वतया आश्रयणीयमिति गौरवमत्र पक्षे। अन्तरङ्गपरिभाषानित्यत्वेनान्तरङ्गानपीति परिभाषाप्रत्याख्यानमपि न सम्यक्। अनित्यत्वस्यांशतोऽनुगमरूपत्वादस्याः परिभाषाया अनुगमसम्भवे तत्परित्यागस्यानौचित्यात्। अनित्यत्वानुगमभूतस्यापि यत्रानित्यत्वमावश्यकं, यथा नाजानन्तर्यपरिभाषायाः, तादृशस्यानित्यत्वेन अननुगतस्य प्रत्याख्यानस्य न्याय्यत्वेऽप्यनित्यताशून्याया अन्तरङ्गपरिभाषानित्यत्वस्यानुगमभूताया अस्याः परिभाषाया अनित्यत्वाश्रयणेन प्रत्याख्यानमनुचितमेव। अत उपलक्षणतया व्याख्यानमेवोचितमित्याहुः ॥

केचित्तु तथासति त्रिलिङ्गानां पट्टमृदुप्रभृतीनां लिङ्गान्तरबोधकतायामप्याद्युदात्तप्रसङ्गः। इष्यते हि तत्रान्तोदात्तत्वम्। तस्मादिह प्रत्यासत्त्या प्रकृतशास्त्रीयनपुंसकत्वप्रयुक्तकार्याभावस्यैवातिदेशो नान्यस्येत्येव युक्तस्समाधिः। आतिदेशिकस्यानित्यत्वमिति वा प्रकृतार्थे शरणमित्याहुः॥

**नार्थ इति॥** न चैवं बहूनि श्रेयांसि यस्यास्सा बहुश्रेयसी तामतिक्रान्तं कुलमतिबहुश्रेयसीत्यादावपि ह्रस्वानापत्तिरिति वाच्यम्। ईयसः परस्य स्त्रीप्रत्ययस्य प्रत्यासत्तिवशादीयसन्तप्रकृतिकस्यैव ग्रहणमित्याशयात्॥ **दुर्वारत्वापत्तेरिति॥** न च समुदाये विहितं पुंवत्त्वं सामर्थ्यादवयवप्रयुक्तं ह्रस्वं वारयतीति वाच्यम्। बह्व्यः श्रेयस्यो यासां ताः बहुश्रेयसीर्ब्राह्मणीरित्यत्र तस्माच्छसो न इत्यनिष्टनत्वसम्पादकतया सामर्थ्योपक्षयात्॥ **ध्वनितत्वादिति॥** अत एव पस्पशायां भाष्ये लोकतोऽर्थप्रयुक्ते शब्दप्रयोगे शास्त्रेण धर्मनियमो यथा लौकिकवैदिकेष्विति वार्तिके लोकवेदयोरिति प्रयोक्तव्ये लौकिकवैदिकेष्विति तद्धितप्रयोगो व्यर्थ इत्यालोच्य प्रियतद्धिता दाक्षिणात्या इत्युक्तम्। तथा व्याकरणशब्दस्य कर्मव्युत्पत्त्या शब्दपरत्वे व्याकरणे भवो वैयाकरणो योगः, पाणिनिना प्रोक्तं पाणिनीयं व्याकरणमित्यादिव्यवहारानुपपत्तिरित्याशयेन प्रवृत्ते भवे प्रोक्तादयश्च तद्धिता इति

---

१. **आहुरिति॥** परे तु नब्विषयस्येति सूत्रे शेखरे ह्रस्वान्तस्य स्त्रीविषयस्येत्यतो विषयपदानुवृत्त्यैव सिद्धे पुनर्विषयपदं लिङ्गव्यत्ययप्रत्ययलोपान्यतरेण लिङ्गान्तरोपसङ्क्रान्तस्य विषयतामात्रेणैतत्प्रवृत्त्यर्थमिति व्याख्यातम्। एवञ्च सर्वनाम्नो वृत्तिमात्रे इत्यत्रेव नपुंसकस्य सतः सम्प्रत्यनपुंसकत्वेऽपि स्वर इष्ट एव। ध्वनितं चेदमी च द्विवचन इति सूत्रे भाष्ये "ननु च पुंवद्भावातिदेशादेव स्वरो भविष्यति, अशक्यः पुंवद्भावातिदेशस्तत्राश्रयितुम्" इत्यादिना। स्फुटीकृतं च कैयटे "तस्माद्यस्यान्यत्र नपुंसकत्वं दृष्टं, तस्यासत्यपि नपुंसकत्वे आद्युदात्तत्वमिष्यत इति पुंवद्भावेऽपि स्वरानिवर्तनात्स्वरार्थं ईकारो विधेय" इति ग्रन्थेन। एवञ्च तादृशस्य पुंसः स्वरप्रवृत्त्या पुंवदित्यनेन पुंस्यविद्यमानस्यैवातिदेश इत्यर्थस्यातिदेशस्वभावलब्धत्वेन प्रकृतातिदेशाविषयत्वाद्युक्तमेव मूलोक्तम्। पट्टमृद्वादिशब्दानां लिङ्गभेदेन शब्दभेद एवेष्ट इति न तत्राद्युदात्तप्रसङ्गः। एवञ्च व्यासिन्यायाश्रयणेऽपि न किञ्चिद्बाधकम्। आतिदेशिकमनित्यमित्यस्य भाष्यानुक्तत्वेनाप्रामाणिकत्वस्य परिभाषेन्दुशेखरे निरूपितत्वेन स्वयं च तन्निरूपणस्य युक्ततया वाक्यार्थचन्द्रिकायां प्रतिपादितत्वेन तेनात्र निर्वाह इत्यपि न युक्तमित्याहुः।

वार्तिके प्रोक्तादय इत्येव सिद्धे भव इत्यनर्थकमित्युद्भाव्य भाष्यकारैरुक्तम् । “ न चेदानीमाचार्याः कृत्वा निवर्तन्त ” इति ॥ न तु तत्र गौरवं दोष इत्युक्तम् । नापि तेनार्थान्तरमुपवर्णितम् । अतो वार्तिकाक्षराणामाधिक्यमकिञ्चित्करमिति भावः ॥

**तेनास्येति** ॥ दीर्घवचनस्य बहुव्रीहिमात्रविषयकत्वमित्यपि तेन लभ्यते । अन्यथा निष्क्रान्तश्श्रेयस्या निश्श्रेयसिरित्यादावपि दीर्घसम्पादकस्य तादृशवचनस्य बहुव्रीहिमात्रविषयकेण पुंवद्वचनेन प्रत्याख्याने फलभेदादसङ्गतिस्स्पष्टैव । केण इति ह्रस्वस्तु वचनद्वयस्याप्यविषयः । पुंवत्त्वेन वारणायोगात्प्रत्यासत्तिविरोधाच्च । किञ्च दीर्घवचनप्रत्याख्यानपरभाष्यप्रमाण्येन पुंवद्वचनस्योपसर्जनह्रस्वातिरिक्तह्रस्वबाधकत्वं कल्प्यमानं प्रत्यासत्त्या तत्प्रकरणस्थस्यैव नान्यस्येत्यदोषः । अत एव सम्बुद्धिनिमित्तकस्याम्बार्थनद्योरिति ह्रस्वस्यापि न बाधकत्वमित्याहुः ॥ **सामान्यत इति** ॥ पुंवद्वचनस्योपसर्जनह्रस्वापवादत्वे दीर्घस्य ह्रस्वमात्रापवादत्वे च फलभेदस्स्पष्ट एवेत्यर्थः । ततश्च बहुश्रेयसीशब्दस्य स्त्रीपुंसयोरिव नपुंसकेऽपि ह्रस्वाभावो निर्विवाद इति भावः ।

ननु पुंवद्वचनस्य नपुंसकह्रस्वापवादत्वे बहुश्रेयसीमतिक्रान्तं कुलमतिबहुश्रेयसीत्यत्रोपसर्जने स्त्रीप्रत्यये तदादिनियमादुपसर्जनस्त्रीप्रत्ययान्तोत्तरपदकसमासत्वप्रयुक्तस्य गोस्त्रियोरिति ह्रस्वत्वस्याप्राप्तावपि नपुंसकत्वप्रयुक्तस्य ह्रस्वस्याभीष्टस्य प्रवृत्तेर्दौर्लभ्यापत्तिः । न च प्रत्यासत्तिवशादीयसन्तप्रकृतिकस्त्रीप्रत्ययान्तोत्तरपदकबहुव्रीह्युद्देश्यकस्यैव नपुंसकह्रस्वस्योपसर्जनह्रस्वस्यैव वा पुंवत्त्वमपवादो नान्यस्य, प्रकृते च बहुव्रीह्युत्तरपदकस्तत्पुरुषो नपुंसकह्रस्वस्योद्देश्यमिति नास्ति शङ्कावकाश इति वाच्यम् । तथा सति न बहुश्रेयसी कुलमबहुश्रेयसीत्यत्रापि पुंवत्त्वानापत्तौ ह्रस्वापत्तेः । अत्राहुः । प्रत्यासत्त्या बहुव्रीहिनिरूपितोपसर्जनत्वप्रयुक्तो यो ह्रस्वो यश्च तदर्थगतनपुंसकत्वप्रयुक्तस्तयोरुभयोरेवेदमपवादः पुंवत्त्वम् । एवञ्च बहुव्रीह्युत्तरपदस्यातिबहुश्रेयसीत्यादेस्तत्पुरुषस्यातिक्रान्ताद्यर्थप्राधान्यात्तद्गतमेव नपुंसकत्वं ह्रस्वप्रयोजकं, न तु बहुव्रीह्यर्थगतमिति नात्र पुंवत्त्वातिदेशः । नञ्तत्पुरुषे तूत्तरपदार्थः प्रधानमारोपो नञर्थ इति सिद्धान्ताद्बहुव्रीह्यर्थगतमेव नपुंसकत्वं ह्रस्वप्रयोजकमिति भवत्येव पुंवत्त्वातिदेशः । अत एव

श्रेयसीवाचरति कुलं श्रेयसि तानि बहूनि यस्य सोऽयं बहुश्रेयसिरित्यत्रापि न पुंवत्त्वमिति, तदेतदाह ॥ इति दिगिति ॥

अत्रेदं बोध्यम्। पुंवदित्यनेन पुंवाचकस्य वातप्रम्यादेरीकारस्य यद्रूपं दीर्घत्वं तद्बहुव्रीहिघटकस्येयसः परस्य स्त्रीप्रत्ययस्य नपुंसकोपसर्जनह्रस्वव्यावृत्त्यर्थमतिदिश्यते, न तु पुमर्थः। स्त्रीत्वनिमित्तकस्य नदीत्वस्य नपुंसकत्वप्रयुक्तानां शिशीलुङ्नुम्विधीनां चाप्रवृत्तिप्रसङ्गात्। नापि कार्यं, ह्रस्वनिवृत्तेः पुंस्त्वनिमित्तकत्वाभावेन तदसिद्ध्या दीर्घवचनप्रत्याख्यानविरोधात्, बहुश्रेयसीर्ब्राह्मणीरित्यत्र तस्माच्छसो न इति नत्वप्रसङ्गाच्च। लिङ्गान्तरप्रयुक्तकार्यसामान्याभावस्यातिदेशे निरुक्तदोषध्रौव्याच्च। अत एव प्रथमलिङ्गग्रहणं चेति वार्तिकस्यावयवस्त्रीविषयत्वात्सिद्धमिति भाष्यकाराणां प्रत्याख्यानमुपपद्यते। अन्यथा बहुश्रेयस्यादौ पुंवत्त्वातिदेशादप्राप्तनदीत्वसम्पत्त्यर्थमावश्यकस्य तस्य कार्यकालयथोद्देशोभयपक्षसाधारणं प्रत्याख्यानमसम्बद्धमेव स्यात्। कैयटे च यथा पुंविषये ईकारश्श्रूयते न तु ह्रस्वत्वं प्रतिपद्यते। तथेयसोऽपि पर इत्येवार्थो वर्णितो न तु नुमादयो निवर्तन्त इति। एवञ्च शिशीलुङ्नुम्विधिनदीत्वानि बहुश्रेयस्यादेः क्लीबे प्रवर्तन्त एव। यदि पुंवदिति षष्ठ्यन्ताद्वतिः, पुंवाचकस्येकारस्य स्थाने यन्न भवति लिङ्गान्तरप्रयुक्तं कार्यं तद्बहुव्रीहिघटकस्येयसः परस्येकारस्यापीत्यभावातिदेशस्तदा ह्रस्वव्यतिरिक्तानां तत्तल्लिङ्गकार्याणां प्रवृत्तेरविरोधः। ततश्चेयं प्रक्रिया क्लीबे स्वमोर्लुक् बहुश्रेयसी, न लुमतेति निषेधस्यानित्यत्वादप्रवृत्तौ प्रत्ययलक्षणेन सम्बुद्धावम्बार्थनद्योरिति ह्रस्वः। तस्योक्तनिषेधानित्यत्वमूलकस्सम्बुद्धिनिमित्तकः पाक्षिको गुणस्तु न प्रवर्तते। नद्यन्तानां ह्रस्वविधानसामर्थ्यात्। अन्यथा ह्यम्बार्थानां ह्रस्वो नदीह्रस्वयोर्गुण इत्येव ब्रूयादत एव हे गौरीत्यादौ गुणाभाव इत्यन्यत्र विस्तरः। हे बहुश्रेयसि, निषेधप्रवृत्तौ तु सम्बुद्धिपरत्वाभावेन ह्रस्वाप्रवृत्त्या दीर्घान्तमेव हे बहुश्रेयसी, औङश्शीभावे जश्शसोश्शिभावे च नुम्। बहुश्रेयसिनी, बहुश्रेयसीनि। तृतीयादिषु पुंवद्भावविकल्पात्पाक्षिके नुमभावे बहुश्रेयस्या बहुश्रेयसिनेत्यादि। हलादौ नुमागमाप्राप्तेः पुंवदेव। बहुश्रेयसीभ्यामित्यादि। आमि नुमचिरेति नुटि नुमि वा नास्ति विशेषः।

यत्तु ङेप्रभृतावजादौ नदीत्वप्रयुक्तेनाऽडागमेन परत्वाद्बाधितो न प्रवर्तते

नुमागमः। पुनः प्रसङ्गविज्ञानाश्रयणे तु बहुश्रेयस्यामित्यत्र ङेरामि नुडपि प्रवर्तेत। तस्मादिह बहुश्रेयस्यै बहुश्रेयस्या इत्याद्येकविधमेव रूपमिति तन्न। नित्यतया नुमागमस्य प्रथमप्रवृत्त्यौचित्यात्। नुमि कृते नदीत्वाभावादाडागमस्याप्रवृत्तिरिति स्पष्टमेव। यदपि नुम्विधावुकारादिसाहचर्यादिकारोऽपि ह्रस्व एव गृह्यते, ततोऽत्र नुमागमाप्राप्तिस्तृतीयादौ पुंवदेव रूपम्। एवमौङि जश्शसोश्च बहुश्रेयसीत्येव नुम्रहितं रूपमित्याहुः। तदपि न। लक्ष्यानुरोधेन शास्त्रनिवर्तकतया प्रवर्तमानस्य लोकन्यायस्य प्रामाणिकलक्ष्यविसंवादेन प्रवृत्त्ययोगात्। किञ्च नुम्विधौ साहचर्यपरिभाषाश्रयणे ऋकारस्य सन्ध्यक्षरस्थानिकस्यासम्भवादिदुतोरपि तथाभूतयोरग्रहणापत्तौ बहूपप्लवापत्तिरित्यलम्॥

**षष्ठीनिर्देशाभावादिति॥** स्थानषष्ठ्यन्तपदनिष्ठशक्तिनिरूप्यत्वं निर्दिश्यमानत्वमिह तु क्रोष्टुशब्दः प्रथमानिर्दिष्ट इति नास्ति निर्दिश्यमानपरिभाषायाः प्रवृत्तिरित्याशयः॥ **सामर्थ्यादिति॥**

केचित्तु स्थान्यादेशभावतात्पर्यविषयीभूतशास्त्रघटकोद्देश्यसमर्पकपदनिष्ठशक्तिगम्यत्वं निर्दिश्यमानत्वमित्यवश्यमभ्युपेयम्। अन्यथा प्रकरणप्राप्ताङ्गरूपविशेष्यमूलकेन तदन्तविधिना प्रसक्तस्य प्रियक्रोष्टुप्रभृतेरपि विशिष्टस्य क्रोष्टुशब्दात्मकतृजन्तरूपापत्तेः। न हि विधेयांशे तदन्तविधिरस्ति, विशेष्यासन्निधानात्। न वा प्रियक्रोष्टृप्रभृतेस्तृजन्तत्वं, प्रत्ययग्रहणपरिभाषाविरोधात्। एवमसमासे निष्कादिभ्य इति सूत्रस्थेनासमासेग्रहणेन ज्ञापितात्तदन्तविधेस्सुनभ्यमित्यादौ नाभिनभं चेत्यतो यत्प्रत्ययसन्नियोगेन विधीयमानो नभादेशस्सुशब्दविशिष्टादौ प्रसज्येत। न चैवंविधेषु स्थान्यादेशभावकल्पने षष्ठीनिर्दिष्टस्य ह्यादेशा उच्यन्त इति स्थानिवत्सूत्रस्थभाष्यविरोध इति वाच्यम्। शब्दस्य शब्दान्तरस्वरूपप्राप्तेः स्थान्यादेशभावमन्तरेण दुर्वचतया कल्प्यमानवाक्यगतषष्ठीनिर्देशमाश्रित्य तदुपपत्तेः। तस्मान्निर्दिश्यमानपरिभाषयैव निर्वाह इति विप्रतिषेधसामर्थ्यवर्णनं विफलम्[1]। किञ्चोक्तरीत्या नुमि कृते तृज्वत्त्वाप्रवृत्तेरनित्यतया कृताकृतप्रसङ्गित्वेन

---

१. **सामर्थ्यवर्णनं विफलमिति॥** अत्रेदमवधेयम्। अवत्यमूलग्रन्थः प्रियक्रोष्टूणीति रूपं वदतां प्राचां ग्रन्थस्य खण्डनाय प्रवृत्तः। यदि नुमः पूर्वं तृज्वद्भावस्तदा पूर्वविप्रतिषेधपरवार्तिकविरोध इति पूर्वं नुम् प्राचाप्यवश्यमभ्युपेयः।

नुमागमस्य नित्यतया च तृज्वत्त्वांशे पूर्वविप्रतिषेधारम्भो नापूर्व इत्यपरमनुकूलमित्याहुः ॥

**परत्वात्तृज्वत्त्वे इति** ॥ तृज्वद्भावोत्तरं नुमागमस्य प्रसक्तावपि शब्दान्तरप्राप्त्या न नित्यत्वमित्याशयादेवमुक्तम् । यदि तु कृताकृतप्रसङ्गितामात्रेण भुवो वुक इव नित्यत्वमेव, तत्सिद्धार्थानुवाद एव तदंशे पूर्वविप्रतिषेधारम्भ इत्युच्यते, तदा नात्र शङ्कासमाधानयोरवकाश इति बोध्यम् ॥ **चतुर्थ्यन्तोदाहरणेति** ॥ प्रियक्रोष्टुने हितक्रोष्टुन इति हि भाष्योदाहरणमिति भावः ॥ **आवश्यकत्वद्योतनायेति** ॥ वचनारम्भेऽपि शब्दानां नियतविषयताया आवश्यकत्वेन तामाश्रित्य वचनारम्भ एव लघीयानिति भाष्यकाराशयः प्रकृतोदाहरणस्वारस्यात्प्रतीयत इति भावः ॥ **सर्वनामस्थानविषयकतापीति** ॥ न च प्रथमातिक्रमणे कारणाभावादिति न्यायेन प्रथमतस्सर्वनामस्थानोदाहरणोपन्यासस्यावश्यकतया तदनुपन्यासात्तद्विषयोदाहरणानामनभिधानमित्येव किं न स्यादिति वाच्यम् । णिजां त्रयाणामिति सूत्रस्थात्त्रयाणामिति ग्रहणादत्र शास्त्रे कपिञ्जलाधिकरणन्यायस्यानाश्रयणावगमेनादोषात् ॥

**उपजीव्यविरोधेनेति** ॥ इगन्तत्वमुपजीव्य प्रवृत्तः पुंवद्भावो ह्रस्वनिवृत्तावोकारादिप्रवृत्तौ च स्वोपजीव्येन विरुध्येतेति भावः ॥ **अन्तरतमाऌरूप इति** ॥ ऌकारात्मक इत्यर्थः ॥ **द्व्यच्कत्वविनाश इति** ॥ न च ऌकारस्य यणादेशे नास्ति द्व्यच्कत्वविनाश इति वाच्यम् । यणादेशोत्तरं तदभावेऽपि प्रवृत्तिकालिक-

---

**नुमि कृते तृज्वद्भावस्य प्राप्तिरेव न । निर्दिश्यमानस्य नुमा व्यवधानात् । यदि प्राचीनैः स्वपक्षसिद्ध्यर्थं निर्दिश्यमानपरिभाषाप्रवृत्तिविघटककुकल्पना मूलप्रदर्शिता क्रियेत, तदापि पूर्वविप्रतिषेधवचनस्य वैयर्थ्यापत्त्या तत्सामर्थ्यात्सकृद्गतिन्यायप्रसरे न तदभीष्टसिद्धिरिति बोधयितुं प्रवृत्तेऽस्मिन् ग्रन्थे सामर्थ्यवर्णनं सफलमेव । अतत्यस्सर्वोऽपि ग्रन्थः प्राचीनरीत्यैवेत्यनास्थाबोधकेन "व्यवधानमित्यस्याभावेऽपि" इत्यपिना सूचितमित्यलम् ।**

**१. नात्र शङ्कासमाधानयोरवकाश इति ॥ नित्यत्वमनादृत्य प्रवृत्तस्य पूर्वविप्रतिषेधवचनस्य विषयविशेषविषयत्वं वदतां मतस्य विमर्शावसरे नित्यत्वप्रसङ्गस्यानुचितत्वेन युक्ते एवात्र शङ्कासमाधाने इति बोध्यम् ।**

स्योपजीव्यभूतद्व्यच्कत्वविनाशस्य दुर्वारत्वात् ॥ अदूषकत्वादिति ॥ यदि तु प्रत्यासत्तिवशादिगन्तपुंवाचकप्रवृत्तिनिमित्तवतो नपुंसकस्य तथाभूतस्य पुंवत्त्वमित्यर्थ आश्रीयते, तदा नास्ति नपुंसके प्रद्युशब्दादौ पुंवत्त्वमिति वदन्ति ॥

इत्यजन्ताः नपुंसकलिङ्गाः ।



१. अदूषकत्वादितीति ॥ माधवाद्यनुरोधेनास्य ग्रन्थस्य सत्त्वादित्यनन्तरं "पुंवत्त्वेन स्त्रियाः पुंवदित्यादौ स्त्यूर्थकत्वद्वारा उपजीव्यस्यैव स्त्रीप्रत्ययस्य निवृत्तेर्दर्शने- नैतद्विषये तस्यादूषकत्वादिति भावः" इत्यधिकः शब्दरत्नपाठः क्वचिद्दृश्यते । तदनु- सारेणायं ग्रन्थः । इदानीन्तनपुस्तकेष्वयं न दृश्यते ।

श्रीगणेशाय नमः ॥

# अथ हलन्ताः पुंलिङ्गाः ।

ननु धुड्विधौ लाघवार्थतया सीति सप्तम्याष्षष्ठ्यर्थत्वात्पदाङ्गाधिकार इत्यनुशासनेन पदस्येत्यधिकारप्राप्तं विशेष्यमादाय सामानाधिकरण्येन सम्बन्धे सान्तस्य पदस्येत्यर्थात्कथमिह धुडागमप्रसङ्ग इत्यत आह ॥ **पदस्येति व्यधिकरणमिति** ॥ नलोपसूत्रस्थेनान्तग्रहणेन पदाधिकारस्य क्वचिद्वैयधिकरण्येनापि सम्बन्ध इत्यर्थस्य भाष्यकृता ज्ञापितत्वादिति भावः । एवञ्च पदाधिकारस्योत्तरत्र मण्डूकानुवृत्तिनिरासार्थमेवात्र सम्बन्धो न तु लक्ष्यविशेषे प्रवृत्तिनिरोधाय, सकारस्य पदावयवत्वाव्यभिचारादिति तत्त्वम् ।

**अचर्त्वभाजमिति** ॥ नन्वीदृशार्थोपलक्षकत्वे वत्सर इति भाष्यकारोपदर्शितप्रकृतवार्तिकोदाहरणासङ्गतिः । तस्य वदेरौणादिके सरप्रत्यये निष्पत्त्या तकारस्य चर्त्वनिष्पन्नत्वादिति चेन्न । उणादीनामव्युत्पन्नत्वपक्षे तत्र चर्त्वनिष्पन्नतकाराभावेनादोषात् । कथमन्यथा यथाश्रुतेऽप्यप्फ्सरा इति तदुपदर्शिततदीयोदाहरणोपपत्तिः । अप्शब्दपूर्वकात्सर्तेरसुन्यौणादिके तन्निष्पत्त्या पकारस्य पदान्तत्वात्, व्युत्पत्तिपक्षे तु पूर्वत्रासिद्धीयमद्विर्वचने इति परिभाषया द्वित्वे द्वित्वाश्रयस्य कार्ये च कर्तव्ये त्रैपादिकासिद्धत्वाभावबोधनेन द्वित्वनिष्पन्नस्य सिद्धतया वार्तिकरीत्या प्रसक्तस्य द्वितीयादेशस्य प्रापणाय शिक्षावचने त्रैपादिकासिद्धत्वोपहितचर्त्वाभावविशिष्टमित्यर्थस्यावश्यकतया प्रकृतेऽपि चर्त्वनिष्पन्नस्य द्वित्वे तदाश्रयस्य द्वितीयादेशसौलभ्यान्नोक्तदोषावकाशः । अत एव द्वित्वप्रकरणे भाष्यकृदुक्तमावसानिकद्वित्वोदाहरणं वाक्क् वाग्ग् इति सङ्गच्छते । अन्यथा झलां जश् झशीत्येतदपेक्षया वावसान इत्यस्यासिद्धतया चरमककारे गकारबुद्ध्या पूर्वस्य जश्त्वे प्राथमिकोदाहरणे ककारद्वयानुपपत्तिस्स्पष्टैव । एवञ्च सन्नन्तप्रघट्टके ईर्त्सतीत्यत्रर्धेस्सनि निरुक्तपरिभाषाप्रवृत्त्यभिप्रायकं चर्त्वोत्तरं द्वित्वमित्युक्तमप्युपपद्यते । द्वित्वोत्तरं चर्त्वासिद्धत्वे च द्वितीयादेशाप्रवृत्त्या फलाभावेन सफलप्रवृत्ति-

सम्प्रदायस्य परिभाषाशास्त्रस्य प्रवृत्त्ययोगात्तदसङ्गतिरेव। अत एव यक्ष्यमाण इत्यादौ ककारखकाराद्योर्द्वयोर्द्वयोर्वर्णक्रमे पृथगुल्लेखो वैदिकसम्प्रदायप्रसिद्धः। किञ्च द्वित्वशास्त्रेण पूर्ववर्णसजातीयः कश्चनान्यो वर्णः प्रादुर्भाव्यते। न तु स एवायमिति चर्त्वशास्त्रनिष्पन्नत्वाभावस्स च चरम एव न प्रथमः। आगन्तूनामन्ते निवेश इति न्यायात्। तथा च नादिन्याक्रोश इत्येतत्सूत्रपठितद्वितीयादेशविधायकप्रकृतवार्तिकदृष्ट्या तदुत्तरसूत्रदृष्ट्या च तस्य द्वित्वाश्रयस्यासिद्धत्वाभावोऽपि न्यायसिद्ध एव। द्वित्वप्रकरणस्थं भाष्यमप्यत्रैवार्थे प्रामाण्यमधिरोहतीति मास्तु परिभाषायामर्थान्तरानुसरणक्लेशः। एतदर्थमेव द्वित्वप्रकरणे वार्तिकस्यास्य पाठः। अप्सु तत्थ्सवितुरित्यादौ चर्त्वोत्तरं द्वित्वे द्वितीयादेशः। यथाश्रुते तु शिक्षावचने छान्दसमुक्तोदाहरणेषु भत्वमाश्रयितव्यमतो युक्तमत्र सुधीभिराकलनीयमित्याहुः।

उपलक्षणमित्यस्य लक्षणया बोधकमित्यर्थः। ननु शक्यसम्बन्धो हि लक्षणा, ततश्च कोऽसौ शक्यलक्ष्ययोः प्रकृते सम्बन्धस्तत्राह॥ **पदान्त इत्यादि**॥ स्वगतपदान्तवृत्तित्वसमानाधिकरणधर्मकत्वमिह लक्ष्यगतश्शक्यसम्बन्धः। पदान्तभाक्शब्दस्यैव लक्षणा, नञा च तत्पुरुषो न तु विशिष्टस्यानुपयोगात्। प्राय इत्युक्तेरुपयोगं सूचयन् लक्षणायाः प्रयोजनमाह॥ **अत एवेति**॥ यथाश्रुते तु ङकारणकारान्तयोः कुक्ट्वकावित्यर्थाद्यदागमन्यायेन विशिष्टयोः पदत्वे तयोः पदान्तभाक्त्वेन द्वितीयादेशानुपपत्तिरित्याशयः॥ **चर्त्वस्याप्यभावादिति**॥ फलाभाव एवात्र हेतुः॥

**उभयं सिद्ध्यतीति**॥ ननु धातुपदावृत्तावप्युपदेशकाललक्षणाया एव मूले स्पष्टतया वचनविपरिणामेन तस्य दादेरित्यनेन सम्बन्धे सिद्ध्यत्येवाभीष्टमुभयमत आह॥ **उपदेशकालमित्यस्येति**॥ नन्वेवमुपदेशे दादेरिति परममूलोक्तमयुक्तमेव स्यादत आह॥ **फलितार्थ इति**॥ न तु शाब्दोऽर्थः। स एव किं न स्यादत आह॥ **वाच्यार्थत्वे इति**॥ शाब्दार्थत्वे इति तदर्थः॥ **गौरवमिति**॥ ननु दादिपदावृत्तावप्युपदेशकालिकदादित्ववति लक्षणाभ्युपगमे तदितरस्य दादेरित्यस्य वैयर्थ्यम्। उपदेशकालिकमात्रलक्षणायां च दादिपदप्रतिपाद्यदादित्वान्वये पदार्थैकदेशान्वयदोषः। विशिष्टेन धातुना सम्बन्धे प्रागुक्त-

दोषानुद्धारः । तस्मादुपदेशकालमात्रलक्षणाविभक्तिविपरिणामवैयधिकरण्यान्वयानामावश्यकतया नास्ति दादिपदस्य धातुपदस्य वाप्यावृत्तौ लाघवगौरवप्रयुक्तो विशेष इति चेत्सत्यम् । एकविशिष्टेऽपरवैशिष्ट्यमिति न्यायेन दादित्वविशिष्टे धातावुपदेशकालिकत्वसम्बन्धे दादित्वेनोपदेशकालवर्तिनो धातोरित्यर्थः प्रतीयत इत्याशयाददोषः । यद्येवं धातुपदस्याप्यावृत्तिलभ्यस्योक्तार्थलक्षणायामीदृशरीत्या सम्बन्धे च का क्षतिः । एकत्र द्वयमितिन्यायेन सम्बन्धे हि प्रागुक्तो दोषः । न चायं नियमोऽस्ति "आवृत्तिलभ्यपदजन्यप्रतीतिविषयस्यावर्तमानपदप्रतिपाद्यतावच्छेदकावच्छेदेनैवान्वय इति" । एरनेकाच इत्यत्राचि श्नुधातुभ्रुवामिति सूत्रादनुवर्तमानस्य धातुपदस्यावृत्तौ परस्परान्वयस्य भाष्यादावदर्शनात् । अतो मूलोक्तरीत्या धातुपदस्यावृत्तावप्युक्तरीत्या सम्बन्धे न दोष इति दर्शयति ॥ **धातोरित्यस्यैवेति** ॥ वस्तुतो विशेषाभावेऽपि दादिपदावृत्तिरेव युक्ता, समूलत्वात् । न तु धातुपदावृत्तिरित्याह ॥ **अत एवेति** ॥ **ढत्वस्यापीति** ॥ निपातानामनेकार्थत्वात्समुच्चयार्थकोऽयं वाशब्दः । तद्बलाच्च ढत्वघत्वयोरुभयोरपि विधानमिति तात्पर्यम् ॥ **फलान्तराभावेनेति** ॥

केचित्तु भाष्यकारीयन्यासे धातोरित्यत्र दादिपदसम्बन्धेन दादेर्धातोर्घत्वमित्यर्थे पर्युदस्यमानसमर्पकोऽपि पूर्वत्रार्थाधिकाराद्दादिर्धातुपर एवेति समासे दामलिडित्यत्र ढत्वघत्वाभावयोस्सिद्धिः । अन्यथा ह्यर्थाद्दादेरेव धातोर्घत्वेऽपि पूर्वत्र सामान्येन पर्युदासे तदसिद्धिस्स्पष्टैव । ततो न दादिपदानुवृत्तेर्नैष्फल्यम् । किञ्चोक्तार्थे दादिपदस्य लक्षणायां धातुपदानर्थक्यम् । औपदेशिकदादित्ववतो हान्तस्य धातुव्यतिरिक्तस्याप्रसिद्धेः । भाष्यकृता च वैयधिकरण्यान्वयस्योत्तरत्रावश्यकत्वमुक्तम् । न तु धातुग्रहणस्य । किञ्च धातुपदस्यौपदेशिकधातुपरत्वकल्पनायां दामलिडादिनामधातावतिव्याप्तिवारणेऽप्यधोगित्यादावव्याप्तेः परिहारासम्भवेन 'कथमधोगिति' भाष्यकारीयतदुत्तरशङ्काग्रन्थस्योपपत्तौ दादिपदस्य निरुक्तलक्षणामाश्रित्य तादृशभाष्यस्यैकदेशयुक्तित्वकल्पनमपि सुतरामयुक्तम् । वैयधिकरण्यान्वयस्योत्तरत्रावश्यकतामुपपादयित्रा भाष्यकृता सूचितमत्रत्यमनावश्यकत्वमपि न दादिपदलक्षणायास्साधकम् । उपदेशकालपरस्योपदेशकालिकपरस्य वा धातुपदस्य दादेरित्यनेन सम्बन्धादपीह निर्वाह इत्याशयकतयापि

तद्भाष्यसौष्ठवात् । किञ्च वैयधिकरण्यान्वयमुपपादयतो भाष्यकारस्य लक्षणया धातुपदेनौपदेशिकधातोर्ग्रहणमावश्यकमन्यथा दोग्धेत्यादाविव दामलिडादावपि नामधातौ व्यपदेशिवद्भावेन प्राप्तस्य घत्वस्य परिहारान्तराप्रदर्शनेन न्यूनताप्रसङ्गः । तस्मादिह मूलोक्तरीत्या धातुपदस्यैवाव्याप्त्यतिव्याप्तिद्वयपरिहारोपायतया लक्षणाश्रयणं न्याय्यम् । न तु दादिपदस्येति सुधीभिराकलनीयमित्याहुः[1] ॥

---

१. आहुरिति ॥ परे तु अत्र मन्दमध्यमाधिकारिणां, धातोरित्यस्यावृत्त्या वा दादेरित्यस्यावृत्त्या वा औपदेशकालिकत्वं लक्षणीयमिति सर्वसम्मतम् । तत्र कस्यावृत्तिरुचितेत्यंशे विप्रतिपत्तिः । उत्तमाधिकारिणां तु आवृत्तिमन्तरैव यस्य कस्य वा पदस्यौपदेशकालिकलक्षकत्वमुचितम्, लाघवात् । तत्र कस्य वा तादृशार्थलक्षकत्वमित्यंशे विप्रतिपत्तिश्च । अत्र दादेरित्यस्यैवावृत्तेः तस्यैवौपदेशकालिकलक्षकत्वस्य वा औचित्यं मन्यते हरिदीक्षितः । तथा हि । यदि दादेरित्यस्यौपदेशकालिकदादिपरत्वलक्षणायां धातोरित्यस्य वैयर्थ्यापत्त्या धातोरित्यस्य लक्षकत्वमभ्युपेयते, तदा औपदेशकालिकधातुत्ववतो दादेरित्येवार्थः स्यात् । शक्यसम्बन्धानुरोधात् । तथाच सति दामलिडित्यादिसिद्धावप्यधोगिति न सिद्ध्येत् । अदादित्वात् । न च तत्र वैयधिकरण्यान्वयेन निर्वाह इति वाच्यम् । वैयधिकरण्येनान्वयस्य इहानावश्यकतासूचकभाष्यविरोधापत्तेः । यदि तु "एकविशिष्टेऽपरवैशिष्ट्यम्" इति न्यायेन धातुत्वविशिष्टे दादावुपदेशकालिकत्वसम्बन्धे दादित्वेनोपदेशकालवर्तिनो धातोरित्यर्थः पर्यवस्यतीति नाधोगित्यत्र दोष इत्युच्यते, तदा धातोरित्यस्य वैयर्थ्यं तत्रापीति दादिपदलक्षकतावादे धातुग्रहणानर्थक्यरूपदोषापादनमयुक्तमेव स्यात् । यस्तूभयोस्समो दोष इति न्यायात् । धातुग्रहणस्यानुवृत्त्यर्थत्वं तूभयोस्समम् । किञ्च धातुपदस्य लक्षकत्वेऽर्थाधिकारे च गर्धबित्याद्यसिद्ध्या न्याय्यस्यार्थाधिकारस्य बाधो वक्तव्यः । दादेरिति सूत्रे धातुग्रहणं तु दादिपदस्योक्तार्थलक्षकतायां तात्पर्यग्राहकत्वेनाप्युपयुज्यते । भाष्ये वैयधिकरण्यान्वयस्येव धातुपदस्योत्तरत्रावश्यकत्वानुक्तिस्तु "इह किंचिन्नूपो" इति न्यायेन तात्पर्यग्राहकत्वेनाप्युपयुज्यत इत्याशयिका । "दादेर्धातोर्घत्वमित्यर्थे पर्युदस्यमानसमर्पकोऽपि पूर्वत्रार्थाधिकाराद्दादिधातुपर एवेति समासे दामलिडित्यत्र ढत्वघत्वाभावयोः सिद्धिः, अन्यथा ह्यर्थाद्दादेरेव धातोर्घत्वेऽपि पूर्वत्र सामान्येन पर्युदासे तदसिद्धिः स्पष्टैव । ततो न दादिपदानुवृत्तेर्नैष्फल्यम्" इति ग्रन्थेन भाष्यकृत्कृतयोगविभागपक्षे उत्तरत्र दादेरित्यनुवृत्तेः फलान्तरसम्पादनमयुक्तमेव । उत्तरत्र दादेरित्यस्य धातुपदार्थान्वयेन वस्तुतो दादेर्धातुत्वेऽपि दादेरित्यस्य धात्वर्थकत्वाभावेनार्थाधिकारेण पूर्वत्र दादिर्धातुरेव गृह्यत इत्युक्तेश्शिथिलत्वात् । अतो मूलकृदूहितं दादिपदलक्षकत्वमेव ज्याय इत्याहुः ॥

**तद्वाडिति** ॥ तच्छब्दोपपदाद्वहेर्ण्विन् वाहयतेर्वा क्विप् । अत्र दकारस्य धात्ववयवैकाज्घटकत्वाभावाद्भष्भावाभावः । ननु वाह ऊठ्सूत्रस्थस्योठ्ग्रहणस्य बहिरङ्गपरिभाषाज्ञापनपरभाष्यप्रामाण्यादकारान्तोपसर्गोपपदादनकारान्तोपपदाच्च वहेर्वाहेर्वा ण्विन्क्विपोरनभिधानस्यावश्यकतया चिन्त्यमिदं प्रत्युदाहरणमिति चेन्न । यत्रोठ्सम्प्रसारणयोर्विशेषो भविषये तत्रानभिधानेऽप्यन्यत्र तथात्वे मानाभाव इत्याशयात् । नन्वेवमपि दकारस्य भष्भावोत्तरं जश्त्वे विशेषाभावात्कथमिदं प्रत्युदाहरणमिति चेत्सत्यम् । दद्वाडित्यस्योपलक्षणमेतत् । तत्र हि दद दान इत्यतः क्विपि निष्पन्नो दच्छब्द इति चरमदकारस्य भष्भावे तमादाय पूर्वस्यापि तत्प्रवृत्तावनिष्टप्रसङ्ग इत्याशयोऽत्र विभावनीयः ॥

**अलमिति** ॥ यत्त्वाहुः । भाष्यकारीयन्यासे धातुग्रहणं दामलिडादौ समासे घत्वाभावाय, दादिपदानुवृत्तिरपि पूर्वत्र धातोरेव दादेर्ढत्वपर्युदासेनोक्तस्थले ढत्वलाभाय, ततश्च साफल्यात्तयोरुभयोरपि पदयोर्लक्षणायां मानाभावः । न च वैयधिकरण्यान्वयस्योत्तरत्रावश्यकत्वप्रतिपादनेन भाष्यकृता सूचितमत्रत्यमनावश्यकत्वमेव तन्मानमिति वाच्यम् । दाद्यन्तस्य धातोरिति सामानाधिकरण्येन सम्बन्धेऽप्यधोगित्यादावव्याप्तिपरिहार इत्याशयकतयापि तद्भाष्योपपत्तेः । तस्मादिह लक्षणाकल्पनाभिनिवेशेन प्रवृत्ताः कैयटादिग्रन्थाः प्रामादिकाः। प्रवर्तमाने घत्वे दकारादिषु नामधातुष्वभीष्टमेव संगृहीतम् । इत्थं च परत्र नामधातोरपि धातुपदेन ग्रहीतव्यतया शब्दाधिकाराश्रयणक्लेशोऽपि नेत्यपरमनुकूलमिति तच्चिन्त्यम्। दामलिट्पुत्रीयतेः क्विपि दामलिट्पुत्रीरित्यादौ वैयधिकरण्यान्वयेन प्राप्तस्य घत्वस्य दाद्यन्तस्य धातोरिति सामानाधिकरण्यान्वयेन दुर्लभतया विरोधात्तत्तात्पर्यकतया प्रकृतभाष्यस्योपपादयितुमशक्यत्वात् । किञ्च दादेरित्यस्य बहुव्रीहित्वेनान्यपदार्थाकाङ्क्षायामुपस्थितस्य धातोरेव तथात्वेन कल्पयितुमौचित्याद्दादिपदार्थस्य तदन्तविध्युत्तरं सामानाधिकरण्येन सम्बध्यमानस्य विशेष्यान्तरस्याप्रसिद्ध्या तदन्तविधेरयोगः । अत एवेजादेश्च गुरुमत इत्यत्रापि न तदन्तविधिः । अन्यथा वेपतिप्रभृतिभ्योऽप्याम् प्रसज्येत । यदि तु 'अलैवानर्थकेन तदन्तविधिरिति, येन विधिरिति सूत्रस्थवार्तिकबलेन प्लीहन्नादीनां हन्नन्तत्वादिनेव वेपतिप्रभृतीनामपीजाद्यन्तत्वेन ग्रहण-

मसम्भवीत्युच्यते तर्हि कथमधोगित्यादेर्दान्तत्वेन घत्वं स्यात् । आगमसमवधाने केवलस्यानर्थक्यादित्यास्तां तावत् ॥

**अङ्गं द्विधेति** ॥ यद्यपि भविष्यामीत्यादौ विकरणान्तमामुष्यायण इत्यादौ विभक्त्यन्तं चाङ्गमेव तथापि तयोरत्रासम्भवादुक्तद्वैविध्योपपत्तिः । लक्षणया च धातुप्रातिपदिकोभयपरत्वमङ्गशब्दस्येति तेषामाशयः । निर्मूलत्वं भाष्याद्यनारूढत्वात् । निष्फलत्वं धुग्भ्यामित्यादेः पदान्तत्वादेव सिद्धत्वाच्चेति भावः । ननु फलितार्थोऽयमुपवर्णितो न त्वङ्गपदानुवृत्त्यादिपरिक्लेशे तात्पर्यं तत्राह ॥ **अतिव्याप्तेश्चेति** ॥

**भाष्यप्रयोगेणेति** ॥ यद्यपि गुणो यङ्लुकोरित्यभ्यासस्य यङ्लुकि गुणविधानमस्याः परिभाषाया अनित्यत्वे प्रमाणमित्यपि युज्यते वक्तुम् । अन्यथा द्वित्वस्यैकाच इत्यधिकृत्य विधीयमानस्याप्रवृत्तावभ्यासाभावेन तदसङ्गतेः । तथापि विशेषापेक्षत्वे तादृशज्ञापकस्य द्वित्वमात्रविषयकता स्यादित्येवमुक्तमिति बोध्यम् ॥

**सम्प्रसारणशब्देनेति** ॥ विहितेष्वेव सम्प्रसारणसंज्ञाप्रवृत्त्या विधाने विशेषणत्वायोगादुपलक्षणतया भाविसम्प्रसारणसंज्ञकस्स्यादित्येवं विधिप्रदेशीयो वाक्यार्थः । संज्ञाशास्त्रस्य तु यण स्थाने सम्प्रसारणशब्देन भावित इक्सम्प्रसारणसंज्ञ इत्येवं तद्भावितपक्षानुसारी वाक्यार्थ इत्याशयः । तद्भावितपक्षाश्रयणप्रयोजनं दर्शयति ॥ **तेनेति** ॥ **न सम्प्रसारणत्वमिति** ॥ अन्यथा द्युभ्यामित्यादौ हल इत्यनेन द्युलोक इत्यादावुत्तरपदाधिकारीयेण सम्प्रसारणस्येत्यनेन च दीर्घापत्तिरिति भावः ॥

**इत्येतद्विषयमिति** ॥ प्रपूर्वादूहतेः क्विपि गुणे वाहेः क्विपि ऊठि वृद्धौ च विशेषसद्भावादिति भावः ॥

**विजिति** ॥ इदमुपलक्षणं तत्प्रकृतिकण्यन्तात्क्विपोऽपि । अनभिधानबीजमाह ॥ **अत एवेति** ॥

**वार्तिकेनेति** ॥ तत्प्रत्याख्याने तु दकारस्थानिकोऽयं चर्त्वनिष्पन्नस्तकार आदेशेष्वित्यभ्युपगमेन तित्त्वाभावात्तदप्रवृत्तिरिति स्पष्टं भाष्ये ।

केचित्तु व्यञ्जनानां स्रंसनधर्मत्वाद्वकारस्थानिकस्यौकारस्यान्तरतम्याद-नुदात्तत्वे फिट्स्वरेणोदात्तस्येकारस्य यणि सति शिष्टत्वेनोदात्तस्वरितयोर्यण इत्यस्य प्रवृत्त्या द्यौरित्यत्राभीष्टमेव स्वरितत्वम् । पुनरौकारस्य फिट्स्वरस्तु न, सुनिमित्त-स्यौकारस्य बहिरङ्गत्वादिति वदन्ति ॥[1]

अतद्भावितस्यापीति ॥ ननु द्युभ्यामित्यादावत्र पक्षे सम्प्रसारणदीर्घो दुर्वारः । दिव उतस्तपरत्वस्य "भाव्यमानोऽप्युकारस्सवर्णान् गृह्णातीति" परिभाषाज्ञापनद्वारेण दिव्शब्दादाचारक्विबन्तात्कर्तरि क्विपि वकारस्य च्छ्वोश्शूडि-त्यूठ्यान्तरतम्याद्दीर्घस्य स्थाने प्रसक्तस्य दीर्घस्य निवर्तनेन चरितार्थतया निरुक्तदीर्घनिवर्तकत्वायोगात् । न च सामर्थ्यात्सम्प्रसारणदीर्घस्यापि तादृशतपरत्वेन निवृत्तिरिति वाच्यम् । ऊठ्स्थानिकस्योकारस्य सम्प्रसारणत्वाभावेन प्रकृतदीर्घा-प्रवृत्तेस्सामर्थ्यायोगात् । न च वकारस्थानिकस्योठस्सम्प्रसारणतया तत्स्थानिक-स्याप्युकारस्य स्थानिवत्त्वेन तथात्वं सुवचमिति वाच्यम् । अल्विधौ स्थानिव-त्त्वायोगात्, न च कास्प्रत्ययादिति विधीयमानस्यामो मकारस्य प्रयोजनाभावेनेत्सं-ज्ञावारणपरे ह्रस्वनद्याप इति सूत्रस्थे भाष्ये प्रत्ययान्तादाम्विधीयते तत्र नास्ति विशेषो मिदचोन्त्यात्परत्वे प्रत्ययपरत्वे वेत्युक्त्या हलन्तेभ्य आचारक्विपोऽनभिधा-नस्य ध्वनितत्वेन दिव उदित्यस्य निरुक्तरीत्या दीर्घस्थाने प्रवृत्त्ययोगे स्वांशे चारितार्थ्याभावादुक्तपरिभाषाज्ञापकत्वानुपपत्त्या तपरत्वेन सम्प्रसारणदीर्घनिवर्तने बाधकाभावः । सति प्रयोजने ऋत उदिति विधेयांशे तपरत्वमेवोक्तपरिभाषायां ज्ञापकमाश्रयितव्यमिति वाच्यम् । एवमप्यदुहितरामित्यादौ ऌस्थानिकस्येटस्स-म्प्रसारणतया सम्प्रसारणदीर्घापत्तेः । न च प्रत्यासत्त्या सम्प्रसारणप्रयोजकप्रत्यय-

---

१. वदन्तीति ॥ परे तु द्योदिवौ द्वे इति कोशाद्दिव्शब्दस्य स्त्रीलिङ्गतया पुंलिङ्गप्रकरणे दिव औदित्यस्योपन्यासो दिव्शब्दान्तबहुव्रीहिविषयक इति स्फुटमेव । तादृशे उदाहरणे औकारस्य स्वरितत्वाभावार्थं तकारस्योच्चारणार्थत्वमङ्गीचकार मनोर-माकारः । तत्र तकारस्येत्संज्ञामभ्युपेत्य तित्स्वरितमिति स्वरिताप्रवृत्त्युपायं विवृणोति शब्दरत्नकारः । अस्मिन्प्रस्तावे केवलदिव्शब्दस्य प्रसङ्ग एव नेति द्यौरित्यत्रान्यथा-स्वरितत्वोपपादनप्रयासो विफल एव । प्रस्तुतोदाहरणे बहुव्रीहौ स्वरितत्वस्य सर्वथानिष्ट-त्वेन तद्वारणोपायस्यावश्यप्रदर्शनीयत्वात् । द्यौरित्यत्र स्वरितत्वोपपादनमपि नैवापूर्वम्, शेखरग्रन्थ एव तदुपपादनदर्शनात् । अतोऽत्र केचिदित्यादिना कृतस्य प्रयासस्य किं फलमिति न जानीम इत्याहुः ।

निरूपिताङ्गसंज्ञावदवयवाद्धलः परं यत्सम्प्रसारणं तदन्ताङ्गस्य दीर्घ इत्यर्थस्य निरुत-मित्यादावतिव्याप्तिवारणार्थमावश्यकतया प्रकृतेऽपि न दोषो लादेशस्येटः परनिमित्त-कत्वाभावादिति वाच्यम् । एवमप्यपाचीत्यादौ च्लिस्थानिकचिण्प्रवृत्तिप्रयोजकतप्र-त्ययनिरूपिताङ्गसंज्ञावदवयवहलः परत्वेन दोषध्रौव्यादिति चेदत्राहुः । यथा-संख्यविज्ञानादिकारस्य यकारस्थानिकस्यैव सम्प्रसारणत्वाभ्युपगमेन च्लिलकार-स्थानिकचिणिकारस्य तथात्वाभावादापादितदीर्घाभावः । "विधौ परिभाषोपतिष्ठते नानुवाद" इति क्ङिति चेति गुणवृद्धी अचश्चेति सूत्रयोर्विधीयत इत्यध्याहारलब्धतया तन्मात्रविषयम् । अत एवोदात्तस्वरितयोर्यणस्स्वरित इत्यत्र षष्ठी स्थान इत्यस्याः प्रवृत्तिः । प्रकृते च यण स्थाने प्रयुज्यमानो य इगित्यर्थसङ्गतिः । अतोऽत्र तद्भावितपक्षाश्रयणस्य नोपयोग इति दीक्षितानुसारिणः ।

नव्यास्तु तद्भावितपक्षोऽत्रावश्यकः । अक्षद्युवावक्षद्युव इत्यत्र वकार-स्थानिकस्योठस्सम्प्रसारणतया सम्प्रसारणाच्चेत्यस्य प्रसङ्गात् । सम्प्रसारणपूर्वत्वे समानाङ्गग्रहणमिति वार्तिकेन तु न निर्वाहः । तदीयप्रयोजनानां शकृद्धर्थमित्या-दीनां सम्प्रसारणस्थानिकपूर्वरूपादावल्मात्रवृत्तिसम्प्रसारणत्वस्य स्थानिवत्त्वेनातिदे-शासम्भवादेव सिद्धिरित्याश्रित्य भाष्ये तस्य प्रत्याख्यानादित्याहुः ।

अत्रेदं बोध्यम् ॥ यदा यण स्थाने प्रयुक्त इक् सम्प्रसारणसंज्ञ इति वर्णसंज्ञापक्षस्तदा विधिप्रदेशेष्वन्योन्याश्रयदोषवारणाय सूत्रशाटकवद्भावेन भावि-संज्ञाश्रयणम् । अनुवादेषु दोषवारणाय संज्ञायां तद्भावितपक्षाश्रयणं चावश्यकम् । यदा तु वाक्यस्यैवेग्यण इत्यस्य सम्प्रसारणसंज्ञा, प्रदेशेषु सामर्थ्यादर्थपरत्वं, तदा विधिप्रदेशेष्वन्योन्याश्रयाप्रसक्त्या न भाविसंज्ञाश्रयणोपयोगः । सम्प्रसारणाच्चे-त्यादावनुवादे यण्त्वावच्छिन्नस्थानिकादिक इत्याद्यर्थसम्भवेन चिणादेरतथात्वाद्दूष-णाप्रसक्त्या नैव तद्भावितपक्षस्योपयोग इति दिक् ।

शब्दात्परत्वमेवेति ॥ आम्प्रत्ययगतपरत्वावधित्वं शब्दगतमर्थे आरोप्यत इति भावः ॥ एतत्सामर्थ्येनेति ॥ बहुवचनान्तत्वेन निर्देशसामर्थ्येनेत्यर्थः ।

---

१. यदा त्विति ॥ वस्तुतस्तु वाक्यसंज्ञापक्षे भाविसंज्ञाश्रयणस्य तद्भावितपक्षस्य च सम्भवस्यैवाभावेनानेन ग्रन्थेन तयोरुपयोगाभावकथनमयुक्तमिति बोध्यम् ।

यद्यपि सामर्थ्यादर्थपरत्वे प्रधानाप्रधानयोरिति न्यायेनैव प्राधान्यलाभस्तथापि प्रकृते सामर्थ्यादेव तल्लाभे न्यायान्वेषणमनुपयुक्तमित्याशयः ॥ **प्राचामनुरोधेनेति** ॥ वस्तुतो नात्रार्थप्राधान्यसम्भवो निर्मूलत्वादिति भावः । नन्वेवं बहुवचनान्ततया निर्देश एव निरुक्तार्थसाधकस्तत्राह ॥ **गौरवादिति** ॥ षट्चतुर्भ्यामिति निर्देशे दीर्घघटितत्वादेकमात्राधिक्यमिति भावः । ननु षट्चतुर इति समाहारद्वन्द्वेन निर्देशे सम्भवत्येकमात्रया लाघवमत आह ॥ **समाहारेणेति** ॥ नन्वितरेतरयोगे द्विवचनं समाहारे त्वेकवचनं वात्रोपपन्नमुभयथापि बहुवचनमनुपपन्नमेवेत्युक्तार्थसाधकमिति चेदत्राह ॥ **षट्संज्ञकानामिति** ॥ ननु संज्ञिनां बहुत्वेऽप्येकत्वेन जातिपुरस्कृतस्संज्ञाशब्दानामङ्गस्य भस्य धातोस्सर्वनाम्न इत्येवं निर्देशस्सूत्रकारशैलीसिद्ध इत्येकवचनान्तेन षट्छब्देन द्वन्द्वे कथं बहुवचनोपपत्तिरित्यत आह ॥ **किञ्चेति** ॥ ननु षट्छब्दस्यैकवचनान्तत्वेऽपि तद्भिन्नस्य स्वस्रादिशब्दस्य बहुव्रीहेरन्यपदार्थगतबहुत्वमादाय बहुवचनान्ततया तयोर्द्वन्द्वे युक्तमेव तत्र बहुवचनम् । प्रकृते तु न तथेत्यत आह ॥ **तिसृभ्यो जस इति** ॥ तिसृभ्यः परो जसुदात्त इत्यर्थः । यद्यप्यत्र बहुवचनस्यार्थप्राधान्यसूचकतामाश्रित्य प्राधान्ये नित्यबहुवचनान्तत्वात्तिसृशब्दस्यान्तोदात्तत्वाच्च शस्युदात्तयणो हल्पूर्वादिति नामि षट्त्रिचतुर्भ्यो हलादिरिति च विभक्त्युदात्तत्वमभीष्टमेवान्यत्र झल्युपोत्तममित्युपोत्तमोदात्तत्वं परत्वादस्य बाधकम् । अतो जस्येव प्रवर्तत इति वैयर्थ्याज्जस्ग्रहणं प्रत्याख्यातं, "जस्ग्रहणानर्थक्यमन्यत्राभावादिति" कात्यायनेन, तथापि तस्य प्रयोगबाहुल्याभिप्रायकतामाश्रित्य प्रियतिस्राविन्यौङि समासे गौणे स्वरव्यावृत्तिस्तादृशजस्ग्रहणस्य प्रयोजनमुक्त"मुपसमस्तार्थमेके" इति वदता भाष्यकृता; यथोत्तरं मुनीनां प्रामाण्यमित्याशयः । नन्वेके इत्युक्तेर्नायं भाष्यकाराशयः, अन्यथा ह्यवश्यं जस्ग्रहणं कर्तव्यमुपसमस्तार्थमित्येव वदेदिति वितण्डायामप्याह ॥ **किञ्चेति** ॥ **प्रियचतसृणामिति** ॥ त्रेरित्यनुवृत्तस्य वाक्यभेदेन नुड्विधायकत्वादेकवचनान्तत्वाच्च गौणेऽपि प्रवृत्तेर्निर्विवादतया न प्रियतिसृणामित्यत्र चारितार्थ्यमुद्भावितमिति द्रष्टव्यम् ॥ न **भाष्यतात्पर्यमिति** ॥ ननु छन्दस्युभयथेति विकल्पाद्दीर्घाभावे "धाता धातॄणां पितृणां च मन्वभि"रित्यादौ नुट्प्रवृत्त्यर्थमुपायान्तराप्रदर्शनेन न्यूनताप्रसक्त्या ऋन्नद्योप इति न्यासतात्पर्यकता

भाष्यस्यावश्यकीति चेत्सत्यम् । श्रीग्रामण्योश्छन्दसीत्यत्र छन्दसीति योगो विभज्यते । तेनैतादृशेषु वैदिकप्रयोगेषु नुट्सिद्धिः । योगविभागस्येष्टसिद्ध्यर्थत्वाच्छन्दसि सर्वविधीनां व्यवस्थिततत्वाच्च नानिष्टप्रसङ्ग इत्याशयो विभावनीयः । विपक्षे बाधकमस्तीत्याह ॥ **त्रिशब्दानुवृत्तीति** ॥ ननु नेदं भाष्यमसङ्गतं, त्रिशब्दानुवृत्तिप्रतिपादनकाले नृणामित्यादिलक्ष्याणामपर्यालोचनेऽपि पश्चात्तत्पर्यालोचने बाधकाभावात् । यथोक्तं पस्पशायां भाष्यकृता शब्दो व्याकरणं चेद्भवे तद्धितः प्रोक्तादयश्च तद्धिता इति कात्यायनचोदितायामापत्तौ प्रोक्तादयश्च तद्धिता नोपपद्यत इत्येव सिद्धे भवे तद्धित इत्यधिकमित्याक्षेपे पुरस्तादिदमाचार्येण दृष्टं भवे तद्धित इति तदुत्तरकालमिदं दृष्टं प्रोक्तादयश्च तद्धिता इति ॥ "न चेदानीमाचार्यास्सूत्राणि कृत्वा निवर्तयन्तीति" प्रकृतेऽपि त्रिशब्दानुवृत्तिपरं च भाष्यं प्राथमिकं, निरुक्तन्यासतात्पर्यकं च पाश्चात्यमतस्ततोऽत्र न किञ्चिद्वैषम्यम् । तस्मात्त्रिशब्दानुवृत्तिपरं भाष्यं न प्रकृतार्थे प्रतिबन्धकमत आह ॥ **नैकमुदाहरणमिति** ॥ उदाहरणानामनेकत्वादेकमित्यस्यासङ्गतिरिति तात्पर्यम् । नन्वेकशब्दस्यैकजातीयकारान्तपरत्वे ऋकारपरत्वे वा का क्षतिः । ततश्च नुड्विधौ बहुवचनेन गौणे नुडागमनिवृत्तिकल्पनायां न किञ्चित्प्रतिबन्धकमिति पर्यालोच्याह ॥ **गौणे नुट इति** ॥ वहुवचननिर्देशप्रयुक्तस्यार्थप्राधान्यस्य भाष्ये क्वाप्यनाश्रयणादव्ययसर्वनाम्नामित्यादौ संज्ञाशब्दयोर्द्वन्द्वस्य प्रयोजनमन्तरापि बहुवचनान्ततया निर्देशदर्शनाच्च नुड्विधौ नार्थप्राधान्यलाभ इत्याशयः । नन्वङ्गाधिकारे पञ्चम्या यदुच्यते गृह्यमाणविभक्तेस्तद्भवतीति सर्वादिसूत्रभाष्यबलादेव लुक इव नुटोऽपि गौणे न प्रवृत्तिरिति चेन्न । तद्भाष्यस्याड्डुतरादिभ्यष्षड्भ्यो लुगित्यनयोरेव सूत्रयोर्विहितविशेषणतात्पर्यकतायास्तत्रत्योपक्रमोपसंहाराभ्यां प्रतीत्या प्रकृतानुपयोगात् । अन्यथा परमचतुर्णामित्यादावभीष्टस्य नुटः प्रवृत्त्यनापत्तेरिति दिक् ॥

**इमावित्यत्रेति** ॥ तदन्तविधिस्तु दुर्लभः । 'अलैवानर्थकेनेति' येन विधिरिति सूत्रस्थभाष्यात् ॥ **अङ्गकार्ये इति** ॥ एतत्परिभाषामनभ्युपगच्छतामिह टेरित्येव न्यास इति बोध्यम् ॥ **अधिकारादिति** ॥ ननु प्रातिपदिकाधिकारे सत्यपि कुत्सित इति सूत्रोक्तेन स्वार्थे परिपूर्णमिति न्यायेन सुबुत्पत्त्यनन्तरमेव प्रातिपदिकस्याकच्प्रवृत्तेरौचित्याद्युगपत्प्राप्त्या परेण बाधो दुर्वार एवेत्यत आह ॥

**शब्देनेत्यादि ॥** अन्तरङ्गपरिभाषायामङ्गशब्देन सप्तम्याद्यन्तत्वेन गृहीतमेव निमित्तं गृह्यते, न तु वस्तुगत्या स्थितमित्यन्यत्र प्रपञ्चितम् ॥ **गौरवमिति ॥** उश्तिहोरिति न्यासे शित्त्वात्सर्वादेशत्वे च नास्त्यत्र नानर्थक इति परिभाषाश्रयण-प्रयुक्तं गौरवमित्यत आह ॥ **क्लेश इति ॥** यदि तु वोतीति न्यासेन इमो वशब्दादेशे नास्त्यङ्गवृत्तपरिभाषाश्रयणमित्युच्यते, तदा साकच्कात्किम्शब्दात्त्रलादिषु कुत्रेत्यादिसिद्धये कुकादेशौ किमोनुवृत्तिश्चेति निष्कर्षः ॥ **वार्तिकमिति ॥** त्यदादेर्भवतस्सम्बोधनाभावे सम्बुद्धिनिमित्तकत्वेन भवच्छब्दस्य रुत्वविधानाय प्रवृत्तं तद्वार्तिकं विरुध्यत इत्याशयः । इदं सर्वमत्र द्विशब्दात्परेषामपि त्यदादित्वमित्यभ्युपगमेन । यदि द्विपर्यन्तानामेव त्यदाद्यत्वं, तदा सत्यपि भवतस्सम्बोधने क्षत्यभावः ।

**सकृद्गतिन्यायेनेति ॥** पुनः प्रसङ्गविज्ञाने तु स्मैभावस्य नित्यतया परबाध्यत्वं दुरुपपादमित्याशयः । ननु स्मायादेशोत्तरमनादेशस्य प्रसक्तिरस्त्येव, बाधकेन हलिलोपेन बाध्यत इत्यन्यत् । ततश्च कृताकृतप्रसङ्गित्वरूपनित्यत्वस्योभयसाधारणतया कथमिह नित्यत्वं व्यवस्थापकं स्यात्तत्राह ॥ **लक्ष्यानुरोधेनेति ॥** नन्वेकस्य द्विकार्ययोगो विप्रतिषेधः । प्रकृते च प्रकृतेरनादेशः प्रत्ययस्य स्मैभाव इति विप्रतिषेधाभावात्कथमिह परबलीयस्त्वप्रसक्तिरत आह ॥ **युगपदसम्भवेनेति[1] ॥** तदुक्तं विप्रतिषेधसूत्रे भाष्ये ॥ "नावश्यं द्विकार्ययोग एव विप्रतिषेधः । किन्तर्हि युगपदसम्भवोऽपीति" प्रकृतिप्रत्यययोरिह निमित्तत्वं स्थानित्वं च युगपदसम्भवीत्याशयः ॥

**न तु प्रवर्तनाविषयत्वमिति ॥** अन्यथाऽनेन व्याकरणमधीतमेनं छन्दोऽध्यापयेत्यादौ पूर्ववाक्यीयाध्ययनादेर्लिङ्लोट्तव्यप्रत्ययान्तगम्यप्रवर्तनाविषयत्वाभावेनोत्तरवाक्यीयाध्यापनादेरन्वादेशविषयत्वाभावादेनादेशानुपपत्तिः ॥ **सखीवाक्यमिति ॥** एतेन राधिकां प्रति नन्देन कृष्णसम्बन्धिभीरुत्वमज्ञातमेव बोध्यत इति कथमनुवाद्यतेत्यपास्तम् ॥ **आरोपितमिति ॥** सखीराधिकयोस्सङ्केतसिद्ध एवाय-

---

१. **युगपदसम्भवेनेतीति** ॥ नानादेशो नित्य इति भावः, इति शब्दरत्नग्रन्थानन्तरं "युगपदसम्भवेन विप्रतिषेधोऽत्र" इत्यधिकः पाठः क्वचिद् दृश्यते । परन्त्विदानीन्तनग्रन्थेष्वयं नोपलभ्यते ॥

मारोप इति नाज्ञातं राधिकाया भीरुत्वमित्याशयः ॥ **नन्दनीयनिर्देशादिति** ॥ आकृतिगणत्वात्पचादेरजन्तोऽयं यौगिको नन्दशब्द इति मन्यते ।

केचित्तु करिष्यमाणकामुकव्यापारसङ्गोपनाय भूतस्वकीयबाल्याभिव्यञ्जक-भीरुत्वनटनामनोहरं श्रीकृष्णमालोक्य नन्दस्यैवेयमुक्तिः । त्वमेवेत्यस्य जानासी-त्यध्याहारेण त्वं जानास्येवेत्यर्थः । इत्थं च राधिकया दृष्टमेव कृष्णभीरुत्वमनुवदन् गृहप्रापणमाज्ञापयति नन्द इति नान्वादेशविषयत्वं, नापि जयदेवशैलीविरुद्धं नन्द-शब्दस्य क्लिष्टार्थकत्वमित्याहुः ॥

**भाष्ये ध्वनितत्वादिति** ॥ तत्र हि ण्यन्ताद्यङन्ताच्च णिचि चिणि णिलोपाल्लोपयो स्थानिवत्त्वेन चिण्णमुलोरिति दीर्घविकल्पो न प्रवर्तेतेत्युद्भाव्य कात्यायनेनारब्धं णेर्णिच्युपसंख्यानं यङ्लोपे चेति वार्तिकं दीर्घविधौ स्थानिवत्त्व-निषेधमाश्रित्य भगवता प्रत्याख्यातम् । एवञ्च सपादसप्ताध्यायीस्थदीर्घस्यापि स्थानिवद्भावनिषेधे निमित्तत्वमेतदर्थमेव चिण्णमुलोरित्यत्र दीर्घग्रहणमन्यथा प्रकृतो मितां ह्रस्व एव विकल्पितस्स्यादिति तदभिप्रायस्स्पष्ट एव । कर्मेर्णिङिति सूत्रे-ऽपि भाष्ये स्फुटमेतत् । तथा च हेडतेर्मित्त्वमनार्षमेतद्भाष्यविरोधात् । न पदा-न्तसूत्रे पूर्वत्रासिद्धीये न स्थानिवदित्यवष्टभ्य वरेयलोपस्वरवर्जं द्विर्वचनादीनि प्रत्याख्येयानीति भाष्ये वर्ज्यकोटौ दीर्घोऽप्युपलक्षणीयः । यथाश्रुतं तद्भाष्य-मुपादाय तद्विरुद्धस्य भाष्यान्तरस्यानेकस्यैकदेश्युक्तित्वकल्पनं नोचितमित्युपाध्याय-निष्कर्ष इति दिक् ॥

**अस्य विधित्वमिति** ॥ सामान्यशास्त्रस्योक्तरीत्या सङ्कोचे स्वघटकेषु नियमशास्त्रस्यैव कार्यसमर्पकत्वादिति भावः ॥ **इदमेवेति** ॥ सामान्यशास्त्रसङ्को-चकत्वमेवेत्यर्थः ॥ **गुरुत्वमिति** ॥ यद्यपि सामान्यविधिसङ्कोचकल्पना सकलवि-

---

१. **आहुरिति** ॥ परे तु निरुक्तव्याख्याने जानासीत्यध्याहारे क्लेशः । अध्या-हारेऽपि युष्मच्छब्दसमभिव्याहृतस्यैवेत्यस्य जानासीत्यनेन योजने सुतरां क्लेशः । तदपेक्षया नन्दपदस्य नन्दनीयेत्यर्थकत्वेऽक्लिष्टार्थतैव । किञ्च मूलोक्तव्याख्याने श्लोक-प्रथमपादस्योद्दीपनविभावबोधनतात्पर्यकतया स्वारस्यमपि घटते । अत्र युक्तमुत्पश्यन्तु सुधिय इत्याहुः ॥

शेषविधिसाधारणी । तथापि विशेषविधेरुपात्तविशेषविषय एव सामान्यसङ्कोचकल्पना, नियमस्य त्वनुपात्तविषयेऽपीति गुरुत्वमित्याशयः । नन्वेतादृशगौरवपरिहाराय नियमशास्त्राणां निषेधमुखेनैव प्रवृत्तिराश्रयतां तत्राह ॥ **निषेधवादिनोऽपीति** ॥ निषेधमुखेन प्रवृत्तिमभ्युपगच्छतोऽपीत्यर्थः ॥ **विकल्पापत्तेरिति** ॥ तत्तल्लक्ष्य-विषयकत्वेनोपप्लुतयोरुत्सर्गनियमलक्षणयोरनवकाशत्वान्मुनिवचनत्वाविशेषाच्च साम्येन पर्यायताप्रसङ्ग इति भावः । इदमुत्सर्गापवादभावविषये सर्वत्रैवावश्यकम् । ननु नियमशास्त्राणां विधिमुखेन प्रवृत्त्यभ्युपगमे तेषां निषेधशास्त्रत्वेन भाष्यकृतां व्यवहारो विरुध्येतेत्यत आह ॥ **अर्थसिद्धमिति** ॥ सिद्धस्य पुनरारम्भबलेन गम्यमानमि-त्यर्थः । अनुमितस्य श्रौतबाधकत्वमपि शास्त्रारम्भसामर्थ्यादेवेत्यवधेयम् ॥ अत्रार्थे तन्त्रान्तरसामरस्यमाह ॥ **पञ्च पञ्चनखा इति** ॥ "शशकश्शशली गोधा खड्गः कूर्मश्च पञ्चमः । पञ्च पञ्चनखा भक्ष्या न भक्ष्यो ग्राम्यकुक्कुट" इति मानवी स्मृतिः ॥ **तेनान्येषामिति** ॥ यतस्तेनान्येषां भक्षणनिषेधः प्रायश्चित्तं च गम्यते, ततो रागप्राप्तभक्षणस्य तदितराविषयकत्वकल्पनमित्यर्थः ॥

ननु लौकिकस्य रागप्राप्तमांसभक्षणस्य गम्यमानेनापि शास्त्रारम्भमूलकेन निषेधेन स्मृतौ तत्र सङ्कोचो युक्तः । प्रबलस्य दुर्बलबाधकत्वप्रसिद्धेः । इह तु श्रुतस्य शास्त्रीयविधेः कथमनुमितेनात्यन्तिकी निवृत्तिस्स्यात् । शास्त्रारम्भसामर्थ्यं तु पाक्षिकबाधकल्पनेनाप्युपक्षीयत इति चेन्न । पतिस्समास एवेत्यनेन नियमि-तस्य समासाघटकपतिशब्दघित्वस्य षष्ठीयुक्तश्छन्दसि वेति छन्दसि विकल्पा-रम्भेण नियमशास्त्रानुमितनिषेधस्य स्वविषये सर्वथा सामान्यशास्त्रप्रवृत्तिनिरोधकत्व-कल्पनेनादोषात् । किञ्च नियमशास्त्रेषु तत्समर्पकपदानामुपचारादवधारणविषय-स्वार्थबोधकत्वम् । अवधारणं च स्वातिरिक्तावृत्तित्वेन गृहीतसमभिव्याहृतपदार्थ—प्रकारकज्ञानरूपं, स्वातिरिक्तं च पर्युदासन्यायेन स्वसजातीयमेव, तथा च समास-सजातीयसमासातिरिक्तवाक्यावृत्तित्वेन गृहीतप्रातिपदिकत्वप्राकारकज्ञानविषय-स्समासः प्रातिपदिकसंज्ञक इत्यादिक्रमेणार्थात्सामान्यशास्त्रस्य तदंशे सर्वथा निवृत्ति-रर्थत एव सिद्धा । पञ्च पञ्चनखा भक्ष्या इत्यत्रापि पञ्चत्वसंख्यावच्छिन्नपञ्चनखा-तिरिक्तपञ्चनखावृत्तित्वेन गृहीतभक्षणविषयत्वप्रकारकज्ञानविषयाः पञ्चनखा भक्ष्या इत्यर्थस्य पर्यवसानादन्येषां भक्षणाभावसङ्गतिः । पार्थ एव धनुर्धर इत्यादावपि

निपातानां द्योतकत्वादवधारणविषयपार्थादिबोधकत्वं समभिव्याहृतस्य, तत्रैव तात्पर्यग्राहकतामात्रमेवकारस्येत्यादिमञ्जूषायां विस्तरः ॥

ननु पतिस्समास एवेत्यादौ शास्त्रारम्भादेव नियमलाभादेवकारोपादानं व्यर्थमत आह ॥ **पतिस्समास एवेत्यादि** ॥ **मा भूदिति** ॥ एवकारस्य स्वसमभिव्याहृतपदार्थानुरोधेन नियमबोधकत्वस्वाभाव्यादित्याशयः । यद्यपि पत्यावैश्वर्ये धात्वादेष्षस्स इत्यादिनिर्देशबलेन विपरीतनियमो न स्यात्तथापि त्वन्मुखं त्वन्मुखेनैव तुल्यं नान्येन केन चिदित्यादावेवकारार्थावधारणानुवादकत्वेन नान्येनेत्यादेरिव प्रकृतेपि शास्त्रारम्भमूलकावधारणानुवादकस्यैवकारस्य प्रयोगः । एवंविधानां प्रयोगे साधुत्वबोधनोपाय एवायं निर्देश इति तत्त्वम् । ननु नियमशास्त्राणां विधिमुखेन प्रवृत्तौ सामान्यशास्त्रसङ्कोचात्मकान्ययोगव्यवच्छेदस्य फलितत्वेपि वाच्यवृत्त्या प्रतीत्यभावाद्विशेष्यसङ्गतैवकारस्यान्ययोगव्यवच्छेदार्थकत्वरूपप्राचीनप्रवादविरोधापत्त्या तद्घटितानां निषेधमुखेनैव प्रवृत्तिरुचिता तत्राह ॥ **अन्ययोगव्यवच्छेद इत्यादि** ॥ **नेयमिति** ॥ कथं चिदुपपादनीयमित्यर्थः ॥ **अनुपराभ्यामिति** ॥ तत्र हि क्रियाफलस्य कर्तृगामितायां शेषादित्यस्याप्राप्तौ परस्मैपदस्यानुपरापूर्वात्करोतेरनेन विधानेपि निषेधाभावात्स्वरित ञित इत्यनेन पाक्षिकमात्मनेपदं प्रवर्तेतेत्याशङ्क्य, अन्यत्र क्रियाफलस्य कर्तृगामितायां स्वरित ञित इत्यात्मनेपदेन यथा परस्मैपदं बाध्यते, एवमिहापि परस्मैपदेनात्मनेपदं बाधिष्यत इत्युक्तम् । स्वरित ञित इत्यस्य नियामकतया निषेधमुखेन प्रवृत्तौ तस्य परस्मैपदनिषेधबोधकत्वेऽप्यात्मनेपदविधायकत्वाभावात्तद्विहितेनात्मनेपदेन परस्मैपदं बाध्यत इत्युक्तिरयुक्ता स्यादित्याशयः । इह तु ध्वनितं पस्पशायां तु भाष्ये स्पष्टमेवाभिहितमित्याह ॥ **पञ्च पञ्चनखा इत्यादि** ॥ निषेधमुखेन प्रवृत्तौ वाच्यवृत्त्यैव निषेधप्रतीत्या भाष्ये गम्यत इत्युक्तिरयुक्ता स्यादिति भावः ॥ **असिद्धत्वस्येति** ॥ न तु नलोपस्य, प्रकरणोच्छेदापत्तेः । अत एवेत्यस्य लक्षणाबलेनार्थान्तरबोधकत्वादेवेत्यर्थः ॥ **अयं व्यवह्रियत इति** ॥ शाब्दिकैर्नियमत्वेन व्यवह्रियमाणो मीमांसकैः परिसंख्येति व्यवह्रियत इत्यर्थः । अवङ्स्फोटायनस्येति विहितस्यावङादेशस्य पाक्षिकीं प्राप्तिमनूद्य पक्षान्तरीयाया अप्राप्तेर्निवारणार्थस्य इन्द्रे चेत्यस्य व्रीहीनवहन्तीतिवत्तदीयनियमपदव्यवहार्यत्वमेव । “ विधि-

रत्यन्तमप्राप्ते नियमः पाक्षिके सति। तत्र चान्यत्र च प्राप्तौ परिसंख्येति गीयत" इति तेषां तन्त्रे परिभाषणादिति बोध्यम्।

ननु परिसंख्याया विधिमुखेन प्रवृत्तौ लक्षणाप्रयुक्तयोस्स्वार्थहानिपरार्थकल्पनयोरभावेन गौरवाधायकस्य दोषत्रयस्य दुर्वचतया नियमापेक्षया गुरुत्वस्य तत्र मीमांसकैर्व्यवह्रियमाणस्यासङ्गत्यापत्त्या निषेधमुखेनैव प्रवृत्तेरावश्यकतया तत्स्थानीयानां प्रकृतशास्त्रीयनियमशास्त्राणामपि तथैव प्रवृत्तिरुचितेति चेन्न। विधिमुखेन प्रवृत्तावपि सिद्धस्यानुवादबलेन स्वविषये सामान्यशास्त्रसङ्कोचेन स्वघटकसजातीयव्यवच्छेदे मुख्यतात्पर्यात्स्वार्थे तदभावाच्च तत्प्रयुक्तयोस्स्वार्थहानिपरार्थकल्पनयोस्सम्भवेन तद्व्यवहारोपपत्तेः।

अथात्र पक्षे तन्त्रान्तरीयपरिसंख्यायास्स्वार्थे तात्पर्याभावात्तत्र शशकादिपञ्चनखभक्षणस्य विधानतात्पर्यविषयत्वाभावप्रयुक्तापूर्वजनकत्वाभाववत्प्रकृतेपि धातोस्तन्निमित्तस्येत्यादेर्यकारादिप्रत्ययपरकस्य यकारादिप्रत्ययनिमित्तकस्य धात्ववयवस्यैचो वान्तादेश इत्यर्थस्य शब्दतः प्रतीतावपि तत्र तात्पर्याभावात्सामान्यशास्त्रस्य चैतद्विषये सङ्कोचाच्च लव्यमित्यादेर्विधेयत्वेन शास्त्रतात्पर्यविषयत्वाभावात्साधुत्वं दुर्लभमिति चेदत्राहुः। तन्त्रान्तरीयपरिसंख्याविषये पञ्च पञ्चनखा इत्यत्र रागप्राप्तभक्षणस्य शास्त्रेऽनुवादबलेनानूद्यमानांशस्याभ्यनुज्ञाद्वारा प्रत्यवायाभावकल्पकत्वेऽप्यपूर्वजनकताकल्पकत्वे मानाभावः। तस्य लौकिकानुवादरूपत्वात्। प्रकृते च सामान्यशास्त्रसिद्धस्यानुवादः। स च साधुत्वविशिष्टस्यैव। अनुवाद्यानुवादकयोस्सजातीयतानियमात्। अन्यथा ह्यनुवादस्वरूपभङ्गापत्तिः। तस्मादेवंविधेष्वसाधुत्वशङ्काया अनवकाश एवेत्युपाध्यायानुयायिनः॥

**गौरवमिति**॥ शक्यार्थबोधे जननीये शक्तिग्रहाधीनपदार्थोपस्थितेरेव कारणत्वाल्लाघवम्। लक्ष्यार्थबोधे तु शक्तिग्रहाधीनपदार्थोपस्थितिमूलकविरोधप्रतिसन्धानप्रयुक्तलक्षणाधीनपदार्थोपस्थितेः कारणत्वाद्गौरवमतो लक्षणा नाश्रयितव्येति भावः। ननु गौरवदोषाल्लक्षणानाश्रयणे तस्या उच्छेद एव स्यादत आह॥ **फलाभाव इति**॥ अनुपपत्तिपरिहारेण फलवती लक्षणा, यथा गङ्गायां घोष इत्यत्र घोषे भगीरथरथखातावच्छिन्नप्रवाहवृत्तिताया अनुपपत्तिपरिहारार्था तीरलक्षणा, न

तथा प्रकृते प्रयोजनं लक्षणाया इति भावः । ननु न केवलमन्वयानुपपत्तिपरिहार एव लक्षणायाः प्रयोजनं, किन्तु तात्पर्यानुपपत्तिपरिहारोपि, यथा काकेभ्यो दधि रक्ष्यतामित्यत्र दध्युपघाताभावविषयकतात्पर्यानुपपत्तिपरिहारः काकपदस्य दध्युपघातकजन्तुमात्रलक्षणायाः प्रयोजनम् । एवं च प्रकृतेपि लोकसिद्धभक्षणविधानवैयर्थ्योन्नीततात्पर्यानुपपत्तिपरिहारो भवतु लक्षणायाः प्रयोजनमत आह ॥ **अनौचित्यं चेति** ॥ अस्वारसिकत्वमिति तदर्थः । अत एवेयं विरुद्धलक्षणा जघन्येति व्यवह्रियते, अतो न युक्ता तदभावलक्षणेति परमार्थः । ननु स्वरविधौ व्यञ्जनमविद्यमानवदिति परिभाषणात्सत्यपि नलोपासिद्धत्वे पञ्चार्ममित्यादावदन्तपूर्वपदत्वप्रयुक्तस्य स्वरस्य दुर्वारत्वाद्व्यर्थमेव स्वरविधौ नलोपासिद्धत्वोपवर्णनमत आह ॥ **स्वरविधाविति** ॥ **धर्मिग्राहकस्येति** ॥ धर्मो व्यञ्जनानामविद्यमानवद्भावः । बोधकतया तद्वद्धर्मि प्रकृतपरिभाषाशास्त्रं तस्य ग्राहको यः पृथिव्यादिपर्युदासः तस्य स्वरोद्देश्यकत्वादित्यर्थः । ज्ञाप्यांशे ज्ञापकसाजात्यस्य न्याय्यत्वादिति भावः ॥ **अचः कर्तृयकीति** ॥ कर्मकर्तृबोधके यक्युपदेशेऽजन्तस्य धातोरादिरुदात्तो वेति तदर्थः । व्यञ्जनानामविद्यमानवद्भावे सर्वेषामेवाजन्तत्वादच इति व्यर्थं सदुक्तपरिभाषायास्स्वरोद्देश्यकविधिविषयत्वं बोधयतीति भावः । नलोपासिद्धत्वमपीदमुक्तार्थे प्रमाणयितुं युक्तम् ॥ **यतो नाव इत्येतत्प्रतिषेधमूलकमिति** ॥ यतो नाव इत्येतच्छास्त्रघटकनौशब्दप्रकृतिकयदन्तपर्युदासमूलक—मित्यर्थः । यदन्तस्य द्व्यच्कस्य नौशब्दप्रकृतिकयदन्तभिन्नस्यादिरुदात्त इति हि तदर्थः । नाव्यमित्यत्र नकारस्यादेर्व्यञ्जनस्योदात्तगुणविधानायोगादनर्थकः पर्युदासो हल्स्वरप्राप्ताविति परिभाषां ज्ञापयतीति प्रपञ्चितमन्यत्र ।

ननु [1]प्रतिदिवन्शब्दप्रकृतिकादाचारक्विबन्तात्कर्तृक्विप्यल्लोपे नान्ते धातुत्वस्य वकारे चोपधात्वस्य सुवचतया प्रतिदीव्न इत्यत्र दीर्घप्रवृत्तये पुराणवैयाकर-

---

१. **नन्वित्यादि** ॥ इदानीन्तनपुस्तकेषु "प्रतिदीव्यति, कनिन्, हलि चेति दीर्घः। यत्तूपधायां चेत्युपन्यस्तं तन्न" इति मनोरमापठो दृश्यते। नन्वित्याद्येतद्ग्रन्थपर्यालोचनायामेतन्मूलभूतशब्दरत्नग्रन्थपर्यालोचनायां चायमपपाठः। किन्तु "प्रतिदिवेति, कनिन्, हलि चेति दीर्घः। यत्तूपधायां चेत्युपन्यस्तं तन्न" इत्ययं पाठःसाधुरिति निश्चीयते ॥

णानामुपधायां चेत्यस्योपन्यासो युक्त एव किं न स्यादत आह ॥ **प्रतिदिवन्शब्दादिति** ॥ **दुर्लभमिति** ॥ प्रतिदिवन्शब्दप्रकृतिकात्साध्वर्थकयदन्तादाचारक्विप्कर्तृक्विपोरल्लोपयलोपाभ्यां निष्पन्नेपि तस्मिन्ननुनासिकस्येति दीर्घो दुर्वारः, क्वौ विधिं प्रति स्थानिवत्त्वायोगादिति बोध्यम् ॥

**असम्बद्धोपधापदानुवृत्तेरिति** ॥ सर्वनामस्थानपदसम्बन्धे तु तन्निमित्तकस्यैवोपधादीर्घस्य नियमापत्तौ वृत्रहणीत्यादावनुनासिकस्येति दीर्घो दुर्वार एव स्यादिति भावः । स्पष्टं चेदमत्रैव सूत्रे भाष्ये ।

**अनित्यत्वादिति** ॥ सर्वथा पञ्चमीसमासपक्षानाश्रयणे तु प्रत्यैषिषन्नित्यादौ शबकारसनकारयोरेकादेशोत्तरमानुमानिकस्थानिवत्त्वेनान्तादेशे झित्त्वमाश्रित्य प्रसक्तस्याभ्यस्तलक्षणस्य जुसः पञ्चमीसमासप्रयुक्तेन स्थानिवद्भावेन प्रार्थ्यमानः परिहारो दुर्लभस्स्यादिति भावः ॥ **माषवपनीति** ॥ माषा उप्यन्तेऽस्यामित्यधिकरणे ल्युटि ङीपि यस्येति लोपे नान्तस्यैकदेशविकृतन्यायेनोत्तरपदात्मकप्रातिपदिकत्वमादाय प्रसक्तस्य णत्वस्य स्थानिवद्भावेन वारयितुं प्रतिप्रसववार्तिके तद्ग्रहणमिति द्रष्टव्यम् ॥ **अभिमानेनेति** ॥ अन्तरङ्गशास्त्रत्वलिङ्गेन परिभाषायास्त्रिपाद्यामुपस्थितावपि वाक्यैकवाक्यतया त्रैपादिकान्तरङ्गदृष्ट्या बहिरङ्गासिद्धत्वबोधनात्पूर्वमेव तदेकवाक्यतापन्नपूर्वत्रासिद्धमित्यनेन प्रत्यक्षसिद्धवचनेन परिभाषादृष्ट्यान्तरङ्गविधेरसिद्धत्वबोधने पश्चादविद्यमानमन्तरङ्गं प्रति बहिरङ्गासिद्धत्वस्य बोधयितुमशक्यत्वात्फलाभावेन त्रिपाद्यामस्याः परिभाषाया अप्रवृत्तिरित्याशयः ॥ **सन्निपातपरिभाषयेति** ॥ वृत्रघ्नः प्रघ्न इत्यादौ हो हन्तेरिति नकारनिमित्तकत्वेन प्रवृत्तं कुत्वमुत्तरपदस्य कवर्गवत्त्वसम्पादनद्वारा तादृशनकारविघातकणत्वविधिं प्रति निमित्तत्वायोग इति भावः ॥ **सर्वणत्वेष्विति** ॥ अट्कुप्वाङित्यनेन णत्वावच्छेदेन कवर्गव्यवायस्य निमित्तत्वबोधनात्तद्विरोधेन कुमतीत्येतच्छास्त्रविषये वृत्रघ्न इत्यादौ प्रकृतपरिभाषया निमित्तत्वबाधानुपपत्त्या परिभाषाया अनित्यत्वमूलकाप्रवृत्तिरिह युक्तेत्याशयः ।

ननु बाधकविषयपरिहारेणैवोत्सर्गप्रवृत्तिर्युक्ता, अन्यथा तत्तल्लक्ष्यविषयकत्वेनोपप्लुतयोरुत्सर्गापवादयोर्निरवकाशत्वेन तुल्यतया विकल्पापत्तौ लक्ष्यविसंवाद-

स्स्यात् । इत्थं च कथमेतत्परिभाषाप्रवृत्तिविषये णत्वनिमित्तत्वमट्कुप्वाङित्यनेन बोध्यते । न च विशेषविहितं कवर्गांशे णत्वनिमित्तत्वं, परिभाषाप्रयुक्तो निमित्तत्वबाध एव सामान्यविहित इति युक्त एव परिभाषाबाध इति वाच्यम् । स्वतस्सिद्धकवर्गवद्विषये हरिकामेण हरिकामिणावित्यादौ चारितार्थ्येन तदयोगात् । न च कवर्गांशे निमित्तत्वं प्रत्यक्षसिद्धवचनबोधितत्वात्प्रबलं, परिभाषाप्रयुक्तो निमित्तत्वबाधश्चानुमानिको वा लौकिको वा दुर्लभ इति युक्त एव तद्विषये परिभाषाबाध इति वाच्यम् । सर्वत्रैवात्र शास्त्रे निमित्ततायाश्शास्त्रैकसमधिगम्यत्वेन वाचनिकतया तद्बाधानुपपत्तौ परिभाषाया निर्विषयत्वप्रसङ्गादिति चेत्सत्यम् । कवर्गवदुत्तरपदघटितसमासघटकपूर्वपदस्थरेफषकारान्यतरपरस्याट्कुवर्गादिव्यवहितस्य प्रातिपदिकान्तनुम्विभक्तिस्थान्यतमस्य नकारस्य ण इत्यर्थेनोभयथा शास्त्रबोधितस्य द्विर्बद्धन्यायविषयस्य कवर्गीयनिमित्तभावस्य क्लृप्तकाचित्कप्रवृत्तिकेन परिभाषाप्रयुक्तबाधेन निराकरणमसमञ्जसमित्याशयोऽत्र विभावनीय इत्याहुः ।

वस्तुतः कुव्यवाये हादेशप्रतिषेध इति वार्तिकस्य वृत्रघ्नः प्रघ्न इति भाष्योदाहरणादेतद्विषये सन्निपातपरिभाषाया अनित्याया अप्रवृत्तिः । अन्यथा सर्वस्मिन्नपि णत्वे व्यवायांशे कवर्गस्य निमित्तत्वेनाश्रयणान्नकारनिमित्तकस्य तस्य नकारविघातकणत्वविधिं प्रति प्रकृतपरिभाषया निमित्तत्वाभावे केनापि णत्वाप्राप्त्या तदसङ्गतिरेवेत्याशयः ॥ **प्राघानीत्यत्र दोष इति** ॥ प्रपूर्वाद्धन्तेः कर्मणि चिण्युपधावृद्धिरिति पदद्वयसम्बन्धिवर्णद्वयापेक्षणत्वापेक्षया न बहिरङ्गमित्याशयः । वस्तुतस्त्रिपाद्यामन्तरङ्गपरिभाषायाः कार्यकालपक्षेपि प्रवृत्त्यभावस्य स्वमतसिद्धतया बहुवृत्रहाणीत्यत्र तया परिभाषया णत्वसमर्थनमपि प्राचामनुरोधेनेति द्रष्टव्यम् । **भूमार्थबहुव्रीहिणेति**[1] ॥ अत एव पूर्वशब्दघटितनिर्देशः । अन्यथा ह्यत इत्येव ब्रूयादिति भावः । उपलक्षणेनेत्यस्य लक्षणया बोधनेनेत्यर्थः ॥ **औचित्यादिति** ॥ निर्देशबलेनागारैकदेश इति सूत्रस्थयोः प्रघणप्रघाणशब्दयो-

---

१. भूमार्थबहुव्रीहिणेतीति ॥ अत्पूर्वस्येत्यनेनेत्यतः प्राक् "अत्पूर्वस्येति भूमार्थबहुव्रीहिणा अकारः पूर्वो बाहुल्येन यस्माद्धन्तिनकारादित्यर्थकेन" इत्येवं शब्दरत्नग्रन्थः क्वचिद्दृश्यते । तदनुरोध्ययं ग्रन्थः । परन्त्वधुनातनपुस्तकेषु न दृश्यते ।

रुभयोरपि प्रत्येकं णत्वनिपातनकल्पनामपेक्ष्यान्तर्घनो देश इति निर्देशबलादेकत्रान्तर्घनशब्दे णत्वाभावनिपातनकल्पनायां लाघवमुक्तार्थस्यौचित्ये हेतुः ॥

**नलोपिनोऽञ्चतेरिति** ॥ तेन पूजायां नलोपाभावात्प्राङित्यादौ नुमागमाभावः । स्त्रीत्वे ङीबभावश्चाभीष्टस्सिद्ध्यतीति भावः ॥ **सामान्यापेक्ष इति** ॥ धातोरचेन्नुमागमस्तर्हि नलोप्यञ्चतेरेवेति विशेषापेक्षनियमाभ्युपगमे नियम्यकोटावनन्तर्भावादुखास्रदित्यादौ ङीब्दुर्वारः । यदि चौपदेशिकधातोश्चेदुगित्कार्यं तथाविधस्याञ्चतेरेवेति नियमोऽभ्युपगम्यते, तदा नामधातुप्रकृतिके गोमानित्यादौ ङीन्नुमोरुभयोरनियतत्वात्स्त्रियामनिष्टो ङीप् प्रसज्येत । अधातुग्रहणमप्यनर्थकं स्यात् । अतोऽत्र सामान्यापेक्ष एव नियम इति निष्कर्षः । नन्वधातुग्रहणवैयर्थ्यान्यथानुपपत्त्या मा भूदौपदेशिकधातुमात्रविषयको नियमः, प्रत्यासन्ननुमागममात्रविषयकनियमानभ्युपगमे किं प्रमाणमत आह ॥ **स्पष्टं चेदं भाष्ये इति** ॥ असति बाधके प्रमाणानां सामान्ये पक्षपात इति तदाशयः ॥ **तच्छान्दसमिति** ॥ त्रादेशविधावुद्देश्यत्वेनगृहीतमर्वन्मघवन्नित्येतत्प्रातिपदिकद्वयं छन्दोमात्रविषयकं, छान्दसलक्ष्यसमर्थने च प्रायो बाहुलकमेव मूर्धाभिषिक्तो हेतुः । अतस्तदर्थं पृथक्शास्त्रारम्भो विफल इत्याशयः ॥ **दीर्घमध्योदात्तत्वयोरिति** ॥ संयोगान्तलोपस्यासिद्धत्वात्त्रादेशपक्षे दीर्घानुपपत्तिः । कनिप्रत्ययान्तस्याव्युत्पन्नस्य वा मघवन् शब्दस्यान्तोदात्ततया त्रादेशेन तत्परावृत्त्ययोगात्स्वरानुपपत्तिरिति बोध्यम् ॥ **आवश्यकमिति** ॥ सूत्रारम्भे बहुलग्रहणात्संयोगान्तलोपस्यासिद्धत्वाभावमूलकदीर्घत्वं मध्योदात्तत्वं च कल्पनीयम् । मघवानृजीषीत्यादिपाठानुरोधादतो वरं छान्दसत्वकल्पनमेवेत्याशयः ॥ **नकारस्य तकार इति** ॥ त्रादेशविधानेपि दीर्घमध्योदात्तत्वयोश्छान्दसत्वेनैव समर्थनीयतया छान्दसवर्णव्यत्ययेनैव धरुणमित्यादाविव तत्कल्पनायाः सूत्रानारम्भणमेव ज्याय इत्याशयः ॥ **मतुब्वनिभ्यामिति** ॥ छन्दसी वनिपौ चेत्यस्य केशाद्वोऽन्यतरस्यामित्येतच्छा-

---

१. **दीर्घमध्योदात्तत्वयोरितीति** ॥ एतदादिमतुब्वनिभ्यामित्येतत्पर्यन्तो ग्रन्थः "न तदर्थं शास्त्रारम्भः" इत्यनन्तरं "छान्दसत्वं च मघवानृजीषीत्यादौ पठ्यमानदीर्घमध्योदात्तत्वयोरर्थे तवाप्यावश्यकम् । एवञ्च छन्दसि वनिपावित्यनेनैव नकारस्य तकारोऽपि सिद्धः" इति क्वाचित्कशब्दरत्नपाठानुसारीति बोध्यम् ॥

स्वस्थतया वार्तिकेऽप्यन्यतरस्यां ग्रहणसम्बन्धेन वनिपो वैकल्पिकत्वात्पाक्षिक औत्सर्गिको मतुबिति भावः । प्रत्याख्याने लाघवं दर्शयति ॥ **दीर्घो घकाराकारोदात्तत्वं चेति** ॥ मतुप्यत्वसन्तस्येति दीर्घो ह्रस्वनुड्भ्यां मतुबिति प्राप्तस्य मतुबुदात्तत्वस्य न गोश्वन्निति निषेधेन मतुपः पित्त्वेनानुदात्ततया फिषोन्त उदात्त इति प्राप्तस्य मघशब्दान्तोदात्तत्वस्यैवावशेषान्मध्योदात्तत्वमतो विनैव परिक्लेशमभीष्टसिद्धिरित्याशयः ॥ **वार्तिकाक्षरस्वारस्येनेति** ॥ छान्दसत्वमनादृत्य मतुब्वनिभ्यां तत्समर्थनाय प्रवृत्तस्य वार्तिकस्य पुनश्छान्दसत्वमूलकदीर्घप्रवृत्तितात्पर्यकताकल्पनायां स्वारस्यभङ्गस्स्पष्ट एव ॥ **तज्ज्ञापकस्येति** ॥ तद्वानासामुपधानो मन्त्र इतीष्टकासु लुक्च मतोरिति सूत्रनिष्पन्नश्छान्दसो वयस्याशब्दस्सूत्रे प्रयुज्यमानो भाषायामपि छान्दसानां प्रयोगे प्रमाणमिति ज्ञापकतावादिनः ॥ **तदाशय इति** ॥ भाषायामर्वन्मघवन्शब्दयोरसाधुत्वोपपादनपरकैयटाशय इत्यर्थः ॥

**इदं चिन्त्यमिति** ॥ केचित्तु सर्वनाम्नामुत्सर्गतः प्रधानपरामर्शित्वाद्यतस्तृ इत्येतच्छान्दसमतस्तन्न विधेयमित्येव वार्तिकाक्षरार्थः । तस्य छान्दसत्वं च तद्विशिष्टत्वेन समर्थनीयस्य वाजमर्वत्स्वित्यादौ पठ्यमानस्य तकारान्तस्यार्वन्शब्दस्य छान्दसमध्योदात्तत्वदीर्घाभ्यां समर्थनीयस्य मघवानृजीषीत्यादौ पठ्यमानतथाविधमघवन्शब्दस्य च छान्दसत्वेनेति द्रष्टव्यम् । एवं च तकारान्तार्वन्शब्दस्य तथाविधमध्योदात्तमघवन्शब्दस्य च भाषायामप्रयोग इत्येव युक्तम् । तदुक्तं प्रकृतसूत्रे कैयटे 'भाषायामर्वन्शब्दस्य मघवन्शब्दस्य च नास्ति प्रयोग' इति ॥ मतुब्वन्योर्विधानाच्चेत्यग्रिमग्रन्थश्च वार्तिके नासूया कर्तव्या यत्रानुगमः क्रियते इति पङ्क्तिविंशतीति सूत्रस्थभाष्यकारोपदर्शितन्यायविरोधं प्रामाणिकानेकलौकिकप्रयोगविरोधं च पर्यालोच्य प्रवृत्तः । विधानाच्चेति चकारो वनो र चेति सूत्रभाष्यकारोपदर्शितस्याव्युत्पन्नस्य मघवन्शब्दस्य ऋधातुप्रकृतिकवनिबन्तार्वन्शब्दस्य च समुच्चायकः । एवं च छन्दसी वनिपाविति सूत्रबोधितवनिबन्ततया नकारान्तयोरर्वन्मघवन्शब्दयोर्मत्वन्तार्वच्छब्दस्य वेदे नकारान्तयोरर्वन्मघवन्शब्दयोर्मतुबन्तमघवच्छब्दस्य च लोकवेदयोस्सिद्धत्वात्सूत्रद्वयमिदमनारम्भणीयमिति तदाशयो न्याय्यः । अत एव कैयटे मघशब्दात्प्रत्ययद्वये

यथाविषयं रूपद्वयं सिद्धमित्युक्तम् । विषयशब्दस्य प्रयोगपरतया लौकिकवैदिकप्रयोगानुरूपमित्यर्थ एव हि स्वरसः । मतुबन्तस्यार्वन्शब्दस्य तु नैव भाषायां प्रयोगो युक्तः । लोके विचः प्रमाणानुरोधितया ऋधातुप्रकृतिकविजन्तप्रयोगोपपादकप्रमाणानुपलम्भात्तत्प्रकृतिकमतुबन्तस्य लोके प्रयोगानर्हत्वात् । तदेतत्केशाद्व इति सूत्रे कैयटेनोक्तम् । "मघवा बहुलमित्येतन्न वक्तव्यं श्वन्नुक्षन्निति निपातनान्मघशब्दान्मतुपा च भाषायामपि शब्दद्वयस्य सिद्धत्वादिति" ॥ इत्थं च न पूर्वापरविरोधः कैयटस्य, नापि मूलकारोपदर्शितन्यासग्रन्थव्याकोपो नैव प्रामाणिकानेकप्रयोगवैगुण्यमतो दीक्षिताद्युत्प्रेक्षितमपि नात्यन्तमयुक्तमिति सुधीभिराकलनीयमित्याहुः ॥

**प्रामादिकानामिति** ॥ शब्दानुशासनस्य प्रयोगानुसारित्वाद्भट्टिप्रमुखानेकमहाकविप्रयोगप्राचुर्येण निर्विचिकित्सनीयप्रामाण्यवतां प्रयोगाणां बुद्धिपरिकल्पितानुशासनिकविरुद्धार्थेन प्रसक्तमसाधुत्वमुपादाय प्रामादिकत्वकल्पनापेक्षया कथंचित्तेषां साधुत्वसमर्थनमेव युक्तमिति सहृदयानां समाचारः ॥ **तेषामिति** ॥ शब्दानुशासनमाचार्यस्येत्यादिप्रयोगनिर्वाहार्थमुभयप्राप्तौ कर्मणीत्यस्याकाकारात्मकस्त्रीप्रत्ययातिरिक्तकृन्मात्रविषये शेषे विभाषेत्यनेन विकल्पनीयत्वादिह षष्ठ्यास्साधु-

---

१. **आहुरिति** ॥ परे तु मघवा बहुलमिति सूत्रे वनिबन्तस्य अव्युत्पन्नप्रातिपदिकस्य च सामान्यतो ग्रहणं, सङ्कोचे मानाभावात् । तच्च त्रादेशस्य छान्दसत्वमभ्युपगम्य प्रत्याख्यातं वार्तिककृता । तन्महिम्ना अन्तोदात्तस्य वा मध्योदात्तस्य वा आदेशेन सम्पादनीयं यन्मघवानिति रूपं, तस्य सर्वस्यापि छान्दसत्वमभिहितं भवति । छान्दसार्थमपि प्रायशः सूत्रकृतः प्रयत्नदर्शनेन छान्दसत्वात्सूत्रप्रत्याख्यानमनुचितम् । अतोऽशिष्यत्वेऽछान्दसत्वं न पर्याप्तो हेतुरित्याशयेन "मतुब्वन्योर्विधानाच्चेति हेत्वन्तरमुक्तं वार्तिके । तत्र चशब्दः पूर्वोक्तहेतुसमुच्चायकः । तत्समुच्चितं छान्दसत्वमशिष्यत्वे हेतुरिति वार्तिककाराशयः । एवञ्चाव्युत्पन्नस्यापि त्रादेशघटितरूपं छान्दसमिति स्पष्टं प्रतीयते । तथा च तत्समानफलकमतुबन्तस्यापि छान्दसत्वं स्पष्टमेवोक्तम् । चकारस्यानुक्तसमुच्चायकत्वं न युक्तम् । उक्तसमुच्चायकत्वस्यावश्यकत्वेन तत्त्वस्यायोगात् । किञ्च भवद्रीत्या अव्युत्पन्नसमुच्चायकत्वाभिप्राये तु "मतुब्वन्योश्च विधानात्" इत्येव वदेत् । एवञ्च शब्दरत्नोक्तं चिन्त्यत्वमेव युक्तम् । अत एव भवतापि मनोरमोक्तपक्षे किञ्चिदयुक्तत्वाभिप्रायेणैव दीक्षिताद्युत्प्रेक्षितमपि नात्यन्तमयुक्तमित्युक्तमित्याहुः ।

१. **साधुत्वमिति** ॥ तेषामार्षवचनसङ्कोचे न मानमिति मूलपाठमभिप्रेत्येदम् । तेषामित्यस्य सङ्कोचक्रियायां कर्तृतयान्वयतात्पर्येणोक्तम् । वस्तुतस्तथापाठेऽप्यार्षवचन-

त्वमिति द्रष्टव्यम् ॥ वनो र चेति सूत्रे भाष्ये इति ॥ न केवलं मघवन्शब्द-स्यान्तोदात्ततायां न्यासकार एव प्रमाणमपि तु भाष्यकारोपीत्याशयः ॥

**उच्चारितगुणस्येति** ॥ गुणानुपहितस्योच्चारयितुमशक्यत्वादुच्चारणोपयो-गाय परिगृहीतो गुणो नान्तरीयकत्वाद्विवक्षाविषयो न भवतीति ज्ञापनद्वारेणो-दात्तग्रहणेन गुणानामभेदकत्वमत्र शास्त्रे बोध्यत इति निष्कर्षः । गुणशब्देनात्र ह्रस्वदीर्घप्लुतसाधारणो जात्यतिरिक्तो वर्णमात्रवृत्तिस्स्वाभाविको धर्मः । स च सानुनासिकत्वनिरनुनासिकत्वस्वरितत्वोदात्तत्वानुदात्तत्वभेदेन पञ्चविध इत्यवधेयम् ॥ **भेदकत्वेऽपीति** ॥ अत्र च ग्राहकसूत्रस्थमण्ग्रहणं ज्ञापकम् । तद्धि वर्णसमा-म्नायिकैर्निरनुनासिकयकारवकारलकारैर्ग्राहकसूत्रबलात्सानुनासिकानां ग्रहणे यत्वं-सम्पत्त्या संय्यन्तेत्यादौ परसवर्णनिष्पन्नानां तेषां द्वित्वसिद्ध्यर्थम् । गुणानामभेदकत्वे त्वजित्येव सिद्धे तद्वैयर्थ्यं स्पष्टमेव । लक्ष्यानुरोधाच्चानयोः पक्षयोर्व्यवस्थेति कैयटादयः ॥ **अनणि विध्यर्थत्वादिति** ॥ तपरसूत्रेऽण्ग्रहणाननुवृत्तेः सामान्यतः प्रवृत्तस्य तस्यानणि विधायकत्वमणि तु परत्वाद्ग्राहकसूत्रबाधकत्वमष्टादशग्राहक-त्वषड्ग्राहकत्वयोस्संख्याकृतविरोधस्य स्पष्टत्वादित्यन्यत्र विस्तरः ॥ **मानाभावा-दिति** ॥ अण्ग्रहणसन्नियुक्तस्य तन्निवृत्त्या निवृत्त्यौचित्यादिति भावः ॥

**तदन्तविध्यादीति**[1] ॥ आदिग्रहणप्रयोजनं चिन्त्यम्[2] ।

---

सङ्कोच इत्यत्रार्षवचनानां सङ्कोचक्रियाकर्मत्वविवक्षायामुभयप्राप्तौ कर्मणीति षष्ठ्या एव न्याय्यतया तत्र कर्मणि चेत्यनेन समासनिषेधाच्छेषषष्ठ्या समास इत्यवश्यवाच्यतया अत्रोभयप्राप्तौ कर्मणीति नियमस्य विषय एव नेति कर्तृकर्मणोः कृतीति षष्ठ्यास्सौल-भ्येन व्यर्थ एवायं षष्ठीसाधनप्रयासः । भाष्ये "अथ शब्दानुशासन" मिति प्रयोगे तु कर्तृवाचकपदसमभिव्याहृतकर्मवाचकस्यैवोभयप्राप्ताविति नियमविषयत्वस्य शब्देन्दु-शेखरादावुक्ततया कर्तृवाचकाचार्यपदसमभिव्याहाराभावात्कर्तृकर्मणोरिति षष्ठ्यामपि न समासानुपपत्तिः । शब्दानुशासनमाचार्यस्येत्यस्य प्रमितत्वे तु तत्रापि शेषषष्ठ्या समास एव बोध्यः । वस्तुतस्तु तेषामार्षवचनसङ्कोचे न मानत्वमिति पाठस्येदानीन्तनपुस्तके-षूपलम्भादत्र पाठे तेषामित्यस्य मानत्वमित्यनेनान्वयौचित्यादार्षवचनमित्यत्र कर्मषष्ठ्या समासोऽपि न दुष्यत इत्यवधेयम् ।

१. **तदन्तविध्यादीतीति** ॥ तदन्तविध्याद्यभावाच्चेति मूलपाठमभिप्रेत्येदम् ।

२. **चिन्त्यमिति** ॥ मनोरमायां तदन्तस्येत्यनुक्त्वा तद्विशिष्टस्येति कथनेन न्यासकृदाशयो द्वेधा वर्णयितुं शक्यते । पथ्यादेस्थान्तस्येत्येकः प्रकारः । तत्र थान्तस्ये-

ननु थोन्थ इत्यस्य पुंसः प्राप्तमिति क्लीबेन सामानाधिकरण्यानुपपत्तिरत आह ॥ सूत्रमिति ॥ केचित्तु नपुंसकमनपुंसकेनैकवच्चास्यान्यतरस्यामित्येकशेषे नपुंसकैकवद्भावाभ्यां निर्दिष्टेन प्राप्तमित्यनेनात्त्वन्थादेशटिलोपानां त्रयाणामन्वयस्य सुवचत्वात्सूत्रपरत्वपर्यन्तानुधावनपरिक्लेशो व्यर्थः । आत्त्वटिलोपाभ्यां कार्याभ्यां सूत्रस्य समुच्चये स्वारस्यभङ्गश्चेत्याहुः ।

ननु यणपेक्षया नित्यत्वादित्येव सिद्धे परत्वादित्ययुक्तम् । परनित्यत्वयोरसमकक्षतया समुच्चयायोगादत आह ॥ अभ्युच्चय इति ॥ अनुपयुक्तार्थकथनमिति तदर्थः ॥ सुप्त्वतद्व्याप्येति ॥ सुप्त्वावच्छिन्ननिमित्तताको विधिस्सुपि चेत्यादिविहितदीर्घादिः । तद्व्याप्यधर्मावच्छिन्ननिमित्तताकश्चातो भिस ऐसित्यादिविहित ऐसादिः ॥ षत्वे इति ॥ तस्य प्रत्ययावयवोद्देश्यकत्वेन, वस्तुतस्सुब्निमित्तकत्वेऽपि सुप्त्वावच्छिन्ननिमित्तताकत्वाभाव इत्याशयः । विशेषापेक्षात्सामान्यापेक्षमन्तरङ्गं, विशेषस्योद्देश्यनिमित्तभावेनोपादाने तदविनाभूतसामान्योपस्थित्या विशेषापेक्षस्य सामान्यविशेषोभयसापेक्षत्वेनाधिकनिमित्तत्वादिति तु न युक्तम् । विशेषस्य व्याप्यतया तदविनाभावेन व्यापकसामान्यस्यानुमाना-

---

त्यर्थः शब्दस्वरूपमध्याहृत्य येन विधिरित्यनेन सम्पादनीयः । तत्सूत्रं च तत्पदस्य तदन्तपरत्वे लक्षणायां तात्पर्यग्राहकमित्यन्यत्र स्पष्टम् । एवञ्च लक्षणाया अवश्याङ्गीकर्तव्यतया विनैव शब्दस्वरूपाध्याहारं थपदस्य थविशिष्टार्थे लक्षणायां थविशिष्टस्य पथ्यादेरिति सामानाधिकरण्येनान्वयोऽपि सम्पद्यत इत्यपरः । प्रकारद्वयेऽपि तदन्ते तद्विशिष्टे वा लक्षणाया आवश्यकतया तदपेक्षया पथ्यादेस्थकारस्येति वैयधिकरण्येनान्वय एव लघुरिति द्योतयितुमादिग्रहणस्यावश्यकतयाऽस्य चिन्त्यतोक्तिरसङ्गता ।

इदानीन्तनशब्दरत्नग्रन्थेष्वादिग्रहणरहित एव पाठो दृश्यते । पूर्वोक्तदिशा तत्सहित एव पाठस्साधीयानिति प्रतिभाति ॥

१. आहुरिति ॥ परे तु मनोरमायां पथिमथीत्यात्त्वमित्युक्त्या आत्त्वविधायकस्य सूत्रस्योल्लेखोऽवगम्यत इति थो न्थश्चेत्यपि सूत्रपरमित्येव युक्तम् । कार्यमात्रपरत्वे तु थ इति स्थानिनिर्देशो व्यर्थः । एवञ्च थो न्थ इति सूत्रमिति व्याख्यानमेव सम्यक् । चाट्टिलोप इत्यत्र सूत्रोल्लेखानुरोधेन टिलोपविधायकं सूत्रमित्येवार्थः । स्पष्टं चेदं भावप्रकाशे । एवञ्च नपुंसकैकशेषमन्तरैव प्राप्तमित्यनेनान्वयस्सुलभः । तथा च स्थलद्वये सूत्रस्यैव ग्रहणादाद्यस्थलेऽपि सूत्रोल्लेखस्य दर्शनाच्च सूत्रस्य समुच्चये स्वारस्यभङ्ग इत्यपि निरस्तमित्याहुः ॥

दुपस्थितावपि शाब्दान्वयप्रतियोगित्वाभावेन शब्दैकसमधिगम्यनिमित्तवत्यत्र शास्त्रे निमित्तत्वायोगेन विशेषस्याधिकनिमित्तत्वरूपबहिरङ्गत्वस्य दुर्वचत्वादित्यन्यत्र निराकृत एवायमन्तरङ्गबहिरङ्गभावः । तथापि मूलकृन्मतमवष्टभ्य तादृशान्तरङ्ग-बहिरङ्गभावाभ्युपगमेऽपि नास्ति निर्वाह इत्याशयेन शङ्कते ॥ **न च प्रकृतीति** ॥ **प्रातिपदिकस्यापीति** ॥ यणादेशीयोद्देश्यत्वानुपहितपथ्यादिरूपनकारान्तनिष्ठोद्दे-श्यताकत्वेन तदीयनिमित्तत्वानुपहितसर्वनामस्थानान्तर्गतसुप्रत्ययनिष्ठनिमित्तताक-त्वेन च न्थादेशस्य यणपेक्षया व्याप्योद्देश्यनिमित्तकत्वरूपविशेषापेक्षत्वासम्भव इत्याशयः । ननूद्देश्यत्वनिमित्तत्वपर्याप्त्यधिकरणतावच्छेदकधर्मावच्छेदेन न्थादे-शीयोद्देश्यनिमित्तयोर्व्याप्यत्वाभावेपि निमित्तघटकसर्वनामस्थानत्वस्य यणादेशीय-निमित्तघटकप्रत्ययत्वव्याप्यत्वादुद्देश्यघटकपथ्याद्यन्ताङ्गत्वस्य यणादेशीयोद्देश्यघट-कानेकाच्काङ्गत्वापेक्षया व्याप्यत्वाच्च न्थादेशस्याधिकसापेक्षत्वरूपं बहिरङ्गत्वमक्षत-मेवेत्यतो युज्यत एव यणादेशस्य प्राथमिकप्रवृत्तिरित्यत आह ॥ **तदोस्सः साविति** ॥ विशेषापेक्षत्वस्य बहिरङ्गत्वेन सामान्यापेक्षस्य त्यदाद्यत्वस्यान्तरङ्ग-त्वात्प्रथमं प्रवृत्त्या सौगम्येनैवानन्त्यग्रहणप्रत्याख्यानसम्भवे तदर्थमारब्धो भाष्य-काराणां योगविभागादिपरिक्लेशो निरुक्तान्तरङ्गबहिरङ्गभावस्यासार्वत्रिकत्वे प्रमाण-मिति भावः । नन्वसार्वत्रिकत्वेऽपि प्रकृते तदप्रवृत्तौ किं बीजमिति चेत्सत्यम् । आत्वविधिघटकक्यजन्तप्रकृतिकक्विबन्ते ऋभुक्षीशब्दे संयोगपूर्वकेवर्णान्तत्वेन यणादेशस्याप्रवृत्त्या तत्साहचर्यात्पथिमथिशब्दप्रकृतिकक्यजन्तात्क्विपि निरुक्तान्त-रङ्गभावस्यानाश्रयणेन प्रथमत एव न्थादेशप्रवृत्त्या संयोगपूर्वकेवर्णान्ततया प्रवृत्ति-रिति मूलकाराशयोऽत्रोन्नेय इत्याहुः ॥ **पदत्वाभावादिति** ॥ वेतस्वानित्याद्यर्थ-मावश्यके भाष्यकारोपदर्शिते पदेऽन्त इति सप्तमीसमासपक्षे तदप्रवृत्तेश्चेति बोध्यम् ॥ **ह्रस्वे अत्वमिति** ॥ यं विधिं प्रत्युपदेशोऽनर्थकस्स विधिर्बाध्यते । यस्य पुनर्निमित्तत्वमेव, नासौ बाध्यत इति । ह्रस्वविधानसामर्थ्यमूलकतया कल्प्यमाननिवृत्तिर्यण एव, न त्वितोऽदिति विधीयमानस्यात्वस्येति तदाशयः ॥ **लोपापत्तिरिति** ॥ वेरपृक्तलोपाद्वलि लोपो विप्रतिषेधेनेति क्विलोपात्पूर्वं वकारनि-मित्तकयलोपापत्तिरित्यर्थः ॥ **असिद्धत्वादिति** ॥ यत्तु वलि लोपेऽन्तरङ्गपरि-भाषा न प्रवर्तते । अत एवाक्षद्यूरित्यादावूठो बहिरङ्गासिद्धत्वेन प्राप्तो यलोपो नेति प्राञ्चस्तदसत् । व्रश्चादिषु वलि लोपातिप्रसङ्गवारणप्रस्तावे भाष्यकारैरस्याः

परिभाषायास्तद्विषये सञ्चारितत्वात् । अरियूतीत्यादौ वार्णपरिभाषायास्समानकार्यिताविषयत्वात्प्रथममन्तरङ्गतया यण स्थानिवद्भावादियङि प्रसक्तस्य यलोपस्य स्थानिभूतादचः पूर्वत्वाभावेन स्थानिवत्त्वाप्रवृत्त्या प्रकृतिप्रत्ययोभयसम्बन्धिवर्णद्वयाश्रयत्वेन बहिरङ्गस्य यणादेशस्यैतत्परिभाषाप्रयोज्यासिद्धत्वप्रयुक्तवारणस्याभीष्टस्य दौर्लभ्यापत्तेश्च । अक्षद्यूरित्यादौ चाजानन्तर्यनिमित्तकेऽन्तरङ्गे बहिरङ्गस्यासिद्धत्वाभावस्तत्र कृते यदन्तरङ्गं प्रसजति तस्मिन्नपि कर्तव्ये बहिरङ्गस्यासिद्धत्वाभाव इति नाजानन्तर्यपरिभाषार्थाभ्युपगमेन यलोपाप्रवृत्तेश्चेति दिक् ॥

**विशेष्यसाकाङ्क्षत्वादिति** ॥ ष्णान्तेतिस्त्रीप्रत्ययान्तबहुव्रीहिणा स्त्रीत्वविशिष्टान्यपदार्थस्याकाङ्क्षितत्वादित्यर्थः । ननु संख्याशब्दस्य संज्ञिपरत्वेऽपि विशेषणासाङ्गत्यमेवेत्यत आह ॥ **यद्यपीति** ॥ **लोके इति** ॥ ष्णान्तेति विशेषणसामर्थ्यादिह लौकिकार्थावगतिरिति भावः ॥ **तत्त्वेन विवक्षिता इति** ॥ संख्यापदवाच्यत्वेन विवक्षिता इत्यर्थः । लोके गणनायां प्रसिद्धानां पञ्चादीनामेव तत्पदबोध्यत्वमित्यत्र तु न मानम् । तेन परमपञ्चादीनामपि षट्संज्ञाप्रवृत्तिरक्षता । संख्याप्रकारकसंख्येयविशेष्यकबोधजनकत्वाविशेषत्वात् । इत्थं च षड्भ्यो लुक् षट्चतुर्भ्यश्चेत्यनयोर्भाष्यकारोपदर्शितविहितविशेषणाश्रयणेपि परमपञ्चादिभ्यो लुङ्नुटोः प्रवृत्तेर्न किञ्चिद्बाधकमित्याशयः । ननु लौकिकगणनाप्रसिद्धिमन्तरा संख्याप्रकारकसंख्येयविशेष्यकबोधजनकानामत्र संख्यापदवाच्यत्वेन ग्रहणे द्वित्वादिशब्दप्रकृतिकमत्वर्थीयेनिप्रत्ययान्तानां द्वित्विनस्त्रित्विन इत्यादीनामपि षट्संज्ञाप्रसङ्ग इति चेन्नैवम् । सम्बन्धबोधकमत्वर्थीयेनिप्रत्ययान्तानां तथाविधानां सम्बन्धप्रकारकबोधसाधनत्वेपि संख्याप्रकारकनिरुक्तार्थविषयकबोधजनकत्वाभावात् । षान्तसाहचर्येण नान्तस्यापि तद्धितप्रत्ययनिरूपितावयवत्वानुपहितवर्णचरमावयवविवक्षणेनादोषात् । न च नव नवैकाशीतिर्दश दश शतमित्यादौ स्वप्रतिपाद्यसंख्यासजातीयसंख्याभिधायकसंख्यावाचकसमभिव्याहृतसंख्यावाचकस्य संख्येयावयवकसमुदायबोधकतानैयत्येन संख्याप्रकारकसंख्येयविशेष्यकबोधजनकत्वाभावात्प्रकृतसंज्ञाया अनुपपत्तिरिति वाच्यम् । बोधशब्देनात्रोपस्थितेरेव विवक्षिततया संख्याप्रकारकसंख्येयविशेष्यकोपस्थितिजनकत्वस्यैव संज्ञानिमित्तत्वेन निरुक्तस्थले लक्षणया तथाविधसमुदायबोधकत्वेपि शक्तिज्ञानाधीनतादृशोपस्थितेर्लक्षणाप्रयोजकतया प्रथ-

मतो जायमानत्वेन क्षत्यभावादतो न काप्यनुपपत्तिरिति दिक् ॥ अत्र सूत्रे शतानि सहस्राणीत्यादौ सर्वनामस्थाननिमित्तकनुमन्तस्य नान्तसंख्यावाचकतया प्रसक्तायाः षट्संज्ञायाः परिहारार्थं भगवता कात्यायनेनोपदेशग्रहणं कर्तव्यमित्यभिहितम् । तदुपादाय प्राचीनैरुपदेशे यौ षकारनकारौ तदन्तेति व्याख्यायोपसर्जनयोष्षकारनकारयोर्वृत्त्यघटकोपदेशपदार्थसापेक्षत्वात्सामर्थ्याभावेन समासानुपपत्तिमुद्भाव्य समुदायेन सम्बन्धान्नासमर्थसमास इति परिहृतम् । तदेतन्मूलकृता दूषितम् । अवयवेन सम्बन्धं व्याख्यायेत्यादिना, तत्रावयवपदार्थमाह ॥ **ष्णान्तपदावयवेनेति** ॥ **बोधाभाव इति** ॥ वृत्तिष्वनुभूयमानविशिष्टबोधोपायतया कल्प्यमान एकार्थीभावस्समासादीनां निमित्तम् । यत्र च विशिष्टबोधात्मकस्य कल्पकस्याभावस्तत्रैकार्थीभावस्य कल्पयितुमशक्यत्वात्तन्निमित्तकसमासादीनामभावः, तदेतद्भाष्यकारैरुपपादितम् । "सविशेषणानामगमकत्वाद्वृत्त्यभाव" इति ॥ एवमृद्धस्य राज्ञो मातङ्ग इत्याद्यर्थे ऋद्धस्य राजमातङ्ग इत्यादिको न प्रयोगः । अगमकत्वात् । देवदत्तस्य गुरोः कुलमित्याद्यर्थे तु भवत्येव देवदत्तस्य गुरुकुलमित्यादिकः प्रयोगः । गमकत्वादिति निष्कर्षः । न च गमकत्वागमकत्वाभ्यामेव वृत्तितदभावयोर्व्यवस्थासिद्धावनर्थकमेव समर्थसूत्रमिति वाच्यम् । अकिञ्चित्कुर्वाणममार्षं हरमाणमित्यादीनां गमकत्वेनाभिमतानामसमर्थसमासानामसाधुत्वबोधनाय तदावश्यकताया भाष्ये स्पष्टत्वादिति असमर्थसमासानामपि केषांचिदसूर्यंपश्या इत्यादीनां सुडनपुंसकस्येति ज्ञापकात्साधुत्वमिति स्पष्टं भाष्यकैयटयोः ॥ **उपदेशकालं प्रतीति** ॥ अधिकरणकारकस्य कर्त्राद्यन्वयद्वारा क्रियान्वयनियमादुपदेशकालात्मकस्याधिकरणस्य कर्तृभूतान्तपदार्थसापेक्षत्वेऽप्यन्तपदार्थस्य तदपेक्षत्वे मानाभाव इत्याशयः ॥ **अन्यपदार्थबोधकत्वेनेति** ॥ स्त्रीप्रत्ययान्ततया स्त्रीत्वविशिष्टान्यपदार्थबोधकत्वेनेत्यर्थः ॥ **तत्सम्पादकमिति** ॥ ननु ष्णावित्युक्तावपि वर्णयोस्संज्ञायाः प्रयोजनाभावाद्विशेष्यापेक्षेण तदन्तविधेरावश्यकत्वात्संख्यापदस्यैवोपस्थितस्य विशेष्यसमर्पकत्वे सम्बन्धस्य न्याय्यत्वेनाभीष्टसिद्धावतिरिच्यमानमन्तग्रहणमौपदेशिकप्रतिपत्त्यर्थमिति युक्तमेव प्राचीनोक्तमिति चेन्न । शब्दस्वरूपपरत्वेन क्लृप्तस्य पूर्वसूत्रघटकसंख्यापदस्य प्रकृतसूत्रे लौकिकसंख्यावाचकपरत्वेन सम्बन्धकल्पनापेक्षया शब्दस्वरूपविशेष्याध्याहारस्यैव लाघवोपहिततया न्याय्यत्वेनानिष्टप्रसङ्गात् । यदि तु प्रकृत्या अकेराजन्यमनुष्ययुवान इत्यादिनि-

र्देशबलात्संख्यापदस्यैव निरुक्तार्थकस्य सम्बन्ध इति नानिष्टप्रसङ्ग इति मन्यते; तथापि न निर्वाहस्सामर्थ्यवादिनामित्याह ॥ **किञ्चेति** ॥ औपदेशिकपरत्वेन समानाधिकरणे बहुव्रीहावुपदेशकालपरत्वेन व्यधिकरणे वा तस्मिन्सप्तमी विशेषणे बहुव्रीहावित्यनुशासनेन पूर्वनिपातोऽन्तशब्दस्यैव स्यादित्याशयः। ननु समुद्राभ्राद्ध इत्यादिनिर्देशबलेन तद्गुणसंज्ञान इत्यादिप्रयोगोपपत्तये सामान्यतः पूर्वनिपातप्रकरणानित्यत्वस्य ज्ञापनीयतया प्रकृतेपि न पूर्वनिपातवैपरीत्यापत्तिर्दोष इत्यत आह ॥ **उणादीनामित्यादि** ॥ ननु वार्तिककारबोधितस्योपदेशग्रहणस्य सन्निपातपरिभाषया फलान्यथासिद्धिमास्थाय भाष्यकृता प्रत्याख्यानेपि प्रातिपदिकानामुपदेशाभावात्कथमुक्तिसम्भव इत्यत आह ॥ **वार्तिकस्येति** ॥ **वक्तुमशक्य इति** ॥ बहुव्रीहिघटकान्तपदप्रतिपाद्योपदेशस्यान्यपदार्थभूतप्रातिपदिकेनैव समन्वयस्य प्राप्तत्वादिति भावः ॥

**नलोपस्यासिद्धत्वादिति** ॥ अयं भावः । सन्निपातपरिभाषा हि सन्निपातनिमित्तकविध्यैकवाक्यतया तदुपकारिणी । एवं च नुड्विधायकशास्त्रैकवाक्यतया ष्णान्तसंख्यावाचकत्वरूपषट्त्वोपहिताङ्गानन्तर्यरूपसन्निपातनिमित्तकस्य नुड्विधेस्तदीयनिमित्तभूतसन्निपातविघातकविधिनिरूपितनिमित्तत्वाभावस्य बोधनीयतया निमित्तत्वाभावबुद्धेर्विघातप्रतिपत्तिप्रयोज्यत्वेन नुड्विध्यपेक्षया त्रैपादिकासिद्धत्वेन नलोपस्याविद्यमानतायां तत्कृतसन्निपातविघातस्य दुर्ज्ञेयत्वेन तं प्रति नुड्विधेर्निमित्तत्वाभावो नोपपद्यत इति ॥ ननु नलोपस्सुबिति नियमात्सुब्विधित्वेन नुड्विध्यपेक्षया नलोपस्यासिद्धत्वेऽपि तदेकवाक्यतापन्नपरिभाषादृष्ट्या तदभावात्सन्निपातविघातप्रतिपत्तिपूर्वकनिमित्तत्वाभावबोधने बाधकाभावात्कथं तदनुपपत्तिरिति चेन्न । परिभाषया नुड्विधेर्नलोपनिमित्तकत्वाभावबोधनेऽपि गुणशास्त्रस्य साक्षात्प्रधानशास्त्रबाधाक्षमत्वेन विघातकविधिनिरूपितनिमित्तत्वाभावबोधनद्वारेण सन्निपातनिमित्तकविधेः पाश्चात्यविघातकविधिप्रवृत्तिप्रतिबन्धकीभूतलक्ष्यसङ्कोचात्मकबाधप्रयोजकप्राबल्यमेव बोध्यत इत्यर्थस्य न्याय्यतया विघातकविधिबाधस्य विघातप्रतिपत्तिमूलकत्वेन लोपविधेश्शास्त्रबोधिताहार्याभावोपहतत्वेन तत्कृतविघातप्रतिपत्तिप्रयोज्यविघातकविधिबाधायोगादनुपपत्तिरित्याशयात् ॥ **कृन्मेजन्त इति सूत्रे भाष्ये इति** ॥ तत्र हि स्वीक्रियमाणायामस्यां परिभाषायां नदीह्रस्वत्वं सम्बुद्धिलोपस्या-

निमित्तं स्यादित्युक्तम् ॥ **स्थानिवत्त्वेनेति** ॥ प्रत्ययलक्षणसूत्रस्य नियामकत्वमित्याशयः ॥ **अतिव्याप्तीति** ॥ ननु गौरीत्यादौ नद्यन्ताङ्गसम्बुद्धिपौर्वापर्यरूपह्रस्वनिमित्तभूतसन्निपातस्य ह्रस्वप्रवृत्त्यैव विहतत्वात्सम्बुद्धिलोपेन विहन्तव्यस्य तदीयनिमित्तभूतसन्निपातस्याभावात्कथमिह परिभाषाप्रवृत्तिप्रयुक्तमतिव्याप्त्यापादनमिति चेत्सत्यम् । नद्यन्तत्वविशिष्टाङ्गसम्बुद्धिप्रत्ययैतदुभयपौर्वापर्यमत्र ह्रस्वप्रवृत्तेर्निमित्तम् । तत्प्रवृत्त्या च नद्यन्तत्वोपघातादङ्गसम्बुद्धिपौर्वापर्यलक्षण एकाङ्गविकलस्तदीयनिमित्तभूतसन्निपातोऽनुवर्तत एव । सम्बुद्धिलोपे तु सुतरां तद्विघात इत्यस्ति परिभाषायाः प्रवृत्तिरिति भगवदाशयः । न च कृते ह्रस्वे विभिन्नत्वादङ्गस्य ह्रस्वप्रवृत्त्यैव यावत्सन्निपातविघात इति वाच्यम् । एकदेशविकृतन्यायेन तत्त्वप्रत्यभिज्ञया ह्रस्वप्रवृत्तावप्यङ्गविभेदाभावात् । नद्यन्तत्वं तु नैतन्न्यायलभ्यम् । विकृतावयवनिबन्धनधर्मत्वादिति विभावनीयमार्यैः ॥ **अशास्त्रीयत्वादिति** ॥ सिद्धान्ते त्वशास्त्रीयस्याप्यतिदेशो भवत्येव । अत एवान्तरङ्गत्वाद्वेरपृक्तलोपे लिट् धुगित्यादौ यस्माद्विहिततदादित्वतदन्तत्वरूपकृदन्तत्वनिबन्धनप्रातिपदिकत्वस्य सिद्धिरित्याद्यन्यत्र निरूपितम् ॥ **विभावयेति** ॥ एतद्भाष्यबलाच्छास्त्रबोधिताहार्याभावबुद्धिगोचरस्यापि निमित्तविघातस्य प्रकृतपरिभाषाप्रवृत्तिप्रयोजकत्वमाश्रीयत इत्याशयः । ननु स्थानिवत्सूत्रविधेयस्य स्थानिधर्मातिदेशस्याधिष्ठानमादेशः, स च लक्ष्यसमवायोत्तरमेवातिदेशोपयोगी, न ततः प्रागधिष्ठानसिद्धिमन्तरेणातिदेशायोगात् । इत्थं च प्रवृत्तिकालिकाहार्याभावारोपानुपहितनिमित्तविघातबुद्धिमास्थाय गौरीत्यादौ सम्बुद्धिलोपविषये परिभाषाप्रवृत्तेर्दुर्वारतया युक्तमतिव्याप्त्यापादनं भाष्यकाराणां, त्रैपादिकविषये तु शास्त्रासिद्धत्वस्यैव सिद्धान्ततया नलोपविधेश्शास्त्रबोधिताहार्याभावबुद्धिविषयत्वेन तद्बोधितकार्यप्रवृत्तिप्रयोज्यनिमित्तविघातबुद्धेरनुत्पादात्परिभाषाप्रवृत्तेरसम्भवेन वैजात्यात्कथमिह तद्भाष्यबलान्निरुक्तार्थसिद्धिरत आह ॥ **किञ्चेति** ॥

**मानाभाव इति** ॥ केचित्तु सिद्धान्तभूते शास्त्रासिद्धत्ववादे पूर्वत्रासिद्धमित्यत्र कर्तव्ये इत्यस्याध्याहारो न युज्यते । शास्त्रस्यैवेदानीं कर्तव्यत्वायोगात् । न च कार्यद्वारिका कर्तव्यता शास्त्रे स्वीक्रियत इति वाच्यम् । तुल्यन्यायादसिद्धत्वस्यापि तथात्वे शास्त्रासिद्धत्ववादस्यैव विलोपापत्तेः । पूर्वत्रासिद्ध-

मित्यत्र पूर्वपरशब्दयोस्तद्बोध्यकार्यपर्यन्तलक्षणाप्रयुक्तगौरवदोषेण कार्यासिद्धत्वमनाद्रियमाणानां शास्त्रासिद्धत्वे कार्यद्वारेण शास्त्रे कर्तव्यतास्वीकारस्यानौचित्याच्च । तस्मादिह ज्ञातव्यपदाध्याहारेण पूर्वशास्त्रविषयकज्ञानविषयत्वाभाववत्परशास्त्रमित्यर्थः । इत्थं च द्वयोर्युगपदेकबुद्ध्युपारोहासम्भवेन परिभाषाबोधितनिमित्तत्वाभावपुरस्कारेण सन्निपातनिमित्तकशास्त्रप्रयोज्यविघातकशास्त्रीयनिमित्ततासङ्कोचस्य विघातप्रतिपत्तिमूलकस्य नास्ति सम्भवः । किञ्च शास्त्रेषु चेतनत्वारोपस्य बहुशस्तत्र तत्र भगवता व्यवहृतत्वात्पूर्वत्रेत्यस्य विषयसप्तमीत्वेन पूर्वशास्त्रीयबुद्धिविषयत्वाभाववत्परशास्त्रमित्यर्थादविद्यमानपरशास्त्रकृतसन्निपातविघातस्यासम्भवग्रस्ततया तत्प्रयोज्यसन्निपातलक्षणपूर्वशास्त्रकर्तव्यविघातकपरशास्त्रप्रवृत्तिप्रतिबन्धकनिमित्ततासङ्कोचो दुरुपपादः । ततश्च प्रकृतपरिभाषायास्त्रिपाद्यामप्रवृत्तिः । अन्यथा पञ्चानामित्यादौ षट्त्वनिमित्तको नुट् नलोपस्यानिमित्तं स्यात् । दोग्धेत्यादौ झषस्तथोरिति धत्वं जश्त्वस्यानिमित्तं स्यात् । सञ्छम्भुरित्यादौ शत्वनिमित्तकस्तुक् छादेशस्यानिमित्तं स्यादिति महदनिष्टमापद्येत । परिभाषाया अनित्यत्वेनैतेषां समर्थनं तु न समञ्जसम् । अनित्यत्वेन समर्थनीयेषु भाष्यकृत्परिगणितेष्वेतेषामभावात् । साकल्येन परिगणिता इत्यनेन परिगणितातिरिक्तेषु परिभाषाप्रवृत्तेरेव भाष्यकारेणाभ्यनुज्ञानाच्च । न च सन्निपातनिमित्तकशास्त्रजन्यवाक्यार्थबोधवेलायां तद्विघातस्यासम्भवात्सम्भावनाविषयस्यैव तस्य परिभाषाप्रवृत्तिप्रयोजकतया सन्निपातनिमित्तकविध्यैकवाक्यतापन्नप्रकृतपरिभाषाशास्त्रेण वाक्यैकवाक्यतया येनैतन्निमित्तभूतसन्निपातविघातस्स्यात्तन्निरूपिततन्निमित्तत्वाभाववानयमित्येवं सामान्येन सापादित्रैपादिविधिप्रयुक्तनिमित्तविघातसम्भावनामादाय निमित्तत्वाभावबोधने तदनुसारेणैव सन्निपातलक्षणशास्त्रेण निमित्ततासङ्कोचस्य न्याय्यतया भवत्येव परिभाषायास्त्रिपाद्यां प्रवृत्तिरिति वाच्यम् । शास्त्रबोधिताविद्यमानतानिश्चयविषयभूतत्रैपादिकविधिप्रयुक्तविघातस्य सामान्यतोऽपि सम्भावयितुमशक्यत्वेन तत्प्रयुक्तसापादिकशास्त्रप्रयोज्यनिमित्ततासङ्कोचस्य दुर्वचतया परिभाषायास्त्रिपाद्यां प्रवृत्त्यसम्भवात् । ध्वनितश्चायमर्थः परिभाषादोषेषु त्रैपादिकानामपरिगणनेन भगवता भाष्यकृतेत्याहुः ॥

१. आहुरिति ॥ परे तु पूर्वत्रासिद्धमित्यनेन पूर्वशास्त्रप्रवृत्तिकाले तत्प्रापकतया प्रतिबन्धकतया वा उपस्थितं परशास्त्रं शास्त्रेषु चेतनत्वारोपेण पूर्वशास्त्रबुद्धिगोचरं न

**धर्मविशेषरूपस्येति ॥** षान्तनान्तान्यतरसंख्यावाचकत्वस्य गुरुभूतस्य शक्यतावच्छेदकत्वायोगादनुगतं षट्त्वरूपमतिरिक्तं षट्पदस्य शक्यतावच्छेदकमाश्रितमित्याशयः । एतेन धातुप्रत्ययत्वादिकमप्येवंजातीयकमेव, तुल्यन्यायादिति सूचितम् ॥ **एकदेशविकृतन्यायेनेति ॥** षट्त्वस्य विकृतावयववृत्तिधर्मघटितत्वाभावादतिदेशसौलभ्यान्नुटस्सौलभ्यमिति बोध्यम् ॥ **मुख्ये कार्यकालपक्षे इति ॥** अस्य पक्षस्य मुख्यत्वमुत्तमाधिकारिविषयत्वात् । यथोद्देशपक्षो हि भविष्यति किञ्चित्प्रयोजनमित्यभिसन्धिमात्रेण प्रशान्ताकाङ्क्षाणां मन्दमध्यमाधिकारिणां विषय इत्यतो जघन्य इति मन्यते ॥ **ह्रस्वेष्विति ॥** न च प्रियाष्ट्नः प्रियाष्ट्नेत्यादौ विभक्त्युदात्तत्वव्यावृत्तिर्दीर्घग्रहणस्य प्रयोजनमिति वाच्यम् । अन्तोदात्तादुत्तरपदादित्यत उत्तरत्रानुवर्तनीयस्यान्तोदात्तादित्यस्य सम्बन्धेन प्रियाष्टन्शब्दस्य बहुव्रीहितया पूर्वपदप्रकृतिस्वरेण मध्योदात्ततया प्रकृतसूत्रविषयत्वाभावात् । न चैवमपि समसिमशब्दयोः 'त्वत्वसमसिमेत्यनुच्चाने' इति फिट्सूत्रेण सर्वानुदात्ततया तद्घटितबहुव्रीहौ समाष्ट्नः सिमाष्ट्न इत्यादौ बहुव्रीहौ प्रकृत्येत्यस्याप्रवृत्त्या घृतादिपठिताष्टन्शब्दस्वरस्यैवावशेषादन्तोदात्ततया प्रसक्तं विभक्त्युदात्तत्वं वारयितुं दीर्घग्रहणमिति वाच्यम् । अनुदात्तस्य च यत्रोदात्तलोप इत्यनेनैव तत्र विभक्त्युदात्तत्वसिद्धेः । न चैवमपि समाष्टनि सिमाष्टनीत्यादौ विभाषा ङिश्योरित्यल्लोपाभावे चारितार्थ्यमिति वाच्यम् । सर्वनामसंख्ययोरुपसंख्यानमिति पूर्वनिपातविधायके संख्याया उत्तरत्र सन्निवेशाच्छब्दपरविप्रतिषेधाश्रयणेन संख्यासर्वनाम्नोस्समावेशे संख्याया एव पूर्वनिपात इत्यर्थस्य सर्वसम्मतत्वेन निरुक्तप्रयो-

---

भवतीत्येवार्थो बोध्यते । न तु पूर्वशास्त्रविषये पूर्वशास्त्रप्रवृत्त्युत्तरकालप्राप्तिकमपि शास्त्रं बुद्धिगोचरं न भवतीति । अन्यथा स सजुषोरुरित्यादिशास्त्राणां साधुत्वबोधकता न स्यात् । तैस्स्वोत्तरकालप्रवृत्तिकखरवसानयोर्विसर्जनीय इत्यादिशास्त्रविधेयविसर्गादिघटितपरिनिष्ठितरूपज्ञाप्यस्यैव साधुत्वबोधनस्य शेखरे प्रतिपादितत्वेन सर्वथा परशास्त्रस्य पूर्वशास्त्रबुद्ध्यगोचरत्वस्य वक्तुमशक्यत्वात् । एवञ्च प्रकृते नुट्प्रवृत्तिकाले नलोपशास्त्रस्य कथमप्यनुपस्थितत्वेन तस्य तद्दृष्ट्याऽसिद्धत्वं दुर्वचमेव । तथा च पूर्वत्र कर्तव्ये तदसिद्धत्वेऽपि तत्र कृते तस्यासिद्धत्वे मानाभाव इति मूलोक्तसरणिरेव युक्ता । त्रिपाद्यां सन्निपातपरिभाषा न प्रवर्तत इति तु निराकृतमेव पूर्वमित्याहुः ॥

१. **ह्रस्वेष्वितीति ।।** ह्रस्वेषूदात्तव्यावृत्त्यर्थमित्यर्थः इति क्वाचित्कं शब्दरत्नपाठमनुसृत्येदम् । अयमेव पाठस्साधीयानिति बोध्यम् ।

गाणामुपपत्त्यभावात् । अतो ह्रस्वव्यावृत्त्यर्थमेव दीर्घग्रहणमित्याहुः ॥ **अनित्यत्वज्ञापनादिति** ॥ ननु भाष्ये प्रकृतसूत्रे दीर्घग्रहणेन कृतात्वेऽपि षट्स्वरज्ञापनद्वारेणाष्टनूस्वरस्य षट्स्वरापवादत्वमेव समर्थितमित्ययुक्तमिदं सकृद्गतिन्यायानित्यत्वज्ञापनमत आह ॥ **यद्वेति** ॥ यद्यपि भाष्ये कृतात्वेपि षट्त्वं ज्ञाप्यते । अष्टानामित्यत्र नुडर्थमित्येवोक्तम्; तथापि षट्त्वमतिरिक्तं, लाघवात् यथोद्देशपक्षज्ञापनद्वारेण कृतात्वे प्राक्प्रवृत्तं षट्त्वमतिदेशतस्सुलभमिति भगवदाशयमुत्प्रेक्षते ॥ **औश्विधानसामर्थ्यादिति** ॥ सर्वथा निरवकाशत्वेन लुकमौशादेशो बाधत इत्याशयः ॥ **यद्धि तु परमिति** ॥ तत्र हि भाष्ये तत्सूत्रस्य नियमार्थत्वेन जाये श्वो रोहावेहीत्यत्र लोट् चेति सूत्रेण प्राप्तस्य निघातनिषेधस्य निवृत्तावेहीत्यत्र निघातश्रवणं प्रयाजनमित्युक्तम् । नित्यत्वादेकादेशेऽव्यपवर्गाभावात्पदात्परत्वाभावेन तिङतिङ इति निघाताप्रवृत्त्या तदसङ्गतिरेवेति तेनायमर्थो ध्वन्यत इत्याशयः । स्पष्टं चेदं कैयटे ॥ **प्रियाष्टाभ्यामिति** ॥ अष्टनो दीर्घादित्यत्रान्तोदात्तादित्यस्यानुवृत्तेरुत्तरत्र सम्बन्धार्थमावश्यकत्वेन प्रियाष्टन्शब्दस्य पूर्वप्रकृतिस्वरेण मध्योदात्ततया कथमत्र सावकाशताऽष्टन् स्वरस्येति चिन्त्यमेतैत्[1] ॥ **प्रियाष्ट्न इति**[2] ॥ विहितविशेषणाभावे विभक्त्युपस्थापिततदाद्यंशविशेषणतया तदन्तविधौ षट्संज्ञकान्तात्परीभूतविभक्तेरुदात्तवारणाय हल्ग्रहणस्यावश्यकतया चतसृशब्दातिरिक्ते प्रयो-

---

१. **चिन्त्यमेतदिति** ॥ वस्तुतस्तु सिद्धान्तेऽष्टनो दीर्घादिति सूत्रेऽन्तोदात्तादित्यनुवृत्तेः फलाभावेनासम्बन्धस्य न्याय्यतया तदानीमष्टनूस्वरः सावकाश इति शङ्कितुराशयः । प्रियाष्टादीनामनभिधानस्य वक्ष्यमाणतया तत्रान्तोदात्तादित्यनुवृत्तेः फलाभावः स्पष्ट एव । अत एवान्तोदात्तादित्यस्योत्तरार्थत्वेऽपीह सम्बन्धे बाधकाभावकथनं शेखरकृतस्सङ्गच्छते । यदि तूत्तरार्थत्वेऽपि मण्डूकानुवृत्तिवारणायेह सम्बन्धस्य न्याय्यतया तत एवाष्टनूस्वराप्राप्तिरिति सावकाशत्वकथनमसङ्गतमेवेत्युच्यते, तर्हि समाष्टभ्यामित्यादावष्टनूस्वरस्सावकाश इति शङ्कितुराशयः । अत एव प्रियाष्टाभ्यामित्यादावित्यादिपदं तत्सङ्ग्राहकमुपात्तम् । समशब्दस्य "त्वत्वसमसिमेत्यनुच्चाने" इति सर्वानुदात्ततया "बहुव्रीहौ प्रकृत्या पूर्वपदम्" इत्यस्योदात्तस्वरितयोगिपूर्वपदकबहुव्रीहावेव प्रवृत्त्या समासस्येत्यनेन समाष्टन्शब्दस्यान्तोदात्तत्वेन तत्राष्टनूस्वरस्य सावकाशत्वं स्पष्टमेवेत्यस्य चिन्त्यतोक्तिरसङ्गतेत्याहुः ।

२. **प्रियाष्ट्न इतीति** ॥ अन्यथा प्रियाष्ट्न इत्यादेस्सम्भवेनेति शब्दरत्नपाठाभिप्रायेणेदम् । इदानीन्तनपुस्तकेषु अन्यथा प्रियाष्टान इत्येवं पाठो दृश्यते ।

जनाभावकथनं भाष्यकृतामसम्बद्धं स्यादित्याशयः ॥ **एकादेशस्वरेणेति** ॥ सत्यसति वा हल्ग्रहणे न तत्र षट्त्रीत्यस्य प्रसङ्गो, नाप्यष्टनो दीर्घादित्यस्येति न हल्ग्रहणस्य तत्र व्यावर्त्यसम्भव इति भावः ॥ **कदष्टाविति** ॥ अव्ययपूर्वपदप्रकृतिस्वरेणाष्टन्शब्दस्यानुदात्ततया न तत्रैकादेशस्वरेण निर्वाहः । ननु संख्यायास्तत्पुरुषस्योपसंख्यानमव्ययपूर्वपदस्येति समासान्तेन डच्प्रत्ययेन भाव्यमिति कदष्टन्शब्दस्यैवाभावान्नात्र शङ्कावकाश इति चेत्तर्हि समासान्तविधेरनित्यत्वात्कृत्य इत्यत्रेव तदप्रवृत्तिरित्यभिमानः ॥ **अनभिधानादिति** ॥ समासान्तविरहितस्य कदष्टन्शब्दस्य प्रामाणिकप्रयोगाभावादित्यर्थः ॥ **विहितविशेषणाश्रयणेनेति** ॥ ज्ञापनपरभाष्यस्यान्तोदात्तग्रहणानुवृत्तिकल्पनयैवोपपत्तौ विहितविशेषणाश्रयणमयुक्तम् । किं च सिद्धान्ते दीर्घान्तादष्टनो विहिताया विभक्तेरसम्भवो विभक्तौ परत एवात्वविधानादत आह ॥ **प्रियाष्टादीनामनभिधानस्येति** ॥ **षट्संज्ञासूत्रे भाष्ये इति** ॥ तत्र ह्यष्टानामित्यत्र षट्संज्ञाप्रयुक्तस्य नुटस्सिद्धये कात्यायनचोदितस्योपदेशग्रहणस्य प्रत्याख्यानाय अष्टन आ विभक्तावित्यत्र रायो हलीत्यतो हल्ग्रहणापकर्षणमुक्त्वा प्रियाष्टा इत्यत्रात्वानुपपत्तिमाशङ्क्य "यथालक्षणमप्रयुक्ते" इत्युक्तम् । अप्रयुक्ते लक्षणप्रवृत्त्यभावस्यैव योग्यतेति कैयटोक्तद्वितीयव्याख्यानमाश्रित्यैवंविधानामनभिधानमेव युक्तमित्याशयः । नन्वष्टनो दीर्घादिति दीर्घग्रहणसामर्थ्यादष्टानामित्यत्र कृतात्वेऽप्यष्टन्शब्दे यथोद्देशपक्षैकविषयतामाश्रित्य ष्णान्तसंख्यावाचकत्वसमानाधिकरणधर्मविशेषरूपस्य षट्त्वस्यातिदेशतो लाभेन नुडागमसमर्थनपरषाष्ठभाष्यविरोधाद्धल्ग्रहणापकर्षणप्रतिपादनपरं षट्संज्ञासूत्रस्थं भाष्यमेकदेशिन एवेति तदनुरोधात्प्रियाष्टादीनामनभिधानमनुचितम् । विनिगमनाविरहादिदमेव सिद्धान्त्युक्तमित्याग्रहे तु वृत्तिकारादिबहुग्रन्थविरोधादुदाहरणपक्षपातेन प्रियाष्टन्शब्देपि हलादावेवात्वप्रवृत्तिर्न त्वजादावित्यभिप्रायकमप्रयुक्ते यथालक्षणं कार्यं कर्तव्यमिति कैयटोक्तमाद्यव्याख्यानमाद्रियतां, किमेन-

---

१. **अनभिधानदुराग्रहेणेति** ॥ षट्संज्ञासूत्रस्थभाष्यस्य विना विरोधमेकदेशयुक्तित्वं परिकल्प्यानभिधानोक्तेर्दुराग्रहमूलकत्वकथनमसङ्गतमेव । न च मूलोक्तषाष्ठभाष्यविरोधात् षट्संज्ञासूत्रस्थभाष्यस्यैकदेशयुक्तित्वमभ्युपेयमिति वाच्यम् । दीर्घग्रहणस्यात्वविध्यनित्यत्वज्ञापनपरभाष्यादप्येषामनभिधानबोधनेनैतद्भाष्यद्वयविरोधेन षाष्ठभाष्यस्यैवैकदेशयुक्तित्वकल्पनाया न्याय्यत्वात् । किञ्च भगवतो भाष्यकारस्य लक्ष्यैक-

भिधानदुराग्रहेणेत्यत आह ॥ **तिसृभ्यो जस इत्यादि** ॥ **उक्तत्वादिति** ॥ उक्तप्रायत्वादित्यर्थः । एवं च षट्त्रीत्यत्र विहितविशेषणायोगात्प्रियाष्टाभ्यामित्यादावपि षट्स्वरप्रवृत्तिरव्याहतेत्याशयः । तदन्तेऽपि षट्स्वरप्रवृत्तौ "हल्ग्रहणानर्थक्यमन्यत्राभावादिति" चतुरश्शसीति सूत्रस्थभाष्यव्याकोप इत्यत आह ॥ **दूष्यमिति** ॥ दोषबीजमेकदेश्युक्तित्वमेव ॥ **एके इति** ॥ उपसमस्तार्थमेके इत्युपसर्जनतायामतितिस्रावित्यादिषु स्वरव्यावृत्तिर्जस्ग्रहणप्रयोजनमित्यभिप्रायकतत्सूत्रभाष्यघटकैकशब्दो मुख्यार्थको न तु पूर्वपक्षसमकक्षान्तरसूचकान्यार्थबोधकः । समो मलोपमेके, छन्दसि क्रमेक इत्यादौ त्वन्यार्थक एव, उभयविधप्रामाणिकप्रयोगनिर्वाहायेत्याशयः ॥

**इति दिगिति** ॥ अत्रायं निष्कर्षः । षट्स्वरश्चाष्टन्स्वरश्च तदन्तेपि प्रवर्तत एव । विहितविशेषणाश्रयणे मानाभावात् । अत एव परमचतुर्णामित्यादौ षट्स्वरो बहुज्घटितबह्वष्टाभिरित्यादावष्टन्स्वरश्च निर्बाधः । अष्टन्शब्दान्तबहुव्रीहेरन्तोदात्तत्वासम्भवेनाष्टन्स्वराप्रवृत्त्या तदंशे दीर्घग्रहणस्य व्यावर्त्यालाभादात्वविध्यनित्यताज्ञापकत्वोपपत्त्या न तद्भाष्यं प्रियाष्टादीनामनभिधानसाधकम् । षट्संज्ञासूत्रस्थमपि भाष्यमेतेषामभिधानेप्युपपद्यत एव । तिसृभ्यो जस इत्यत्र जस्ग्रहणप्रयोजनोपपादनावसरे बहुवचननिर्देशसूचितार्थप्राधान्यमहिम्ना गौणे प्रवृत्त्यभावमभिप्रेत्य संज्ञायां कन्युपसंख्यानमिति तिस्रादेशेन निष्पन्ने तिसृका-

---

चक्षुष्कतया तेनानभिधानस्य स्पष्टमुक्ततया लक्षणैकचक्षुष्कतया प्रवृत्तेन षाष्ठभाष्येण तेषामभिधानस्य समर्थनमसमञ्जसमेव । अपि च लक्ष्यैकचक्षुष्कतया षट्संज्ञासूत्रभाष्यस्य लक्षणैकचक्षुष्कतया षाष्ठभाष्यस्य च प्रवृत्तिरिति व्यवस्थायास्सुशकत्वेन न कस्याप्येकदेश्युक्तित्वमित्यपि वक्तुं शक्यम् । अतस्तद्विरोधेन षट्संज्ञासूत्रस्थभाष्यस्यैकदेश्युक्तित्वकल्पना शब्दरत्नग्रन्थखण्डनदुराग्रहमूलकैव । यथालक्षणमप्रयुक्ते इत्यस्य कैयटोक्तमाद्यव्याख्यानं नादरणीयमित्यग्रे निरूपयिष्यते । एतेन नन्वित्याद्याहेत्यन्तस्तिसृभ्यो जस इत्यादिग्रन्थावतरणग्रन्थः प्रत्युक्तः । अतोऽत्रैवमवतरणं युक्तम् । "एवं चतुरश्शसीति सूत्रशेखरोक्तकेचिदित्यादिमतरीत्या षट्त्रिचतुर्भ्यं इत्यत्र विहितविशेषणाश्रयणेन प्रियाष्टाभ्यामित्यादौ गौणे तदप्राप्त्याऽष्टन्स्वरस्य सावकाशताशङ्कामभ्युपेत्य तदनुरोधेन समाधाय चतुरश्शसीति सूत्रशेखरोक्तसिद्धान्तपक्षे विहितविशेषणस्यैवाभावात्तदन्तेऽपि षट्स्वरप्राप्त्या अष्टन्स्वरस्य सावकाशता नास्तीत्याशयेनाह ॥ **तिसृभ्यो जस इत्यादि** ॥ इति । अत्र युक्तमुत्पश्यन्तु सुधियः ।

शब्दे नित्स्वराविघातो जस्ग्रहणस्य प्रयोजनमित्यभिसन्धाय सूत्रेषु लिङ्गवचनयोरतन्त्रत्वाद्गौणेऽपि प्रवृत्तिसम्भवादतितिस्नावित्याद्येव तद्व्यावर्त्यमित्याशयेनोपसमस्तार्थमेक इत्युक्तं भगवता। तेनातितिस्न इति गौणेपि तत्प्रवृत्तिरभ्यनुज्ञाता। एवं षट्त्रीत्यत्रापि बहुवचनेन प्राधान्यविवक्षणायोगात्प्रियचतुरामित्यादेर्हलादिग्रहणव्यावर्त्यसम्भवेन ज्ञापकत्वानुपपत्त्या चतसर्याद्युदात्तनिपातनस्य चतस्रः पश्येत्यत्रान्तोदात्तवारणार्थस्य चतसृणामित्यादौ प्रसक्तविभक्तिस्वरबाधकतायाः प्रतिविधानसम्भवादनिष्टापत्तिः, उक्तस्थले चतुरश्शसीत्येतद्वारणाय स्त्रियां प्रतिषेध इति वचनमेव शरणमिति भगवतो भाष्यकारस्य गूढाशय इत्याहुः[1] ॥

**लत्वस्यैवेति** ॥ अत एव हरितयतेः क्विपि हरिलुनातीत्यादौ परसवर्णलकारे स्थानिवद्भावनिषेधसिद्धिरित्याशयः। ननु सिद्धान्ते प्रविगणय्येति भाष्यप्रयोगबलात्पञ्चमीसमासपक्षस्यानित्यत्वमाश्रयणीयं, न तु प्रत्याख्यातुं शक्यं प्रत्यैषिषन्नित्यादिप्रामाणिकानेकलक्ष्यविरोधादत आह ॥ **वस्तुत इति** ॥ **कालावधारणार्थमिति** ॥ निष्ठायां णेर्लोपः। स च सेट्येवेति वाक्यार्थेन कालावधारणं सम्पद्यत इति भावः ॥ **चिन्त्यप्रयोजनमिति** ॥ प्रत्याख्यातप्रायमित्यर्थः। **प्रशमय्येति** ॥ हलन्ताण्णिचि स्थानिवत्त्वाप्रसक्तेरित्याशयः। ननु बहुवचनसूचितार्थप्राधान्यपुरस्कारेण गौणे प्रवृत्त्यभावस्य तिसृभ्यो जस इति सूत्रस्थेनोपसमस्तार्थमेके इत्यनेन विरोधाद्बहुवचननिर्देशादिति मूलकारोक्तमयुक्तमत आह ॥ **वस्तुत इति** ॥ **न लोपश्शाकल्यस्येति**[2] ॥ अन्यथा निस्सन्दिग्धोच्चारणेन स्वाभिप्रायाविष्करणस्य भाष्यकारशैलीसिद्धत्वात्प्रियाष्टावित्येव ब्रूयादिति भावः ॥

---

१. **आहुरिति** ॥ अत्रेदं बोध्यम्। अष्टन्शब्दान्तबहुव्रीहेस्समासाष्टादेरन्तोदात्तत्वसम्भवेनाष्टन्स्वरप्रवृत्त्या तदंशे दीर्घग्रहणस्य व्यावर्त्यलाभादात्वविध्यनित्यत्वज्ञापकत्वानुपपत्त्या तद्भाष्यमष्टन्शब्दान्तबहुव्रीहेरनभिधाने साधकमेव। षट्संज्ञासूत्रस्थमपि भाष्यमेतेषामनभिधानं द्रढयतीत्यवोचाम। प्रियचतुर्शब्दे नुट्प्रवृत्तेरन्यत्र सिद्धान्तितत्वेन प्रियचतुरामित्यादेर्हलादिग्रहणव्यावर्त्यसम्भवेनेत्युक्तिरनुपपन्ना। सत्यभिधाने हलादिग्रहणव्यावर्त्यन्तु टाडेप्रभृत्यन्तमुपदर्शनीयम्। अन्यत्सर्वं चतुरश्रमिति ॥

२. **न लोपश्शाकल्यस्येतीति** ॥ "आवादेशे वकारस्य न लोपश्शाकल्यस्येति लोपोऽत्र" इति शब्दरत्नपाठमभिप्रेत्यायं ग्रन्थः। अयमेव पाठो युक्तः। नञ्घटितस्त्वपपाठ एव। तदुत्तरग्रन्थस्यालग्नकत्वापत्तेः।

**वाक्यशेषासङ्गतिरिति** ॥ अर्थासङ्गतिप्रयुक्ता चेयं वाक्यशेषासङ्गतिः । तदाह ॥ **प्रयुक्तेष्वपीति** ॥ ननु प्रयुक्तत्वं शास्त्रप्रणयनकालिकशिष्टप्रयोगविषयत्वं, तदितरविषयत्वं चाप्रयुक्तत्वम् । व्याकरणस्मृतेश्शिष्टप्रयोगमूलकत्वात्तादृशलक्ष्यानतिक्रमो लक्षणस्य न्याय्यः । अत एव लक्षणैकचक्षुष्कता शास्त्रकृतां, पृषोदरादिसूत्रारम्भादप्ययमेवार्थोऽवगम्यते । तथा च शिष्टव्यवहार एव प्रयुक्ते साधुत्वावगतिहेतुः, तद्विषये शास्त्रोपयोगस्तु प्रक्रियास्मरणपूर्वकसाधुशब्दप्रयोगस्यैवाभ्युदयहेतुत्वेन श्रुतिसिद्धत्वात् । ये त्वप्रयुक्तास्तेषु लक्षणानतिक्रमेणैव साधुत्वमवगन्तव्यमित्याशयकतया युक्तमेव यथालक्षणमित्यस्य कैयटोक्तं प्राथमिकव्याख्यानमत आह ॥ **प्रयुक्तानामित्यादि** ॥ प्रयुक्तेषु शिष्टव्यवहारबलात्साधुत्ववदप्रयुक्तेषु तदभावादसाधुत्वस्यापि न्याय्यतया तेषामन्वाख्याने शास्त्रस्याप्रामाण्यप्रसङ्ग इत्यभियुक्ताभिप्रायः । ननु किमस्या अभियुक्तोक्तेर्मूलं तत्राह ॥ **यथालक्षणमिति** ॥ **अक्षरार्थ इति** ॥ अलक्षणं यथेत्यन्वयेनैतदर्थलाभः । एवमर्थकमिदमेव भाष्यं निरुक्ताभियुक्तोक्तिबीजमिति परमार्थः । ननु तादृशलक्ष्यान्वाख्यानगोचरशास्त्रप्रणयनाच्छिष्टप्रयोगविषयत्वमेव तेषां कुतो न कल्प्यते । न च भाष्यकृतामप्रयुक्तत्वाभिधानेन तत्परिपन्थितया प्रयुक्तेति कल्पना न युक्तेति वाच्यम् । शास्त्रप्रणयनकालिकशिष्टव्यवहाराभावमादाय भाष्यकारोपवर्णिताप्रयुक्तत्वोपपत्त्या देशकालपरिच्छेदविरहितयोगजप्रत्यक्षवतो भगवतः पाणिनेश्शास्त्रप्रणयनात्पुरातनकाचित्कशिष्टव्यवहारविषयताकल्पनायां बाधकाभावात् । अत एवाप्रयुक्ते दीर्घसत्रवदिति पस्पशास्थभाष्येण न विरोधः । वार्षशतिकेषु वार्षसहस्रेषु च सत्रेषु साम्प्रतिकव्यवहाराभावेपि यथा शास्त्रप्रवृत्तिस्तद्वदप्रयुक्तेष्विति हि तदर्थः । किञ्च प्रयुक्तानामिदमन्वाख्यानमित्यस्य प्रयुक्तानामेवान्वाख्यानमिति हि नार्थः, गणपाठवैयर्थ्यात् । किन्तु शिष्टप्रयोगविषयेष्वसाधुत्वं नापादनीयम् । तद्विसंवादे शास्त्रस्य प्रामाण्यसन्देहापत्तिरित्येव तदर्थः । अत एव टिघुभादीनामन्येषां च सङ्केतशब्दानां शास्त्रबोधितसंस्कारवत्तया शास्त्रकृतां व्यवहारस्य नासङ्गतिः । न चैवं देशभाषाशब्दानामपभ्रंशानामपि शास्त्रविषयतया साधुत्वप्रसङ्ग इति वाच्यम् । शास्त्रबोधितसाधुत्ववत्स्वेव शास्त्रान्तरप्रवृत्त्यभ्युपगमेनादोषात् । प्रातिपदिकसंज्ञा च तत्तद्गणपाठबोधितसाधुत्वोपहितेषु प्रवर्तते । यानि चागृहीतानि प्रातिपदिकानि तेषामप्युपदेशो भाष्यकारैः प्रतिपादित एव प्रत्याहाराह्निके शेषे भाष्ये ।

धातुसंज्ञापि गणपाठादिवत्साधुत्वेनावगतेष्वेव प्रवर्तते । तस्माद्यथालक्षणमित्यस्य कैयटोक्तं प्राथमिकं व्याख्यानमेव युक्तमत आह ॥ **किञ्चेति** ॥ **लक्ष्यैकचक्षुष्कतयेति** ॥ भाष्यकारस्यापि योगजप्रत्यक्षवत्तया त्रैपादिकप्रयोगराहित्यमादायैवाप्रयुक्तत्वोक्तिरिति तथाविधानामन्वाख्याने शास्त्रस्याप्रामाण्यापत्त्या न युक्तं प्राथमिकं व्याख्यानमित्याशयः । ननु कादाचित्कप्रयोगराहित्यमुपादायापि पस्पशादावप्रयुक्तत्वस्य भाष्यकृता प्रतिपादनादिहापि तथैव किन्न स्यादत आह ॥ **एकस्यैवेत्यादि** ॥ पूर्वव्याख्याने प्रियाष्टन्शब्दस्याजादिप्रत्ययपरत्वावस्थायामात्वाप्रवृत्तावपि नान्तत्वेन साधुत्वं, द्वितीयव्याख्याने सुतरामप्रयुक्तत्वेन शास्त्रविषयत्वाभावादसाधुत्वमित्याशयः ॥ **एवं व्याख्यातृकैयटेत्यादि** ॥ अप्रयुक्ते लक्षणानतिक्रमेण कार्यप्रवृत्त्या साधुत्वमित्येवंव्याख्यातृकैयटानुरोधेनेत्यर्थः ॥ **अनभिधानमेवेति** ॥ द्वितीयव्याख्यानुसारादिति भावः ॥

केचित्तु यथाश्रुतसूत्रवशादजादिप्रत्ययपरत्वावस्थायामप्यात्वप्रवृत्त्या प्रियाष्टौ प्रियाष्टा इत्यस्य कृताकारस्य साधुत्वं, हल्ग्रहणापकर्षेण व्याख्यायामकृताकारस्य नान्तस्येति वैपरीत्यमूलकं विरोधमाशङ्क्य यथालक्षणमप्रयुक्ते इत्युक्तं भाष्ये। तत्र यथालक्षणमित्यस्य समासव्याससाधारण्येनान्यतरनिश्चायकप्रमाणानुपलम्भादुभयथा कैयटेन व्याख्यातम् । यद्यप्रयुक्तत्वं प्रकृतशास्त्रप्रणयनकालवृत्तिशिष्टप्रयोगविषयताशून्यत्वं, तदा पस्पशास्थभाष्योक्तरीत्या दीर्घसत्रवत्पुरातनशिष्टव्यवहारविषयतासम्भावनया शास्त्रविषयत्वावश्यम्भावेनात्वविधौ हल्ग्रहणापकर्षणेन व्याचक्षाणस्योत्तरमुनेः प्राबल्येन हलादावादन्तस्य परत्र तदभावतो नान्तस्य च गौणे प्रियाष्टन्शब्दादेस्साधुत्वमित्यभिप्रायकं समासप्रयुक्तं प्राथमिकं व्याख्यानम् । यदि तु शिष्टप्रयोगविषयतासामान्याभावरूपमप्रयुक्तत्वं, तदा यादृशानुपूर्व्यवच्छेदेन यादृशार्थे निरुक्तमप्रयुक्तत्वं तादृशानुपूर्व्यवच्छिन्नस्य तादृशार्थकस्य देशभाषाशब्दवच्छास्त्रविषयत्वायोगादजादिपरत्वावस्थायामादन्तस्य प्रियाष्टन्शब्दादेरसाधुत्वमित्यभिप्रायकं वाक्यप्रयुक्तं द्वितीयव्याख्यानम् । न हि प्रियाष्टन्शब्दादेस्सामान्येनाप्रयुक्तत्वमसाधुत्वं च कल्पयितुं शक्यं, मानाभावात् । कर्मधारयादावपि तदापत्तेश्च । तस्मादिदमनभिधानमालोचनीयमित्याहुः ॥

---

१. **आहुरिति ॥ परे तु सूत्रस्य यथाश्रुतार्थे गौणेऽजादिप्रत्ययपरत्वावस्था-**

**लोपोऽन्तरङ्ग इति** ॥ अपरनिमित्तकत्वादात्वापेक्षमन्तरङ्गत्वमिति भावः ॥ **उभयसापेक्षत्वेनेति** ॥ लोपस्येति शेषः ॥ **समत्वादिति** ॥ यद्यप्युभयसापेक्षत्वविशेषापेक्षत्वयोरुभयत्र तौल्येऽपरनिमित्तकत्वप्रयुक्तमन्तरङ्गत्वं हल्ङ्याादिलोपस्याधिकं, तथापि यस्स इत्यादौ त्यदाद्यत्वात्पूर्वं हल्ङ्यादिलोपवारणाय तदंशे परिभाषाया अनित्यत्वस्याश्रयणीयतया प्रकृतेपि तथैव निर्वाह इत्याशयः ॥

**चयोगे कुत्वाभाव इति** ॥ चोः कुरित्येतत्सूत्रविधेयस्य झल्निमित्तकस्य कुत्वस्याभावो निपात्यते। क्रुङित्यादौ क्विन्प्रत्ययस्येति कुत्वं तु भवत्येव। क्विनो विधानादिति तत्त्वम् ॥ **न्यायसिद्धार्थकथनमिति** ॥ न तु निरुक्तकार्यप्रवृत्तिवैपरीत्ये फलविशेष इति तात्पर्यम् ॥

**अलाक्षणिकानामिति** ॥ शास्त्रान्तरेणाप्राप्तानामपि कार्याणां निपातनाल्लाभार्थमित्यर्थस्तदाह ॥ **तत्रेति** ॥ **इति भाष्येणेति** ॥ उक्थशशब्दस्येति ण्विनिमित्तकवृद्धिराहित्येन भाष्ये निर्देशात्तदभावोऽत्रानुमीयते। ततश्च डस्विधाने-

---

यां कृतात्वस्य साधुत्वं लभ्यते। हल्ग्रहणापकर्षे तु नान्तस्य साधुत्वमिति विरोधमाशङ्क्य यथालक्षणमप्रयुक्त इति भाष्ये उक्तम्। तस्य च भाष्यस्य द्वेधा व्याख्या कृता कैयटेन। तत्राद्यव्याख्यायां नान्तस्य साधुत्वं लभ्यते। द्वितीयव्याख्यायान्त्वसाधुत्वम्। सन्देहनिवर्तकतया प्रवृत्तस्य भाष्यवाक्यस्यार्थद्वयपरताया अनौचित्येनैकतरार्थपरत्वं निर्णेयम्। तन्निर्णयाय शब्दरत्नकृता काञ्चन रीतिं प्रदर्श्य द्वितयीव्याख्याया एवौचित्यं प्रदर्शितम्। युक्तं चैतत्। यद्याद्यव्याख्यारीत्या नान्तस्य साधुत्वमभ्युपैष्यत्तदा प्रियाष्टान इति प्राप्नोतीत्येतदुत्तरं "ई चाक्रवर्मणस्येति सूत्रे भाष्ये तत्रेग्रहणेन नार्थः, अविशेषेण चाक्रवर्मणस्याप्लुतवदित्येव, इदमपि सिद्धं, वशा इयं वशेयमितिवत्, जराया इति सूत्रे भाष्ये यद्येवमतिजरमतिजरैरित्यत्र न प्राप्नोतीत्याशङ्क्य इष्टमेवैतदतिजरमतिजरैरिति भवितव्यमितिवच्च सिद्धमिष्टमेवैतदित्येवावदिष्यत्। तथानुक्त्वा यथालक्षणमप्रयुक्ते इत्युक्त्या शब्दरत्नोक्तयुक्तिभिश्च द्वितीयव्याख्यैव भाष्यकाराभिप्रायगोचरेति स्फुटं प्रतीयते। प्रयोगसामान्याभावबोधकस्य यथालक्षणमिति वाक्यस्थस्याप्रयुक्तशब्दस्य विना प्रमाणं सङ्कोचेन पुरातनकालमात्रवृत्तिप्रयोगविशिष्टत्वरूपशास्त्रप्रणयनकालिकप्रयोगाभाववत्परत्वं वक्तुमशक्यम्। अप्रयुक्ते दीर्घसत्रवदित्यत्रेदानीमननुष्ठीयमानानां दीर्घसत्राणां बोधकश्रुतीनामुपलम्भेन तासामननुष्ठापकत्वलक्षणाप्रामाण्यवारणाय पूर्वमनुष्ठानस्यावश्यकल्प्यतया तद्दृष्टान्तबलेन तत्रत्याप्रयुक्तशब्दस्य प्रयोगसामान्याभावबोधकस्य विशिष्टप्रयोगाभाववत्परत्वेन सङ्कोचेन व्याख्यानेऽप्यत्र सङ्कोचेन व्याख्याने मानाभावात्। किञ्च

ऽप्यवया इत्यत्र ग्रहणाभावादसम्बुद्धौ सावत्वसन्तस्येति दीर्घोऽन्यत्र ह्रस्व एवो-क्थश उक्थशसावित्यादीत्याशयः ।

केचित्तु भाष्ये उक्थशाश्शब्दस्येत्यस्य तत्प्रकृतिकोक्थशाश्शब्दस्येत्यर्थः । यथाश्रुतार्थमुपादाय वृद्ध्यभावकल्पना तु न युक्ता । अत एव शुचीदयन् दीधितिमुक्थशास इत्यादिवैदिकप्रयोगनिर्वाहः । किं चोक्थशोभ्यामित्यादिप्रयोगोप-पत्तये डस्विधानादुक्थशा यज सोमस्येत्यादिप्रयोगनिर्वाहाय सम्बुद्धौ दीर्घनिपातनार्थ-मवया इत्यत्र चकारेणास्य समुच्चयोऽप्यावश्यकः । न च शास्तेर्विचि तथाविध-प्रयोगाणामुपपत्तिरिति वाच्यम् । तथा सत्यसम्बुद्धिप्रथमैकवचनान्तस्याप्युक्थशा इत्यस्य शासिप्रकृतिकविचैव निर्वाहे ह्रस्वघटितप्रयोगाणां शंसुधातुप्रकृतिकेन क्विपा निर्वोढुं शक्यत्वात्सूत्रकृतो ण्विन्विधानस्य वार्तिककृतो डस्विधानस्य चासाङ्गत्यापत्तेः। न च छन्दस्यसम्बुद्धावुक्थश इत्यस्य वारणाय तयोर्विधानमिति वाच्यम् । छन्दस्या-पाद्यमानरूपायोगात् । उक्थश उक्थशास इत्यादीनामुक्थशंसनकर्तृत्वपुरस्कारेणैव

---

शास्त्रस्य प्रक्रियाज्ञानपूर्वकप्रयोगे धर्मनियामकत्वोक्त्या शास्त्रप्रणयनसमकालं तदुत्तरं वा प्रयोगशून्यानामन्वाख्यानं निष्फलमेव । तेषां प्रयोगस्यैवाभावेन तस्य धर्मनिय-मबोधनस्यानावश्यकत्वात् । यदि प्रमाणान्तरेण केषां चित्सत्त्वमनुमीयते, तदा तेषां कदाचिदुपलम्भे प्रयोगप्रसक्त्या तद्विषये धर्मनियामकं शास्त्रमावश्यकं स्यात् । न च तथा प्रकृते तेषामनुमापकं किञ्चित्प्रमाणमस्ति । न चान्वाख्यापकं शास्त्रमेवानुमापकं प्रमाणमिति वाच्यम् । तेषां प्रयोगाभावस्य तत्र तत्र लक्ष्यैकचक्षुष्काभ्यां वार्तिकभाष्य-काराभ्यां कण्ठतो बोधनात् । यत्र तु तावुदासीनौ, तेषां सत्त्वं शास्त्रमनुमापयति। तदनुरोधेनैवोक्तं "अप्रयुक्ते दीर्घसत्रवत्" इति । स्फुटीकृतं चेदमप्रयुक्ते दीर्घसत्रवदिति भाष्यव्याख्यानावसरे "इदमपि यत्र भाष्यवार्तिककाराभ्यामप्रयुक्तत्वं नोक्तं तदभिप्रा-यकमनुमानं बोध्यम्" इति वदता उद्योतकारेण । अत एव येषां शब्दानामप्रयुक्तत्वेना-भिमतानामन्वाख्यानेन शास्त्रस्याप्रामाण्यमाशङ्कितं, तेषां प्रयुक्तत्वं सर्वलक्ष्यद्रष्ट्रा भाष्य-कृता प्रदर्शितं सर्वे देशान्तरे इत्यादिना । एवं स्थितेऽसन्देहार्थं प्रवृत्तायां भाष्यफक्किका-यामप्रयुक्तपदस्य सन्दिग्धार्थबोधकत्वं परिकल्प्य तद्बलेन परस्परविरुद्धार्थबोधककैयटकृत-व्याख्याद्वयस्याप्यर्थभेदेन व्यवस्थां परिकल्प्य प्रामाण्यपरिकल्पनं लक्षणैकचक्षुष्कैर्नादरणी-यम् । एवमपूर्वव्यवस्थाकल्पनां मनसि निधाय शब्दरत्नग्रन्थव्याख्यानावसरे तत्तद्ग्र-न्थावतरणग्रन्थरूपेण ये विषया उद्भावितास्ते सर्वेऽपि न विमर्शकानां हृदये पदमादधति। तथा चेदमनभिधानं सम्यगेवेति विभावयन्त्वित्याहुः ।

स्वार्थबोधकताया वेदभाष्यकारादिसम्मतत्वाच्च । तस्माच्छंसेर्ण्विन्युक्थशासावित्यादय एव प्रयोगा इत्याहुः ॥

**सूत्रकृन्न जानातीति** ॥ अवया इति निपातनं पदान्तमात्रविषयकमित्युक्तावपि रुत्वयत्वयलोपैश्श्वेतवाभ्यामित्येव सूत्रकृन्मते स्यादित्याशयः । वर्णव्यत्ययेन सूत्रकृन्मते तदुपपत्तावपि व्याख्यानाद्वरं करणमिति न्यायेन कात्यायनस्यायं डस्वचनारम्भ इति साम्प्रदायिकाः ।

**ज्ञापनार्थत्वादिति** ॥ अनन्त्यग्रहणात्सामान्यापेक्षाद्विशेषापेक्षमन्तरङ्गमित्यस्याल्पविषयत्वमनाश्रयणं वा कल्पनीयमित्याशयः ॥ **सापि सुवचेति** ॥ नित्यतापि त्यदाद्यत्वस्य प्राथमिकप्रवृत्तिप्रयोजकत्वेन वक्तुं शक्येत्याशयः ॥

---

१. आहुरिति ॥ परे तु भाष्ये उक्थशश्शब्दस्येत्यस्य तत्प्रकृतिकोक्थशाश्शब्दस्येत्यर्थकथनमयुक्तम् । तादृशाशयकत्वे ह्युक्थशाश्शब्दस्येत्येव वक्तुं युक्तत्वात् । जघन्यवृत्त्यार्थबोधनस्यानौचित्यात् । लक्षणाफलीभूतप्रयोजनस्य तत्र दुर्निरूपत्वात् । रूढिलक्षणायां मानाभावाच्च । किञ्च तत्प्रकृतिकोक्थशाश्शब्दस्येति भवदीयग्रन्थे तत्प्रकृतिकण्विनन्तोक्थशाश्शब्दस्येत्यर्थो वाच्यः । यथाश्रुते उक्थशाश्शब्दस्य तत्प्रकृतिकत्वाभावात् । तादृशलक्ष्यार्थस्वीकारेऽपि ण्विन उक्थशश्शब्दप्रकृतिकत्वं न घटते । तस्योक्थशंश्शब्दप्रकृतिकत्वात् । न च नलोपस्य निपातनादुक्थशश्शब्दप्रकृतिकत्वं तस्य युज्यत इति वाच्यम् । लुप्तनकारोच्चारणसामर्थ्यादुक्थशंश्शब्दात् ण्विन्, तत्सन्नियोगेन प्रकृतेर्नलोप इत्येवमर्थस्य पर्यवसानेन ण्विन्प्रत्ययोद्देश्यताया नकारविशिष्ट एव विश्रान्तेः । एवञ्च प्रकृतभाष्यनिर्देशबलेन वृद्ध्यभावनिपातनमिति शब्दरत्नकृदुक्तसरणिरेव ज्यायसी । तथा चासम्बुद्धौ सावत्वसन्तस्येति दीर्घघटितः, अन्यत्र ह्रस्वघटितश्च प्रयोग इष्ट एव । न च डस्विधाने सम्बुद्धावुक्थशा इति दीर्घघटित इष्टः । अत एव अवया इति सूत्रेऽनुक्तसमुच्चायकचकारेणैतस्यापि सङ्ग्रहस्य कैयटादावुक्तमिति वाच्यम् । "आतश्च वैर्थं, स उक्थशश्शब्दस्यान्येन रुरिसद्धः । न तस्य निपातनं क्रियत" इति भाष्येण वैर्थ्यत्वोपपादनाय उक्थशश्शब्दस्यान्येन रुरिसद्ध इति निपातनाभावबोधकेन तद्विरोधादनुक्तसमुच्चायकत्वकथनस्य कैयटादेरयुक्तत्वात् । उक्थशा यज सोमस्येत्यादिप्रयोगास्तु राजा भव युध्यस्वेत्यादिवदसम्बुद्ध्यन्ततयापि नेतुं शक्याः । यदि सम्बुद्ध्यन्ततैव तत्रेष्टा, तदा शास्तेर्विचि तत्प्रयोग उपपाद्यः । एवमेव शुचीदयन् दीधितिमुक्थशास इत्यादयोऽप्युपपाद्याः । न च दीर्घघटितप्रयोगस्य तत्र तत्र दृष्टस्य शासुधातुप्रकृतिकविजन्तेन, ह्रस्वघटितप्रयोगस्य शंसुधातुप्रकृतिकक्विबन्तेन च निर्वाहे सूत्रकृतो ण्विन्विधानस्य वार्तिककृतो डस्विधानस्य च वैयर्थ्यमिति वाच्यम् । ह्रस्वघटितरूपस्याद्युदात्त-

**प्रकारान्तरमिति** ।। एवञ्च प्रथमाशब्दस्य प्रथमाद्वितीयोभयसमुदायाभिधायकताया वक्ष्यमाणत्वेन समासमन्तरा द्विवचनोपपत्तेर्दुर्वचत्वेपि पक्षान्तरपरत्वादिह पृथक्पदत्वकथनं नासङ्गतमिति भावः । वस्तुतो नेदं पक्षान्तरम् । प्रथमाद्वितीयोभयसमुदाये इत्यस्य च विभक्तिसमुदाये प्रथमाद्वितीययोः प्रथमाशब्दो गौण्या बोधक इत्यर्थकतया पृथक्पदत्वस्यैवोद्बोधकम् । अत एव भाष्ये प्रथमयोरित्युच्यते, कयोरिदं प्रथमयोर्ग्रहणं विभक्त्योः प्रत्यययोर्वेति विकल्प्य विभक्त्योरिति विवरणं स्वरसत उपपद्यते । ननु प्रथमयोः पूर्वसवर्ण इत्यत्र प्रथमाशब्देन गौण्या वृत्त्या प्रथमाद्वितीयोभयबोधकत्वं युक्तम् । तस्माच्छसो नः पुंसीति पूर्वसवर्णदीर्घानुवादेन शसस्सकारस्य नत्वानुशासनात् । इह तु प्रथमाशब्देन तयोर्ग्रहणे किं प्रमाणमिति चेत्सत्यम् । द्वितीयायां चेत्यात्वविधानमत्र विभक्तिसमुदायनिरूपितप्राथम्यविशिष्टयोः प्रथमाद्वितीययोर्ग्रहणे प्रमाणम् । अमादेशाभावे हि युष्मदस्मदोरनादेश इत्येव सिद्धे तद्वैयर्थ्यं स्पष्टमेव । न च युष्मानित्यत्र नादेशोत्तरमात्वसिद्धये तदावश्यकमिति वाच्यम् । सुपि चेत्यनेनान्त्यलोपोत्तरं दीर्घेण निर्वाहात् । न च तत्रादेशाभावेपि योचीति यत्वबाधनार्थमात्वविधानमिति वाच्यम् । योऽच्यसुटीति न्यासेन यत्वनिवृत्त्या युष्मदस्मदोरित्यात्वस्य सुवचत्वात् । अतो युक्तमेवात्र प्रथमाशब्देन प्रथमाद्वितीययोर्ग्रहणमित्याहुः ।।

**तस्यैवेति** ।। शेषग्रहणाट्टिलोपपक्ष इव ससुट्कनिर्देशादन्त्यलोपपक्षोऽपि

---

स्वाभीष्टस्य निर्वाहार्थं सूत्रवार्तिकयोरावश्यकत्वात् । अत एव डसः प्रत्ययान्तरत्वं निरस्य ण्विनादेशत्वसमर्थनं स्वरसत उपपद्यते । यदि दीर्घघटितरूपे वाद्युदात्तत्वमभीष्टं, तदा विजन्तत्वे तत्कथमुपपद्यत इति तु न शङ्क्यम् । विजन्तस्य वृषादित्वकल्पनेन तत्सिद्धेः । डसः प्रत्ययान्तरत्वमभ्युपगच्छतामेषैव सरणिराश्रयितव्या । न चैवं डस्विधानं व्यर्थं, उक्थशोभ्यामित्यादेर्ण्विनन्तत्वेनैव सिद्धेरिति वाच्यम् । इष्टापत्तेः । ध्वनितं चेदं "डसपि वक्तव्यः, उत्वार्थं, श्वेतवोभ्यामुक्थशोभ्यामिति । एवञ्चोक्थशा इत्यपि सम्बुद्ध्यर्थं निपातनं कर्तव्यं यदि मन्त्रे दर्शनमस्ति," इति वदता तादृशानां मन्त्रे प्रयोगाभावं सूचयता कैयटेन । स्फुटीकृतं चेदं "निपातनाद्द्वयभावे उक्थशोभ्यामित्यस्य सिद्धेः । शासेर्विचि सम्बुद्धावुक्थशा इत्यस्यापि सिद्धेर्द्वयमपि न कार्यम्" इति वदता उद्योतकारेण । छन्दस्यापाद्यमानरूपाभावान्नातिप्रसङ्गशङ्का । एवञ्च भाष्यस्य यथाश्रुतार्थकत्वेन मूलोपपत्तौ तस्य जघन्यवृत्त्याऽर्थान्तरपरत्वं परिकल्प्य मूलग्रन्थनिरसनप्रयासो विफल एवेत्याहुः ।

सूत्रकृत्सम्मतः। लक्ष्यानुसाराद्व्यवस्थया टाबभावार्थष्टिलोपोऽन्त्यलोपस्तु भ्यमादेशे सत्यकारश्रवणार्थ इति दीक्षितानां निष्कर्षः। ननु टिलोपपक्षानभ्युपगमे त्वं स्त्रीत्यादौ टाबापत्तेर्दुर्वारत्वात्कथमन्त्यलोपपक्ष एव सूत्रकृत्सम्मत इत्युच्यते, तत्राह ॥ **किं चेति** ॥ **सन्निपातपरिभाषयेति** ॥ यद्यपि साम आकमिति सूत्रे भाष्ये युष्मदस्मदोरलिङ्गत्वादेव टापो निवृत्तेस्तदर्थं टिलोपस्यानावश्यकत्वादन्त्यलोपपक्षे प्रसक्तस्य सुटो वारणाय ससुट्कनिर्देश इति व्यवस्थापितम्। ततश्चात्र टान्निवृत्तये परिभाषोपन्यासो न युक्तस्तथापि नपुंसकादेशेभ्यो युष्मदस्मदादेशा विप्रतिषेधेनेति स्वमोर्नपुंसकादिति सूत्रस्थवार्तिकतद्भाष्याभ्यां तदंशे लिङ्गवदर्थकतापक्षस्यापि प्रतीत्या तदनुसारेणायं परिभाषाप्रयुक्तष्टापः परिहार इत्याहुः। ननु सन्निपातनिमित्तकविधेर्विघातकविधौ साक्षात्परम्परया वा यत्र शब्दतो निमित्तत्वमाश्रीयते यथा बुद्धावित्यत्र सन्निपातनिमित्तकाकारस्य टाब्विधौ निमित्तत्वं तत्रैवास्याः परिभाषायाः प्रवृत्तिर्न्याय्या, प्रत्यासत्तेः। अत एवागत्य वितत्येत्यादावनुनासिकलोपोत्तरं तुक्सिद्धिः। प्रकृते च शेषे लोपस्य टाब्विधौ कथमपि शब्दतो निमित्तत्वानाश्रयणान्न तया परिभाषया निर्वाहः। अत एव लिङ्गवदर्थकतापक्षे टिलोपष्टाबभावार्थं इति टिलोप एव टान्निवृत्त्युपायत्वेन प्रदर्शितस्त्यदादीनाम इति सूत्रे भाष्ये इति चेत्सत्यम्। वृत्रहभ्यामित्यादौ कृन्निमित्तकतुग्निवृत्तेस्सन्निपातपरिभाषाप्रयोजनत्वोपवर्णनपरक्रुन्मेजन्त इति सूत्रस्थभाष्यबलेन सामान्यतः सन्निपातनिमित्तकविधिप्रयोज्यधर्मनिमित्तकत्वेन विघातकविधेः प्रवृत्त्यभावस्यैव परिभाषाविषयताया आवश्यकत्वेन प्रकृतविषयेपि तत्प्रवृत्तिस्सुलभा। आगत्येत्यादौ च परिभाषाया अनित्यत्वमेव शरणम्। टिलोपष्टाबभावार्थ इति त्यदादीनाम इति सूत्रभाष्यस्य मतान्तरपरत्वान्न तद्विरोधो दोषायेति विभावनीयमित्याहुः। नन्वन्त्यलोपपक्षस्यैव स्वीकारे विशेषविहिताभ्यामात्वयत्वाभ्यां बाधादेव निर्वाहाच्छेषग्रहणं सूत्रकृतो निरर्थकं स्यादत आह ॥ **प्रत्याख्यातमिति** ॥ भाष्ये इत्यस्य शेषे लोप इति सूत्रे इति शेषः। तत्र हि शेषग्रहणं शक्यमकर्तुमित्युक्तमित्याशयः। अथ सन्निपातपरिभाषया त्वं स्त्रीत्यादौ टान्निवारणेपि युष्माकमित्यादौ सुड्निवारणाय टिलोपसम्पत्तये शेषग्रहणमाश्रित्य ससुट्कनिर्देश एव कुतो न प्रत्याख्यायते तत्राह ॥ **ससुट्कनिर्देश इत्यादि** ॥ **ज्याय इति** ॥ शेषग्रहणप्रत्याख्याने लाघवमित्याशयः। यद्येवं टिलोपष्टाबभावार्थ इति त्यदादी-

नाम इति सूत्रभाष्यासङ्गतिरत आह ॥ **त्यदादीनाम इति** ॥ **आहुरित्युक्त्येति** ॥ तत्र हि भाष्ये "टिलोपष्टाबभावार्थः कर्तव्य इति तत्स्मृतम् । अथवा शेषसप्तम्या शेषे लोपो विधीयते । लुप्तशिष्टे हि तस्याहुः कार्यसिद्धिं मनीषिण" इत्युक्तम् । अत्र मनीषिण आहुरित्यनेन स्वानभिप्रेतत्वावगमादरुचिग्रस्तत्वं प्रतीयत इति तात्पर्यम् ॥

ननु जानातीत्यादावुक्तपरिभाषयैव प्वादित्वप्रयुक्तह्रस्वनिवृत्त्या जा इति दीर्घान्तादेशविधानसामर्थ्येन ह्रस्वनिवारणपरकौमुदीग्रन्थासङ्गतिस्तत्राह ॥ **जानातीत्यादि** ॥ **कथमिति** ॥ एवं च व्यर्थमेव दीर्घग्रहणमित्याशयः ॥ **अनन्त्यस्य पदस्येति** ॥ तदवयवस्याच इत्यर्थः । ननु विधेयत्वादनण्त्वाच्च सवर्णान्तराप्रसक्त्या क्रियमाणं तपरकरणं प्लुतव्यावृत्त्यर्थं भविष्यति । न च तपरसूत्रस्यानणि विध्यर्थत्वात्समानकालिकव्यक्तिषट्कसंग्रहार्थं तपरकरणं, अत एव पचामीत्यादावनुदात्तः, पुत्रीयामीत्यादावुदात्तश्च सिद्ध्यतीति वाच्यम् । अपेक्षितव्यक्तीनां प्रश्लेषेण निर्देशेऽप्यान्तरतम्येनोदात्तादिव्यवस्थायास्सुवचत्वात् । तस्माद्व्यर्थमेव दीर्घग्रहणमत आह ॥ **तपरकरणेनेति** ॥ वर्णान्तरोच्चारणे सहायसम्पादनेन कृतार्थस्य तपरत्वस्यैतादृशफलनिष्पादकत्वे मानाभावादित्याशयः । नन्वाकारप्रश्लेषाद्दीर्घात्मक एवाकारो न तु प्लुत इत्यर्थात्तदप्रवृत्तिरिति युक्तं ज्ञापकत्वमत आह ॥ **प्रश्लेषेणेति** ॥ **उपायान्तरमिति** ॥ प्रश्लेषेपि तत्सामर्थ्यात्त्रैपादिकासिद्धत्वबाधापूर्वकं प्लुतव्यावृत्तेः कल्पनीयतया विनिगमनाविरहाद्दीर्घग्रहणेनैव तन्निवृत्तिकल्पनाभ्युपगमे ज्ञापकत्वानुपपत्तिरित्यभिसन्धिः । वैकल्पिकेनेत्यस्य व्यवस्थितविकल्पविषयत्वेनेत्यर्थः ॥ **हल्यशीति** ॥ इदम इद स्थाने अकारो हलादावपीत्यर्थादकारे पररूपे सिद्धमाभ्यामित्याशयः ॥

**इति दिगिति** ॥ दिगर्थस्तु नास्याः परिभाषायाः अनन्यथासिद्धं प्रयोजनम् । यूयं वयमित्यत्र मकारप्रश्लेषाच्छीभावाभावः । युष्मभ्यमस्मभ्यमित्यत्र चाभ्यमादेशटिलोपाभ्यां निर्वाहः । अन्यत्र द्वयोरित्यादावनित्यत्वेन परिहरणीय एव दोषः । न च पिबेर्गुणप्रतिषेधश्चोदितस्स न वक्तव्यो भवतीति ज्ञापकसिद्ध्या प्रकृतपरिभाषया गुणप्रतिषेधवचनकल्पनाक्लेशपरिहारः प्रयोजनमित्युपदर्शितमेव

भाष्यकारैरिति वाच्यम् । पिबेत्यदन्तादेशविधानेन तत्र गुणनिवारणस्य स्थानिवत्सूत्रे भाष्ये स्पष्टतया तस्याप्यन्यथासिद्धत्वात् । न च गुरुं गरयत्युरुं वरयतीत्यादाविष्टवद्भावप्रयुक्ते गराद्यादेशे सत्यत उपधाया इति वृद्धेः प्रसक्तायाः परिहारस्तत्प्रयोजनमिति वाच्यम् । संज्ञापूर्वकविधेरनित्यत्वेनापि तदुपपत्त्या तस्याप्यन्यथासिद्धत्वात् । तत्परिभाषानभ्युपगमे चानन्यथासिद्धमेतादृशप्रयोजनं विहाय गुणप्रतिषेधस्यान्यथासिद्धस्य प्रयोजनत्वोपवर्णनपरभाष्यप्रामाण्येन तत्र वृद्धेरभीष्टत्वस्यैव कल्पयितुं युक्तत्वाच्च । तस्मादियमनावश्यकी परिभाषा, सम्भवमात्रेण तु ज्ञापनप्रदर्शनं भाष्यकाराणां युक्तमेव । अत एवेयं लक्ष्यसमर्थनार्थं यत्र क्वापि न व्यवहृतेत्याहुः ॥

**एवं चेति** ॥ अन्त्यलोपपक्षेऽभ्यमादेशीयाकारनिवर्तकतायास्सामर्थ्योपक्षये सतीत्यर्थः ॥

**पररूपबाधनार्थमिति** ॥ अन्त्यलोपपक्षे प्रकृत्यकारेण प्रसक्तपररूपबाधनार्थमित्यर्थः ॥ **परिशेषसिद्धोऽर्थ इति** ॥ अविशेषेणात्वं विधाय यत्वस्याजादौ विधाने हलादावेवात्वं पर्यवस्यतीति भावः । यदि तु यत्वमेवोत्सर्गमाश्रित्य रायो हलीत्यतो हलीत्यनुवर्त्य हलादावात्वं विधीयते तदा यत्वविधावज्ग्रहणमनुपयुक्तमिति बोध्यम् ॥ **यत्वं स्यादिति** ॥ ननु ज्ञापनात्पूर्वं यत्वविधिगृहीतपर्युदस्यमानसमर्पकादेशपदेन प्राथमिकाकारस्थानिकादेशविशिष्टविभक्तेर्ग्रहीतुमशक्यत्वेन तद्भिन्नत्वस्याक्षततया यत्वनिवृत्त्यर्थमभीष्टरूपसम्पत्त्यर्थं च सार्थकमेव शित्त्वमिति कथं तस्य मूलकारोक्तसर्वे सर्वपदादेशा इत्यर्थज्ञापकता, यदि तु आदेः प्रवृत्तौ फलाभावेनादेः परस्येत्येतद्बाधितत्वाच्चरमवर्णस्य प्रवृत्त्या पररूपे सामुदायिकादेशरूपविभक्तितया यत्वनिवृत्तिरूपसिद्ध्योस्स्पष्टतया शित्त्ववैयर्थ्येन ज्ञापकत्वमिति मन्यते, तर्हि स्वांशे चारितार्थ्यासम्भवः, शित्त्वमन्तरापि निर्वाहात् । अतस्स्वांशे चारितार्थ्यस्योपपत्तये निरुक्तार्थज्ञापकतां द्रढयितुं शङ्कते ॥ **नन्वेवमिति** ॥ **प्रत्यासत्त्येति** ॥ यावता विनानुपपत्तिपरिहाराभावस्तावत्पर्यन्तं ज्ञाप्यत इति प्रत्यासत्तिमूलकयुष्मदाद्युच्चारणेन विहितसामुदायिकादेशस्यैव पर्युदासविषयतया पररूपस्य तथात्वाभावे शित्त्वज्ञापितसमुदायादेशकल्पकेनादेः प्रवृत्तेनाकारादेशेन यत्वनिवृत्त्या सार्थक्येनादेः परस्येत्येतद्बाधे मानाभावादभीष्टरूपसम्पत्तये शित्त्व-

मावश्यकमिति न स्वांशे चारितार्थ्यविरोध इति सुस्थं ज्ञापकत्वमित्याशयः । तदे-तदाह ॥ **एवं चेति** ॥ ननु मास्तु प्रत्यासत्तिज्ञापकता, नाप्यानुमानिकादेश-विकल्पना । शित्त्वमपि मास्तु, तव ममेति त्वादेरकारविधाने फलाभावादेवादेः परस्येत्येतत्परिभाषां बाधित्वा चरमवर्णस्य सकारस्य प्रवृत्तौ पररूपे सामुदायिका-देशरूपविभक्तितया यत्वनिवृत्त्या सूपपादमतो वृथैवेदं शित्त्वमानुमानिकस्थान्या-देशभावज्ञापनं चेति चेन्न । सर्वे सर्वपदादेशा इत्येतादृशाभियुक्तवचनसिद्धस्यैरु-रित्यादौ कल्प्यमानस्य तेस्तुरित्याद्यानुमानिकस्थान्यादेशभावस्य स्थानिवत्सूत्रविष-यताप्रयोजकशास्त्रीयत्वसम्पादनेन प्रयोजनवतश्शित्त्वस्य वैयर्थ्यायोगात् । इत्थं च ज्ञापनोपपत्तये टाङ्योर्यादेशवारणाय च प्रत्यासत्तिकल्पनाप्यवश्यमाश्रयितव्या । अन्यथा टकारङकारयोरित्संज्ञायां तस्य लोप इत्येतद्बोधितानुमानिकादेशरूपानु-बन्धविनिर्मुक्तयोष्टाङ्योर्यत्वगृहीतपर्युदासविषयसामुदायिकादेशरूपतया यत्वानुपप-त्तिस्स्पष्टैव । प्रत्यासत्त्याश्रयणे तु नायमादेशो युष्मदाद्युच्चारणेन विहित इति न दोष इति वदन्ति ॥ **कृत्वा इत्यादाविति** ॥ प्रकृत्येत्यादाविति शेषः ॥ **अपास्तमिति** ॥ त्त्वामात्रस्याप्यर्थवत्त्वेन तथाविधस्थान्यादेशकल्पनायां मानाँ-भाव इत्याशयः ॥

वस्तुतस्त्वर्थवत्येव स्थान्यादेशभावविश्रान्तिरित्यनेनानर्थकस्य न स्थानिवत्त्व-मित्येव बोध्यते; न त्वर्थवदवयवकसमुदायस्य स्थानित्वं नेति । अत एव राज-पुरुष इत्यादौ सुपो धातुप्रातिपदिकयोरित्यनेन परिकल्पितसामुदायिकस्थानिव-द्भावेन तदादेशस्य समासत्वादिकमुपपद्यते । वीवधशब्देऽप्युपसर्गस्य घञिति परिकल्पितोपसर्गविशिष्टसङ्घातरूपविवधशब्दात्मकस्थानिनिष्ठविवधशब्दत्वस्याति -

---

१. **मानाभाव इत्याशय इति** ॥ स्थानिवद्भावस्य कार्यार्थतया यत्रार्थवद-वयवकसमुदायस्य स्थान्यादेशभावकल्पनामन्तराऽभीष्टस्यासिद्धिस्तत्र तादृशसमुदायस्य स्थान्यादेशभावकल्पनेऽप्यन्यत्र तत्कल्पनायां मानाभाव इत्याशय इत्यर्थः । ध्वनितं चेदं स्थानिवत्सूत्रे शब्दरत्ने । विवेचितं चेदं तत्रैवास्माभिः । तदेतदाविष्करोति वस्तुत इत्यादिना निष्कर्ष इत्यन्तेन ग्रन्थेन । एवञ्चात्रैवं मूलग्रन्थनिष्कृष्टाशयमुपवर्ण्य ग्रन्थकारः स्थानिवत्सूत्रशब्दरत्नव्याख्यायामेतत्समानार्थकस्य शब्दरत्नग्रन्थस्य चिन्त्यतां कथमवो-चदिति सुधीभिराकलनीयम् ।

देशः । तथा च यत्र प्रकृत्येत्यादौ समुदायादेशे प्रकृतिप्रत्ययादिविभागसम्मोह-स्तत्र तुगाद्युपपत्तये तदवयवानामप्यर्थवत्त्वात्स्थानित्वमिति निष्कर्षः ॥

**भाष्यविरोधादिति** ॥ ज्यादादीयस इत्यत्र लोपानुवृत्त्यकृत्सार्वेति-दीर्घाभ्यां सिद्धावादादेशविधानं ज्ञापकमित्युक्तं भाष्ये । यद्यङ्गोद्देश्यककार्यप्रवृत्तौ पुनरङ्गोद्देश्यकं कार्यं नेत्येव परिभाषार्थस्तदा ज्ञापकभूमिविरोधाद्भाष्यविरोधापत्तिः । तस्मादकारप्रश्लेष एव मूलकारोक्तस्तवममेत्यत्र स्यादेशवारणोपाय इत्याशयः ॥

केचित्तु युष्मदस्मदोरनादेश इत्यत्रादेशशब्देन यस्यादेशो भावी स गृह्यते । अत एवानादेश इति चरितार्थम् । अन्यथा युष्मदस्मदोरविशेषेणात्वयत्वे विधाया-देशे लोप इत्येव ब्रूयात् । एवं च विभक्त्यादेशात्पूर्वमेव यत्वात्वलोपानां प्रवृत्ति-रिति तव असित्याद्यवस्थायामशादेशस्यादेशयोर्यौगपद्येन प्रवृत्तौ विशेषविहितेनाशा-देशेन स्यादेशस्य बाधादभीष्टसिद्धिः । यदि तु तक्रकौण्डिन्यन्यायस्य त्यदादि-कार्येषु न प्रवृत्तिः, अत एव नेदमदसोरिति सार्थकम् । अन्यथा हलि लोपेन बाधात्त्यदाद्यत्वस्याप्रवृत्तौ तद्वैयर्थ्यं स्पष्टमेव । अत एव स इत्यादेस्सिद्धिः । अन्यथा तदोस्सस्सावित्यत्रानन्त्यग्रहणस्य प्रत्याख्यानाद्विशेषविहितेन सत्वेन बाधा-त्त्यदाद्यत्वस्याप्रवृत्तौ तदसङ्गतिरेव, सिद्धान्ते तु परत्वात्सत्वे पुनः प्रसङ्गविज्ञाना-त्त्यदाद्यत्वमित्युच्यते, तर्हि प्रकृतेऽपि परत्वादशादेशे सकृद्गतिन्यायात्स्यादेशाप्रवृत्ता-वभीष्टसिद्धिरित्याहुः ॥

---

१. **आहुरिति** ॥ परे तु युष्मदस्मदोरनादेश इत्यत्रादेशशब्देन यस्यादेशो भावी स गृह्यत इति न युक्तम् । "सुट्प्रतिषेधस्तु आदेशे लोपविज्ञानात्" इति साम आकमिति सूत्रवार्तिकस्वारस्यभङ्गापत्तेः । यस्या विभक्तेरादेशो भावी तस्यां हलादौ विभक्तावित्यर्थसम्पत्त्याऽऽदेशे हलादित्वस्यानपेक्षणाद्युष्मदस्मदोरनादेश इति सूत्रे "न चादेशो हलादिरस्ति" इति भाष्यविरोधापत्तेश्च । अनादेश इत्यनेनायमर्थो ज्ञाप्यत इत्यप्ययुक्तम् । आदेशे लोप इति न्यासेऽपि आदेशशब्दस्यैतादृशस्यैव ग्रहणे तादृशन्या-सस्य सुवचतयाऽनादेश इत्येतद्वैयर्थ्यस्य तदवस्थत्वात् । भाष्याविचारितफलकसूत्रा-क्षराणां पारायणमात्रफलकताया अन्यत्रोक्तत्वाच्च । तस्मादशादेशस्यादेशयोर्यौगपद्येन प्रवृत्तेर्दुरुपपादतया तत्र स्यादेशवारणाय मूलोक्तैव सरणिराश्रयितव्येत्याहुः ।

नन्विति॥[1] साम आकमित्ययुक्तम्। उद्देश्यत्वेन गृहीतस्य सामः कदाप्यभावात्। न ह्युद्देश्यतावच्छेदकरूपेणोद्देश्यसिद्धिमन्तरा कार्यविधानं युज्यते। तदुक्तं वृद्धिसूत्रे भाष्ये "सतो हि कार्यिणः कार्येण भवितव्यमिति।" इत्थं च कथं साम उद्देश्यत्वेन ग्रहणं कथं वा तत्सामर्थ्यात्सुडागमव्यावृत्तिरित्यतो निष्कर्षमाह॥ अयं भाव इति॥ सामः प्रसङ्गे इति॥ सङ्घातस्याप्रसिद्धत्वेपि खण्डशः प्रसिद्धिमास्थाय तथा निर्देशस्सुडादिव्यावृत्त्यर्थः। साम इति स्थानषष्ठ्या निवर्त्यनिवर्तकभावसम्बन्धबोधकतया सान्निवर्तक आकमित्युक्तावाकमात्मकादेशनिरूपितनिवर्त्यता द्वयोरपि सुडामोरविरुद्धा। रोपधयोरुभयोरपि रमागमीयनिवर्त्यतावत्। निवर्त्यता च प्रयोगाभाव एव, तदाह॥ अत्यन्तमप्रयोगो बोध्यत

---

१. नन्वित्यादीति॥ नन्वित्यादिरवहेलनं सूच्यत इत्यन्तो ग्रन्थो मूलानुगुण इति दर्शयितुं मूलयोजनाप्रकारः प्रथमं निरूप्यते। तथाहि। ननु कृते हि शेषे लोपेऽकारान्तत्वात्प्राप्तस्सुट् ससुट्कस्य स्थानित्वेन निर्देशसामर्थ्यान्निवर्तत इति मनोरमोक्तमयुक्तम्। आकम्प्रवृत्तिकाले शेषे लोपस्याप्रवृत्तत्वेनानदन्तत्वात्सुटोऽप्रवृत्त्या तस्य स्थानित्वेन निर्देष्टुमशक्यत्वात्। अतो मूलकाराशयं विवृणोति शब्दरत्नकारः अयं भाव इत्यादिना सकारोच्चारणसामर्थ्यादित्यन्तेन ग्रन्थेन। ननु शब्दानित्यत्ववारणाय साम आकमित्यस्य सुडामोर्बुद्धिप्रसङ्गे आकम्बुद्धिः कार्येत्यर्थस्याङ्गीकारेऽप्येतच्छास्त्रजन्याकम्बुद्धिकाले आम्बुद्धिसत्त्वेऽपि सुट्बुद्धेरभावेन विशिष्टबुद्धेर्दुर्वचत्वात्ससक्ताम्बुद्धेरेव निवर्तयितुं शक्यतया कथं सुट्बुद्धेर्निवृत्तिसम्भवस्तत्राह॥ तत्र सकारबुद्धेरित्यादि॥ यथा तत्तद्वचनसामर्थ्यादन्यत्र साम्प्रतिकाभावे भूतपूर्वगतिराश्रीयते, तथा प्रकृते ससुट्कनिर्देशसामर्थ्याद्भाविन्या बुद्धेर्ग्रहणमभ्युपेयम्। अन्यथा सकारोच्चारणवैयर्थ्यापत्तिरिति भावः। न चैवं युष्माकमित्यादेर्निर्वाहेऽपि प्रत्ययोत्तरपदयोश्चेति सूत्रभाष्योदाहृतस्यातित्वाकमित्यस्यासिद्धिः। तत्र सुट्बुद्धेर्भावित्वस्याप्यसम्भवेन साम आकमित्यस्याप्रवृत्तेरिति वाच्यम्। तत्र सुड्ग्रहणस्य सूत्रे सकारग्रहणस्य चागमोपलक्षकत्वेन यत्रामागमयोर्बुद्धिः प्रसक्ता तत्राकम्बुद्धिः कार्येति सूत्रार्थस्य पर्यवसन्नत्वेनान्यत्र सुड्बुद्धेरिव प्रकृते नुडागमबुद्धेर्भाविन्यास्सम्भवेन सूत्रप्रवृत्तेरव्याघातात्। स्पष्टं चेदमुद्योते। उक्तमर्थं प्रमाणयति भाष्ये स्पष्टमित्यनेन। अस्य इतीत्यादिः। यद्वा सामर्थ्यादितीत्यत्रेति शब्दो मध्ये मणिन्यायेनोभयान्वयीति बोध्यम्। एवं कैयटाद्याशयमुपवर्ण्य तन्मतेऽतित्वाकमित्यादिसिद्धये तत्र तत्र सुड्ग्रहणस्य सूत्रे सकारग्रहणस्य चोपलक्षणत्वे गौरवं मत्वा लघूपायमाह॥ तन्निवृत्तिश्चेत्यादिना॥ भाष्ये स्पष्टमिति मध्ये मणिन्यायेनात्रापि सम्बध्यते। नन्वामि साम्त्वस्याभावात्कथं तन्निष्ठस्थानितायाः साम्त्वमवच्छेदकं, तत्राह॥ आहार्यारोपेणेति॥ न चैवमविद्यमानस्य साम्त्वस्याहार्यारोपेणामीव भिस्यपि सुवचतया तत्राप्याकमादेशापत्तिरिति वाच्यम्। साम्त्वस्य सकारविशिष्टाम्त्वरूपतया तत्र सामर्थ्यात्सकारवैशिष्ट्यांशे

इति ॥ **एवमेवेति** ॥ प्रसक्तनिवृत्तिमात्रमेवेत्यर्थः । ननु शब्दनित्यतायामादेशांशे कदाप्यप्रयुज्यमानस्य स्थानित्वेनाभिमतस्य प्रसङ्ग एव दुर्वचः । ततश्च स्थान्यादेशभाव एव विलीनस्स्यादिति महाननर्थापात इत्यत आह ॥ **प्रसक्तबुद्धेरिति** ॥ बुद्धीनामेवायं निवर्त्यनिवर्तकभावः, न तु शब्दानाम् । तत्र निवर्त्यमाना चावास्तवी भ्रान्तिरूपा बुद्धिः । तन्निवर्तिका तु वास्तवी निश्चयात्मिका, यथा नेदं रजतमिति पाश्चात्यनिश्चयबुद्धिः प्राक्तनशुक्तिगोचररजतबुद्धेर्निवर्तिका तद्वत् । स्पष्टं चेदं स्थानिवत्सूत्रे भाष्ये । इत्थं च युष्माकमित्यादावाकमि प्रसक्तायास्साम्त्वबुद्धेर्निवृत्तिरनुशासनेन बोध्यते । न तु सामो निवृत्तिराकमः प्रवृत्तिश्चेति परमार्थः ।

---

आरोपाङ्गीकारेऽप्यन्यांशे तदङ्गीकारे मानाभावात् । ससकारग्रहणसामर्थ्यादिति भाष्येण सकारवैशिष्ट्यांश एवारोप इति स्पष्टं प्रतीतेः । अतित्वाकमिति रूपमनभ्युपगच्छतां मतमाशङ्क्य खण्डयति ॥ न चेत्यादिना ॥ एवं स्थिते शब्दरत्नग्रन्थस्यायं भाव इत्याद्याकम्नुडभावौ सिद्धावित्यन्तस्यैकाभिप्रायकतया योजनं, आम्येव साम्त्वस्याहार्यारोपेणेत्यादिग्रन्थस्य प्राचीनाशयपरतया योजनं च कैयटोद्योतादिग्रन्थापरिशीलनमूलकमिति स्फुटीभवति विमर्शकानाम् । किञ्च सामर्थ्याद्भाविबुद्धेर्ग्रहणस्योपपादितत्वेऽपि तन्निवृत्तिश्चेति ग्रन्थावतरणे स्थान्युच्चारणाभावस्य समकालिकत्वनियमादित्यादिकथनं कथं घटेत । भिन्नकालिकत्वस्य सामर्थ्यमूलकत्वेन सिद्धेः । न च नियमभङ्ग इति वाच्यम् । न हि वचनस्यातिभारोऽस्तीति न्यायेनोक्तनियमस्य सामर्थ्येनैव विघटयितुं शक्यत्वात् । किञ्च तन्निवृत्तिश्चेत्यादिग्रन्थस्य पूर्वग्रन्थशेषत्वे सकारबुद्धेः प्रकृते साम्प्रतिक्या अभावेन भाविन्या ग्रहणमिति पूर्वग्रन्थस्य, स्थानिवद्भावेन साम्त्वमेव न त्वाम्त्वमित्युत्तरग्रन्थस्य च परस्परं विरोधापत्तिः । स्थानिवत्त्वेनाम्त्वाभावेन भाविन्या अपि सकारबुद्धिप्रसक्तेरेवासम्भवात् । किञ्चैवं सत्येतत्सर्वोपपादनानन्तरमेवोक्तार्थं प्रमाणयितुं भाष्ये स्पष्टमिति वक्तव्ये तन्निवृत्तिश्चेत्यतः पूर्वं मध्ये तदुक्तेः स्वारस्यं भज्येत । किञ्च सर्वत्र अयं भाव इत्युपक्रमे इतिशब्देन ग्रन्थसमाप्तिर्ग्रन्थकारशैलीसिद्धा भवदुक्तसमन्वये भज्येत । किञ्चैतत्समानाकारकशेखरग्रन्थे सामर्थ्यादित्यनन्तरमितिशब्दस्य पूर्वोक्तग्रन्थपरिसमापकतया दृष्टत्वेन तत्समानाशयकशब्दरत्नग्रन्थस्य मदुक्तरीत्यैव समन्वय उचित इति विभावनीयम् । आम्येव साम्त्वस्याहार्यारोपेणेत्यादिग्रन्थस्य खण्ड्यमानप्राचीनमताभिप्रायकत्वे तत्खण्डनप्रकारस्याप्यवश्यवक्तव्यतया तदनुपलम्भेन न्यूनतापत्तिः । भाष्यविरुद्धकल्पना व्यर्थेत्याद्येव तत्खण्डनपरमिति तु न शङ्क्यम् । तस्य ग्रन्थस्य न चेत्यादिशङ्काग्रन्थखण्डनपरताया एवौचित्यात् । अन्यथा न नुडित्यनन्तरमेव "इति भाष्यविरुद्धकल्पना व्यर्था" इति ब्रूयात् । मतान्तरपरग्रन्थव्यवहितस्य तस्यात्र योजनायास्सर्वथाऽनुपपन्नत्वादित्यलं पल्लवितेन । अत्रत्यं तत्त्वं विदांकुर्वन्तु सुधिय इत्याहुः ॥

नन्वाकमादेशात्पूर्वं शेषेलोपाभावेन प्रकृतेरदन्तत्वाभावात्सुटोऽप्रवृत्त्या विशिष्टस्य सामः प्रसङ्गो दुर्वचः । किन्तु विशकलित एव सुडागमप्रसङ्गो वाच्यः । ततश्चाकमादेशेन स्वप्रवृत्तिकाले सन्निहितप्रसङ्गत्वादामो निवृत्तिः कर्तुं शक्यते । भाविनमसन्निहितं प्रसङ्गमास्थाय सुडागमः कथं निवर्तयितुं शक्येत, तत्राह ॥ **तत्र सकारेत्यादि** ॥ भाविनस्तात्कालिकस्य च प्रसङ्गस्य सामान्येन निमित्ततामाश्रित्य निवृत्तिर्बोध्यते । सा च सुडामोः क्रमेण पर्यवस्यतीत्याशयः । नन्वेवमपि निवृत्तिर्नाम स्थानिन उच्चारणाभावः । स च यस्मिन्नवकाशे यस्योच्चारणप्रसङ्गस्तस्मिन्नवकाशे तदन्यस्योच्चारणाद्भवति । अवकाशश्चोच्चारणकाल एव । इत्थं चादेशोच्चारणप्रयोज्यस्थान्युच्चारणाभावस्य समकालिकत्वनियमाद्विभिन्नकालिकसुडुच्चारणाभावस्य कथमाकमादेशीयोच्चारणप्रयोज्यत्वमित्यत आह ॥ **तन्निवृत्तिश्चेति** ॥ सुड्निवृत्तेराकमुच्चारणं न साक्षात्प्रयोजकं, किन्तु तदुच्चारणप्रयुक्तस्वकीयोच्चारणप्रयोजकनिमित्ताभाव इति तात्पर्यम् । तदाह ॥ **आमोऽभावादिति** ॥ निमित्ताभावमेव स्फुटयति ॥ **साम्त्वमेवेति** ॥ ननु विशकलितप्रसक्तिकयोस्सुडामोः पूर्वपरयोरिव प्रत्येकमेव स्थानिताविश्रान्तेर्न्याय्यतया सङ्घातधर्मस्य साम्त्वस्यातिदेशो दुर्वच इति चेत्सत्यम् । साम इति समाहारद्वन्द्वनिर्देशबलात्समुदायस्य प्राधान्येनोपस्थित्या तत्रैव स्थानषष्ठ्युपस्थापितस्थानितापर्याप्तेश्शब्दमर्यादया लाभेन तद्गतधर्मस्य स्थानिवत्त्वेन सौलभ्यान्न काप्यनुपपत्तिरित्याहुः । इत्थं भाष्यकृत्सम्मतमात्मीयसिद्धान्तमुपवर्ण्य प्राचीनोद्घोषं दूषयति ॥ **आहार्यारोपेणेत्यादिना** ॥ युष्मदस्मद्भ्यां परस्य साम आकमादेश इत्युक्तावनाहार्यसाम्त्ववतोऽप्रसिद्ध्या शास्त्रवैयर्थ्यादाहार्यारोपविषयसाम्त्ववतो ग्रहणं, तादृशश्च प्रकृते आमेव नान्यः । फलाभावात् । न च भिसस्साम्त्वारोपेणाकमादेशे स्थानिवत्त्वेन भिस्त्वातिदेशाप्रवृत्तेरन्त्यलोपपक्षे प्रसक्तस्यैसो निवृत्तिः प्रयोजनमिति वाच्यम् । मकारान्तरप्रश्लेषेण यूयं वयमित्यादावमश्शीभाववदैसादेशस्याकमो निवर्तयितुं शक्यत्वेन भिस आकमित्युक्तावपि तत्फलसिद्ध्या साम आकमित्येतद्वैयर्थ्यस्य तदवस्थत्वात् । यद्वा साम आकमित्यत्रामपि तन्त्रेण निर्दिष्टः । एवं च साम्त्ववत आम आकमित्यर्थान्न कश्चिद्दोष इति प्राचीनानामाशयः ॥ **भाष्यविरुद्धकल्पनेति** ॥ भाष्ये हि 'ससकारग्रहणाद्भाविनस्सुट आकमादेशो विज्ञायत, इत्युक्तम् । आरोपस्याभीष्टत्वे हि ससकारग्रहणादित्यस्य स्वारस्यभङ्ग इत्याशयः । व्यर्थेत्यनेन

भाष्यकारानुगृहीतेन मदुक्तप्रकारेण सुगमतया निर्वाहादारोपाश्रयणं प्राचीनानां वृथा प्रयास इत्यवहेलनं सूच्यते ॥

**अभिमानेनेति** ॥ 'जहत्स्वार्था तु तत्रैव रूढिर्यत्र विरोधिनी'त्यभियुक्तवचनबलाद्यत्र रथन्तरादौ रूढ्यर्थावयवार्थयोः परस्परविरोधस्तत्रैव जहत्स्वार्थावगमात्प्रकृते तादृशवृत्तिप्रयोजकीभूतस्य विरोधस्य दुर्वचतया जहत्स्वार्थताय अभिमान एवात्र मूलकारस्य हेतुरित्याशयः ।

केचित्तु वृत्तावुपसर्जनांशे संख्याविशेषानवगमस्य समर्थसूत्रस्थभाष्यकारीयसिद्धान्तसिद्धतया वचनग्रहणसामर्थ्याद्द्वित्वादिबोधकत्वानुवादेन विधीयमानानां युवाद्यादेशानां वृत्तिघटकोपसर्जनीभूतयुष्मदस्मदोः प्रवृत्तौ जहत्स्वार्थतायामजहत्स्वार्थतायां वा भूतपूर्वगतिरेव शरणमिति मूलकाराशयमुत्प्रेक्षन्ते ।

ननु वचनग्रहणसामर्थ्यात्कृत्रिमाकृत्रिमन्यायो बाध्यत इत्ययुक्तम् । द्वयोरेकस्मिन्नित्युक्तौ हि विभक्त्यपेक्षया प्राधान्याद्युष्मदस्मदोरेव स्यादतो वचनग्रहणा-

---

१. **उत्प्रेक्षन्त इति** ॥ परे तु वृत्तावुपसर्जनांशे संख्याविशेषानवगमस्य समर्थसूत्रभाष्यसम्मतस्यौत्सर्गिकत्वमभ्युपगतं दीक्षितादिभिः । यत्र तु संख्याविशेषावगतिर्मानान्तरसिद्धा तत्र तदवगतिरिष्टैव । अत एव "वृत्तौ ह्युपसर्जनानामेकत्वसंख्या औत्सर्गिकी । द्वित्वादिकन्तु प्रयत्नलभ्यमिति भाष्ये स्थितम्" इत्युक्तं मनोरमायाम् । अत्रैकत्वसंख्येति प्रतीकमुपादाय "अभेदैकत्वसंख्येति तदर्थः" इति शब्दरत्ने व्याख्यातम् । अनेन यत्र संख्याविशेषावगतिप्रयोजकप्रयत्नो दृश्यते, तत्र संख्याविशेषावगतिरिति स्पष्टं प्रतीयते । अत एव मासजात इत्यत्र मासे एकत्वप्रतीतिस्सिद्धा । तत्रैकत्वप्रतीतिमन्तरा परिच्छेदकत्वासम्भवेन जातस्य परिच्छेद्यत्वासम्भवात्कालाः परिमाणिनेति समासो दुर्लभ इति तत्र समास एवैकत्वप्रतीतौ मानम् । एवं तावकीन इत्यादौ तवकाद्यादेशादिकम् । एवञ्च प्रकृते त्वाद्यादेशादिकमेव युष्मादाद्यर्थे संख्याविशेषावगतौ मानं भवतीत्यजहत्स्वार्थायां भूतपूर्वगत्याश्रयणं तन्मते नोपयुज्यत इति भूतपूर्वगतिमाश्रयतो मनोरमाकारस्य जहत्स्वार्थापक्ष एवादरस्य वक्तव्यतया तस्याभिमानोक्तिस्सम्यगेवेति मनोरमाकारस्याभिमानरूपदोषस्य निराकरणसंरम्भोऽभिमानमूलक एव । मासजातादावपि संख्या न भासत इति सिद्धान्तस्य दीक्षिताद्यसम्मतत्वात्तमवलम्ब्य दीक्षितस्याभिमाननिरसनं तु मतविवेचनचतुरा नाद्रियन्त इत्याहुः ।

दुक्तन्यायप्रवृत्तिर्दुर्वारैवेत्यत आह ॥ **उभयगतिरित्यादि** ॥ एवं चोभयगतिरिह भवतीति परिभाषैव तन्न्यायाप्रवृत्त्युपायो न तु वचनग्रहणमित्याशयः ॥

केचित्तु द्वयोरेकस्मिन्नित्युक्तौ द्व्येकशब्दयोस्संख्यापरत्वात्त्रिकपक्षे वाचकत्वेन पञ्चकपक्षे द्योतकत्वेन च विभक्तिविशेषणतैव स्यान्न तु प्रकृतिघटकयोर्युष्मदस्मदोर्विशेषणता, प्राधान्येन द्वित्वादिबोधकत्वासम्भवात्। ततश्च कृत्रिमाकृत्रिमन्यायप्रयोजनस्य वचनग्रहणमन्तरापि सिद्धतयाऽतिरिच्यमानं वचनग्रहणमप्राधान्येन द्वित्वादिबोधनपरतया विभक्तिविशेषणत्वविरोधात्प्रकृतिघटकयुष्मदस्मद्विशेषणत्वं कल्पयतीत्यतो न्यायाप्रवृत्तिः पर्यवस्यतीति मूलकारस्याशय इत्याहुः ॥

---

१. **आहुरिति** ॥ परे त्वसति संख्यापरत्वप्रत्यायके एकद्व्यादिशब्दानां संख्येयपरतैव। आदशतः संख्याः संख्येय इत्यभियुक्तोक्तेः। द्व्येकयोर्द्विवचनैकवचने इत्यत्र द्व्येकयोरिति द्विवचनमेव संख्यापरत्वप्रत्यायकम्। अन्यथा संख्येयानां बहुत्वाद्बहुवचनापत्तेः। प्रकृते त्वेकस्मिन्द्वयोरित्युक्तावेकत्वसंख्याविशिष्टबोधकयोरित्यादिक्रमेणार्थापत्त्या वचनग्रहणमन्तरा न कृत्रिमाकृत्रिमन्यायफलसिद्धिः। अतो वचनग्रहणसामर्थ्यात्कृत्रिमाकृत्रिमन्यायबाधो न कल्पयितुं शक्यते। तस्मादुभयगतिरिति परिभाषैव कृत्रिमाकृत्रिमन्यायबाधे शरणम्। किञ्च रत्नाकरोक्तदिशा द्वित्वे एकत्वे इत्युक्तौ एकस्मिन्नित्याद्युक्तावपि आदशतः संख्याः संख्येय इत्यस्य प्रायिकत्वमभ्युपगच्छतामेकस्मिन्नित्यादेरेवैकत्वादिपरत्वे वा स्वादिविभक्तेस्संख्यायाः प्रकृत्यर्थविशेषणत्वानुरोधेन द्योतकत्वावश्यम्भावेनैकत्वादिबोधकयोरित्याद्यर्थे युष्मदादिविशेषणत्वापत्त्या वचनग्रहणं कृत्रिमयोरेव ग्रहणसम्पत्त्यर्थमिति वैपरीत्यस्य सुवचत्वान्मनोरमोक्तं चिन्त्यम्। न चैकत्वे इत्याद्युक्ते विभक्तिविशेषणतैव स्यान्न तु युष्मदस्मद्विशेषणता। प्रकृतेः प्राधान्येन द्वित्वादिबोधकत्वासम्भवात्। ततश्च कृत्रिमाकृत्रिमन्यायप्रयोजनस्य वचनग्रहणमन्तरापि सिद्धतयाऽतिरिच्यमानं वचनग्रहणमप्राधान्येन द्वित्वादिबोधनपरतया विभक्तिविशेषणत्वविरोधाद्युष्मदस्मद्विशेषणत्वं कल्पयतीति न्यायाप्रवृत्तिः पर्यवस्यतीति मनोरमाकाराशय इति वाच्यम्। सिद्धान्तभूते पञ्चकपक्षे प्राधान्येन द्वित्वादिबोधकतायाः कस्याप्यसम्भवेनाप्राधान्येन तद्बोधकताया एव लाभेन तदर्थं वचनग्रहणस्यानावश्यकत्वात्। न च पञ्चकपक्षेऽपि प्रत्ययानां द्योतकत्वेन प्राधान्येन द्वित्वादिबोधकत्वं विभक्तेस्सम्भवतीति वाच्यम्। अत्र द्योतकत्वस्य प्रकृतेः तत्तत्संख्याविशिष्टार्थे शक्तौ तात्पर्यग्राहकत्वरूपतया द्वित्वादेः कस्यां चिदप्युपस्थितौ प्राधान्यस्य दुर्निरूपत्वात्। अतो रत्नाकरोक्तदिशा मनोरमायाश्चिन्त्यत्वमपरिहार्यमेवेति वदतां मतं खण्डयितुमुभयगतिरिति परिभाषाऽऽश्रिता शब्दरत्नकृता। एवञ्च तत्परिभाषासहकृतवचनग्रहणसामर्थ्यादिति मनोरमाकाराशय इति शब्दरत्नकृदाशय इत्याहुः ॥

**सर्वनामत्वाभावादिति** ॥ सुटस्सर्वनामसंज्ञानिमित्तकत्वात्तस्याश्च संज्ञोपसर्जनयोर्निषिद्धत्वात्प्रकृते सुडभाव इति पर्यवसन्नम्। ननु तन्त्रपक्षेपि गौणे नुटो वारणायोगादयुक्तत्वेन स्वाभिमतसिद्धान्तत्वसूचकवस्तुतस्त्वित्यादिमूलकारोक्तमयुक्तमित्याशयेनान्यथा योजयितुमाह ॥ **एवमित्यादि** ॥ वस्तुतोऽत्र समासात्पूर्वं पश्चाद्वा तन्त्रस्यासम्भव एवेत्यन्त्यं दूषयति ॥ **असारूप्यादिति** ॥ ननु तन्त्रस्य सहविवक्षानपेक्षसारूप्यमात्रनिमित्तकप्रवृत्तिकत्वात्प्रकृते शब्दतन्त्रस्यैवाभ्युपगन्तव्यत्वाच्च समासघटकस्याम इत्यस्य सारूप्यनिमित्तकतन्त्राङ्गीकारे बाधकाभाव इति चेन्न। विभक्त्यन्ततन्त्रस्यैवात्र स्वीकर्तव्यतया तस्यैकजातीयप्रातिपदिकप्रकृतिकविभक्त्यन्तसारूप्यप्रयोज्यत्वेनाभियुक्तैर्व्यवस्थापितत्वेन प्रकृते तदप्राप्तिरित्याशयात्। आद्यं दूषयति ॥ **उभयत्र सम्बन्धबोधापत्तिरिति** ॥ अन्यथा ह्यसामर्थ्यात्समासानुपपत्तिरित्याशयः। अथ नेदं समस्तं साम इति, किन्तु सेति पृथक्पदम्। विनापि तद्योगं तृतीयेत्येषा तृतीया, स्तोश्चुनेतिवत्। ततश्चाम इत्यस्य तन्त्रमूलकावृत्तौ सेत्यस्यैकत्र सम्बन्धादपरत्र तदसम्बन्धाच्चाभीष्टार्थलाभः। प्रागुक्तदूषणद्वयानवकाशश्चेत्यत आह ॥ **किञ्चैवमिति** ॥ **नुड्व्यावर्तयितुमशक्य इति** ॥ तद्व्यावृत्तेः प्रत्ययोत्तरपदयोश्चेति सूत्रस्थाकरसम्मतत्वादिति भावः ॥ **अशक्यत्वाच्चेति** ॥ गौणे सकृत्प्रवृत्त्यैव निर्वाह इति वदता तदंशे नुड्विशिष्टस्य पुनराकम्प्रवृत्तितात्पर्यस्योक्तार्थकस्य स्वीकारे सन्दर्भविरोध इत्याशयः। ननु किमर्थमयं प्रमाणविहीनस्यार्थस्यानुवादस्तत्राह ॥ **परस्परविरोधेति** ॥ न केवलं भाष्यविरोध एवात्रार्थे, किन्तु परस्परविरोधोपीति सूचयितुमयमनुवाद इति परमार्थः ॥ **न मानमिति** ॥ नन्वतियुष्मानत्यस्मानित्यादावादेशवारणाय युष्मदस्मत्प्रकृतिकश्रूयमाणषष्ठ्याद्यवयवकस्य पदस्येत्यर्थस्यावश्यकतया विनापि सर्वग्रहणसम्बन्धमभीष्टार्थलाभाद्व्यर्थ एवायं सर्वस्येत्यस्यानुवृत्तिप्रयास इति चेत्सत्यम्। षष्ठीचतुर्थीद्वितीयास्थयोरित्यस्य द्विवचनबलेन युष्मदस्मद्विशेषणताया एव न्याय्यतया षष्ठीचतुर्थीद्वितीया स्था ययोरित्यवयव्यन्यपदार्थकबहुव्रीहिणा सौत्रत्वप्रयुक्तपूर्वनिपातवैपरीत्यवता श्रूयमाणषष्ठ्याद्यवयवकयोः पदावयवयोर्युष्मदस्मदोरित्येवार्थः स्यात्। तथा च निर्दिश्यमानपरिभाषया युष्मदस्मदोरेवादेशप्रवृत्तावनिष्टप्रसङ्ग इति मूलव्याख्याकृतोराशयोऽत्र विभावनीय इत्याहुः।

केचित्तु युष्मदस्मच्छब्दरूपोपाधिभेदेन तत्प्रकृतिकषष्ठ्यादिविशिष्टयोर्भिन्नत्वेन प्रसंभ्यां जानुनोर्ज्ञुरित्यत्रेव द्विवचनोपपत्त्या प्रकृत्यंशे षष्ठ्यादीनां नित्यसाकाङ्क्षतया च युष्मदादिप्रकृतिकश्रूयमाणषष्ठ्यादिविशिष्टयोरित्यर्थेन निर्वाहात्सर्वग्रहणसम्बन्धो द्विरुक्तिविषये युष्मान् युष्मानित्यादावंवयवभूतस्यान्यतरखण्डस्यादेशनिवृत्त्यर्थं इति वदन्ति ॥

अत एवेत्यस्य सर्वग्रहणानुवृत्त्या निरुक्तार्थस्वीकारादेवेत्यर्थः । नन्वेवमपि युष्मदाद्यवयवकत्वस्य व्यपदेशिवद्भावेन युवाभ्यामित्यादौ प्रकृतिभागस्यापि सुवचतया दोषो दुर्वार इत्यत आह ॥ असहाय एवेत्यादि ॥ अतितवेत्यादीनामिति ॥ युष्मदाद्यवयवकषष्ठ्यादिविशिष्टस्य पदस्येत्यर्थेन षष्ठ्यादीनां प्रकृतिविशेषनिश्चयानुपपादनादन्यप्रकृतिकतद्विशिष्टस्याप्यादेशप्रसङ्ग इत्याशयः ॥ प्रत्या-

---

१. वदन्तीति ॥ परे तु सर्वस्येत्यस्याभावे षष्ठीचतुर्थीद्वितीयास्थयोरित्यस्य श्रूयमाणषष्ठीचतुर्थीद्वितीयासम्बन्धिनोरित्यर्थेऽन्यपदार्थाकाङ्क्षायां समानवचनकत्वेन श्रुतत्वेन च युष्मदस्मदोरित्यस्यैवान्यपदार्थसमर्पकतया तत्र षष्ठ्यादिसम्बन्धित्वस्य तत्प्रकृतिरूपत्वेन श्रूयमाणषष्ठ्यादिप्रकृतिभूतयोर्युष्मदस्मदोरित्यर्थः पर्यवस्येत् । अधिकारलब्धस्य पदस्येत्यस्य न लोपः प्रातिपदिकान्तस्येति सूत्रेऽन्तग्रहणेनावयवषष्ठ्यन्तत्वस्यापि बोधनेन प्रकृते तादृशस्यैव सम्बन्धयोग्यतया पदावयवयोः श्रूयमाणषष्ठ्यादिप्रकृतिभूतयोर्युष्मदस्मदोरित्याद्यर्थः स्यात् । तथा चानिष्टं प्रसज्येत । तत्सत्त्वे तु तत्सामर्थ्यात् षष्ठ्यादिविशिष्टयोरित्यर्थः पर्यवस्यति । न च युष्मदस्मच्छब्दरूपोपाधिभेदेन तत्प्रकृतिकषष्ठ्यादिविशिष्टयोर्विभिन्नत्वेन प्रसंभ्यां जानुनोर्ज्ञुरित्यत्रेव द्विवचनोपपत्त्या द्विवचनानुरोधेन युष्मदस्मद्विशेषणतायाः षष्ठीत्यादेर्निश्चेतुमशक्यतया षष्ठ्यादीनां प्रकृत्यंशे नित्यसाकाङ्क्षतया युष्मदस्मदोरित्यस्य व्यधिकरणषष्ठ्यन्तत्वेन तत्प्रकृतिकश्रूयमाणषष्ठ्यादिविशिष्टपदयोरित्यर्थेन निर्वाह इति वाच्यम् । प्रसंभ्यां जानुनोर्ज्ञुरित्यत्र जानुशब्दार्थस्य विशेष्यत्वेनैकवचनस्य स्वारसिकत्वेऽपि बाधकाभावेन प्रसंशब्दरूपोपाधिभेदेन विभिन्नतां प्रकल्प्य द्विवचनस्योपपादनीयत्वेऽप्यस्य बहुव्रीहित्वेन विशेषणतया विशेष्यवाचकपदोत्तरविभक्तिप्रतिपाद्यसंख्याविरुद्धसंख्याया अविवक्षितत्वे विशेषणविशेष्ययोस्समानवचनकत्वनियमेन पदस्येत्येतद्विशेषणत्वे द्विवचनस्य बाधाद्युष्मदस्मदोरित्यस्य समानवचनकत्वाच्छ्रुतत्वात्सम्भवति सामानाधिकरण्ये वैयधिकरण्यस्यायुक्तत्वाच्च युष्मदस्मद्विशेषणताया एव न्याय्यतया षष्ठीत्यादेरश्रुतविभिन्नवचनकपदस्येत्येतद्विशेषणताया अयुक्तत्वात् । षष्ठीत्यादेः पदविशेषणत्वं न मानान्तरसिद्धं, येन तदनुरोधेन पदस्येत्यस्य वचनविपरिणामः कल्प्येत । अतो मनोरमाशब्दरत्नकृदूहितैव सरणिर्युक्तेत्याहुः ।

**सत्त्येति** ॥ युष्मदादिप्रकृतिकषष्ठ्यादिविशिष्टयोरित्यर्थे तु न प्रत्यासत्तेरुपयोग इति बोध्यम्।

अत्रेदं तत्त्वम्। स्थग्रहणादिह षष्ठ्यादीनां श्रावणप्रत्यक्षविषयतामात्रमेव न बोध्यते, किन्तु तत्प्रतिबन्धकीभूतलुग्विषयताराहित्यमपि। अन्यथा षष्ठीचतुर्थीद्वितीयान्तयोरित्युक्तावपि येनविधिरित्येतच्छास्त्रसिद्धान्तग्रहणानुवादबलादेव श्रावणप्रत्यक्षविषयत्वांशस्य सिद्धतया स्थग्रहणवैयर्थ्यं स्पष्टमेव। इत्थं च षष्ठ्या आक्रोश इत्यलुकि युष्माकं पुत्र इत्याद्यलुग्विषये लुको निषेधेऽपि विषयतानपायालुग्विषयत्वानुपहितताया दुर्लभत्वान्नैते आदेशा इत्याहुः ॥

**हेतुकथनमिति** ॥ परमपुरुषार्थप्रदत्वरूपहेतुबोधकमित्यर्थः। **न प्रवर्तनारूप इति** ॥ प्रवृत्तिजनकप्रवर्तकव्यापारोऽत्र न विधिः। अनयोः पवित्रं कुलमेनयोः प्रभूतं स्वमित्याद्यभियुक्तव्यवहारविरोधापत्तेरित्यर्थः ॥ **शब्दमर्यादात्याग इति** ॥ पाठक्रमवैपरीत्येनान्वयकल्पनैवात्र शब्दमर्यादात्यागः। तेनेत्यस्य त्राणे हेतुत्वेनान्वयाभावे वाक्यान्तरस्थतया समानवाक्यस्थत्वाभावेन हरिरिति प्रथमान्तस्य सपूर्वत्वाभावादुदाहरणत्वानुपपत्तिरिति तु न शङ्क्यम्। विशिष्टस्यैकतिङन्तघटितत्वेन पारिभाषिकवाक्यत्वानपायात् ॥ **इति भाव इति** ॥ शङ्कितुरिति शेषः ॥ **दुरुपपादमिति** ॥ तत्सजातीयशब्दान्तरकल्पनैवानुषङ्ग इत्युक्तौ नायं दोषः ॥ **समानवाचीति** ॥ इत्थं च विभिन्नानुपूर्वीकतिङन्तद्वयाघटितत्वे सति श्रूयमाणतिङन्तघटितत्वं पारिभाषिकवाक्यलक्षणम्। अत एव ब्रूहि ब्रूहीत्यस्य वाक्यत्वोपपत्तावनन्त्यस्यापीति प्लुतसिद्धिः। प्रकृते च त्रायत इत्यस्यावृत्तिवशादुभयत्र सम्बन्धे तत्सजातीयशब्दान्तरस्याध्याहारेण परत्र सम्बन्धे वा विशिष्टस्य वाक्यत्वमक्षतमेवेति नानुपपत्तिः। तिङतिङ इति निघातविधावतिङ्ग्रहणं कुर्वत्सूत्रकारस्याभिमतं समर्थसूत्रस्थभाष्यकारोपपादितमाख्यातं सविशेषणं वाक्यमिति तु लोकसाधारणम्। तत्राख्यातपदस्य प्राधान्येन क्रियोपस्थापकपरतया त्वया शयितव्यमित्यादीनामपि वाक्यत्वम्। तल्लक्षणं तु पदान्तरोपस्थापितविशेषणोपहितक्रियोपस्थापकपदघटितत्वम्। तेन पश्य मृगो धावति पचति भवतीत्यादीनां वाक्यत्वं निर्बाधम्। भाष्यवार्तिककारौ तु ब्रूहि ब्रूहीत्यादेर्वाक्य-

त्वप्रयुक्तकार्यसम्पत्त्यर्थमतिङ्ग्रहणप्रत्याख्यानार्थं चैकतिङ् वाक्यमिति प्रकृतशास्त्रमात्रोपयोगि वाक्यलक्षणमाद्रियतामित्यन्यत्र विस्तरः ॥

**वैयर्थ्यापत्तेरिति** ॥ पूर्वस्य प्रत्येकं मुत्वसिद्ध्यर्थमदसोऽद्रेः पृथङ्मुत्वमिति भिन्नवाक्यतया सम्बन्धे पूर्ववत्परस्यापि पृथङ्मुत्वस्य तेनैवोपपादनात्केचिदन्त्यसदेशस्येति पुनरुक्तिरनर्थिकेत्याशयः ॥

**तत्र सम्बन्ध इति** ॥ अधातोरित्यस्य प्रसज्यप्रतिषेधपरत्वेनासन्तो यो धातुस्तदन्ताङ्गस्य नेत्यर्थ इत्याशयः । एतदपेक्षया लाघवमभिप्रेत्याह ॥ **अतु इति वेति** ॥ अत्र पक्षे धातुपदस्य तदवयवपरतया धात्ववयवभिन्नासन्ताङ्गस्येत्यर्थ इति पिण्डग्लु इत्यादौ विशिष्टस्य धातुभिन्नत्वेपि न क्षतिरिति बोध्यम् ।

ननु द्वे इत्यस्य पूर्वत्र विधेयसमर्पकतया कथमत्रोद्देश्यसमर्पकत्वं तत्राह ॥ **अनुवृत्तमित्यादि** ॥ पूर्वोऽभ्यास इत्यत्र शब्दाधिकारादनूद्यमानपरस्य प्रकृतेऽपि तथा सम्बन्ध इति भावः ॥ **प्रत्येकं स्यादिति** ॥ अत्रेदं बोध्यम् । लोके वाक्यपरिसमाप्तिरुभयथा दृश्यते, प्रत्येकं समुदाये च । वाक्यपरिसमाप्तिश्च वाक्यार्थबोधीयोद्देश्यतापर्याप्तिः । तत्र ब्राह्मणा भोज्यन्तामित्यत्र ब्राह्मणभोजनीयोद्देश्यता प्रत्येकमेव परिसमाप्यते, भोजनफलस्य तृप्त्यादेरेकैकव्यक्तिविश्रान्ततया समुदाये तदयोगात् । गर्गाश्शतं दण्ड्यन्तामित्यत्र तु शाब्दी दण्डनोद्देश्यता समुदाय एव न तु प्रत्येकम् । अर्थिनश्च राजानो हिरण्येन भवन्तीति वाक्यशेषसूचितमुख्यफलत्वेन द्रव्यस्य प्राधान्यादप्रधानीभूतगर्गानुरोधेनावर्तयितुमशक्यत्वात् । इत्थं च कात्यायनचोदितसहग्रहणार्थसमर्पकतया भाष्यकारैर्व्यवस्थापितेनोभेग्रहणेन गर्गदण्डनन्यायमनुसृत्याभ्यस्तसंज्ञीयोद्देश्यतापर्याप्तिरुभयावयवकसमुदाय एवाश्रीयते, गुणवृद्धिसंज्ञीयोद्देश्यतावदुभेग्रहणाभावे सहार्थकत्वाभावे वा ब्राह्मणभोजनन्यायेन प्रत्येकमेव परिसमाप्येत । ननु गुणवृद्धिसंज्ञयोः प्रत्येकग्रहणाभावेपि यथा ब्राह्मणभोजनन्यायेन प्रत्येकमेव परिसमाप्तिस्तथा प्रकृतेऽप्यभ्यस्तसंज्ञाया उभेग्रहणाभावेपि गर्गदण्डनन्यायेन समुदायपरिसमाप्तिर्भवेदेवेति किमुभेग्रहणेन, सत्यम् । यत्र समुदाये वाक्यपरिसमाप्तिरभीप्सिता, सह सुपेत्यादौ, तत्र शास्त्रकृतां प्रयत्नदर्शनेन

गर्गदण्डनन्यायस्य प्रयत्नसापेक्षत्वावगमाद्गुणवृद्ध्यादिविषये यत्र सा प्रत्येकमभीप्सिता, तत्र प्रयत्नादर्शनेन ब्राह्मणभोजनन्यायस्यौत्सर्गिकत्वावगमाच्च उभेग्रहणाभावे ब्राह्मणभोजनन्यायेन प्रत्येकमेवाभ्यस्तसंज्ञा प्रवर्तेत । लक्ष्यानुसारान्न्यायाश्रयणमिति तु लक्षणैकचक्षुष्काणां दुष्करमित्याहुः ॥

**अधिकारबाध इति** ॥ एवञ्चाध्यारोपितप्रेषणपक्ष एव ज्यायानिति सूचितम् ।

ननु पिपक्षतेः क्विपि पिपगित्यादौ पूर्वं पूर्वमन्तरङ्गमित्याश्रयणे संयोगान्तलोपमपेक्ष्य अतो लोपस्यापि बहिरङ्गतया संयोगान्तलोपस्यैवेत्ययुक्तमत आह ॥ **बह्वपेक्षत्वरूपमित्यादि** ॥ **प्रबलमिति** ॥ प्राबल्यं परिभाषाप्रवृत्तिप्रयोजकत्वम् । वस्तुतः कार्यकालपक्षे त्रिपाद्यामन्तरङ्गपरिभाषायाः प्रवृत्तिमभ्युपगच्छतो मूलकारस्य मतमनुसृत्येदं सर्वमिति द्रष्टव्यम् । **विभक्त्याश्रयेत्यादि** ॥ विभक्त्यन्तगतस्यैकदेशविकृतन्यायलभ्यस्येत्यर्थः ॥ **यण्त्वादझल्त्वाच्चेति** ॥ "यणः प्रतिषेधो वाच्य" इति वार्तिकारम्भे यण्त्वात् , प्रत्याख्याने झलो झलीत्यतो झल इत्यपकृष्य झलन्तस्यैव संयोगान्तस्य लोपविधानेन झल्त्वाभावाच्चोक्तविषये संयोगान्तलोपो दुर्लभ इत्याशयः ॥

**निरनुबन्धकत्वेनापीति** ॥ विदेश्शतुरित्यत्र सम्प्रसारणविधौ चेत्यर्थः । ननु क्वसुरपि वसुरेवास्तु, लिटो विधीयमानस्य तस्यासंयोगाल्लिट्किदित्यनेनैव कित्त्वसिद्धेरिति चेन्न । तरत्यादिभ्यो भूतसामान्ये विहितस्य लिटः क्वसावृच्छत्यॄतामिति प्रतिषेधविषये प्रतिप्रसूतस्य गुणस्य वारणोपायतया कित्त्वसम्पादनाय तदीयककारानुबन्धस्यावश्यकत्वात् । नन्वेवमारिवानित्यादावृधातोः क्वसावुक्तरीत्या गुणाभावे द्विरुक्तोत्तरखण्डे यणं बाधित्वा परत्वादाद्गुणे सत्यरिवानित्यनिष्टरूपप्रसङ्गः । न च द्वित्वोत्तरमाङ्गत्वात्सवर्णदीर्घं बाधित्वा प्रथममुरदत्त्वे तत आद्गुण इत्येतदपवादत्वेनात आदेरित्यस्य प्रवृत्तौ पश्चादाद्गुण इत्येतस्यापवादविषये प्रवृत्त्ययोगादुत्तरखण्डे यणादेशस्य निर्बाधत्वेनाभीष्टरूपसिद्धिरिति वाच्यम् । प्रतिषेधविषयगुणसमर्पकधातुप्रश्लेषसूचकादृच्छत्यॄतामिति बहुवचनाद-

भ्यासकार्येष्वपवादानामुत्सर्गनिवर्तकत्वाभावस्य ज्ञापनीयतया दीर्घोत्तरमाद्गुण इत्यस्य प्रवृत्त्या रूपवैकल्यात् । न च दीर्घविधानवैयर्थ्यमत आदेरित्यस्य प्रवृत्त्युत्तरमाद्गुण इत्यस्य प्रवृत्ताविति वाच्यम् । आनृजे इत्यादावाद्गुणं बाधित्वा नुटि दीर्घश्रवणेन तत्सार्थक्यादिति चेन्न । ऋच्छत्यृतामित्यत्रकारान्तरप्रश्लेषेण प्रतिषेधविषयगुणनिवर्तकक्सुप्रत्ययगतकित्त्वप्रयोज्यनिषेधपरिपन्थितया पुनर्गुणविधानेनादोषात् । अथ विदेश्शतुरिति विहितस्य वसोरुकारानुबन्धकरणसामर्थ्यात्प्रदेशेषु द्व्यनुबन्धकस्य क्वसोस्सामान्यग्रहणाविघात इत्ययुक्तम् । वसु स्तम्भ इति पठितस्य दैवादिकस्य धातोरेकानुबन्धकस्य सङ्ग्रहेण चरितार्थत्वेनैकानुबन्धकग्रहणे न द्व्यनुबन्धकस्येति परिभाषाबाधे मानाभावात् । न च प्रत्ययाप्रत्यययोः प्रत्ययस्यैव ग्रहणमिति परिभाषया धातुव्यावृत्तौ परिशिष्टमुदित्त्वं द्व्यनुबन्धकस्य क्वसोस्सङ्ग्रहार्थमेवेति वाच्यम् । तिति प्रत्ययग्रहणं कर्तव्यमिति वार्तिकस्वारस्येन तत्परिभाषाया लक्ष्यसंस्कारकतया सिद्धान्तिसम्मतत्वाभावादिति चेत्सत्यम् । विदेश्शतुरिति विहितस्य वसोरुकारानुबन्धकरणेन प्रदेशेषु तद्ग्रहणस्यावश्यकतया तदितरस्य ग्रहीतव्यस्य तत्साहचर्येण द्व्यनुबन्धकस्यापि प्रत्ययस्य क्वसोरेव ग्रहणं न तु धातोरिति नायं दोषः । न च वसोस्सम्प्रसारणमित्यत्र क्वसोस्संग्रहसम्पादनेन विदेश्शतुरिति विहितस्य वसोरुगित्त्वस्य चरितार्थतया वसुस्रंस्वित्यत्र साहचर्याद्धातोरेव ग्रहणं स्यादिति वाच्यम् । ससजुषोरित्यतस्स इत्यनुवर्त्य सान्तस्यैव वसोस्तत्र ग्रहीतव्यतया धातोस्सकारान्तत्वाव्यभिचारेण प्रत्ययग्रहणस्य सुवचत्वेनादोषात् ।

केचित्तु विदेश्शतुरित्यत्र भाष्ये शत्रादेशस्य वसुसिति सकारेण द्व्यनुबन्धकता क्वसोस्सहग्रहणाविघातायेत्युक्तम् । युक्तं चैतत् । अन्यथा शत्रादेशस्य वसोरुगित्त्वस्य प्रदेशेषु वस आच्छादन इति पठितादादिकधातुव्यावर्तनेन चरितार्थस्य तदनुबन्धकपरिभाषाबाधनपूर्वकं क्वसोस्सहग्रहणार्थता कथं स्यादतश्चिन्त्यमत्र मूलोक्तमित्याहुः ॥

---

१. आहुरिति ॥ परे तु वसोरुकारानुबन्धकरणस्य मनोरमोक्ताशयमजानता वार्तिककारेण " विदेर्वसोः कित्त्वं वक्तव्यम् " इत्युक्ते तदनुसारेणैव प्रौढ्या यथान्यासेऽपि वसोर्द्व्यनुबन्धकत्वस्य सूपपादत्वेन ककारानुबन्धकरणं वृथैव वार्तिककृत इति बोधयितुं

**अन्तरङ्गत्वादिति** ॥ मनुष्योयं प्रातरुत्थाय प्रथमं शरीरकार्याणि करोतीत्यादिलोकदृष्टान्तसिद्धं पूर्वोपस्थितनिमित्तकत्वरूपं लौकिकमिदमन्तरङ्गत्वमिति द्रष्टव्यम् ॥ **अकृतव्यूहपरिभाषयेति** ॥ मूले कृतोऽपीत्यस्य कर्तव्यत्वेन प्रसक्तोऽपीत्यर्थ इत्याशयः ॥ **नास्त्येवेति** ॥ एतेन बहिरङ्गपरिभाषोपमर्दकत्वादकृतव्यूहपरिभाषायास्तद्विषये बहिरङ्गासिद्धत्वोपवर्णनमयुक्तमित्यपास्तम् ॥ **भाष्येपीति** ॥ असुङ्युपदेशिवद्वचनं स्वरसिद्ध्यर्थं बहिरङ्गलक्षणत्वादित्युक्तम् । इत्थं चाकृतव्यूहपरिभाषाया अभाव एव भाष्यस्वारस्यात्प्रतीयत इति युक्तमेव कैयटाद्युक्तमिति भावः । नन्वेतद्भाष्यबलादकृतव्यूहपरिभाषाया अभावस्यैव स्पष्टतया तामाश्रित्य प्रवृत्तो वस्तुतस्त्वित्यादिग्रन्थो न युक्त इत्यत आह ॥ **सत्त्वे इति शेष इति** ॥ तत्परिभाषासत्त्वे परसप्तम्यामपि निर्वाहस्स्यात् । तदभावाच्च सर्वनामस्थानप्रत्ययोत्पत्तेः प्रागेवासुङुत्पत्तये विषयसप्तम्येवाश्रयितव्येति गूढाशयः । न च सर्वनामस्थानोत्पत्तेः पूर्वमेव विषयसप्तमीबलादसुङुत्पत्तौ बहुपुंसीत्यत्र ङीबसुङोः प्रसक्तौ परत्वादसुङ्यनिष्टप्रसङ्ग इति वाच्यम् । स्वार्थादिप्रयुक्तकार्याणां क्रमिकत्वस्य कुत्सित इति सूत्रस्थभाष्यसम्मतत्वेन लिङ्गबोधकप्रत्ययोत्पत्तिमन्तरा सुबुत्पत्तिविषयताया अभावेन ङीपः पूर्वमसुङो दुर्लभत्वेन दोषाभावात् । विषयत्वेन वा सर्वनामस्थानसापेक्षादसुङस्सर्वथा तदनपेक्षस्य ङीपोऽन्तरङ्गत्वस्य निर्बाधत्वाच्चेत्यलम् ॥ **कर्तव्ये इति** ॥ ननु सखण्डेषु फिष इत्यस्य प्रवृत्तेर्नित्त्वेनैव ज्ञापनीयतया तदभावे फिष इत्यस्य प्रकृते कथं कर्तव्यता प्रस्तूयते, सत्यम् ।

---

वसुसादेश उक्तो भाष्ये । न तु तत्र भाष्यकारस्य निर्भरः । वसुसादेशे विधेयतावच्छेदकगौरवापत्तेः । न चोकारानुबन्धकरणस्यादादिकवसधातुव्यावर्तनेन चरितार्थतया तत्सामर्थ्यात्तदनुबन्धकपरिभाषाप्रवृत्तिप्रतिबन्धो न सिद्ध्यतीति वाच्यम् । प्रत्ययाप्रत्यययोरिति परिभाषाया मनोरमाकृन्मते सत्त्वेन तेनैव धातुव्यावृत्तेस्सुशकत्वात् । धातोरनुदात्तेत्त्वलक्षणात्मनेपदसिद्ध्यर्थं सानुबन्धकत्वस्यावश्यकतया अत्र निरनुबन्धकस्य करणेऽपि निरनुबन्धकपरिभाषयापि तद्व्यावृत्तेस्सुवचत्वाच्च । तस्मादुकारानुबन्धकरणचारितार्थ्यं मूलोक्तसरणिमन्तरा दुरुपपादमेव । एतेनोकारानुबन्धकरणस्य वसधातुव्यावर्तकतया चरितार्थत्वादत्र द्व्यनुबन्धकपरिभाषानिवर्तने वसुसादेशकरणमेव शरणमिति वदन्तः परास्ताः । तत्र तत्र वसुसादेशकरणेन द्व्यनुबन्धकपरिभाषानिवर्तनं ग्रन्थकृतां वार्तिकानुसारेण भाष्यकारप्रदर्शितोपायान्तरप्रदर्शनाभिप्रायेणैव । न तु मूलोक्तसरणेरयुक्तत्वाभिप्रायेणेति मनोरमाकाराशयस्य वर्णयितुं शक्यत्वेन तदुक्तेः चिन्त्यत्वकथनमयुक्तमेव । अत्र युक्तमुत्पश्यन्तु सुधिय इत्याहुः ।

ज्ञापितेपि स्वांशे चारितार्थ्याभावेन ज्ञापकत्वानुपपत्त्या नित्त्ववैयर्थ्यस्य तदवस्थतया यावता विना वैयर्थ्यपरिहारासम्भवस्तावत्सर्वं ज्ञाप्यत इति बहिरङ्गपरिभाषाया अनित्यत्वमपि ज्ञाप्यते । इत्थं च मकाराकारस्य फिष इत्यस्य प्रवृत्तौ प्रसक्तमनिष्टं वारयितुमाद्युदात्तत्वेन पकारोकारस्य स्वरसिद्धये नित्त्वमित्याशयान्नानुपपत्तिः ॥ **व्युत्पत्तिपक्षे इति** ॥ अव्युत्पत्तिपक्षे तु बहिरङ्गत्वादसुङः पूर्वमेव फिष इत्यस्य प्रवृत्तिरिति व्यस्ते पुमानित्यादावाद्युदात्तत्वसिद्धिः । समासे तु विषयसप्तम्याश्रयणे सर्वनामस्थानोत्पत्तेः पूर्वमसुङि ततस्समासान्तोदात्तत्वेनासुङकारस्यैवोदात्तत्वसिद्धिरिति सकलेष्टसिद्धिः ॥

**आङ्गस्य बलीयस्त्वेनेति** ॥ ननु धर्मिग्राहकसाजात्यादाङ्गवार्णयोस्समानकार्यित्व एव वार्णपरिभाषायाः प्रवृत्तिरित्यन्यत्र स्वयमेव व्यवस्थापितम् । अतः कथमसकावित्यत्र सकाराकारस्येत्त्वं ककाराकारस्य वृद्धिरिति कार्यभेदेन प्रवर्तमानयोराङ्गवार्णयोस्तया परिभाषया व्यवस्था स्यात् । तस्मादन्तरङ्गत्वाद्वृद्धावाकाररूपस्यापो दुर्लभत्वान्नायं दोषः । न चैवमचः परस्मिन्निति स्थानिवद्भावेनाकाररूपस्य सुलभत्वाद्दोषो दुर्वार इति वाच्यम् । प्रश्लेषसामर्थ्याच्छ्रूयमाण एवाकाररूपे तस्मिन्नित्त्वविधानेनादोषात् । अतोऽत्र युक्तमेव विभक्तेराकारविधानमित्याशङ्क्याह ॥ **प्रश्लेषसामर्थ्यादिति** ॥ **इत्त्वानापत्तेरिति** ॥ एवं चाव्याप्तिग्रस्तत्वात्सामर्थ्यगर्भं प्रश्लेषाश्रयणं न युक्तमित्याशयस्तदाह ॥ **तस्मादिति** ॥

केचित्तु सोडावित्यस्तु डित्त्वाट्टिलोपे टापोऽप्रवृत्त्या न कश्चिद्दोषः । न च नित्यत्वाट्टिलोपे ततस्त्यदाद्यत्वे चासावित्यस्यासिद्धिरिति वाच्यम् । तदोस्सस्सावित्यत्रानन्त्यग्रहणप्रत्याख्यानायादस इति योगविभागेन दकारस्य यदि स्यात्तर्ह्यदस एवेति भाष्यकारोदीरितनियमानुपपत्तिभिया तद्विषये त्यदाद्यत्वाप्रवृत्तिकल्पनेनादोषात् । किञ्च शब्दान्तरप्राप्त्या टिलोपस्यानित्यत्वेन परत्वात्त्यदाद्यत्वे टिलोपे

---

१. **आङ्गस्य बलीयस्त्वेनेतीति** ॥ एतदादिप्रश्लेषसामर्थ्यादित्यन्तो ग्रन्थः नेत्त्वमिति शब्दरत्नग्रन्थानन्तरं दृष्टस्य "वर्णादाङ्गस्य बलीयस्त्वेन वृद्धेः पूर्वं दुर्वारत्वात् । प्रश्लेषसामर्थ्यादित्वस्य बाधे" इत्यधिकस्य पाठस्यानुरोधीति बोध्यम् । इदानीन्तनपुस्तकेषु न दृश्यतेऽयं पाठः ।

चासावित्यस्य निर्बाधत्वात्। न च वार्णादाङ्गमिति परिभाषया पररूपात्पूर्वं सकारस्थानिकस्याकारस्य लोपे दकाराकाराट्टापि स्त्रियामसावित्यत्रौङ आप इत्यस्य प्रवृत्तिरिति वाच्यम्। स्वादिसूत्रघटकयोः प्रथमाद्वितीयाद्विवचनयो-रेवौङिति संज्ञेत्याश्रयणेनादोषात्। न चासकौ स्त्रीत्यत्र पूर्ववत्प्रत्ययस्थादितीत्त्वं दुर्वारमिति वाच्यम्। ङित्त्वसामर्थ्यादाङ्गपरिभाषाया अनित्याया इहाप्रवृत्ति-माश्रित्य पररूपोत्तरं टिलोपेन टापोऽनुत्पत्त्या दोषाभावादित्याहुः ॥

---

१. आहुरिति ॥ अत्रेदं बोध्यम्। सोडाविति न्यासे अदस् + औ इति स्थिते नित्यत्वाट्टिलोपे ततस्त्यदाद्यत्वे चासावित्यस्यासिद्धिः। यदि तु टिलोपस्य शब्दा-न्तरप्राप्त्या अनित्यत्वेन परत्वात्त्यदाद्यत्वे चासावित्यस्य सिद्धिरित्युच्यते, तर्हि त्यदाद्य-त्वोत्तरं पररूपात्पूर्वं वार्णादाङ्गमिति न्यायेन टिलोपे स्त्रियामदन्तत्वाट्टापि औङ आप इत्यस्यापत्तिः। न चौङिति प्रथमाद्वितीयाद्विवचनयोः प्राचां संज्ञेति नात्र तत्प्रसक्तिरि-ति वाच्यम्। तथा सति व्योम्नी इत्यादावनल्विधाविति निषेधेन श्यां द्विवचनत्वानति-देशे प्रगृह्यत्वानापत्त्या प्राचां संज्ञानुरोधेनायं व्यवहार इति विहाय ससकारनिर्देशस्य आमः साम्त्वेन स्थानितासमर्पकत्ववत् ङकारोच्चारणस्यौकारविभक्तेरौङ्त्वेन स्थानिता-समर्पकताया अवश्यवक्तव्यत्वेन प्रकृते तदापत्तेर्दुर्वारत्वात्। असकौ स्त्री इत्यत्र प्रत्यय-स्थादितीत्त्वप्रसङ्गाच्च। न च ङित्त्वसामर्थ्यादनित्याया वार्णपरिभाषायाः प्रकृतेऽप्रवृत्तिं स्वीकृत्य पूर्वं पररूपेऽनन्तरं टिलोपे टापोऽप्राप्त्या नोक्तदोष इति वाच्यम्। तथा सति दकारस्यान्त्यत्वेन तदोस्सःसावित्यस्याप्रवृत्त्या असावित्यस्यासिद्धेः। न चैवं तदोरिति सूत्रे दकारग्रहणं व्यर्थमिति वाच्यम्। अकज्विषये तच्चारितार्थ्यात्। न चानन्त्यग्रहण-स्य भाष्ये प्रत्याख्यातत्वेनात्र सत्त्वं सुलभमिति वाच्यम्। तत्प्रत्याख्यानपरभाष्यस्य "पदगौरवाद्योगविभागो गरीयान्" इति परिभाषया गुरुभूतयोगविभागाश्रयणमूल-कत्वेनैकदेश्युक्तित्वेन प्रकृते तस्यानुपयोगात्। न च सा परिभाषा टाङसीति सूत्रस्थे-नादेशसम्बन्धीकारप्रत्याख्यानपरभाष्यविरुद्धेति नैवोपादेयेति वाच्यम्। बहुषु स्थलेषु बहुविधैः क्लेशैरिनादेशसम्बन्धीकारप्रत्याख्यानपरभाष्यस्यैकदेश्युक्तित्वेन तद्विरोधस्या-किञ्चित्करत्वात्। अन्यथा "महतो वंशस्तम्बाल्लट्वानुकृष्यत" इति ऋलृक् सूत्रभाष्यो-क्तेरसम्बद्धत्वापत्तेरिति ग्रन्थकृतैव परिभाषेन्दुव्याख्यानावसरे वाक्यार्थचन्द्रिकायामुक्तत्वेन तद्विरुद्धतया तैरेवात्रैवं वक्तुमशक्यत्वात्। न च तस्यैवंविरोधस्य सत्त्वेऽप्यन्येषां तद-भावेन तस्याः परिभाषाया भाष्यविरुद्धत्वस्य परिभाषेन्दुशेखरे स्पष्टं प्रतिपादितत्वेन न सा प्रकृतभाष्यस्यैकदेश्युक्तित्वं कल्पयितुं क्षमत इति वाच्यम्। तादृशभाष्यविरुद्धत्वोक्ते-र्नागेशासम्मतत्वात्। अत एव टाङसीति सूत्रशेषे योगविभागेनेकारप्रत्याख्यानस्य क्लिष्ट-त्वादिकारकरणमेव ज्याय इत्याशयकः "प्रत्याख्यानेनेदं ध्वन्यते। एतत्क्लेशपरिहारार्थ एवेकारो, न त्वस्य फलान्तरकल्पनेऽभिनिवेष्टव्यमिति दिक्" इत्युद्योतग्रन्थस्सङ्गच्छते।

**इत्त्वापत्तेरिति** ॥ ननु तदोरित्यतस्सम्बध्यमानस्य सावित्यस्यापि विषयसप्तमीत्वेन युगपत्प्रवृत्तयोष्टाबात्वयोः परत्वान्नित्यत्वाच्च प्रथममौत्वे नायं दोषः। न च सुलोपश्चेति चकारबोधितसमुच्चयेन सुलोपस्यौत्वस्य च समानकालिकत्वप्रतीत्या नात्र विषयसप्तमीत्वसम्भव इति वाच्यम्। जातां जनिष्यमाणां चेत्यादौ विभिन्नकालिकयोरपि समुच्चयदर्शनेन समानकालिकयोरेव समुच्चय इति नियमस्याशक्यत्वात्। तस्माद्विषयसप्तमीत्वे न किञ्चिद्बाधकमित्यरुचेराह ॥ **निर्दिष्टपरिभाषायामिति** ॥ **दिगिति** ॥ त्यदादीनाम इत्यत्र विभक्तावित्यस्य विषयसप्तमीत्वे त्यदाद्यत्वस्य विभक्त्युत्पत्तिप्राक्कालिकतया सुबुत्पत्त्युत्तरभाविनो लुको यौगपद्याभावेन विप्रतिषेधायोगात्पूर्वविप्रतिषेधमूलकेन त्यदादिभ्यश्चेत्यनेन वार्तिकेन क्लीबे प्रसक्तस्य त्यदाद्यत्वस्य निवर्तयितुमशक्यत्वादनिष्टप्रसङ्ग इति तदर्थः ॥ **क्वचिदित्यादि** ॥ अमुक इत्यत्र औत्वप्रतिषेधसन्नियोगेन विधीयमानस्योत्वस्य निरवकाशतया तदुपजीव्यत्वान्मुत्वस्यासिद्धत्वाच्च प्रथमं सत्वे मुत्वाप्रवृत्तिः। अमुकशर्मेत्यत्र सामासिकविभक्तिलुकि न लुमतेति निषेधेन त्यदाद्यत्वाप्रवृत्त्या सकारनिवृत्त्युपायाभावो मुत्वानुपपत्तिश्चेति द्रष्टव्यम्।

नन्वतो रोरिति सूत्रस्थस्य रोरित्यनुनासिकनिर्देशस्य मूले सूत्रान्तरीयलक्ष्यविषयकत्वेन व्यावृत्तिप्रदर्शनमयुक्तमत आह ॥ **तदर्थमिति** ॥ **सामर्थ्यादिति** ॥ उकारस्योकारविधाने फलाभावादिति भावः ॥ **अत्र यद्वक्तव्यमित्यादि** ॥ देवास्सन्तीत्यत्र यत्वस्यासिद्धत्वात्प्रथमतो विसर्गस्य प्रवृत्तावपि समुदायधर्मतया निषेधाभावात्स्थानिवद्भावेन रुत्वमाश्रित्य प्रसक्तस्य यत्वस्य वारणार्थमशुग्रहणं भो भगोरिति सूत्रकृता प्रक्रान्तम्। यद्युकारस्येत्संज्ञालोपयोरभावाद्रेफस्य

---

मास्तु वा पदगौरवात्केवलयोगविभागस्य गरीयस्त्वम्। गुरुभूतयोगविभागस्य गौरवं तु नागेशाभिमतमेव। अत एव हलन्त्यसूत्रे शेखरे "उपदेशे इदन्त्यम्" "अच्" "अनुनासिक" इति योगविभागस्य गरीयस्त्वप्रतिपादनं सङ्गच्छते। प्रकृते अदस इति विभक्तसूत्रस्य नियामकत्वं, तदोरित्येतदेकदेशदकारमात्रस्यानुवृत्तिं तदनुवृत्तिप्रयोजकस्वरितत्वप्रतिज्ञां चान्तराऽनन्त्यग्रहणप्रत्याख्यानं न घटत इति स्पष्टमेव। एवं चासावित्यत्र सत्वाप्रवृत्तिरेव सोर्डाविति न्यासेऽसाधारणो दोषः। किञ्च पाणिनिन्यासेऽन्यादृशन्यासकरणं पाणिनिसूत्रानुसारेणैव युज्यते, न तु ऋष्यन्तरोहितसूत्रानुरोधेन। तथा चानन्त्यग्रहणं कुर्वतस्सूत्रकारस्य सोर्डाविति सर्वथा दुर्वचमिति ॥

विसर्गो न लभ्येत, तर्हि व्यर्थमेव तदिति न मु न इत्यत्र योगविभागेन क्वचिदभीष्टस्यासिद्धत्वाभावस्य समर्थने प्रमाणमिति मूलकारो मन्यते ॥

अत्रेदं वक्तव्यम् । अनल्विधावित्यस्याल्मात्रवृत्तिधर्मावच्छिन्नस्थानितावद्वृत्तिः स्थानिसम्बन्ध्यल्वृत्तिर्वा स्थानिवद्भावप्रयोज्यो यो धर्मस्तद्धर्मावच्छिन्ननिमित्तताकविधौ स्थानिवद्भावो नेत्यर्थ इति भो भगोरितिसूत्रस्थभाष्यतः प्रतीत्या विसर्गस्थानिभूतरेफवृत्तिस्थानिवद्भावप्रयोज्यरुत्वनिमित्तकयत्वविधेरल्विधित्वेन स्थानिवत्त्वायोगान्नाश्ग्रहणस्योपयोग इति यदवष्टम्भेन न मु न इत्यत्र योगविभागो ज्ञाप्यते, तदीयचारितार्थ्यविघटकं वैयर्थ्यमन्यत्रोक्तमित्यर्थः । न च रोस्सुपीति रुस्थानिकत्वेन विहितविसर्गस्य यशस्सु पयस्स्वित्यादौ स्थानिवद्भावात्प्राप्तस्य यत्वस्य वारणार्थमश्ग्रहणमिति सार्थक्यं सुवचमिति वाच्यम् । तत्र रोरेव विसर्गविधानेनेत्संज्ञालोपयोरभावेऽपि तदुपपत्त्या प्रकृतार्थसाधकत्वायोगात् । किञ्च अमुनेत्यथुनेतिवन्निपातनं न मु न इत्यस्य स्थाने यद्याश्रीयते, तर्ह्यदश्शब्दप्रकृतिकस्यैवेदं निपातनमिति कथमवगम्येत । न च पद्दन्न इत्यत्रादेशैस्तदनुरूपाणां स्थानिनामाक्षेपदर्शनेन प्रकृतेपि स्थान्यर्थाभिधानसमर्थस्यैवादेशतया तत्समानार्थकादश्शब्दप्रकृतिकाङन्तस्यैव स्थानित्वेनाक्षेपान्नानुपपत्तिरिति वाच्यम् । स्थानेन्तरतम इत्यत्र सप्तम्यन्तपाठं प्रत्याख्याय प्रयोगनियमपक्षमाश्रित्य पदादिविषये भाष्यकारैर्व्यवस्थापनेन प्रकृते तदयोगात् । न चादसोसेर्दादु दो म इति प्रकरणे निपातनाभ्युपगमेन विभक्त्यन्तरविशिष्टस्य स्त्रियां च नायं प्रयोग इति वाच्यम् । अदश्शब्दप्रकृतिकत्वस्य दुर्वचत्वात् । न चादसोऽमुनेति न्यासादाङोनुवर्तनाच्च निर्वाह इति वाच्यम् । अदसः परस्याङ एवामुनेत्यादेशापत्त्या महदनिष्टप्रसङ्गात् । गौरवप्रसङ्गाच्च । घेरित्यस्योत्तरत्र सम्बन्धविच्छेदापत्तेश्च । तस्मान्निपातनावलम्बेनापि न मु न इत्यत्र योगविभागसमर्थनं न समञ्जसं, किन्तु त्रिपाद्यामित्संज्ञालोपयोः प्रवृत्तौ निर्देशा एव साक्षाद्योगविभागद्वारा वा प्रमाणमित्युपाध्यायगूढाशय इत्यलं पल्लवितेन ।

॥ इति हलन्ताः पुंलिङ्गाः ॥



# अथ हलन्ताः स्त्रीलिङ्गाः ।

सन्निपातपरिभाषयेति ॥ त्रिपाद्यामस्याः परिभाषाया अप्रवृत्तिरेव, तद्विषये प्रकृतपरिभाषासाध्यप्रयोजनाभावात् । अत एव नद्धमित्यादौ जश्त्वसिद्धिः । असति प्रयोजने त्रिपाद्यां परिभाषाप्रवृत्तिमाश्रित्यानित्यत्वेन लक्ष्यसमर्थनं न युक्तिमदित्याहुः[1] ॥

॥ इति हलन्ताः स्त्रीलिङ्गाः ॥



१. आहुरिति ॥ अत्र यद्वक्तव्यं तदुक्तमधस्तात् ।

## अथ हलन्ता नपुंसकलिङ्गाः ॥

**औशशादिष्विति** ॥ त्यदाद्यत्वेनैनादेशस्यैनदादेशस्य च प्रयोगे विशेषाभावादिति तत्त्वम् । नैनु क्लीबे द्वितीयैकवचनस्य लुका लुप्तत्वेन प्रत्ययलक्षणायोगात्सामर्थ्येनैव न लुमतेत्यस्य बाधनीयतया निषेधबाधापेक्षया विधिबाधस्यौचित्येन त्यदाद्यत्वमेव द्विवचनादिषु कुतो न बाध्यते तत्राह ॥ **तत्सामर्थ्येनेति** ॥ **क्लृप्तबाधस्येति** ॥ इकोऽचीति सूत्रस्थाज्ग्रहणज्ञापितानित्यत्वमूलकपाक्षिकबाधस्येत्यर्थः ॥ **अन्यस्येति** ॥ प्रधानस्याक्लृप्तबाधस्य त्यदाद्यत्वस्येत्यर्थः । **येन नाप्राप्तिन्यायेनेति** ॥ ननु त्यदादिकार्येषु तक्रकौण्डिन्यन्यायस्यानित्यत्वादप्रवृत्तिरवश्यमाश्रयितव्या । अत एव स इत्यादिसिद्धिः । अन्यथा सत्यपि सम्भवे बाधनं भवतीति विशेषविहितेन सत्वेन त्यदाद्यत्वबाधे तदसङ्गतिरेव ॥ तथा च तेन न्यायेन त्यदाद्यत्वस्यैनदादेशेन बाधापादनमयुक्तमिति चेन्न । बाध्यबाधकयोरुभयोरपि त्यदादित्वनिमित्तकत्वे तन्न्यायाप्रवृत्तिकल्पनेनापि निरुक्तोदाहरणनिर्वाहे तदन्यतरस्य त्यदादित्वनिमित्तकत्वमात्रेण तदप्रवृत्तिकल्पनायां मानाभाव इत्याशयात् ॥ **उपसर्जने इति** ॥ प्रकरणान्तरस्थत्वेन त्यदादित्वनिमित्तकत्वाभावादुपसर्जनेपि प्रवृत्तौ तत्र त्यदाद्यत्वाप्रवृत्त्या चारितार्थ्यादपवादत्वानुपपत्तिरित्याशयः ॥ **भाष्यासङ्गत्यापत्तेरिति** ॥ उपसर्जने एनदादेशप्रवृत्तौ तत्र त्यदाद्यत्वाप्रवृत्त्या तदसङ्गतिरित्याशयः । ननु भाष्ये एनदादेशे एनौ एनानित्यादि कथमित्युदाहरणविशेषविषयकशङ्कायां त्यदाद्यत्वेन सिद्धमित्युक्तम् । एतावता तस्योपसर्जने प्रवृत्त्यभावः कथमवगन्तुं शक्यते, तत्राह ॥ **एतदोपीति** ॥

---

१. **ननु क्लीबे इति** ॥ औशशादिष्वेनेनैव सिद्धिरित्यनन्तरं "सामार्थ्यादिति ॥ तत्सामर्थ्येन क्लृप्तबाधस्याप्रधानस्यातिदेशनिषेधस्य न लुमतेत्यस्यैव बाधो, न त्वन्यस्येति भावः" इत्यधिकः शब्दरत्नपाठः क्वचिद्दृश्यते । ननु क्लीबे इत्यादि त्यदाद्यत्वस्येत्यर्थ इत्यन्तो ग्रन्थस्तत्पाठानुसारीति बोध्यम् । इदानीन्तनशब्दरत्नेषु नैव दृश्यतेऽयं पाठः ।

२. **एतदोऽपीतीति** ॥ मूले एतदोऽपीति क्वाचित्कं पाठमनुसृत्येदम् । सर्वत्र पुस्तकेषु एनदोऽपीति पाठो दृश्यते । अयमेव पाठो युक्तः । तस्यायं भावः । अत्रापिना

अपिशब्दादिदमः, एतच्छब्दात्त्रतसिलोस्सर्वनामसंज्ञानिमित्तकत्वादुपसर्जने प्रवृत्त्यभावेन तयोस्स्थाने विधीयमानयोरपि तथाभूततया तत्साहचर्यादयमप्यादेशो नैवोपसर्जने प्रवर्तेत इत्याशयः ।। **इति वाच्यमिति** ।। प्राथमिकेन न चेत्यनेनास्य सम्बन्धः ।। **पूर्वमेवेति** ।। तथा च विभिन्नकालप्राप्तिकत्वेन बाध्यबाधकभावादेनदादेशोत्तरं सति सम्भवे त्यदाद्यत्वं निर्बाधम् । अत एनदादेश एव कर्तव्यो न त्वेनादेशोपीति परमार्थः । ननु प्रकरणान्तरविषयस्यार्धधातुक इत्यस्य साहचर्यमाश्रित्य द्वितीयाटौस्वित्यस्य विषयसप्तमीत्वं न युक्तिसहं, प्रमाणाभावादत आह ।। **एतत्सर्वमिति** ।।

**ध्वनितमिति** ।। केचित्तु प्रकृतभाष्यप्रामाण्यात्सामान्येन त्यदादिकार्ये तक्रकौण्डिन्यन्यायाप्रवृत्तिकल्पनैव न्याय्या । निर्दिष्टपरिभाषाबाधोपहितप्रकरणान्तरसाहचर्यमूलकविषयसप्तमीत्वकल्पनायाः क्लेशभूयिष्ठत्वादित्याहुः ।

वक्ष्यमाणदूषणेन सर्वत्रैनदादेशविधानस्यायुक्तत्वं मन्यमान आह ।। **कैयटानुरोधेनेति** ।। तत्र ह्यन्तरङ्गानपीति न्यायेन प्रथमतो लुकि न लुमतेत्यत्राङ्गाधिकारप्रतिनिर्देशाभावे प्रत्ययलक्षणाभावादेनदादेशाप्रवृत्तावेतच्छ्रितक इति भवतीत्युक्तम् ।। **बहिरङ्गपरिभाषाया अप्रवृत्तेरिति** ।। अनित्यत्वादिति भावः । अनित्यत्वेऽप्यत्राप्रवृत्तौ किं बीजमत आह ।। **अत एवेति** ।।

---

अत्ववदेनस्यापि परिग्रहः । तत्र सोस्सर्वनामसंज्ञानिमित्तकत्वादुपसर्जने प्रवृत्त्यभावेन तयोः परत एनदोऽनुपसर्जनस्यैव सम्भवेन अर्थाधिकारानुरोधाद्द्वितीयाटौस्वेन इत्यत्राप्यनुवृत्तस्यैतदोऽनुपसर्जनस्यैव ग्रहीतुमौचित्येन तत्साहचर्यात्तत्रानुवृत्तस्येदमोऽप्यनुपसर्जनस्यैव ग्रहीतव्यतया एनस्योभयत्राप्यनुपसर्जन एव प्रवृत्त्या तत्सूत्रपठितवार्तिकविधेयस्यैनदोऽप्यनुपसर्जन एव प्रवृत्तिरुचितेति ।।

सूत्रान्तरसाहचर्यस्य नियामकत्वमनभ्युपगच्छतामेवमेवाशयवर्णनमुचितम् । यदि त्वेतदस्त्रतसोरिति सूत्रसाहचर्यं साक्षादेनस्योपसर्जनेऽप्रवृत्तौ नियामकमिति यथाश्रुतमूलाक्षरानुरोधेनाभ्युपगम्यते, तदा सूत्रान्तरसाहचर्यस्यात्र नियामकत्वे भाष्यासङ्गत्यापत्तेर्हेतुत्वमित्येकहेतुपरतया मूलग्रन्थो योजनीयः । अत एवाप्रवृत्तेः स्वीकारादिति चशब्दरहितः पाठस्सङ्गच्छते । एतत्समानार्थकश्शेखरग्रन्थोऽपि चकारस्य हेत्वर्थकत्वपरतया एकमाशयकतयापि योजयितुं शक्यते । मूले एतदोऽपीति पाठमपूर्वं प्रकल्प्य तदनुरोधेनैतदोऽपीति प्रतीकमुपादाय लिखितोऽयं ग्रन्थस्सर्वथाऽलग्नकत्वादुपेक्ष्य इति बोध्यम् ।

**एतौ पृथग्वक्तव्याविति** ॥ अत्रेदं तत्त्वम् । नपुंसकैकवचने एनद्वक्तव्य इति वार्तिकबलात्क्लीबे द्वितीयैकवचन एवैनदादेशोऽन्यत्र द्वितीयादावेनादेश एव सूत्रप्राप्त इति भगवतो भाष्यकारस्य सिद्धान्तः । तत्र नपुंसकैकवचने निरवकाशत्वात्प्रथममेनदादेशे ततस्त्यदाद्यत्वात्पूर्वमन्यत्र कृतेन पूर्वविप्रतिषेधेन लुकि तदुत्तरं प्रत्ययलक्षणनिषेधात्त्यदाद्यत्वाभावः । "यद्येनत्क्रियते एनो न वक्तव्य" इति तदग्रिमं तु भाष्यमेकदेशिनोरुक्तिप्रत्युक्तिरूपं, यदि गर्भत्वात् । किञ्च सर्वत्रैनदादेशारम्भे नपुंसकैकवचने प्रथममन्तरङ्गानपीति न्यायेन लुकि तकारोच्चारणसामर्थ्यस्यैनदादेशसमर्पकप्रत्ययलक्षणप्रयोजकत्वमाश्रयितव्यम् । तस्य च समाससाधारणत्वेनैतच्छ्रितक इत्यादावनिष्टस्य तस्य व्यावृत्त्युपायाभावादनभिधानमाश्रयितव्यम् । अतः क्लेशभूयिष्ठत्वान्नेदं सिद्धान्तिसम्मतम् । न च तकारोच्चारणवैयर्थ्यस्यान्तरङ्गे नपुंसकलुकि प्रत्ययलक्षणनिषेधबोधनेन कृतार्थतया बहिरङ्गे सामासिकलुकि तद्भावे मानाभावादेतच्छ्रितक इत्यादौ तदप्राप्तिरिति वाच्यम् । तद्राजसूत्रस्थभाष्यस्वारस्यादन्तरङ्गानपीति परिभाषाया लुगतिरिक्तकार्यापेक्षयैव लुकः प्राबल्यबोधकतया नपुंसकस्वमोर्लुग्विषये नपुंसकत्वप्रयुक्तलुगुत्तरमेवाव्ययेष्विव प्रत्ययलक्षणेन सुबन्तत्वमाश्रित्य समासप्रवृत्तेर्निर्विवादत्वेन प्रकृतविषये सामासिकलुको दुर्लभत्वात् । न चैवं व्याससमासयोरुभयोरपि नपुंसकांशे स्वमोर्लुगित्यस्यैव प्रवृत्तावविशेषादेतच्छ्रितक इत्यादौ समासघटकस्यैतच्छब्दादेर्वार्तिकनयेप्येनदादेशस्य दुर्वारतया तदनिच्छायामनभिधानस्यैव शरणीकरणीयत्वादुभयवादिसम्मतत्वेन कथमनभिधानाश्रयणं परेषां दोषाय भवतीति वाच्यम् । प्रधानाप्रधानयोरिति न्यायेन स्वाश्रयविषयकवृत्तिजन्योपस्थितीयप्रकारतानवच्छेदकत्वलक्षणप्राधान्योपहितनपुंसकत्वविशिष्टार्थबोधप्रयोजकयोरेवेदमेतदोस्तत्प्रवृत्तेरौचित्येन समासघटकयोर्नपुंसकत्वविशिष्टार्थबोधकयोस्तयोरादेशाप्रवृत्त्या तन्निवर्तकत्वेनानभिधानाश्रयणस्यानुपयोगात् । इत्थं च यद्येनदित्येकदेशिभाष्यगतानभिधानसहायेन सर्वत्रैनदादेशमाश्रित्य सूत्रकृदारब्धस्यैनादेशस्य प्रत्याख्यानं न युक्तिसहम् । तस्मान्नपुंसकैकवचनमात्रपरत्वेन तकारान्तो वार्तिकबलादन्यत्र सूत्रानुसाराददन्त इत्येवमनयोर्द्वयोरप्यादेशयोः पृथगारम्भो न्याय्यः । यदि तु न लुमतेत्यत्राङ्गाधिकारप्रतिनिर्देशपक्षे समासेष्वेतच्छ्रितक इत्यादिष्वेनादेशप्रवृत्त्या तदनिर्देशे तदप्रवृत्त्या फलवैषम्यात्सूत्रमतेऽप्यनभिधानमाश्रयितव्यमेवेति नायमतिरिक्तस्सर्वत्रैनदादेशम-

भीप्सतां दोष इत्युच्यते, तदा मास्तु पृथगारम्भ एनादेशस्य, एनदादेशेनैव त्यदाद्यत्वे सर्वनिर्वाहात्। न च तक्रकौण्डिन्यन्यायेन त्यदाद्यत्वापवादत्वादेनदादेशस्य तत्र कृते पुनस्त्यदाद्यत्वाप्रवृत्तेरेनावेनानित्यादिप्रयोगानुपपत्तिरिति वाच्यम्। त्यदादिकार्येषु तक्रकौण्डिन्यन्यायाप्रवृत्तेरसकृदावेदितत्वेनादोषात्। न च तन्न्यायाप्रवृत्तावपि परत्वात्त्यदाद्यत्वे तत एनदादेशे पुनस्त्यदाद्यत्वाप्रवृत्त्या रूपासिद्धिरेवेति वाच्यम्। त्यदाद्यत्वापेक्षया विशेषविहिततया प्रतिपदोक्तत्वमूलकेनान्तरङ्गत्वेन प्रथममेनदादेशस्य निर्बाधतया तदुत्तरं त्यदाद्यत्वेनाभीष्टसिद्धेर्न काप्यनुप-

---

१. न काप्यनुपपत्तिरिति ॥ अत्रेदं बोध्यम्। सूत्रमतेऽनाश्रयणीयानभिधानस्यैतच्छ्रितक इत्यादेस्सर्वत्रैनदादेशवादिनामनभिधानस्याश्रयणीयत्वेन पृथगादेशग्रहणारम्भ एव युक्तः। न च न लुमतेत्यत्राङ्गाधिकारप्रतिनिर्देशपक्षे एतच्छ्रितक इत्यत्रैनादेशप्रवृत्त्या तदनिर्देशे चादेशाप्रवृत्त्या फलवैषम्यात्सूत्रमतेऽप्यनभिधानस्याश्रयणीयतया नायमतिरिक्तस्सर्वत्रैनदादेशमभीप्सतां दोष इति वाच्यम्। न लुमतेति सूत्रेऽङ्गस्येत्यत्र स्वरितत्वप्रतिज्ञामन्तरा अङ्गाधिकारप्रतिनिर्देशपक्षस्यासिद्धतया गुरुभूतस्वरितत्वप्रतिज्ञाधीनस्यास्य पक्षस्याप्रतिनिर्देशपक्षसमकक्षत्वासम्भवेन न लुमता तस्मिन्निति न्यासान्तरे तस्य सुतरामसम्भवेन च निराकृतप्रायत्वात्तत्पक्षेण फलभेदस्यानभिधानसाधकत्वायोगात्। न च पृथगादेशारम्भेऽपि समासे नपुंसकांशे लुकि तकारोच्चारणसामर्थ्यान्न लुमतेत्यस्याङ्गाधिकाराप्रतिनिर्देशपक्षेऽप्यनित्यत्वेनाप्रवृत्तेरभ्युपगन्तव्यतया एनदादेशप्रवृत्तेर्दुर्वारत्वेनानभिधानोक्तेः पक्षद्वयसाधारण्यप्रतीतेः पृथगादेशारम्भपक्षेऽप्यनभिधानाश्रयणक्लेशाभावो नोपपद्यत इति वाच्यम्। नपुंसकैकवचने एनदादेशं वदतो वार्तिककारस्य नपुंसकनिष्ठैकत्वबोधो यत्र तत्रैवादेशस्याभीष्टतया समासे उपसर्जने संख्याबोधाभावेन तत्रैनदादेशस्याप्रवृत्त्या एनच्छ्रितक इति प्राप्नोतीति भाष्यस्य पृथगादेशपक्षसाधारण्याभावेन तत्पक्षेऽनभिधानाश्रयणस्यानावश्यकत्वात्। न च युष्मदस्मत्प्रकरणोक्तदिशा अत्रैनदादेशस्यैकत्वसंख्याबोधे तात्पर्यग्राहकस्य सत्त्वेनात्र तद्भानप्रसक्त्या समासे एनद्दुर्वार एवेति वाच्यम्। तत्प्रकरणस्थग्रन्थस्य दीक्षिताशयवर्णनपरत्वेन नागेशसिद्धान्तप्रदर्शनावसरे तद्ग्रन्थरीत्या शङ्काया अयुक्तत्वात्। नागेशेन हि मञ्जूषायां वृत्तिविचारे "एकार्थीभावबलादेव वृत्तावुपसर्जनपदार्थे संख्याबोधकप्रातिपदिकाभावे एकत्वादिरूपसंख्याविशेषानवगतिः, तेन द्विपुत्रादौ न दोषः। मासजातादावपि शब्दान्न तद्बोधः। किन्त्वनेकमासजाते द्वित्रिशब्दादिपूर्वमासजातस्यैव प्रयोगादेकमासजातविषय एवायं प्रयोग इति निश्चयः। त्वत्पुत्रो युष्मत्पुत्र इत्यादावपि प्रयोक्तुरहङ्कारानास्पदचैत्रपुत्र इत्येव बोधः, विग्रहवाक्यीयैकवचनत्वारोपेणादेशः। अयं चारोपो न बोधफलकः, किन्तु शास्त्रप्रवृत्तिमात्रफलकः, वृत्तेस्तथाबोधे भाष्यकृताऽसाधुत्वबोधनात्। यत्तु आदे शतदभावाभ्यां तत्र संख्याविशेषावगतिः, भाष्ये तात्पर्यग्राहकाभावे सतीति पूरणीयमिति"

पत्तिः । तदेतदाहुरित्यनेन पृथक्कर्तव्यताविषयकस्वकीयनिर्भराभावबोधकेनोपाध्याय-स्सूचयतीत्यलम् ।

ननु नपुंसकस्य झलच इत्यत्राच इत्यस्य पञ्चम्यन्तत्वेन झल्विशेषणत्वे ज्ञानानीत्यादावदन्तेषु नुमागमो न सिद्ध्येदत आह ॥ आवृत्त्येति ॥ नन्विकोऽचि विभक्तावित्युत्तरसूत्रे प्रकृतसूत्रस्थस्याच इत्यस्य षष्ठ्यन्ततया सम्बन्धमाश्रित्य तत्रत्यस्येक इत्यस्य प्रत्याख्याने ज्ञानानीत्यादावदन्तेषु नुमागमस्य सौलभ्या-दावृत्त्याश्रयणं व्यर्थम् । न चैवमौङ्यप्यदन्तानां नुमागमप्रसङ्ग इति वाच्यम् । औङः श्यामिति प्रतिषेधवार्तिकबलात्तत्र नुमागमाभावस्य कल्पयितुं शक्यत्वात् । न च टादावचि ज्ञानेनेत्यादावपि तदापत्तिरिति वाच्यम् । परत्वादादेशेषु सन्नि-पातपरिभाषया नुमो वारणसम्भवात् । षष्ठीचतुर्थ्येकवचनयोः परत्वात्स्यादेशयादे-शयोरजादित्वाभावेन तदप्राप्तेश्च । न च ज्ञानयोरित्यादावपि तदापत्तिरिति वाच्यम् । परत्वादेत्वे सकृद्गतिन्यायेन तन्निवृत्तिसम्भवात् । आमि नुमचिरेति नुटः प्रथमतः प्रवृत्तौ तदप्राप्तेश्चेति चेन्न । सप्तम्येकवचने ज्ञाने इत्यादावाद्गुणं बाधित्वा परत्वादाङ्गत्वाच्च नुमागमप्रवृत्तावनिष्टापत्तेः । तस्माददन्ते सर्वनामस्थाने नुमागमप्रवर्तकत्वेनाजन्ताङ्गस्य नुमित्यर्थस्यावश्यकत्वादावृत्तिरेव शरणमिति युक्तम् । नन्वच इत्यस्य पञ्चम्यन्तत्वेन झल्विशेषणतायाः प्रमाणसिद्धत्वेप्यावृत्त्या षष्ठ्यन्त-त्वेनाङ्गविशेषणतायां मानाभावात्कथं तल्लाभ इत्यत आह ॥ **आवृत्तौ मानमिति** ॥ एवं च हिरण्मयानीति निर्देशबलात्षष्ठ्यन्तत्वेनाङ्गांशे सूत्रस्थादज्ग्रहणाच्च पञ्चम्य-न्तत्वेन झलंशे च विशेषणत्वमावृत्तिवशादिति निष्कर्षः । नन्वेवं काष्ठतङ्क्षी-त्यादावचः परो यो झल् न तदन्तमङ्गं, यश्चाङ्गान्तो झल् नायमचः पर

---

तन्न । तद्विधायकशास्त्राज्ञानवतः तद्बोधानापत्तेः । विग्रहे द्विवचनबहुवचनान्तत्वेऽपि एकार्थीभावबलाद् वृत्तौ तदबोधः " इत्यादिना ईदृशेषु संख्यासामान्यस्य बोधाविषयत्वं स्फुटं प्रतिपादितम् । एवञ्च सर्वत्रैनदादेशपक्षस्यानभिधानाश्रयणक्लेशग्रस्तत्वेन ज्ञापक-सिद्धस्य ज्ञापकसाजात्यादुभयोस्त्यदादिकार्यत्व एवाश्रयणीयस्यानित्यत्वस्य एनमित्यादा-वेनदादेशप्रवृत्त्युत्तरं त्यदाद्यत्वसम्पत्तयेऽन्यतरस्य त्यदादिकार्यत्वाभावेऽप्याश्रयणरूपगौ-रवग्रस्तत्वेन चायुक्तत्वमेवेत्याशयेन पृथग्वक्तव्यतापक्ष आदृतो मूलकारेण । तस्मान्मूलस्थ-स्याहुरित्यस्यारुचिबोधनपरतया योजनमयुक्तमेव । अत्र यथाकथंचिदेवं योजनेऽप्येत-त्समानाशयकशेखरोद्योतयोरेवं योजयितुमशक्यत्वादित्याहुः ।

इति नुमागमानुपपत्तिरत आह ॥ **काष्ठतक्ष्णीत्यादि** ॥ **झल्त्वजातेरिति** ॥ अचः परत्वमङ्गचरमावयवत्वं च तस्याः स्वाश्रयद्वारकं बोध्यम् । इत्थं चाचः परीभूतवर्णवृत्तिझल्त्वजात्याक्रान्तवर्णचरमावयवकस्याङ्गस्य नुमित्यर्थस्य पर्यवसानान्नै-तादृशेषु दोष इति भावः ॥ **ऊर्क्शब्दादाविति** ॥ इमामूर्जमित्याद्यनेकवैदिक-प्रयोगेषु देहि मे भूयसीमूर्जमित्यादिप्रामाणिकानेकलौकिकप्रयोगेषु चोर्क्शब्दस्य स्त्रीत्वविशिष्टार्थबोधकत्वेन सुप्रसिद्धत्वेऽपि नपुंसकत्वविशिष्टार्थबोधकत्वेन क्वाप्य-दृष्टचरत्वात्तस्य नपुंसकत्वप्रयुक्तनुमागमप्रवृत्तिविचारो वन्ध्यापुत्रविवाहप्रचारान्ना-तिरिच्यत इत्याहुः[1] ॥

**नित्यत्वादिति** ॥ कृताकृतप्रसङ्गित्वमात्रेणास्य नित्यत्वमित्याशयः । यदि तु शब्दान्तरप्राप्त्या युजेरित्यस्य न नित्यत्वमित्याश्रीयते, तदा परत्वान्न-पुंसकस्येत्यस्य प्रथमं प्रवृत्तौ पश्चाद्युजेरित्यस्याप्रवृत्तीच्छायां सकृद्गतिन्याय एव शरणम् ॥ **वार्तिकानुरोधादिति** ॥ तत्प्रत्याख्यानानुरोधादिति युक्तम् । फलभेदे प्रत्याख्यानायोगादित्याहुः ॥ **भाष्यकैयटयोरिति** ॥ दीधीवेवीटामिति सूत्रे कैयटे न पदान्तसूत्रे भाष्ये चेत्यर्थः । तत्राद्ये पिपठिषतेः क्विपि पिपठिषि ब्राह्मणकुला-नीत्यत्राल्लोपस्य स्थानिवत्त्वेन झलन्तत्वाभावान्नुमभावः । क्वौ लुप्तं न स्थानिव-दित्यस्य क्वौ विधिं प्रति न स्थानिवदित्यर्थो व्यवस्थापयिष्यते, न तु क्वौ लुप्तं न स्थानिवदिति कैयटे उक्तम् । द्वितीये च "क्लिलुगुपधात्वचङ्परनिर्ह्रासकुत्वेषूप-संख्यान"मिति वार्तिकव्याख्यावसरे क्वौ किमुदाहरणमित्युपक्रम्य लवशब्दात्पव-शब्दाच्चाचक्षाणणिजन्तात्क्विपि लौः पौरित्यत्र स्थानिवद्भावाण्णेरूठ् न प्राप्नोति, क्वौ लुप्तं न स्थानिवदिति भवति ॥ एवमपि न सिद्ध्यति, कथं, क्वौ णिलोपो, णावकारलोपः । तस्य स्थानिवद्भावादूठ् न प्राप्नोति । नैष दोषः । नैवं विज्ञायते, क्वौ लुप्तं न स्थानिवदिति, कथं तर्हि, क्वौ विधिं प्रति न स्थानिवदिति भाष्ये उक्तमिति द्रष्टव्यम् ।

---

१. **आहुरिति** ॥ ऊर्क्शब्दस्य बहुव्रीहौ नपुंसकत्वसम्भवादयं विचार आवश्यक एव । किञ्चादिपदग्राह्यानामूर्दादीनां केवलानामपि नपुंसके सत्त्वस्याबाधितत्वेन तद्विष-येऽप्यस्य विचारस्यावश्यकता । एवञ्चास्य विचारस्य वन्ध्यापुत्रविवाहप्रचारानतिरिक्त-त्वोक्तिर्न युज्यत इति बोध्यम् ।

ननु शुष्कप्रक्रियापरिशीलनाभिनिवेशमूलकोयं मूलकारस्य रूपमालापरिसंख्यानं प्रत्याहारपरिसंख्यानवदनुपयुक्तमेवेत्यत आह ॥ **मन्दबोधनमिति ॥** रूपपरिगणनाकौतुकिनस्तन्निष्पादनपूर्वकतदीयपरिगणनासमर्था मन्दाधिकारिणस्तदनुरञ्जनप्रयोजनकोऽयं प्रयास इत्यर्थः ॥ **आक्षरसमाम्नायिकेष्विति ॥** अयोगवाहानामट्सु शर्षु च कात्यायनेन पाठस्योपसंख्याततवेप्याचार्योपदेशविषयकत्वाभावात्तद्विनिर्मुक्तस्यैवाक्षरसमाम्नायतया तेषामाक्षरसमाम्नायिकत्वाभाव इत्याशयः । आकारादीनामाक्षरसमाम्नायिकत्वमाक्षरसमाम्नायिकवर्णबोध्यत्वादिति बोध्यम् , स्वरेष्वेवाप्रगृह्यस्येति पर्युदासबलादनुनासिक इति युक्तम् ॥ **असाधून्येवेति ॥** अन्यथा बहूर्जि नुम्प्रतिषेधमारभमाणस्य कात्यायनस्य मतेनैतादृशेषु नुमागमप्रवृत्तिः । अचः परीभूतझलन्तस्य नुमागममाश्रित्य तद्वार्तिकं प्रत्याचक्षाणस्य भगवतो भाष्यकारस्य मतेन तदप्रवृत्तिरिति प्रत्याख्यानमसम्बद्धं स्यादिति भावः । **मानाभावादिति ॥** लक्ष्ये लक्षणस्येतिन्यायमनादृत्य पुनर्द्वित्वाभ्युपगमे द्विवारमेव द्वित्वप्रवृत्तिरित्यत्र नियमाभावादित्यर्थः ॥ **शास्त्रेणैवेति ॥** ननु समासान्तविधेरनित्यत्वमपि शास्त्रसिद्धमेव । प्रतेरंश्वादयस्तत्पुरुष इत्युत्तरपदान्तोदात्तविधायके शास्त्रे उद्देश्यत्वेन गृहीतांश्वादिगणस्थराजन्शब्दपाठेन ज्ञापितत्वात् । अतो नास्ति विशेष इति चेत्सत्यम् । अनुगतसमासान्ताभावबोधकेन शास्त्रेणैव तदभावोपपत्तावानुमानिकेनाननुगतानित्यत्वेन तदभावबोधनमनुचितमिति सुधियां विमर्श इत्यलम् ॥

**॥ इति हलन्त नपुंसकलिङ्गाः । शब्दाधिकारस्समाप्तः ॥**



# अथाव्ययानि ।

फलाभाव इति ॥ ननु पूर्वाह्णेतरामधीयाना प्राह्णेतरामधीयानेत्यादौ सुबामन्त्रिते पराङ्गवत्स्वर इति प्राप्तस्य कात्यायनेनाव्ययेषु प्रतिषेधारम्भात्पराङ्गवद्भावाभावः । तथा संख्याव्ययादेर्ङीबित्यनेन अतितरामूर्ध्नी प्रतरामूर्ध्नीत्यादौ ङीपः प्रवृत्तिः । एवमुच्चैस्तरां मुखो नीचैस्तरां मुख इत्यादौ मुखं स्वाङ्गमिति प्राप्तस्योत्तरपदान्तोदात्तत्वस्य नाव्ययदिक्शब्देत्यनेन प्रतिषेधश्चामन्तस्याव्ययत्वे प्रयोजनमस्त्येवेति कथं नैष्फल्यमिति चेत्सत्यम् । तद्धितश्चासर्वविभक्तिरित्यनेन किमेत्तिङिति विहिताम्प्रत्ययान्तस्याव्ययत्वसिद्ध्या प्रकृतोदाहरणानामुपपत्तेः । कास्प्रत्ययादित्यादिना विधीयमानाम्प्रत्ययान्तानामेतादृशप्रयोजनासम्भवाच्च । तयोस्स्वरादिपाठादव्ययसंज्ञायाः प्रार्थनमनर्थकमित्याशयोऽत्र विभावनीय इत्याहुः । "नन्ववदत्तं विदत्तं च प्रदत्तं चादिकर्मणि । सुदत्तमनुदत्तं च निदत्तमिति चेष्यते" इत्यवदत्तादौ भाष्यकृता तादेशस्याच उपसर्गात्त इत्यनेन प्राप्तस्य निषेधारम्भादुपसर्गत्वाभावेन तदभावोपपादनमयुक्तमित्यत आह ॥ **गुणभूतोपसर्गत्वबाध इति** ॥ उपसर्गविभक्तिस्वरप्रतिरूपकाश्चेति चाद्यन्तर्गणसूत्रेण बोधितस्योपसर्गत्वाभावस्यैव तद्भाष्यमनुवादकं, न त्वपूर्वतया तादेशनिषेधकम् । अप्रधानीभूतोपसर्गसम्बन्धानुवादकत्वेनैवोपपत्तावपूर्वप्रधानबाधबोधकताकल्पनाया अनौचित्यादित्याशयः ॥ **स्वरादीनुपक्रम्यान्तोदात्तः पठ्यत इतीति** ॥ फिट्स्वरेणैव तेषामन्तोदात्तत्वसिद्ध्या तादृशपाठस्यानुपयोगात्प्रमादकृतमेतत् ॥ **प्रापकशास्त्राभावादिति** ॥ असति विशेषानुशासने स्वरादीनामन्तोदात्तत्वम् । येषामुभयमभीष्टं प्रामाणिकप्रयोगबलात्तेषां स्वरादित्वं चादित्वं चेति निष्कर्षः ।

अत्रेदं विचार्यते ॥ स्वरादिरव्ययमित्येव सूत्रमस्तु । चादीनामपि स्वरादिपाठेन स्वरादित्वादेवाव्ययत्वसिद्ध्या निपातसंज्ञानुवादेनाव्ययसंज्ञाविधान-

---

१. **प्रमादकृतमिति** ॥ काशिकाकृत इति भावः । अत एवोक्तं मूले काशिकायामिति ॥

स्यानुपयोगात्। इत्थं च चादयोऽसत्त्व इति चादीनां निपातसंज्ञाविधानमपि न कर्तव्यमित्यपरमनुकूलम्। न च निपातसंज्ञानुवादेन अव्ययसंज्ञाया अभावे प्रादीनामभीष्टस्याव्ययत्वस्यानुपपत्तिरिति वाच्यम्। प्रादीनामपि चाद्यन्तर्गततया स्वरादिपाठेनादोषात्। न च चादयोऽसत्त्व इति निपातसंज्ञां विधाय तदनुवादेनाव्ययसंज्ञायामसत्त्ववाचिनामेव भवत्यव्ययत्वमत्र पक्षे तु सत्त्ववाचिनामपि चादीनामव्ययत्वापत्तिरिति वाच्यम्। अव्ययमिति महासंज्ञाकरणबलेन स्वरादीनामपि सत्त्ववाचिनामव्ययत्वस्यानिष्टतया स्वरादिष्विव चादिष्वपि सत्त्ववाचकेषु तदप्रवृत्तेः। न च चादीनां निपातत्वाभावे निपाता आद्युदात्ता इति विधीयमानमाद्युदात्तत्वं तेषामभीष्टमनुपपन्नं स्यादिति वाच्यम्। चादय आद्युदात्ता इति न्यासेनापि तत्सिद्धेः। न च नमस्करोति तिरस्करोतीत्यादौ नमस्तिरश्शब्दादेस्साक्षात्प्रभृतीनि च, तिरोन्तर्धावित्यादिशास्त्रबोधितनिपातसंज्ञामादाय प्रवर्तमानस्याद्युदात्तत्वस्यानुपपत्तिरिति वाच्यम्। चादेराकृतिगणत्वेन तेषामपि चादित्वाभ्युपगमेनाभीष्टसिद्धेः। इत्थं च प्राग्रीश्वरान्निपाता इति निपातसंज्ञाया अप्यनारम्भ एवेति महल्लाघवम्। न च निरुक्तलाघवसम्भवेपि निपातपदघटितेषु बहुषु सूत्रेषु पदद्वयात्मकचादिशब्दप्रयोगे गौरवमिति वाच्यम्। निपातपदस्यापि तथात्वेन सूत्राधिक्येन प्राग्रीश्वरान्निपाता इत्यस्य चादयोऽसत्त्व इत्यस्य निपातपदस्य चाव्ययसंज्ञायामकरणेन च लाघवाधिक्यात्। न चैवमपि प्रादय इत्यारभ्याधिरीश्वर इत्येतत्पर्यन्तानां गत्युपसर्गयोः कर्मप्रवचनीयसंज्ञायाश्च बाध्यबाधकभावोपपत्त्यर्थमाकडारीयत्वलाभायाष्टाध्याय्यां पाठश्चादित्वप्रयुक्ताद्युदात्तत्वलाभार्थं च चादिपाठस्तेषामिति महद्गौरवमिति वाच्यम्। प्रादय इत्यारभ्याधिरीश्वर इत्येतत्पर्यन्तानां चादिष्वेव पठित्वा कर्मप्रवचनीया इत्यत्र कर्मप्रवचनीया एव, न गत्युपसर्गसंज्ञा इत्यर्थसम्पत्त्यर्थमेवकारपाठेन निर्वाहात्। न चाव्ययादाप्सुप इति प्रत्याहारग्रहणात्सत्त्ववाचकानामपि केषांचित्स्वरादीनामुपकुम्भमित्याद्यव्ययीभावानां च यथैवाव्ययत्वं तथा चादीनामपि सत्त्ववाचकानां केषांचिदव्ययत्वापत्तिरिति वाच्यम्। स्वरादिष्वसत्त्वे इत्यारभ्य चादिपाठेनापि तदापत्तिपरिहारसम्भवात्। न च धिन्विकृण्व्योर्लोप इत्येव सिद्धेरकारादेशविधानान्न धातुलोप आर्धधातुक इत्येतत्सूत्रप्रत्याख्यानमपि सूत्रकारस्य भगवतः पाणिनेस्तात्पर्य-

विषयीभूतमित्यर्थज्ञापनपरादाकरात्संज्ञाशब्देषु लाघवावगमाद्बहुपदघटितसूत्रेषु पदगौरवविचार एव न तु मात्रागौरवविचार इति सिद्धान्ताच्च निपातप्रदेशेषु चतुर्षु पदद्वयात्मकचादिशब्दप्रयोगे निपातपदस्थानापन्नपदचतुष्टयातिरिक्तपदाधिक्यमूलकं गौरवं दुर्वारमेवेति वाच्यम्। पदगौरवस्य तत्तत्पदजन्यपदार्थोपस्थित्यादिक्लेशबाहुल्यमूलकतया चादिशब्दस्य समासरूपत्वेन समासप्रयोजकसुबन्तद्वयघटितत्वेऽप्येकार्थीभावमूलकपदार्थोपस्थित्यादेर्निपातपदादविशिष्टतया गौरवस्य दुर्वचत्वात्। न च स्वरादेरप्याकृतिगणत्वेन सङ्ग्रहीतव्यानामव्ययानां गणान्ते पाठकल्पनायां तेषां चादित्वेनान्तोदात्तत्वविघात इति वाच्यम्। आकृतिगणत्वेन सङ्ग्रहाभिप्रायविषयाणां गणान्त एव पाठकल्पनेत्यत्र प्रमाणाभावात्। ततश्च प्राग्रीश्वरान्निपाताश्चादयोऽसत्त्वे इति सूत्रद्वयघटकानां पदानां गणपठितैवकारासत्त्वशब्दाभ्यां निमानेन पदद्वयनिरासादतिरिच्यमानानि त्रीणि पदानि स्वरादिसूत्रे च निपातपदमेकमिति पदचतुष्टयाधिक्यप्रयुक्तं गौरवं किमित्युपेक्षितमाचार्यैरित्याहुः।

---

१. किमित्युपेक्षितमाचार्यैरिति ॥ अत्रेदमुपेक्षाबीजम्। नमस्करोति तिरस्करोतीत्यादौ नमस्तिरश्शब्दादेस्साक्षात्प्रभृतीनि च, तिरोऽन्तर्धावित्यादिशास्त्रबोधितनिपातसंज्ञामादाय प्रवर्तमानस्याद्युदात्तत्वस्यानुपपत्तिः। न च चादेराकृतिगणत्वेन तेषामपि चादित्वाभ्युपगमेनाभीष्टसिद्धिः। इत्थं च प्राग्रीश्वरान्निपातसंज्ञाया अप्यनारम्भणीयत्वेन महल्लाघवमिति वाच्यम्। आकृतिगणत्वेन तत्सङ्ग्रहे तत्तत्सूत्रबोधितविषयातिरिक्तविषयेऽपि निपातसंज्ञापत्तावनिष्टप्रसङ्गात्। न च प्रादय इति सूत्रमारभ्याधिरीश्वर इत्येतदन्तान्यष्टाध्यायीस्थसूत्राणि चादिगणे गणसूत्रतया पाठ्यानि। एवञ्च तत्तद्विषयविशेषपुरस्कारेणैव तेषां चादित्वलाभाद्विषयान्तरे चादित्वप्रयुक्तकार्यस्यानिष्टस्य नापत्तिरिति वाच्यम्। एवं सति निपातत्वप्रयुक्ताद्युदात्तत्वाय तेषां सर्वेषां सूत्राणां गणपाठस्यावश्यकतया कर्मप्रवचनीयसंज्ञया गत्युपसर्गसंज्ञाबाधसिद्ध्यर्थं तासामाकडारीयत्वसम्पत्तये सूत्रपाठेऽपि तेषां पाठस्यावश्यकतया च तावतां सूत्राणामुभयत्र पाठेऽतिगौरवात्। न च कर्मप्रवचनीयसंज्ञया गत्युपसर्गसंज्ञाबाधसिद्ध्यर्थं कर्मप्रवचनीया इति गणसूत्रे एवकारो निवेशनीयः। तन्निवेशे च तत्तत्संज्ञाविषयेऽतिरिक्तसंज्ञानामेवकारेण व्यावृत्तेः कर्तुं शक्यतया तासां बाध्यबाधकभावोपपत्तये आकडारीयत्वसम्पत्त्यर्थं सूत्रपाठे तेषां पाठस्यानावश्यकतया नोक्तगौरवदोष इति वाच्यम्। एवं सत्येवकारेण गत्युपसर्गसंज्ञयोरिवाव्ययसंज्ञाया अपि निवृत्त्यापत्त्याऽनिष्टप्रसङ्गात्। न चैवं सति कर्मप्रवचनीयसंज्ञाविषयाणामन्यत्र स्वरादौ पाठवैयर्थ्यप्रसङ्ग इति वाच्यम्। कर्मप्रवचनीयसंज्ञाविषयातिरिक्तविषयेऽव्ययत्वादिसम्पादनाय तत्पाठसार्थक्यात्। किञ्च गणपाठे तथा सूत्रपाठ-

नन्वादेच इति सूत्रस्थादुपदेशग्रहणाद्वर्णग्रहणेषु प्रकृतपरिभाषाया अप्रवृत्तेर्ज्ञापितत्वेन तद्विरोधादिह सामान्येनानित्यत्वज्ञापनमयुक्तमत आह ॥ **क्वचित्पर्यायग्रहणेपीति** ॥ आदेच उपदेश इत्यत्रापीत्यर्थः ॥ **अनित्यत्वमात्रज्ञापकमिति** ॥ आदेच इत्यत्राप्युपदेशग्रहणात्सामान्येन प्रकृतपरिभाषाया अनित्यत्वज्ञापनद्वारेणैव वर्णग्रहणेषु तदप्रवृत्तिज्ञापनमिति मूलकारो मन्यत इत्याशयः । वस्तुत आदेच इत्यत्र धातुग्रहणस्याननुवृत्तेरेव भाष्यारूढतया गोभ्यां नौभ्यामित्यादावुद्देशांशे प्रसक्तस्यात्त्वस्य वारणेन कृतार्थस्योपदेशग्रहणस्य न प्रकृतार्थसाधकत्वसम्भवः । सति प्रयोजने भुवश्च महाव्याहृतेरिति सूत्रस्थान्महाव्याहृतिग्रहणादविशेषेण परिभाषाया अनित्यत्वं ज्ञापनीयम् । वर्णग्रहणेष्वस्याः परिभाषाया अप्रवृत्तिकल्पनं तु न युक्तमोत्सूत्रस्थभाष्यविरोधादित्यन्यत्र विस्तरः ।

---

करणे गणसूत्रेषु सूत्रपाठ इवाधिकारानुवृत्त्यादेरन्यत्रादर्शनेन यत्र तत्तत्संज्ञाबोधकशब्ददर्शनं तत्तत्सूत्रगृहीतानां तत्तत्संज्ञासिद्धावपि सूत्रान्तरपठितानां तत्तत्संज्ञानापत्तिः । सूत्रान्तराणि तु पाठस्य विशेषविषयतासम्पत्त्यर्थं स्युः । एवञ्च महदनिष्टमापद्येत । अपि च गणसूत्राणां सूत्रविधेयकार्यविजातीयकार्यविधायकताया एव अन्यत्र दृष्टत्वेनात्रापि तथात्वापत्तौ गत्यादिसंज्ञाविधायकत्वं तेषां न स्यात् । तत्र तत्र तत्तत्संज्ञापदोच्चारणसामर्थ्यात्तत्र सजातीयकार्यविधायकत्वाङ्गीकारेऽपि तदघटितसूत्राणां गणपाठशैलीविरोधेन सजातीयकार्यविधायकताया अनौचित्यात् । तस्माच्छास्त्रकारशैलीविरोधेन बहुव्यवस्थाकल्पनापेक्षया पदचतुष्टयाधिक्येन यथान्यासकरणे न किञ्चिदपि गौरवमित्याचार्याणामाशयो विभावनीय इत्याहुः ।

१. पर्यायग्रहणेऽपीतीति ॥ "क्वचित्पर्यायग्रहणेऽपि तत्परिभाषाप्रवृत्तिज्ञापकत्वं च तदनित्यत्वमात्रज्ञापकमिति भावः" इति मूलपाठमनुसृत्येदं प्रतीकम् । पर्यायग्रहण इत्यस्य भुवश्च महाव्याहृतेरित्यत्रेत्यर्थः । अपिना आदेच उपदेश इत्यादिसङ्ग्रहः । एवञ्चाद्ये महाव्याहृतिग्रहणादन्त्ये उपदेशग्रहणाच्च सामान्यतोऽनित्यत्वज्ञापनमेव युक्तम् । उपदेशग्रहणाद्वर्णग्रहणेऽप्रवृत्तिरिति ज्ञापने तु महाव्याहृतिग्रहणस्य वैयर्थ्यं तदवस्थमेव । अत उभयप्रामाण्यात्सामान्यतोऽनित्यत्वज्ञापनमेव युक्तमिति शब्दरत्नकारो मन्यते । व्याख्यानग्रन्थेऽपि अपीतिशब्दयोर्भिन्नक्रमत्वमपिशब्दस्य लुप्तषष्ठ्यन्ततां चाङ्गीकृत्य "आदेच उपदेश इत्यत्रेत्यपेरर्थः" इत्यर्थकत्वेनैवंपरतयैव योजनीयम् । अत एवोत्तरत्र आदेच इत्यत्राप्युपदेशग्रहणादित्यत्र भिन्नक्रमतया उपदेशग्रहणादपीत्यर्थकमपिग्रहणं स्वरसतस्सङ्गच्छत इति बोध्यम् । इदानीन्तनपुस्तकेषूपलभ्यमानात् "क्वचिद्वर्णग्रहणेऽपि तत्परिभाषाप्रवृत्तिः । तत्राप्रवृत्तिज्ञापकं च तदनित्यत्वमात्रज्ञापकमिति भावः" इति पाठादयमेव पाठो ज्यायानिति प्रतिभाति ॥

ननु भूतमियं ब्राह्मणीत्यत्र भूतशब्दो यदि पिशाचादिवाची नियतलिङ्गस्तदा ब्राह्मणीशब्देन सामानाधिकरण्यायोगात्तत्सामानाधिकरण्यनिबन्धनस्य टाबापादनस्यानुपपत्तिः । यद्ययमतिक्रान्ताद्यर्थवाची विशेष्यलिङ्गस्तर्हि स्त्रीत्वोपहितार्थबोधकविशेष्यवाचकब्राह्मणीशब्दसामानाधिकरण्यानुरोधाद्विशेषणवाचाकाद्भूतशब्दाट्टाबुत्पत्तेरभीष्टत्वान्नायमापत्तिविषयः । तस्मादिह कोऽसौ भूतशब्दार्थः । यत्र स्त्रीत्वविशिष्टार्थबोधकब्राह्मणीशब्दसामानाधिकरण्यप्रयुक्तस्यानिष्टस्य टापः प्रसङ्ग इत्यत आह ॥ **भूतशब्द इति** ॥ **पौतन्यवृत्तिरिति** ॥ ब्राह्मणादेराकृतिगणतया तद्गणप्रयुक्ते पूतनाशब्दात्कर्मणि ष्यङि पौतन्यशब्दः । पूतना च कामरूपा बालघातिनी पिशाचयोनिः । ततश्च पिशाचविशेषवाची नियतनपुंसकोऽयं भूतशब्दः । पूतनाधर्मपुरस्कारेण गौण्या वृत्त्या ब्राह्मणीशब्दसामानाधिकरण्यमापन्न इह टाबापत्तिविषय इति भावः । ननु लक्षणायास्समभिव्याहृतपदार्थान्तरान्वयानुपपत्तिमूलकत्वाद्ब्राह्मणीशब्दसमभिव्याहारात्पूर्वमेव प्रातिपदिकसंस्कारवेलायामुपस्थितस्वकीयशक्तिगम्यार्थगतनपुंसकत्वप्रयुक्तेनामाद्यादेशेन संस्कृतस्य भूतमित्यस्य पश्चात्तत्समभिव्याहारदशायामन्वयोपपत्तये स्वीकरणीयया गौणलक्षणया स्त्रीत्वोपहितार्थान्तरबोधकत्वेपि जातसंस्कारबाधायोगाद्विशिष्टस्य प्रातिपदिकत्वाभावाददन्तत्वाभावाच्च टाबापत्तेरसम्भवः । न च विशिष्टस्य भूतमित्यस्य टाबापत्तिप्रयोजकादन्तत्वप्रातिपदिकत्वयोरभावेपि मकारप्राग्वर्तिनः पूर्वान्तवद्भावेन प्रातिपदिकत्वापन्नस्यादन्तत्वान्निरुक्तापत्तिर्दुर्वारैवेति वाच्यम् । आनुमानिकादेशात्मकस्य विभक्त्यन्तस्यैव लाक्षणिकतया पूर्वान्तवद्भावेनादन्तस्य प्रातिपदिकत्वेऽपि तावन्मात्रस्य ब्राह्मणीशब्दसामानाधिकरण्यप्रयुक्तस्त्रीत्वविशिष्टार्थबोधकत्वाभावेन टाबापत्तेर्दुर्वचत्वादिति चेत्सत्यम् । यदा च वाक्यावधिकमन्वाख्यानं प्रातिपदिकसंस्कारवेलायामेव तात्पर्यानुपपत्तिप्रयुक्तया गौणवृत्त्या भूतशब्दस्य स्त्रीत्वोपहितार्थबोधकब्राह्मणीशब्दसामानाधिकरण्यं, तदा टाबापत्तेरवकाश इति ग्रन्थकृतामाशयो विभावनीय इत्याहुः ।

ननु लक्षणया स्त्रीत्वविशिष्टार्थवाचकब्राह्मणीशब्दसामानाधिकरण्यप्रयुक्तस्त्रीत्वोपहितार्थबोधकत्वसम्भवेऽपि स्वगतनपुंसकत्वविशिष्टार्थविषयकशक्तिमत्त्वरूपतद्वाचकत्वस्यानपगमाट्टाबुत्पत्तावपि तत्प्रयुक्ते ह्रस्वे नास्ति दोष इत्यत आह ॥

**तत्र पर्जन्यवदित्यादि** ॥ **अन्तरङ्गत्वादिति** ॥ प्राथमिकोपस्थितिविषयनपुंसकत्वनिमित्तकत्वात्पूर्वोपस्थितनिमित्तकत्वरूपमत्र ह्रस्वस्यान्तरङ्गत्वम् ॥ **पदान्तरसमवधानोत्तरमिति** ॥ ब्राह्मणीशब्दसमवधानप्रयुक्तलक्षणाधीनस्त्रीत्वविशिष्टार्थविषयकनिश्चयोत्तरमित्यर्थः । ततश्च परकालोपस्थितनिमित्तकत्वरूपं टापो बहिरङ्गत्वम् । तेन सकृत्प्रवृत्तस्य ह्रस्वस्य लक्ष्ये लक्षणस्येति न्यायेन टाबन्ते पुनरप्रवृत्त्या प्रयोगासिद्धिः । त्रिकं प्रातिपदिकार्थ इत्याश्रित्य स्त्रीवाचकात्प्रातिपदिकात्स्वार्थे टाबिति निष्कर्षे तु नैतादृशेषु टापः प्रसङ्ग इत्यभीष्टसिद्धिः ।

॥ इत्यव्ययानि ॥



# अथ स्त्रीप्रत्ययप्रकरणम् ।

**बहुकुरुचरेति** ।। समासप्रत्ययविधाविति निषेधात्तदन्तविध्यभावे टित्त्वाभावादेव ङीपोऽप्रवृत्त्या व्यर्थोऽयमनुपसर्जनाधिकार इति तदन्तविधेर्ज्ञापक इति भावः । ननु तदन्तविधावप्यनुपसर्जनाधिकारस्य गृह्यमाणविशेषणताया एव न्याय्यतया टिद्रूपं यदनुपसर्जनं तदन्तादित्यर्थे कुरुचरेत्यस्य समासशास्त्रीयप्रथमान्तपदबोध्यत्वेन विग्रहवाक्यीयनियतविभक्तिकत्वेन वा बहुव्रीहिघटकस्य कुरुचरेत्यस्योपसर्जनत्वेपि टित्त्वेन गृहीतस्य चरेष्ट इति विहितस्य टस्य कथमप्युपसर्जनत्वाभावेन बहुकुरुचरेत्यस्यानुपसर्जनटिदन्तत्वानपायात्कथमिहानुपसर्जनाधिकारेण ङीपो व्यावृत्तिः । न च टितः प्रत्ययतया प्रत्ययग्रहणपरिभाषालभ्यतदन्तस्यापि गृह्यमाणताया आवश्यकत्वेन कृद्ग्रहणपरिभाषया कारकविशिष्टस्य कुरुचरेत्यस्य कृत्प्रत्ययात्मकटिदन्तत्वेन च टिदन्तं यदनुपसर्जनमित्यर्थस्य न्याय्यतया बहुकुरुचरेत्यस्यानुपसर्जनटिदन्तान्तत्वाभावेन तद्व्यावृत्तिरिति वाच्यम् । टित्त्वस्य धात्वादिसाधारणतया प्रत्ययमात्रवृत्तिधर्मपुरस्कारेण प्रत्ययग्रहणाभावेन प्रत्ययग्रहणपरिभाषाविषयत्वाभावात् । कृन्मात्रग्रहणाभावेन कृद्ग्रहणपरिभाषाविषयत्वाभावाच्च निरुक्तपरिभाषाद्वयबोधितगृह्यमाणतासम्पादकटिदन्तत्वस्य कुरुचरेत्यत्र दुर्वचत्वादिति चेत्सत्यम्। लौकिकमत्रोपसर्जनत्वं विवक्षितम् । तदुक्तं भाष्ये " यावद्ब्रूयात्प्रधानादुत्पत्तव्यम् । अप्रधानान्नेति । तावदनुपसर्जनादिति ।" उपसर्जनत्वं च स्वार्थनिष्ठप्रकारतानिरूपितविशेष्यतापन्नपदार्थोपस्थापकत्वम् । स्वार्थनिष्ठविशेष्यतानिरूपितप्रकारतापन्नपदार्थोपस्थापकत्वमेव चानुपसर्जनत्वम् । प्रकृते च बहुव्रीहिघटकस्य कुरुचरेत्यस्य स्वार्थनिष्ठप्रकारतानिरूपितविशेष्यतापन्नवृत्तिद्वारकान्यपदार्थोपस्थापकताया निर्विवादतया तद्घटकस्य टस्यापि तथात्वस्य सुवचत्वेन विशिष्टस्यानुपसर्जनटिदन्तत्वाभावादिह ङीपो व्यावृत्तिरिति विभावनीयमित्याहुः ।। **शब्दप्रवृत्तिनिमित्तकस्वरूपमिति** ।। संज्ञाशब्देषु भावप्रत्ययाभिधेयतया शब्दस्वरूपस्यैव प्रवृत्तिनिमित्तत्वमित्यर्थस्य तस्य भाव इति सूत्रस्थाकरनिरूढत्वात् । रूढिविषये तु रूढ्यर्थतावच्छेदकं जात्यादिरूपमेव प्रवृत्तिनिमित्तमिति संज्ञाशब्दाद्विशेष

इत्याशयः । ननु संज्ञाशब्देन रूढेरेव ग्रहणे क्वुन् शिल्पिसंज्ञयोरित्यौणादिकसूत्रे शिल्पिनीति व्यर्थं, शिल्पोपजीविनि जातिविशेषावच्छिन्ने संज्ञायामित्यनेनैव क्वुन्प्रत्ययोपपत्तेरिति चेन्न । केवलयोगार्थपुरस्कारेणापि क्वचिद्रजक इत्यादौ क्वुन्प्रत्ययस्य साधुत्वोपपत्तये तत्सार्थक्यात् ॥

**लाक्षणिकत्वापरपर्यायमिति** ॥ प्राथमिकोपस्थितिविषयतया तत्तदर्थविशिष्टवाक्यार्थबोधप्रयुक्तानुष्ठापकत्वेन कृतार्थस्य शास्त्रस्य पाश्चात्योपस्थितिविषयार्थान्तरविशिष्टवाक्यार्थमूलकानुष्ठापकताकल्पनायां मानाभाव एव हि गौणमुख्यन्यायस्य बीजम् । तच्च लक्ष्यमात्रसाधारणमतः पुंयोगलाक्षणिकस्यापि गौणत्वमिति मूलकृत्तात्पर्यम् । उपाध्यायस्तु गौणपदस्वारस्याद्गौणलाक्षणिकत्वमप्रसिद्धत्वं च गौणत्वम् । न तु लाक्षणिकमात्रमिति मन्यते । युक्तिबलेन व्यवहारबलेन च सकलविधलाक्षणिकस्यापि गौणत्वसम्भवे यत्किञ्चिल्लाक्षणिकविषयकत्वेन न्यायप्रवृत्तिकल्पनायां दृढतरमानाभाव इत्यत[1] आह ॥ **पदकार्यविषय इति** ॥ न केवलं गौणत्वाभाव एव न्यायप्रवृत्तेर्विघटकः, किन्तु तत्प्रवृत्तिप्रयोजकत्वेनाभिमतस्य पदकार्यत्वस्याप्यभाव इत्याशयः । पदकार्यत्वं च स्त्रीत्वानिमित्तकत्वे सति प्रातिपदिकत्वप्रयुक्तप्रत्ययानिमित्तकत्वम् । सत्यन्तविशेषणाच्च स्थौल्यगुणप्रयुक्तसादृश्यमूलकलक्षणाधीनार्थान्तरबोधकगजवाचकनागशब्दाज्जानपदेति सूत्रेणाभीष्टस्य ङीषः प्रवृत्तिः । अन्यथा जातेरित्यनेन गजवाचकतायां सर्पवाचकतायां चाविशेषेण प्राप्तस्य नियमार्थत्वे तदनुपपत्तिस्स्पष्टैव ॥ विशेष्यदलं तु सदृशलाक्षणिकाद्बुभुक्षिन्शब्दादेः पथिमथीत्यादिशास्त्रविषयतासम्पत्त्यर्थं, त्वद्भवतीत्यादौ प्रत्ययोत्तरपदयोश्चेति च्विनिमित्तकत्वावादेशलाभार्थं चेत्यन्यत्र विस्तरः ॥ **स्त्रीत्यर्थे इति** ॥ गौणलाक्षणिकाजशब्दात्तु स्त्रीत्वविवक्षायां जातिलक्षणस्य ङीषः प्रवृत्त्यभावाददन्तत्वप्रयुक्त एव टाबिति बोध्यम् ॥ **न तु शूद्रत्वमिति** ॥ अत एव त्यदादीनीति सूत्रे भाष्ये शूद्राभीरमित्यत्र द्वन्द्वसाधुत्वार्थमाभीरा जात्यन्तराणीत्युक्तम् । अनुलोमसङ्कराणां मातृजातिरिति प्रवादोऽपि गौणस्तज्जात्यारो-

---

१. **इत्यत आहेति** ॥ सकलविधलाक्षणिकस्यापि गौणत्वमिति प्राचीनमतसाधारणं परिभाषाप्रवृत्तिविघटकमुपायमाहेत्यवतरणं युक्तम् । शुद्धलाक्षणिकानां गौणत्वस्य मूलकारानभिप्रेतत्वात् ।

पमूलक एवेत्याशयः ॥ **शूद्रजातिवृत्तिमत्त्वेनेति** ॥ शूद्रजातेर्या वृत्तिः जीवनोपायभूतो व्यापारस्तद्वत्त्वेनेत्यर्थः ॥ **स्त्रीत्वस्य सत्त्वादिति** ॥ आभीराणामारोपितशूद्रत्वपुरस्कारेण शूद्रशब्दाभिधेयतया शूद्रशब्दार्थसमवेतस्त्रीत्वस्याभीरव्यक्तौ महाशूद्रशब्दाभिधेयभूतायां सत्त्वादित्यर्थः ॥

**शूद्रशब्दादेवेति** ॥ अत्रेदं बोध्यम् । शूद्रा चामहत्पूर्वा जातिरिति टाबन्तनिपातनेन शूद्राज्जातेरमहत्पूर्वादिति लक्षणस्यानुमेयतया ग्रहणवतेति निषेधेन तदन्तविधिनिषेधाच्छूद्रशब्दात्मकप्रातिपदिकाज्जातिवाचकात्प्रत्यासत्त्या शूद्रशब्दाभिधेयसमवेतस्त्रीत्वे टाबित्यर्थस्य पर्यवसानान्महत्पूर्वकशूद्रशब्दान्तात्सत्यपि शूद्रशब्दार्थसमवेतस्त्रीत्वे टापः प्रसक्त्यभावाद्व्यर्थममहत्पूर्वग्रहणं तदन्तविधिं ज्ञापयति ॥ ज्ञापिते तु तदन्तविधौ शूद्रशब्दान्तान्महाशूद्रशब्दादपि टापः प्रसक्त्या तन्निवृत्तये महच्छब्दपूर्वकशूद्रशब्दान्तान्नेत्यर्थकममहत्पूर्वग्रहणम् । ननु तदन्तविधिज्ञापनस्य नास्त्युपयोगः । न च प्रियभवती अतिभवतीत्यादावुगितश्चेति तदन्तान्ङीपः प्रवृत्तिः प्रयोजनमिति वाच्यम् । ग्रहणवतेति निषेधस्य समासप्रत्ययविधावित्येवमात्मकतदन्तविधिप्रतिषेधघटकप्रत्ययांशानुवादरूपतया तन्निषेधस्योगिद्वर्णग्रहणवर्जमित्युगिदंशे प्रतिप्रसवारम्भादेव तत्र तदन्तविधेः सिद्धत्वेन निरुक्तप्रयोगाणां निर्बाधत्वादिति चेन्न । उगिदंशविषयकप्रतिप्रसवस्यापूर्वत्वकल्पनापेक्षया निरुक्तज्ञापकसिद्धार्थानुवादकत्वकल्पनायां लाघवात् । न च तदन्तविध्यभावे भवच्छब्दस्यैवाव्युत्पन्नस्योगितः प्रातिपदिकत्वेन सूत्रस्य तन्मात्रविषयकत्वापत्तौ न ह्येकमुदाहरणमिति न्यायेन सामान्यसूत्रारम्भवैफल्यात्तदन्तविधिना निरुक्तप्रयोगोपपत्त्या महत्पूर्वप्रतिषेधेन तदन्तविधिज्ञापनमनुपयुक्तमेवेति वाच्यम् । महच्छब्दस्याप्यव्युत्पन्नस्य शतृवद्भावप्रयुक्तोगित्त्वव्यपदेशवतस्सत्त्वेन सामान्यसूत्रारम्भसाफल्यात् । वनो र चेत्यत्र प्रत्ययग्रहणपरिभाषालभ्यतदन्तांशमादाय पुनस्तदन्तविधौ वन्नन्तान्तादित्यर्थस्य पर्यवसानादतिधीवरीत्यादिप्रयोगनिर्वाहार्थमावश्यकत्वाच्च । न चैवमपि जातिवाचकशूद्रशब्दान्ताट्टाबित्यर्थे व्यपदेशिवद्भावेन केवलशूद्रशब्दात्तदुपपत्तावपि समुदायशक्त्या जात्यन्तरबोधकमहाशूद्रशब्दघटकशूद्रशब्दस्य जातिवाचकत्वाभावात् ज्ञापितेऽपि तदन्तविधौ स्वांशे चारितार्थ्याभावात्कथं ज्ञापकत्वमिति वाच्यम् । आभीरत्व-

महत्त्वोपहितारोपितशूद्रत्वैतदुभयधर्मपुरस्कारेणैव व्यक्तिविशेषे महाशूद्रशब्दस्य प्रवृत्तिरित्यभ्युपगमेन तद्धटकशूद्रशब्दस्यापि जातिवाचकतया टापो दुर्वारत्वेन चारितार्थ्यस्य सुवचत्वात् । पञ्चशूद्रीत्यादौ तु जातिवाचकशूद्रशब्दान्तत्वेपि शूद्रशब्दार्थसमवेतस्त्रीत्वाभावान्न टाप्प्रत्ययेन द्विगुलक्षणस्य ङीपो बाधः । शूद्रशब्दान्ताज्जातिवाचकादिति तु न युक्तम् । अशूद्रा परमशूद्रेत्यादौ कुक्कुटाण्डवत्समासकल्पनया स्त्रीत्वविवक्षायां सङ्घातस्य जातिवाचकत्वाभावेन टाप्प्रत्ययानुपपत्तेः । सच्छूद्रशब्दो यदि गोपनापितयोर्निरूढस्तदा तदवयवशूद्रशब्दस्यापि निरुक्तरीत्या जातिवाचकत्वेन टाप्प्रत्ययो निर्बाधः । महाशूद्रशब्दात्तु जातिविशेषावच्छिन्नव्यक्तिवाचकत्वे टाप्प्रतिषेधारम्भात्सङ्घातगतजातिवाचकत्वेन जातिवाचकान्तत्वेन वा ङीष्प्रत्ययः । सङ्घातस्य जातिवाचकत्वाभावे कुक्कुटाण्डवत्समासकल्पनया स्त्रीत्वविवक्षायां तु टाप्प्रत्यय एवेति परमनिष्कर्ष इत्याहुः ।

**अत्रत्यभाष्यासम्मतेरिति** ।। तत्रोगितः प्रातिपदिकादित्यर्थे भवती महतीत्युदाहृतम् । न्यासकारोक्तरीत्या व्युत्पन्नत्वेन चोगिदन्तत्वेप्युगित्त्वाभावात्तदसङ्गतिरेवेत्यव्युत्पन्नत्वमेवेह भाष्यकाराभिप्रेतमित्याशयः ।।

**घुमास्थेतीत्त्वमिति** ।। नन्वीत्त्वमवकारादाविति कात्यायनेन वकारादौ प्रतिषेधारम्भाद्धातेः क्वनिपि कथमीत्त्वप्रवृत्तिरित्यत आह ।। **प्रत्याख्यानादिति** ।। ननु वार्तिकप्रत्याख्यानेपि वकारादावीत्त्वप्रवृत्त्यभ्युपगमे शंस्था सव्येष्ठा इति भाष्यकारीयः क्विबन्तप्रयोगो विरुद्धश्चेतेत्यत आह ।। **वाग्रहणमनुवर्त्येति** ।। ननु मण्डूकानुवृत्तौ परिक्लेशो व्यवस्थितविभाषा चेयं भाष्यानारूढा, ततो नायं तत्प्रयोगसमर्थनोपायो न्याय्य इति विप्रतिपत्तावुपायान्तरमाह ।। **विजेवेति** ।। अन्येभ्योपि दृश्यन्त इत्यनेन लोकवेदसाधारणतया प्रवर्तमानोऽयं विच्प्रत्यय इत्याशयः । ननु वचनारम्भदशायामप्रवर्तमानस्येत्त्वस्य वचनप्रत्याख्यानदशायां क्विबादौ प्रवृत्त्यभ्युपगमे प्रत्याख्यानस्यारम्भसमानफलकत्वनियमविरोधात्प्रत्याख्यानासङ्गतिः । प्रत्याख्यानं हि शास्त्रस्य लाघवप्रधानतया वचनारम्भप्रयोजनानामन्यथासिद्धौ भवति । किञ्च शंस्था इत्यादिभाष्यकारीयक्विबन्तप्रयोगबलादीदृशेषु प्रत्याख्यानेऽपि तदप्रवृत्तिरित्येव युक्तम् । धीवरी तु ध्यायतेस्सम्प्रसारणं चेति वार्तिकस्थचकारेण क्विप इव क्वनिपोपि समुच्चयात्सम्प्रसारणदीर्घाभ्यामुपपद्यते ।

अत एव प्यायतिप्रकृतिकानां पीवरी पीवान इत्यादीनां सिद्धिरतो वृथैवायमसार्वत्रिकविच्प्रवृत्तिपरिकल्पनाप्रयास इत्यत आह ॥ **धीर्ध्यायतेर्दधातेर्वेति** ॥ अयं भावः। प्रत्याख्यानमुभयथा भवति। लक्ष्यविसंवादात्प्रयोजनान्यथासिद्धेश्च। तत्र न बहुव्रीहाविति सूत्रस्य धिसकारे सिचो लोप इति वार्तिकस्य च प्रत्याख्यानं लक्ष्यविसंवादात्। त्वकत्पितृको मकत्पितृकश्चकाधीत्यादीनामेवाभीष्टत्वात्। न धातुलोप आर्धधातुके इति सूत्रस्य ऋवर्णान्नस्य णत्वं वाच्यमिति वार्तिकस्य च प्रयोजनान्यथासिद्धेः। जीरदानुर्मातॄणामित्यादौ गुणवृद्ध्यभावणत्वादीनां प्रकारान्तरेण सिद्धत्वात्। इह तु धीवरीत्यादिप्रयोगविरोधात्पावान इत्यादीनां वनिपा सिद्धत्वाच्च प्रत्याख्यानमतः क्विप्कनिपोरीत्त्वप्रवृत्तौ न विरोध इति दधातेर्वेति भाष्यादवगम्यत इति ॥ नन्वेवमपि ईत्त्वस्य हलादिकिङिन्निमित्तकत्वेन बहिरङ्गत्वाद्वेरपृक्तलोपस्यानैमित्तकत्वेनान्तरङ्गत्वाल्लोपस्य प्रथमप्रवृत्तेर्दुर्वारत्वेन प्रत्ययलक्षणसूत्रस्य नियामकत्वमभीप्सतो भाष्यकारस्य नये स्थानिवद्भावेनैवेत्त्वस्य प्रार्थनीयतया स्थानिसम्बन्ध्यल्वृत्तिधर्मघटितधर्मावच्छिन्ननिमित्तताकविधौ निषेधात्कथं दधातेः क्विपि तत्प्रवृत्त्या धीरित्यस्य सिद्धिरत आह ॥ **घुमास्थेति** ॥ **अनजादाविति** ॥ एतद्भाष्यप्रामाण्याद्घुमास्थेत्युत्सर्गः हलीति च तन्निषेधः। तत्र हल्पदमुपचारादच्परं, स्यादित्यध्याह्रियमाणं च व्यवहितादपि न ल्यपीत्यस्मादपकृष्यमाणेन नञा सम्बध्यते। ततश्चाजादौ न स्यादिति तदर्थादभीष्टसिद्धिरल्विधित्वाभावोऽपीत्त्वस्येत्याशयः। प्रत्ययलक्षणकार्यं सुलभमित्यस्येत्त्वमत्र स्थानिवत्त्वेन लभ्यत इत्यर्थः। एतेन हल्पदस्योपचारादज्भिन्नपरत्वमाश्रित्याजतिरिक्तवर्णाद्यवयवकक्ङिदार्धधातुकपरतायामीत्त्वमित्युक्तावप्यल्विधित्वस्य तदवस्थतया निषेधविषयत्वात्स्थानिवद्भावसौलभ्योपपादनमयुक्तमित्यपास्तम्। प्रत्ययलक्षणसूत्रस्य विशेषणत्वेनालाश्रयणे विध्यर्थतामभ्युपगच्छतो वार्तिककारस्य मते घुमास्थेत्यत्र निरुक्तपरिक्लेशमन्तरैव प्रत्ययलक्षणेनेत्त्वं सुलभम्। न च वार्तिककृन्मते वकारादौ निषेधारम्भात्कथमीत्त्वप्रवृत्तिरिति वाच्यम्। अवकार इत्युक्तावपि तदादिविधिना[1] सिद्धावादिग्रहणेन श्रूयमाणवकारादावेव

---

१. **तदादिविधिना सिद्धाविति** ॥ अवकारे इत्यस्य विशेषणीभूताल्ग्राहकसप्तम्यन्तत्वाभावेन तदादिविधिर्दुर्लभः। नञ्समार्थकमेति पृथक्पदमाश्रित्य प्रसज्यप्रतिषेधाश्रयणे तु गौरवमिति चिन्त्यमेतत्।

प्रतिषेधप्रवृत्त्या वेरपृक्तलोपस्यान्तरङ्गत्वात्प्रथमं प्रवृत्तौ प्रत्ययलक्षणेन समर्थनीयस्येत्त्वस्य निर्विवादत्वात् । एवञ्च क्विब्विषये भाष्यवार्तिककारयोरप्यभीष्टमेवेत्त्वमिति नास्त्यारम्भप्रत्याख्यानयोः फलभेदः । नापि क्विबन्तवातप्रमीशब्दस्यारम्भप्रत्याख्यानफलवैगुण्यप्रयुक्तोऽनभिधानपरिक्लेशः । प्रतिषेधवार्तिकं च क्वनिबादिविषयकम् । प्रत्याख्यानमपि प्रयोजनान्यथासिद्धेरेव न तु लक्ष्यविसंवादात् । प्रत्याख्यानबीजतया भाष्यकारेण वार्तिककाराभिमतस्य पावान इति प्रयोजनस्य वनिप्प्रत्ययेनान्यथासिद्धेः प्रदर्शनेपि लक्ष्यविरोधस्याप्रदर्शनात् । तस्माद्धीवरीति ध्यायतिप्रकृतिकमेव सम्प्रसारणदीर्घाभ्यां तदुपपत्तिरित्याहुः ॥ **इदमेवेति** ॥ विहितविशेषणप्रयोज्यनिषेधातिव्याप्तिवारणं शर्वरीत्यत्र ङीब्रयोर्निषेधाप्रवृत्तिरूपमेव, तदितरस्याप्रसिद्धत्वादित्यर्थः ॥

**षट्त्वं नाल्धर्म इति** ॥ षान्तनान्तान्यतरसंख्यावाचकत्वसमानाधिकरणस्तदतिरिक्तः प्रत्ययत्वादिवदखण्डो धर्मविशेष इत्याशयः । अत्रत्यं तत्त्वमधस्तान्निरूपितम् ॥

**किमर्थमिति** ॥ डाबुभाभ्यामित्यत्रेति बोध्यम् ॥ **अनुपसर्जनस्येति** ॥ अनुपसर्जनादित्युचितम्[1] । अनुपसर्जनीभूत उपधालोपविषयो योऽन्नन्तो बहुव्रीहिस्तदन्तादित्यर्थः । अनुपसर्जनाधिकारस्य गृह्यमाणविशेषणतानैयत्येऽपि बहुव्रीहेरप्यत्र तथात्वात्तद्विशेषणत्वमविरुद्धम् । इत्थं च प्रियबहुराजेत्यादावन्नन्तबहुव्रीह्युत्तरपदकबहुव्रीहेरपि प्रत्ययाप्रत्ययसाधारणरूपोपहितान्नन्तत्वस्याव्याघातात्प्रसक्तस्य ङीपो निवृत्तिरनुपसर्जनाधिकारप्रयोजनमित्याशयः । न चानुपसर्जनीभूतबहुव्रीह्यन्तात्प्रातिपदिकादित्यर्थे केवलाद्बहुव्रीहेर्बहुराज्ञीत्यादौ तदनुपपत्तिः, व्यपदेशिवद्भावोऽप्रातिपदिकेनेति निषेधविषयत्वादिति वाच्यम् । तादृशनिषेधस्य धर्मि-

---

१. **उचितमिति** ॥ वस्तुतः सूत्रार्थविवरणे तु व्याख्याप्रदर्शितदिशा बहुव्रीहेरित्यस्य ङीपा सम्बन्धात्पञ्चम्यन्ततया एवावश्यकत्वेन तदनुरोधेनानुपसर्जनादिति पञ्चम्यन्तमेवोचितम् । तत्फलितार्थप्रदर्शनपरे मनोरमाग्रन्थे उपधालोपिन एवेत्यस्य विकल्प इत्यनेन सम्बन्धस्याभ्युपगन्तव्यतया तस्य षष्ठ्यन्ततायां एव न्याय्यतया तदनुरोधादनुपसर्जनस्येति षष्ठ्यन्तमेवोचितम् । एवञ्चात्र पष्ठ्यन्तस्यानौचित्यसूचनमेवानुचितमिति बोध्यम् ।

ग्राहकमानानुसारेण सूत्रोपात्तान्तादिशब्दविषयताया आकरसम्मतत्वेनादोषात् । नन्वन्नन्तबहुव्रीहेरुपधालोपिनो ङीबन्तडाबन्तनान्तत्वभेदेन रूपत्रयसम्पत्त्यर्थमनो बहुव्रीहेरित्युत्तरमुपधालोपिनो वा वचनमिति कात्यायनचोदितं प्रत्याचिख्यासुना भगवता पतञ्जलिना डाबुभाभ्यामित्येतत्सूत्रघटकस्यान्यतरस्याङ्ग्रहणस्य पृथग्योगताश्रयणेन प्रकरणान्तरस्थस्यान उपधेत्यस्य नियामकत्वं व्यवस्थापितम् । यदि तत्रानुपसर्जनाधिकारसम्बन्धेन निरुक्तरीत्या वाक्यार्थस्तदा वचनारम्भदशायामनुपसर्जनाधिकारबहिर्भाविनान्नन्तबहुव्रीहित्वाविशेषादुपधालोपिविषयत्वाच्च प्रियबहुराजेत्यादौ निश्शङ्कं प्रवर्तमानस्य ङीपः प्रकृतनियमेन निवृत्तिकल्पनायामारम्भप्रत्याख्यानयोः फलवैगुण्यलक्षणदोषदूषितत्वाद्भाष्यासङ्गतिरिति चेत्सत्यम् । प्रत्याख्यानभाष्यस्वारस्याद्वचनारम्भेपि व्यवस्थितविभाषाश्रयणादेवंविधेषु ङीपो निवृत्तिरेवेति नास्त्यारम्भप्रत्याख्यानयोः फलवैगुण्यमित्याहुः ॥

केचित्तु नियमविधावन उपधेत्यत्र नास्त्यनुपसर्जनाधिकारसम्बन्ध इत्येव प्रकृतभाष्यबलात्कल्पयितुं युक्तम् । मण्डूकानुवृत्तेरप्यत्र शास्त्रे बहुशो दर्शनेन तस्योत्तरत्र सम्बन्धोपि न विरुद्धः । स्पष्टं चेदमुद्योतशेखरयोः । इत्थं च प्रियबहुराज्ञीत्यादौ ङीपः प्रियबहुधीवरीत्यादौ ङीब्रभावयोश्च प्रवृत्तिर्निर्बाधैवेत्याहुः ॥

**ऋन्नेभ्य इति ङीप इति** ॥ नन्वनो बहुव्रीहेरिति निषेधाड्डाब्विधानाच्च ऋन्नेभ्य इत्यस्याप्राप्तावन्यतरस्याङ्ग्रहणवैयर्थ्यमूलकेन योगविभागेन सम्पाद्यमानोऽयमन्य एव ङीप्प्रत्यय इति कथमृन्नेभ्य इत्युक्तिरिति चेन्न । निषेधडापोरनुवृत्त्या तयोरेव विकल्पनेन पाक्षिकतया प्रसक्तस्य ऋन्नेभ्य इत्यस्यैवाभ्युनुज्ञानमित्याशयात् । नन्वेवमपि वनो र चेत्यस्य ऋन्नेभ्य इत्येतच्छास्त्रविहितङीबनुवादेन रभावविधायकत्वस्य व्यवस्थापयिष्यमाणतया नियमशास्त्राणां च विधिमुखेन प्रवृत्तेर्लाघवोपहितत्वेन न्याय्यत्वात्प्रकरणान्तरस्थेनान उपधेत्यनेन विहितस्य तस्य रभावसम्पादकत्वायोगाद्बहुधीवरीत्याद्यसिद्ध्या कथं नियमोपपत्तिरित्यत आह ॥ **नियमशास्त्राणामिति** ॥ **निषेधमुखेनेति** ॥ अन्नन्तबहुव्रीहावृन्नेभ्य

---

१. भाष्यानुक्तव्यवस्थितविभाषाणामप्रामाणिकत्वमिति वदतो नागेशस्य रीत्या इदं समाधानमनुचितमिति चेत्तद्रीत्यापि समाधत्ते ॥ केचित्त्विति ॥

इत्यनेन पाक्षिकतया योगविभागेन प्रापितस्य तस्यानुपधालोपिनि निषेध एव मुख्यः । उपधालोपिनि तत्प्रवृत्तिश्चानुवाद एवेति नायमपूर्वो ङीबिति भावः । निषेधमुखेन प्रवृत्तौ विरुद्धलक्षणाप्रयुक्तं गौरवं दोषस्तदाह ॥ **अभिमानेनेति** ॥ ननु निषेधमुखेन प्रवृत्तेन नियमेन बहुधीवरीत्यादौ रभावोपपत्त्या न सिद्ध्येदित्यापत्तिरयुक्तेत्यत आह ॥ **अन्यथेति** ॥ नन्वनो बहुव्रीहेरित्यस्य ङीब्रभावोभयविधायकवनो र चेत्येतन्मात्रबाधकत्वे ङीन्निवृत्त्या रभावनिवृत्तेरभीष्टत्वेन तद्दौर्लभ्यस्यापत्तिविषयत्वमयुक्तमत आह ॥ **अन उपधेति** ॥ अत्र पक्षे डाबुभाभ्यामित्यत्र योगविभागेन बहुव्रीहौ पाक्षिकतया साधितस्य ङीपो रभावसम्बन्धाभावादन उपधेत्यनेन नियतस्य तस्य रभावानुपहितत्वात्तद्दौर्लभ्यमित्याशयः । यदि च डाबुभाभ्यामित्यत्र विभक्तस्यान्यतरस्याङ्ग्रहणस्य निषेधविकल्पबोधकत्वाद्वनो र चेति विहितस्यैव तस्य पाक्षिकतया प्रसक्तत्वेन निषेधमुखेन नियमे बहुधीवरीत्यादौ रभावस्सुलभ इत्युच्यते, तदापि दोष इत्याह ॥ **किञ्चैवं बहुश्चेति** ॥ ऋन्नेभ्य इत्यस्यानियतत्वादिति भावः । ननु येन नाप्राप्तिन्यायेन ऋन्नेभ्य इत्यस्यैवानो बहुव्रीहेरिति निषेधोऽस्तु, अन उपधेति नियमोपि तद्विषय एव, बहुधीवरीत्यादौ पाक्षिकी ङीब्रयोः प्रवृत्तिस्तु बहुव्रीहौ वेति वार्तिकायत्तैवेति न किञ्चिदनुपपन्नं तत्राह ॥ **किञ्चेति** ॥ **सुपर्वन् शब्दे इति** ॥ अनुपधालोपिनि बहुव्रीहौ वार्तिकाप्रवृत्तिगमकाभाव एवात्रापत्तिबीजम् । अन्त्यपक्षे डापो निषेधसमकक्षतया वन्नन्तांशे डाबन्तरूपासिद्धेरप्यापत्तिरिति बोध्यम् ॥ **सामान्यचिन्तयेति** ॥ बहुव्रीहौ वेति वचनमनादृत्य प्रकरणान्तरस्थस्यान उपधेत्यस्य निषेधमुखप्रवृत्तिकनियमोपपादकत्वाभ्युपगमे त्व नात्र पक्षे दोषः ॥ **दुर्घट इति** ॥ वस्तुतस्तद्विषये तदसम्बन्ध एव न्याय्य इत्यन्यत्र प्रपञ्चितमतो यथाश्रुतमेव साध्वित्याहुः ॥ **ङीब्नेति** ॥ यथाश्रुतेऽप्युपधालोपिनो वेति विकल्पस्य बहुव्रीहिमात्रविषयकत्वादतिबहुधामेत्यादेर्वन्नन्तान्तत्वाविशेषाच्च मन इति निषेधेन ङीपोऽप्रसक्त्या तदप्रवृत्तेरनुपसर्जनाधिकारसम्बन्धसम्पादकन्यासान्तरैकसाध्यत्वमभिवर्णयतामुपाध्यायानामाशयो दुर्ज्ञेयः । ननु योगविभागप्रयुक्तेन नियमेनैव वार्तिकप्रत्याख्यानो-

---

१. **उपाध्यायानामिति** ॥ शब्दरत्नकृन्नागेश एवेत्यभिप्रायेणेदम् ।

२. **दुर्ज्ञेय इति** ॥ अयमत्र तदाशयः । मन इत्यत्रापि यथाकथं चित्तदन्तविधिस्वीकारेऽप्यन उपधेति सूत्रस्य बहुराज्ञीत्यादाविव बहुदाम्नीत्यादावपि ङीप्सम्पाद-

पपत्तौ न्यासान्तरानुसरणं भाष्यकारस्य निष्प्रयोजनमित्युद्भावयन्नाह ॥ **योगविभागप्रकार इति** ॥ निषेधमुखप्रवृत्तिकनियमाभ्युपगमप्रयुक्तमत्र गौरवं द्रष्टव्यम् । एतेन नियमशास्त्राणां निषेधमुखेन प्रवृत्तिरनुचितेति सूचितमित्यलम् ॥

**न प्रयोगसमवायीति** ॥ तद्विवक्षायामकज्घटकस्य तस्यानर्थक्येऽपि न यासयोरिति ज्ञापकात्प्रत्ययस्थादित्यत्रार्थवत्परिभाषाया अप्रवृत्त्या भवेत्कथं चिदेतिकेत्यादावित्त्वसिद्धिः । पचतकि धकिगित्यादिप्रयोगासिद्धिरेव दोष इत्याशयः ॥ **ज्ञापकसाध्य इति** ॥ क्वचिद्वर्णेभ्योपि कारप्रत्ययोत्पत्त्यभावः प्रकृतसूत्रस्थकादिति निर्देशरूपज्ञापकसाध्य इति तात्पर्यम् ।

केचित्तु रोगाख्यायामिति सूत्रे बहुलग्रहणघटिते कारप्रत्ययविधायकप्रकृतवचनारम्भस्वारस्यादत्रापि बहुलग्रहणसम्बन्धस्य न्याय्यतया बाहुलकादेव क्वचिद्वर्णसङ्घातात्कारप्रत्ययोत्पत्तिः वर्णेभ्यश्च क्वचित्तदनुत्पत्तिरित्यर्थस्य सौगम्यादुभयथा ज्ञापकानुसरणक्लेशो विफल इत्याहुः ॥

**ककारेण व्यवधानमिति** ॥ नन्वाब्ग्रहणस्यापि साक्षादुद्देश्यभूताकारविशेषणतायामाबव्यवहितपूर्वस्य ककारपूर्वस्येत्यर्थः किं न स्यात् । न च ककारघटितप्रत्ययोत्पत्तेः प्रागेवान्तरङ्गत्वादेकादेशप्रवृत्तावुद्देश्यभूतस्याकारस्य दौर्ल-

---

कत्वादतिबहुदामेत्यादौ बहुव्रीहिपदेन तदन्तविधिना प्रसक्तस्य ङीपो व्यावर्तनार्थमत्रानुपसर्जनाधिकारसम्बन्ध इत्यभिप्रयतो मनोरमाकारस्य मते उपधालोपिनो वेति न्यासपक्षे ङीपून्यावृत्तिर्यथाश्रुतपाठे न संघटत इत्यनुपसर्जनाधिकारसम्बन्धानुकूलः पाठ इति ॥ न चान उपधेति सूत्रेऽनुपसर्जनाधिकारसम्बन्धाभावप्रतिपादनपरशेखरादिविरोध इति वाच्यम् । अस्य ग्रन्थस्य मनोरमानुयायितया तद्विरोधस्याकिञ्चित्करत्वात् । शब्दरत्नकृन्मते त्वतिबहुदामशब्दात् ङीबिष्ट एव । तन्मतेऽनुपसर्जनाधिकारसम्बन्धाभावात् । वस्तुतस्तु ईदृशानामनभिधानमेवेष्टं शब्दरत्नकृतः । वनो र चेति सूत्रस्थभाष्यप्रामाण्यात् । अत एव वाक्यसमानार्थकसमासरूपाप्रदर्शनं शब्दरत्नकृतस्स्वरसतः सङ्गच्छत इति बोध्यम् ।

१. **आहुरिति** ॥ ज्ञापकेन साधनाद्बाहुलकात्साधनं तु न लध्विति मूलकारो मन्यते ।

भ्यान्नैतादृशो वाक्यार्थ इति वाच्यम् । "उपजनिष्यमाणनिमित्तोऽप्यपवाद उपसंजातनिमित्तमप्युत्सर्गं बाधत" इति न्यायेन पूर्वमेकादेशस्याप्रवृत्तेस्सुवचत्वात् । न चैवमप्याबव्यवहितपूर्वस्याकारस्येत्त्वविधाने पश्चाद्यणादेशस्यावश्यम्भावितया प्रक्रियालाघवाय यकारस्यैव विधातुमौचित्येनेकारविधानबलान्नैतादृशार्थलाभ इति वाच्यम् । उपसंजातविरोधन्यायेन यणादेशाप्रवृत्तिकल्पनयापि कृतार्थस्येत्त्वविधानस्य निरुक्तवाक्यार्थनिरोधकत्वे मानाभावादिति चेन्न । श्रुतत्वान्न यासयोरिति ज्ञापकाच्च कात्पूर्वत्वरूपविशेषणोपहितस्यैव निर्दिष्टपरिभाषोपस्थापितस्याप्प्रत्ययनिरूपितपूर्वत्वरूपविशेषणसम्बन्ध इत्याशयात् ॥ **अकारशब्देनेति** ॥ मूले इति शेषः ॥ **अनूद्यमानविशेषणत्वादिति** ॥ ननु तस्मादिति परिभाषोपस्थाप्यस्याव्यवहितत्वांशस्य परत्वांशसन्नियुक्ततया प्रकृते पूर्वत्वांशस्य सूत्रे प्रतिपादनात्तद्विरोधेन परत्वांशानुपस्थित्या नात्राव्यवहितत्वांशप्रवृत्तिसम्भव इति चेन्न । परत्वाव्यवहितत्वांशयोरसन्नियोगेनैव तत्र तत्र प्रवृत्तेरभीष्टत्वात् । अत एव व्यवहिताश्चेति चरितार्थम् । अन्यथा ते प्राग्धातोश्छन्दसि परेपीति सूत्रयोः पूर्वत्वपरत्वांशयोरुपादानेन परत्वानुपस्थित्या तत्सन्नियुक्तस्याव्यवहितत्वांशस्याप्रवृत्तेस्तद्वैयर्थ्यं स्पष्टमेव । इत्थं च मिदचोन्त्यात्परः पूर्वौ तु ताभ्यामैजित्यादौ केवलस्याव्यवहितत्वांशस्य प्रवृत्तेर्निर्विवादत्वात्तद्विधेयस्य व्यवधानेन प्रवृत्तिः । ज्ञापकं च सामान्यापेक्षम् । असति बाधके प्रमाणानां सामान्ये पक्षपातात् । तेन तस्मिन्निति परिभाषोपस्थाप्यस्याव्यवहितत्वांशस्य केवलस्योपस्थितिसम्भवात्कपि पूर्वं ढ्लोप इत्यादावव्यवहित एव निमित्ते कार्यप्रवृत्तिः । ध्वनितं चेदं परश्चेति सूत्रे भाष्ये । तत्र हि धातुप्रातिपदिकादिरूपप्रकृतीनां पञ्चम्यन्तत्वेन निर्देशात्परिभाषयैव परत्वांशोपस्थितावारभ्यमाणं तत्सूत्रं प्रत्ययनिरूपितपूर्वत्वेनैव प्रकृतेः प्रयोगः, प्रकृतिनिरूपितपरत्वेनैव प्रत्ययस्य प्रयोग इत्येवं विनिगमनाविरहप्रयुक्तस्योभयविधनियमस्य सम्पादनार्थमित्युक्तम् । अन्यथा सूत्रोपात्तपरत्वांशस्य परिभाषोपस्थाप्यपरत्वांशसन्नियुक्तस्याव्यवहितत्वांशस्यानुपस्थितये सार्थक्यात्तदसङ्गतिस्स्पष्टैवेति दिक् ॥

**पूर्वापरविरोध इति** ॥ स्थाने ग्रहणादनुवादे परिभाषाणामप्रवृत्तिज्ञापनस्य प्रकृतसूत्रे चाप्ककारयोः सामर्थ्यहेतुकाकारव्यवधानबाधोपपादनद्वारेणानुवादे

परिभाषाप्रवृत्तिप्रतिपादनस्य च परस्परविरोध इत्यर्थः। अतो न युक्तं प्राचीनोक्तमिति मूलकाराशयमुत्प्रेक्षते। नन्वनुवादे परिभाषाप्रवृत्तेरभीष्टत्वे वैयर्थ्यमुदीचामित्यत्र स्थानेग्रहणस्य दुर्वारमत आह ॥ **यदि त्विति** ॥ **ज्ञापनासम्भवादिति** ॥ स्वांशे चारितार्थ्याभावादित्याशयः। अनुवादे परिभाषाप्रवृत्तिप्रयुक्तं दूषणमुद्धरति ॥ **वृद्धसंज्ञायामित्यादि** ॥ **मालादीनां चेति** ॥ तद्धि मालप्रस्थ इत्यादौ प्रस्थशब्दोत्तरपदकसमासे पूर्वपदभूतानां मालादीनामाद्युदात्तत्वं विधत्ते, वृद्धसंज्ञायामिक्परिभाषाप्रवृत्तौ च मालादीनामवृद्धत्वात्प्रस्थे वृद्धमित्येव सिद्धे व्यर्थं सदनुवादेष्विक्परिभाषाया अप्रवृत्तिं ज्ञापयतीति भावः ॥ **निर्मूलमिति** ॥ नन्वेवमच्परिभाषाया अनुवादे प्रवृत्तिर्दुर्वारा, ततश्च शिवच्छाया घनच्छविरित्यादौ छे चेति ह्रस्वस्य विधीयमानस्तुग्न स्यात्। तथा दीर्घाज्जसि चेति विधीयमानः पूर्वसवर्णदीर्घप्रतिषेधो गौर्य इत्यत्र न स्यादत आह ॥ **यद्वेति** ॥ **अध्याहारादिति** ॥ आकाङ्क्षापूर्तये क्रियासम्बन्धस्यावश्यकत्वेन विधानं प्रधानमिति तस्यैवाध्याहार इति तात्पर्यम्। वस्तुतो मालादीनां चेति ज्ञापकादिक्परिभाषायां ह्रस्वात्तादाविति ज्ञापकादच्परिभाषायां च विधानक्रियाध्याहारो, नान्यत्र, मानाभावादिति निरूढः पन्थाः ॥ **सन्निहितत्वादिनैवेति** ॥ न तु लक्ष्यविसंवादेन, निर्दिष्टपरिभाषाबोध्याव्यवहितत्वांशस्यानुवादेष्वपि प्रवृत्तेर्निर्विवादत्वादित्याशयः ॥ **असम्भवादिति** ॥ मूले तु निरुक्तार्थस्य स्थवीयत्वे सुग्रहोऽयं हेतुरिति नोपन्यस्तः। कात्पूर्वस्याकारस्येद्भवति स आप्परक इत्युक्तौ तु वाक्यभेदप्रयुक्तं गौरवम्। आप्परकत्वस्यापूर्वत्वेन विधेयतया तथाभूतस्य कारक इत्यादौ पुंस्यपि प्रवृत्तिप्रसङ्गश्च। एतेन लिट्परककृभ्वस्तीत्यनुप्रयोगवत्प्रकृतेपि विशिष्टविधाने न वाक्यभेदो नापि विशेषणविशेष्यभावानुपपत्तिरित्यपास्तम् ॥ **कादौ प्रत्यये इति** ॥ ककारवति प्रत्यये इत्यपि नार्थोऽस्मादेव ज्ञापकादिति बोध्यम्। मूलकारोक्तमव्ययसाहचर्यं स्फोरयितुमाह ॥ **दक्षिणापश्चादिति** ॥

**कथं तल्लाभ इति** ॥ अत्र केचित्। स्त्रीलिङ्गनिर्देशबलादाश्रीयमाणेऽर्थे प्रत्ययत्ववत्प्रतिपदोक्तत्वमपि कल्पनाविषयत्वमधिगच्छत्यौचित्यात्। न हीदं परिभाषायत्तम्। येन विशिष्य तदुपादानमपेक्ष्येत। भाष्येऽपि स्त्रीलिङ्गनिर्देशबलात्स्त्रीविषयो य आकार इत्यर्थो लभ्यत इत्युक्तम्। तत्र स्त्रीविषय इत्यस्य

स्त्रीवाचक इत्यर्थस्तु न युक्तः । द्योतकतापक्षस्यासङ्ग्रहापत्तेः । स्त्रीविषयकबोधप्रयोजक इत्यपि नार्थः । शुभंयिकेत्यादावप्याकारस्य तथात्वेनानिष्टप्रसङ्गात् । अतस्त्र्यधिकारविषय इत्यर्थस्य न्याय्यतया निरुक्तार्थ एव पर्यवसानम् । इत्थं च स्त्रीलिङ्गनिर्देशबललभ्यार्थानुवाद एवात इति निर्देशः । एतेन आपो यकपूर्वस्येत्येव सिद्धे स्त्रीलिङ्गनिर्देशो निष्फल इति प्रत्युक्तम् । लघुभूतेन स्त्रीलिङ्गनिर्देशेनैवोपपत्तावपूर्वस्याप इत्यस्य गौरवाधायकत्वेनायुक्तत्वादिति मूलकाराशयमुत्प्रेक्षन्ते ॥

आहुरिति ॥ नन्वादन्तप्रकृतिकतया क्विप्प्रत्ययस्यानभिधाने प्रमाणाभावः । न च नदीसंज्ञासूत्रस्थं स्त्र्याख्याशब्दस्य विजन्तत्वेनोपपादनपरं भाष्यमत्र प्रमाणम् । अन्यथा प्रचुरप्रयोगविषयतया प्रसिद्धेन क्विप्प्रत्ययेनैव तदुपपत्त्या दृशिग्रहणबोधितासार्वत्रिकत्वोपहितविच्प्रत्ययपर्यन्तानुधावनपरिक्लेशस्य नैष्फल्यमापद्येतेति वाच्यम् । छन्दोवत्सूत्राणीति भगवतो भाष्यकारस्यातिदेशबलेन सूत्रेषु छान्दसकार्यप्रवृत्तेर्निर्विवादतया छन्दस्यादन्तप्रकृतिकत्वेन विशेषविहितत्वात्प्रक्रियालाघवोपहितत्वाच्च तत्र विच एव न्याय्यतया तस्यादन्तप्रकृतिकक्विप्प्रत्ययानभिधानकल्पनायोगात् । न च घुमास्थेति सूत्रस्थस्येत्त्वे वकारप्रतिषेध इति वार्तिकस्य तत्प्रत्याख्यानस्य च फलैक्यसमर्थनमुक्तार्थे प्रमाणम् । अन्यथा वचोंदा इत्यादौ वार्तिकनये क्विबुत्पत्तावीत्वाप्रवृत्तिः । प्रत्याख्याने च तत्प्रवृत्तिरिति फलवैलक्षण्येन प्रत्याख्यानमसङ्गतमिति वाच्यम् । ईत्वे वकारप्रतिषेधो घृतपावान इति दर्शनादित्येवं क्वनिबन्तपावन्शब्दगतेत्वनिवृत्तिरूपप्रयोजनविशेषसंवलनेनैव कात्यायनेन वार्तिकस्यारब्ध-

---

१. उत्प्रेक्षन्त इति ॥ वस्तुतस्तु स्थानेग्रहणसद्भावे स्त्रीलिङ्गनिर्देशबलकल्प्यमानार्थस्यावयवावयविभावेन अत इत्यनेनान्वयस्य दुर्वचत्वेन तदानीं कल्प्यमानार्थस्य स्त्रीप्रत्ययरूपत्वे स्त्रियामित्यधिकृत्य विहित इत्येतद्रूपत्वे वा फले विशेषाभावेन स्त्रीप्रत्यय इत्यर्थकल्पनेनैवाभीष्टसिद्ध्या गौरवान्मानान्तराभावाच्च भाष्ये स्त्रीप्रत्यय इत्यस्य वाचकत्वद्योतकत्वपक्षसाधारण्येन स्त्रीविषयकबोधजनक इत्यर्थकत्वेनापि शुभंयिकेत्यादावनिष्टप्रसक्त्यभावेन स्त्र्यधिकारविषय इत्येतावत्पर्यन्तानुधावनस्य व्यर्थत्वाच्च स्त्रियामित्यधिकारविहितरूपार्थस्य स्त्रीलिङ्गबलात्कल्पयितुमशक्यतया प्रतिपदोक्तस्येत्यर्थलाभस्य परिभाषामात्रसाध्यत्वात्तस्य चिन्त्यतां मूलकार अभिप्रैतीति बोध्यम् ॥

तया तस्य क्विबन्तलक्ष्यगतेत्वप्रवृत्तिप्रतिबन्धकत्वे मानाभावेन वचनारम्भेपि तत्रेत्वप्रवृत्तेस्सुवचतयाऽऽरम्भप्रत्याख्यानयोः फलवैलक्षण्यस्य दुर्वचत्वात् । न च वार्तिककारोपदर्शितप्रयोजनस्य वार्तिकारूढतया वचनारम्भे धीवरीत्यादौ प्रतिषेधप्रवृत्त्यापादनं सम्प्रसारणदीर्घाभ्यां तदुपपत्तिप्रतिपादनं च भाष्यकारीयमसम्बद्धं स्यात् । अतः क्विबन्तविषयेपि वचनारम्भे प्रतिषेधस्य प्रसक्ततया फलभेदो दुर्वार इति वाच्यम् । धीध्यायतेर्दधातेर्वेति जनसनेति सूत्रस्थभाष्यस्वारस्याद्धिसकारे सिचो लोप इत्येतद्वचनवदस्याप्यारम्भविरुद्धफलसम्पत्त्यर्थमेव भाष्यकृता प्रत्याख्यातमिति वक्तुं शक्यत्वेन निरुक्तफलभेदस्य दोषापादकत्वायोगात् । अत एव वचनारम्भफलस्य घृतपावान इत्यादेः कित्त्वविरहितेन वनिपा समर्थनमेव प्रत्याख्याने प्रदर्शितं न तु क्वनिपि प्रवर्तमानस्येत्वस्य निवृत्त्युपायो दर्शितः । आदन्तप्रकृतिकानां क्वनिबन्तानामनभिधानं, दधातेर्वेत्युक्तिरेकदेशिन इति वर्णनं तु साहसमात्रम् । अस्तु यत्र फलभेदस्तस्यानभिधानम् । आदन्तमात्रात्क्विप्प्रत्ययानभिधानकल्पनं तु दुराग्रह एवेत्यरुचिमभिसन्धायाह ॥ **कैयटस्त्विति** ॥ एवञ्च घुमास्थेत्येतत्सूत्रविषयव्यतिरिक्तेभ्य आदन्तेभ्यः प्रचुरप्रयोगविषयस्य क्विप एव कल्पनं युक्तमिति गूढाशयः ॥

**स्वाशब्दादत्यन्तस्वार्थिके इति** ॥ इदं तु चिन्त्यम्[१] । स्वार्थद्रव्यलिङ्ग-

---

१. **चिन्त्यमिति** ॥ वस्तुतोऽस्य ग्रन्थस्य चिन्त्यत्वकथनमसङ्गतमेव । किन्तु मतभेदपरतया व्याख्यानमुचितम् । तथाहि । मनोरमाकारस्तु, आर्यिकेत्यत्रेत्त्वविकल्पमभ्युपगच्छन् तत्सिद्धयेऽत्यन्तस्वार्थिकेष्वपि ङ्याब्ग्रहणसम्बन्धमभ्युपेत्य तेषामपि ङ्याबन्तादेवोत्पत्तिमङ्गीकरोति । स्पष्टं चेदं ङ्याप्सूत्रे मनोरमायाम् । तन्मते स्विकायामिति मनोरमाग्रन्थस्य प्रतीकमुपादाय स्वाशब्दादत्यन्तस्वार्थिके के इत्त्वे साधुरिति व्याख्यानं सम्यगेव । न न्वेवं सति तत्र भस्त्रैषेति विकल्पस्य दुर्वारतया वैकल्पिकेत्त्वमिति व्याचक्षाणानामुपेक्ष्यत्वकथनं मनोरमाकारस्यासङ्गतं स्यादिति चेत्सत्यम् । इदमेवासाङ्गत्यमभिप्रेत्य व्याचक्षाणा इति प्रतीकमादायाकच्चमुक्त्वा वैकल्पिकमित्त्वं व्याचक्षाणा इत्यर्थमुपवर्ण्य प्रकारान्तरेण शब्दरत्नकृता तद्ग्रन्थसङ्गतिरुपपादिता । अनेन ग्रन्थसन्दर्भेण स्विकायामित्यत्रेत्त्वविकल्पो मनोरमाकारसम्मत इति स्पष्टमेव प्रतीयते । शब्दरत्नकृताऽत्र चिन्त्यतायां व्याख्यात्रा प्रदर्शितान् हेतून् मनसि निधायात्यन्तस्वार्थिके के ङ्याब्ग्रहणासम्बन्धं प्रतिपाद्य आर्यिकेत्यत्र नित्यमेवेत्त्वं सत्यभिधाने इति ङ्याप्सूत्रे प्रतिपादितम् । एवं मतविभागेन ग्रन्थलापने कर्तव्ये तदुपेक्ष्य शब्दरत्नग्रन्थस्य चिन्त्यत्वकथनं मन्दमध्यमाधिकारिणामातङ्कजनकतया न युक्तमिति बोध्यम् ।

संख्याकारकप्रयुक्तकार्याणां तत्तदर्थोपस्थितिक्रमानुसारिणा बहिरङ्गान्तरङ्गभावेनैव प्रवृत्तेः कुत्सित इति सूत्रस्थाकरसम्मतत्वेन प्रवृत्तिनिमित्तात्मकस्वार्थमात्रानुवादकानामत्यन्तस्वार्थिकानां बहिर्भूतलिङ्गसम्बन्धबोधकप्रत्ययोत्पत्तेः पूर्वमेव भवितव्यतया टाबन्तात्तदुत्पत्तेरयोगात् । न च ङ्याब्ग्रहणकृतनियमेन तद्धितत्वाविशेषादत्यन्तस्वार्थिकानामपि ङ्याबन्तादेवोत्पत्तिरत एवात्यन्तस्वार्थिके कनि लोहिनिकेत्यादिसिद्धिः । अन्यथा प्रथममेवान्तरङ्गत्वात्कनि तदसिद्धिस्स्पष्टैवेति वाच्यम् । लोहिनिकेत्येतदुदाहरणसमर्थनोपायतया कात्यायनेन लोहितालिङ्गबाधनं वेति वचनारम्भबलेनात्यन्तस्वार्थिकेषु तादृशनियमाप्रवृत्तेः । अत एवात्यन्तस्वार्थिके कनि श्येनिकेत्याद्यनिष्टप्रयोगव्यावृत्तिः । किञ्च निरुक्तवचनेनैव लोहिनिकेत्येतत्सिद्धिमास्थाय ङ्याब्ग्रहणप्रयुक्तस्तादृशनियमस्सूत्रशेषे भाष्यकृता प्रत्याख्यातः । अत एव प्रकृतनियमस्य समासान्तविषये बहुगोमत्केत्यादौ दोषमाशङ्क्य समासान्तगतपरत्वेन समाहितम् । नियमस्य प्रत्याख्यानाभावे च सकलतद्धितसाधारणपरत्वेन पट्वितरेत्यादौ तद्धितोत्पत्तेः पूर्वं प्रसक्तस्य स्त्रीप्रत्ययप्रवृत्तिप्रतिबन्धस्य निवारणाय समारब्धस्य तादृशनियमस्य समासान्तगतपरत्वेन वारणायोगात्तदसङ्गतिरेव । अपि च ङ्याब्ग्रहणप्रयुक्तस्तादृशनियमस्स्वार्थादिप्रयुक्तकार्यगतान्तरङ्गबहिरङ्गभावसिद्धार्थानुवाद एव नापूर्वो, लाघवात् । तथा च स्वार्थादिपञ्चकबहिर्भूतयत्किञ्चिदर्थाभिधायकतद्धितविषयोऽयं नियमो न त्वत्यन्तस्वार्थिकविषय इत्येव भाष्यवार्तिकयोः स्वरसः । पट्वितरेत्यादौ लिङ्गसम्बन्धबहिर्भूतप्रवृत्तिनिमित्तगतप्रकर्षबोधकस्यातिशायनिकस्येव तथाविधकुत्साभिधायकस्य कनस्स्त्रीप्रत्ययान्तादेवोत्पत्तावुदीचामातः स्थाने इत्येतत्सूत्रविषयताया निर्बाधत्वादार्यकेत्यस्योपपत्त्या न तदर्थमप्यपूर्वतादृशनियमाभ्युपगमपरिक्लेशस्योपयोगः । इत्थं च स्विकायामिति श्रीहर्षप्रयोगस्याकारस्थानिकह्रस्वाकारोद्देश्यकेत्त्वविकल्पबोधकभस्त्रैषेत्येतत्सूत्रविषयताप्रयुक्तसाधुत्वसमर्थनाय टाबन्तादत्यन्तस्वार्थिकप्रवृत्तिप्रतिपादनाभिनिवेशो न्यायविरोधात्प्रमाणविरोधादन्यत्रोपपादितस्वग्रन्थविरोधाच्च प्रामादिक इति वदन्ति ॥

केचित्तु प्रयुक्तानामिदमन्वाख्यानं प्रयोगे चार्थानामुपस्थितेः क्रमानुपलम्भात्तदीयपौर्वापर्यप्रयुक्तान्तरङ्गबहिरङ्गभावस्य कार्याणां दुर्वचतया विप्रतिषेध-

शास्त्रबलेन ङ्याबन्तात्तद्धितानामसाधुत्वप्रसक्तौ नियमार्थस्सूत्रकृतो ङ्याब्ग्रहणारम्भः। तथाविधनियमस्य समासान्तेषु दोषमाशङ्क्य परत्वाद्भविष्यन्तीति परिहृतं भाष्यकृता। तत्र परत्वादित्यस्याष्टाध्यायीपाठकृतपरत्वाभिप्रायकत्वे भाष्यासङ्गतिरिति ङ्यापोः परकालप्रवृत्तिकत्वाभिप्रायकम्। समासान्ता हि समाससंज्ञातः पूर्वमेवालौकिके प्रक्रियावाक्ये प्रवर्तन्ते, ततश्च समाससंज्ञोत्तरभाविनीं प्रातिपदिकसंज्ञामुपजीव्य प्रवर्तमानाभ्यां ङ्याभ्यां बाधायोगात्समासान्तेषु न दोष इति भगवदाशयः। तथा च नियमप्रत्याख्यानं नास्माद्भाष्यादवगम्यते। किन्तु यत्रार्थोपस्थितिक्रमानपेक्षमन्यादृशमन्तरङ्गत्वं तत्र नायं नियमः प्रवर्तत इत्येतावन्मात्रमवगम्यते। अत एव कालिकेत्यत्र कालाच्चेति विहितेन प्रतिपदोक्तत्वरूपान्तरङ्गत्वोपहितेन कन्प्रत्ययेन नियमस्य बाधनमुद्भाव्य कन्नन्ताट्टापि प्रत्ययस्थादित्वमिति समाहितम्। लोहिनिकेत्येतत्समर्थनोपायभूतं लोहितालिङ्गबाधनं वेति वचनमप्येतदभिप्रायकमेव, कालाच्चेति सूत्रस्थचकारेण हरिणशब्दोऽपि समुच्चीयत इत्येव हरिणिकेत्यत्र कन्प्रत्ययेन नियमबाधनोपपादनपरभाष्यस्वरसः। तस्मान्न सामिवचन इति निषेधारम्भबलेन ज्ञापितस्यात्यन्तस्वार्थिकस्य ङ्याबन्तादुत्पत्तौ न किञ्चिद्बाधकमित्याहुः।

---

१. आहुरिति ॥ परे तु प्रयुक्तानामन्वाख्यानेऽपि प्रयोगसाधुत्वान्वाख्यानाय कल्पिते प्रक्रियावाक्ये प्रकृतिप्रत्ययादीनां वस्तुतोऽर्थवत्त्वाभावेऽपि च कल्पितमर्थवत्त्वं कल्पितमेव तत्तदर्थानामुपस्थितिक्रमं चाभ्युपेत्यैव शास्त्रप्रक्रिया निर्वाह्येति कुत्सित इति सूत्रभाष्यसम्मता शास्त्रमर्यादा। प्रयोगे तत्तदर्थानामुपस्थितिक्रमाभावेऽपि प्रक्रियादशायां कल्पितस्य क्रमस्य दुरपह्नवतया तादृशक्रमापेक्षस्तत्तत्कार्याणामन्तरङ्गबहिरङ्गभावः प्रक्रियानिर्वाहकतया अभ्युपगम्यते। इमां रीतिमनुसृत्य स्त्रीप्रत्ययानां तद्धितेभ्यः पूर्वमुत्पत्तौ बाधकाभावेन स्त्रीप्रत्ययान्तेभ्यः प्रत्ययान्तत्वेन प्रातिपदिकसंज्ञाभावे स्वाद्यनापत्तौ तत्परिहाराय कृतं ङ्याब्ग्रहणं लिङ्गविशिष्टपरिभाषामाश्रित्य प्रत्याख्यातं भाष्ये। अनन्तरं कुत्सित इति सूत्रस्थभाष्योक्तार्थमपर्यालोच्य "तद्धितविधानार्थन्तु" इति ङ्याब्ग्रहणस्य नियमार्थत्वं प्रतिपादितं भाष्ये। इदं च भाष्यं कुत्सित इति सूत्रस्थभाष्यार्थापर्यालोचनमूलकतया न सिद्धान्तसम्मतम्। तदुक्तं समासान्तानामलौकिके प्रक्रियावाक्ये प्रवृत्तिमपर्यालोचयता नियमार्थत्वपक्षे समासान्तेषु दोष उद्भावितः। अनन्तरं प्रसक्तानुप्रसक्तया स्त्रीप्रत्ययानां स्वार्थिकत्वमुपपाद्य पूर्वपक्ष्याशयानुरोधेन समासान्तेष्वापादितो दोषस्समासान्तानामपि स्वार्थिकत्वादुभयोः स्वार्थिकयोः परत्वात्समासान्ता भविष्यन्तीत्यनेन परिहृतः। अयं च परिहारो ङ्याब्ग्रहणप्रत्याख्यानाभिप्रायेणैव। अन्यथाऽधि-

ननु खिकायामित्यस्य निरुक्तरीत्यात्यन्तस्वार्थिके कन्युदीचामात इत्येतत्सूत्रविषयताया निर्बाधत्वेन तथा व्याचक्षाणानामुपेक्ष्यत्वकथनमयुक्तमत आह ॥ **अकचमिति** ॥ तत्रातस्स्थानिकाकारस्य दुर्लभत्वमुपेक्षाहेतुरिति तात्पर्यम् ॥ **भस्त्राशब्दसाहचर्येणेति** ॥ अजाशब्दसाहचर्येणेत्यपि बोध्यम् ॥ **व्याख्यानेनेति** ॥ एतद्द्वीति वक्तव्ये तथा निर्देश एव व्याख्यानबीजमिति द्रष्टव्यम् ॥ **आत स्थानिकत्वाभावादिति** ॥ अजशब्दान्तबहुव्रीहेश्शैषिके कपीति भावः ॥

**समासरूपप्रातिपदिकत्वाभावादिति** ॥ कृत्तद्धितेति सूत्रादनुवर्तमानस्य समासपदस्य षष्ठ्या विपरिणामो ह्रस्वो नपुंसके इत्यतः प्रातिपदिकपदस्य च सम्बन्ध इत्याशयः । इदन्तु बोध्यम् । शास्त्रीयमत्रोपसर्जनत्वं विवक्षणीयम् । तेन राजकुमारीमिच्छन्राजकुमारीमाचरन्वा ब्राह्मणो राजकुमारीत्यत्र न ह्रस्वः । तस्य स्वार्थविशिष्टार्थान्तरोपस्थापकत्वरूपलौकिकोपसर्जनत्वेपि विग्रहवाक्यीयनियतविभक्तिकत्वादिरूपशास्त्रीयोपसर्जनत्वाभावात् । किञ्च प्रत्यासत्त्या ह्रस्वचिकीर्षाविषयसमासनिरूपितमेवात्रोपसर्जनत्वम् । तेन राजकुमारीपुत्र इत्यादौ पूर्वपदात्मकसमासस्य न ह्रस्वः । तस्य समासशास्त्रीयप्रथमान्तपदबोध्यत्वरूपविशिष्टसमासनिरूपितोपसर्जनत्वेपि यस्य ह्रस्वश्चिकीर्षितस्तत्समासनिरूपितोपसर्जनत्वाभावादिति ॥

---

कारत्वयसामर्थ्यात् ङ्याभ्यां पूर्वं तद्धितोत्पत्तेः कथमप्यसम्भवेनैतत्परिहारासङ्गतिः स्पष्टैव । अत एव कैयटे समासान्ता अपीति प्रतीकमुपादाय "ङ्याब्ग्रहणप्रत्याख्यानेन समासान्तेषु परिहारः" इत्युक्तम् । एवं च प्रत्याख्यानमेव भाष्यसम्मतमित्याकरात्स्पष्टमवसीयते । किञ्च परत्वादित्यस्योत्तरकालप्राप्तिकत्वादित्यर्थकथनमसङ्गतम् । तस्य हेतोः समासान्तरूपपक्षावृत्तित्वात् । समासान्ता अपि स्वार्थिकाः, उभयोः स्वार्थिकयोः परत्वात्समासान्ता भविष्यन्तीति भाष्याक्षरस्वारस्यभङ्गापत्तेश्च । परत्वादिति प्रतीकमुपादाय विप्रतिषेधोपपादककैयटेनाष्टाध्यायीपाठकृतपरत्वस्यैवात्र विवक्षितत्वलाभाच्च । किञ्च भवदुक्तरीत्या उत्तरत्र कथं कालिकेति प्रश्नस्य यथाकथंचिदुपपत्तावपि तदुत्तरं कथं हरिणिकीति प्रश्नस्योपपत्तिर्न सम्भवति । तत्र कनः प्रतिपदोक्तत्वरूपान्तरङ्गत्वासम्भवात् । कालाच्चेति सूत्रे चकारेण हरिणशब्दस्य सङ्ग्रह इति तु न सम्यक् । तत्र हरिणशब्दस्याप्रकृतत्वात् । अनुक्तसमुच्चायकत्वमपि न युक्तम् । मानाभावात् । एवञ्चात्यन्तस्वार्थिकानाराभ्य ङ्याब्ग्रहणासम्बन्ध एव भाष्यसम्मत इत्यन्यत्र प्रतिपादितत्वेन न सामिवचन इत्यनेन ज्ञापितस्यात्यन्तस्वार्थिकस्य ङ्याबन्तादुत्पत्त्यङ्गीकारोऽसमञ्जस एवेत्याहुः ।

**गृह्यमाणविशेषणत्वादिति ॥** नन्वनुपसर्जनाधिकारसम्बन्धाभावे तदधिकारसम्बन्धसार्थक्यसमर्थनाय परिकल्प्यमानस्तदन्तविधिर्दुर्लभ एवेति कथं तदन्तात्तिप्रत्ययप्रसङ्गः । यस्योपसर्जनांशे प्रवृत्तिवारणाय स्त्रियामित्यस्य गृह्यमाणविशेषणत्वमाश्रीयत इति चेन्न । अमहत्पूर्वग्रहणेन स्त्रीप्रत्ययमात्रे तदन्तविधेर्ज्ञापनादनुपसर्जनाधिकारबहिर्भावेप्यत्र तदन्तविधिप्रसक्तिरित्याशयात् । न चामहत्पूर्वग्रहणेनैव सामान्येन स्त्रीप्रत्ययविषये तदन्तविधिज्ञापनसम्भवादनुपसर्जनाधिकारेण पुनस्तदन्तविधिज्ञापनप्रयासो भाष्यकारादीनां निष्फल इति वाच्यम् । स्त्रीत्वाविवक्षया कुक्कुटाण्डवत्समासे ततस्स्त्रीत्वविवक्षायां जातिवाचकशूद्रशब्दान्तस्त्वादिना परमशूद्रेत्यादवनुपसर्जने टाबादिसम्पादकतया तदन्तविधिज्ञापनेन कृतार्थस्यामहत्पूर्वग्रहणस्योपसर्जनानुपसर्जनसाधारण्येन तदन्तविधिज्ञापने मानाभाव इत्याशयेन तदुभयसाधारणस्यातिधीवरीत्यादिप्रयोजननिर्वाहकस्य तदन्तविधेरनुपसर्जनाधिकारेण पुनर्ज्ञापनप्रवृत्तेरदोषात् । न च स्त्रियामित्यस्य गृह्यमाणविशेषणत्वेपि बह्वीभिर्युवतिभिः क्रीता बहुयुवेत्यादावार्हीये ठक्यध्यर्धेति लुकि लुक्तद्धितलुकीति स्त्रीप्रत्ययलुक्यवयवभूतयुवन्शब्दार्थसमवेतस्त्रीत्वमुपादाय समुदायात्प्रसक्तस्य तिप्रत्ययस्य वारणायानुपसर्जनाधिकारसम्बन्धस्यावश्यकत्वादिदमयुक्तमेवेति वाच्यम् । अवयवस्त्रीत्वप्रयुक्तस्य तस्य सकृत्प्रवृत्ततया लक्ष्ये लक्षणस्येति न्यायेन पुनरप्रवृत्त्यैव निर्वाहेणानुपसर्जनाधिकारसम्बन्धस्यानुपयोग इत्याशयात् ॥ **प्रकृतिविशेषणताया इति ॥** अन्यथा बहुकुरुचरेत्यादाववयवस्य स्त्रीत्वाभावादेव समुदायाट्टिदन्तत्वादिप्रयुक्तङीबादिव्यावृत्त्या व्यर्थ एवायमनुपसर्जनाधिकार इत्याशयः । वस्तुतो नात्र ज्ञापनापेक्षेत्याह ॥ **प्राधान्येनेति ॥** श्रुतसम्बन्धादपि प्रधानसम्बन्धो बलवानित्यभिसन्धिः । स्त्रीप्रत्ययानां प्रकृतिजन्यबोधीयमुख्यविशेष्यगतस्त्रीत्वबोधकतानैयत्यात् । प्रातिपदिकादित्यनेन कृत्स्नस्य त्यागायोगाच्चेत्यपि बोध्यम् ॥ **गृह्यमाणस्यैवेति ॥** अन्यथा बहुकुरुचरेत्यादीनामप्यनुपसर्जनत्वेन व्यावर्त्यालाभो ज्ञापनानुपपत्तिश्चेति भावः ॥ **कौम्भकारेयसिद्धिरिति ॥** नन्वनुपसर्जनाधिकारज्ञापिततदन्तविध्यभावेपि प्रत्ययग्रहणपरिभाषालब्धतदन्तविधिना कारशब्दादेव ङीबुत्पत्तावपि स्त्रीप्रत्यये चानुपसर्जने नेति तदादिनियमनिषेधेन कारशब्दप्रकृतिकेनापि ङीपा स्त्रीप्रत्ययान्तत्वानपायात्स्त्रीप्रत्ययान्तस्यापत्येन योगे विधीयमानस्य ढकः कुम्भकारीशब्दादुत्पत्तौ बाधकाभावान्नेदमस्य तदन्तविधेः प्रयोजनमत

आह ॥ **अन्यथेति** ॥ तदादिनियमनिषेधादधिकसङ्ग्रह एव, न तु स्त्रीप्रत्ययविधानावध्याद्यवयवकसमुदायस्य स्त्रीप्रत्ययान्तत्वाभाव इत्याशयः ॥ **अशक्यत्वादिति** ॥ नान्तरीयकत्वमत्र हेतुः ॥

**ततोऽपि ढकीति** ॥ ननु सुप आत्मन इति सूत्रे भाष्ये "सविशेषणानां सर्वत्रावृत्तिरयोगादेकेनेत्युपक्रम्य क्व सर्वत्र, समासविधौ प्रत्ययविधौ च, ऋद्धस्य राज्ञः पुरुषः ऋद्धस्योपगोरपत्यमित्युदाहृत्य षष्ठ्यन्तस्य सुबन्तेन सामर्थ्ये समासो विधीयते, यच्चात्र षष्ठ्यन्तं, न तत्सुबन्तेन समर्थम्। यस्य च सामर्थ्यं न तत् षष्ठ्यन्तं वाक्यं तत्। एवं षष्ठीसमर्थादपत्येन योगे प्रत्ययो विधीयते। यच्चात्र षष्ठीसमर्थं न तस्यापत्येन योगः। यस्य चापत्येन योगो न तत् षष्ठीसमर्थम्, वाक्यं तदि" त्युक्तम्। ततश्च यादृशार्थस्यापत्यादिना योगस्तादृशार्थोपस्थापकवृत्तिपर्याप्त्यधिकरणीभूतादेव प्रातिपदिकात्प्रत्यय इत्यर्थस्य पर्यवसानात्कुम्भकारीशब्दार्थस्यापत्येन योगे कारीशब्दात्तदर्थप्रत्यायकः प्रत्ययः कथं प्रवर्तत इति चेदत्र केचित्। पृथगुपस्थितिविषयानेकार्थगतनिरूप्यनिरूपकभावापन्नविषयतावगाह्येकोपस्थितिनियामकश्शक्तिविशेष एकार्थीभावः। समासादिवृत्तिप्रयोजकतया विकल्प्यमानस्यास्य शक्तिविशेषस्य प्रत्येकमवयवानां स्वातन्त्र्यवारणार्थमाश्रीयमाणा समुदायगता पर्याप्तिर्लक्ष्यानुरोधात्क्वचिदवयवेष्वप्यभ्युपगम्यते। अत एव परमगार्ग्यस्यापत्येन योगेपि गार्ग्यशब्दादेवापत्यार्थकः प्रत्यय इति प्रत्ययग्रहणपरिभाषाप्रयोजनप्रदर्शनावसरे भाष्यकृता व्यवस्थापितम्। भूतकालिको भविष्यत्कालिक इत्यादिप्रयोगाणामप्ययमेव समर्थनोपायः। उत्तरपदे परतस्समासानुशासनमप्यत्रैवार्थे तात्पर्यग्राहकम्। निष्कृष्य पृथगेकार्थीभावकल्पना तु न युक्ता। द्वाभ्यामेकार्थीभावाभ्यां प्रत्येकं तत्तदर्थोपस्थितौ बोधवैजात्यापत्तेः। समुदायगतैकार्थीभावजन्योपस्थितेरवयवगततज्जन्योपस्थितिं प्रति प्रतिबन्धकत्वमिति तु न युक्तिमत्। तस्याश्शक्तेरुपस्थित्येकजीवनत्वात्। अत एवैनामभियुक्ताः स्मारकशक्तिरिति व्यवहरन्ति ॥ प्रकृतसूत्रस्थेनापि समासघटककारीशब्दादपत्यार्थकप्रत्ययापादनपरेण भाष्येणायमेवार्थो ध्वन्यते। ऋद्धस्योपगोरपत्यमित्यादौ च कथमप्युपगुशब्दस्य विशिष्टार्थशक्तिमत्त्वस्य वक्तुमशक्यत्वान्न ततो निरुक्तरीत्या प्रत्ययापादनसम्भव इति नास्ति सुप आत्मन इति सूत्रस्थभाष्य-

विरोधः । तत्रत्यस्य वाक्यं तदिति वाक्यशेषस्याप्ययमेव स्वरसः । ततश्च कुम्भकारीशब्दात्मकसमासपर्याप्त्यैकार्थीभावस्य निरुक्तरीत्या कारीशब्देपि सुलभतया न ततो ढक्प्रत्ययापादनानुपपत्तिः । अशक्यत्वादित्यस्य विशिष्टार्थविषयकतया समुदाये परिकल्प्यमानाया एव शक्तेरवयवेप्याश्रयणात्समुदायपर्याप्तशक्तिगोचरविशिष्टार्थस्यापत्यादिना योगे तदवयवगततादृशैकार्थीभावशक्तिगम्यार्थस्य सम्बन्धो नेति वक्तुमशक्यत्वादित्यर्थ इति न किञ्चिदनुपपन्नमित्याहुः ॥

अन्ये तु यद्धर्मावच्छेदेनापत्याद्यर्थयोगो विवक्षितस्तद्धर्मावच्छिन्नप्रकारताकवृत्तिजन्योपस्थितिविशेष्यबोधकप्रातिपदिकादपत्यार्थवाचकः प्रत्यय इत्येव सुप आत्मन इति सूत्रस्थभाष्यकारीयो निष्कर्षः । एवञ्च ऋद्धस्योपगोरित्यादौ वाक्ये ऋद्धत्वविशिष्टोपगुत्वेनापत्यार्थयोगस्य विवक्षणीयतया तद्धर्मावच्छिन्नवृत्तिजन्योपस्थितेरभावाद्विशेषणाभावप्रयुक्तविशिष्टाभावविधया तथाविधोपस्थितिविषयविशेष्यबोधकप्रातिपदिकत्वस्योपगुशब्दे दुर्लभत्वान्न तस्मादपत्याद्यर्थकस्तद्धितः । कुम्भकारीत्यत्र च कुम्भकर्मकोत्पत्त्यनुकूलव्यापाराश्रयत्वरूपविशिष्टधर्मपुरस्कारेणापत्यार्थविवक्षायामपि तद्धर्मावच्छिन्नप्रकारताकसमासपर्याप्त्यैकार्थीभावजन्योपस्थितिविशेष्यभूतस्त्रीत्वोपहितोत्पत्त्यनुकूलव्यापाराश्रयीभूतव्यक्तिविशेषात्मकविशेष्यभागबोधकतायास्समुदायवत्कारीशब्देऽपि सुवचतया न ततस्तद्धितस्यापत्यार्थकस्य ढक्प्रत्ययस्यापादनानुपपत्तिः । परमगार्ग्यायण इत्यादावप्येषैव गतिरिति न काप्यनुपपत्तिरनिष्टवारणं चानभिधानादेवेति न काप्यनुपपत्तिरित्याहुः ॥

नन्वेवमपि तस्यापत्यमित्यधिकारात्स्त्रीप्रत्ययान्तप्रकृतिकषष्ठ्यन्तादपत्येऽर्थे प्रत्यय इत्यर्थे यस्य स्त्रीप्रत्ययान्तत्वेन जिघृक्षा तत्प्रकृतिकषष्ठ्यन्तादेव प्रत्ययोत्पत्तेर्न्याय्यतया कारीशब्दमात्रप्रकृतिकस्त्रीप्रत्ययान्तस्याभावात्कथं ढगापत्तिरिति चेन्न । प्रातिपदिकादित्यधिकारात्तस्य षष्ठ्यन्तबोधकेन तस्येत्यनेन सामानाधिकरण्यायोगात्प्रातिपदिकपदस्य तत्प्रकृतिकलक्षणायां मानाभावाद्वस्तुभूतसुब्विधित्वेन समर्थपरिभाषाविषयताया निर्बाधत्वाच्च । प्रातिपदिकसम्बन्ध्यपत्यरूपेऽर्थे तत्सम्बन्धघटितविशिष्टार्थोपस्थापकैकार्थीभावोपहितात्प्रातिपदिकात्प्रत्यय इत्याद्यर्थे घकालतनेष्वित्यादिज्ञापकबलात्सुबुत्पत्त्यनन्तरं सुपः परत्र प्रवृत्तावपि तदीयोद्देश्यता-

वच्छेदककोटिप्रवेशाभावेन लिङ्गविशिष्टपरिभाषया स्त्रीप्रत्ययान्ते प्रातिपदिकत्वस्य सुवचत्वेन च ढगुत्पत्तेर्दुर्वारत्वात् । तदेतत्सकलमभिप्रेत्याह ॥ **अवयवेनापीति** ॥ **न तु न्यूनस्येति** ॥ प्रत्ययग्रहणपरिभाषायां तदादिनियमस्याधिकव्यवच्छेदार्थतया तन्निषेधस्य तत्सङ्ग्रहार्थताया एव न्याय्यत्वादिति भावः ॥ **ङीष्बाधनार्थमिति** ॥ अन्यथा पुंयोगलक्षणेनेव जातिलक्षणेनापि ङीषा परत्वात्प्रकृतसूत्रविधेयस्य भवाद्यर्थे चरितार्थस्य ङीपो बाधनापत्तौ स्वरविरोध इत्याशयः ॥ **न चैवमित्यादि** ॥ आपिशलिना प्रोक्तां मीमांसामधीत इत्यर्थे प्रोक्ताल्लुगित्यध्येत्रर्थकस्य लुप्तत्वादवशिष्टप्रोक्तार्थक एवाण्प्रत्ययः तदर्थस्याध्येत्रीं प्रत्युपसर्जनत्वात्तदन्तविधिमन्तरापि प्रसक्तस्य ङीपो वारणार्थमनुपसर्जनाधिकारस्य चारितार्थ्यात्कथं तदन्तविधिज्ञापकत्वमित्याशङ्काभिप्रायः ॥ **व्याख्यानेनेति** ॥ निरुक्ताणन्तमात्रव्यावृत्तिफलकत्वे विशिष्टसूत्रघटकत्वेनानुपसर्जनाणिति न्यासेनैव सिद्धे पृथग्योगारम्भोप्यत्र व्याख्याने बीजमिति द्रष्टव्यम् ॥ **गृह्यमाणविशेषणतयापीति** ॥ श्रुतसम्बन्धस्य बलीयस्त्वमत्र हेतुः ॥

**तद्वारणसम्भवादिति** ॥ अयं भावः । टाबादीनां प्रकृतिजन्यबोधीयमुख्यविशेष्यसमवेतस्त्रीत्वबोधकत्वमिति तु निर्विवादम् । टिड्ढेत्यत्र चित्रायां जाता चित्रेत्यादावणन्तलक्षणङीब्वारणार्थमत इत्यनुवर्त्य स्त्रियां वर्तमानो योऽण्प्रत्ययरूपोऽकारस्तदन्तादित्यर्थस्यावश्यकत्वादापिशलेत्यादेरापिशलिप्रोक्तमीमांसादिकर्मकाध्येतृबोधकत्वेन यश्च श्रूयते प्रोक्तार्थकाण्प्रत्ययाकारस्तदर्थगतं स्त्रीत्वं न मुख्यविशेष्यभूताध्येत्रीसमवेतम् । यदर्थसमवेते तस्मिन् ङीपा भाव्यं, न तदर्थबोधकाकारश्श्रूयते, नापि प्रत्ययलक्षणार्हो, वर्णाश्रयत्वात् । किञ्च गृह्यमाणबोध्यप्रोक्तार्थगतस्त्रीत्वमुपादाय सकृत्प्रवृत्त इति न पुनः प्रवर्तयितुं युक्तः । अतो न तथाविधेषु ङीब्वारणार्थमनुपसर्जनाधिकारस्तस्मात्तस्य युक्तमेवेष्टार्थज्ञापकत्वमिति ॥

**बहुकुरुचरेत्येवेति** ॥ बहुव्रीहावेवेदं व्यावर्त्यम् । द्विगौ तु द्विगुलक्षणो ङीब्भवत्येव ॥ **बहुकुरुचरीति** ॥ ननु तदन्तविधिज्ञापनेपि स्त्रियामित्यस्य गृह्यमाणविशेषणत्वे बहुकुरुचरेत्यादावुपसर्जनस्य स्त्रीत्वविशिष्टबोधकत्वा-

भावादेव ङीप्प्रत्ययाप्रवृत्त्या चारितार्थ्यालाभादनुपसर्जनाधिकारस्य निरुक्तार्थज्ञापकत्वमयुक्तमत आह ॥ **प्रकृत्यर्थविशेषणत्वज्ञापकत्वं चेति** ॥ यावता विना नोपपत्तिस्तावत्सर्वं ज्ञापनीयमित्याशयः । ननु स्त्रियामित्यस्य प्रकृतिविशेषणतायामापिशलेत्यादेरपि प्रोक्तार्थप्रत्ययमादाय श्रूयमाणाण्प्रत्ययात्मकाकारान्तत्वादध्येत्रीसमवेतस्त्रीत्वमादाय स्त्रियां वर्तमानत्वाच्च ततो ङीप् दुर्वार इत्यत आह ॥ **तत्करण इत्यादि** ॥ प्रकृतिविशेषणत्वकरणे तद्व्यावृत्तिरप्यनुपसर्जनाधिकारेणैव, प्रोक्तार्थकाण्प्रत्ययस्योपसर्जनत्वेनानुपसर्जनीभूताण्प्रत्ययात्मकाकारान्तत्वाभावादित्याशयः । नन्वनुपसर्जनपदार्थघटकस्योपसर्जनत्वस्य कृत्रिमाकृत्रिमन्यायेन शास्त्रीयस्यैव ग्रहीतुमौचित्यात्प्रोक्तार्थकाण्प्रत्ययस्येतरविशेषणतया स्वार्थोपस्थापकत्वरूपलौकिकोपसर्जनत्वेपि तथात्वाभावात्कथं तेनास्य व्यावृत्तिरित्यत आह ॥ **उभयोरपीति** ॥ उभयगतिरिह भवतीति परिभाषणादुभयोरपि लक्ष्यानुसारेण तत्र तत्र स्वीकारादिहापि तयोरुभयोर्ग्रहणमित्याशयः । वस्तुतो लौकिकमेवात्राश्रयितुं युक्तम् । शास्त्रीयोपसर्जनत्वस्यापि महासंज्ञाबलेन लौकिकोपसर्जनत्वसामानाधिकरण्येनैवाभ्युपेयतया शास्त्रीयोपसर्जनानां लौकिकोपसर्जनताया निर्बाधत्वाद्बहुकुरुचरेत्यादौ शास्त्रीयोपसर्जनघटकटिदादीनां तत्त्वेन ग्रहणे क्लेशादापिशलेत्यादिघटकाणादिसङ्ग्राहकत्वाच्चेत्याहुः ॥ **ङीबित्यर्थ इति** ॥ इदं प्रकृतोप-

---

१. **लौकिकमेवात्राश्रयितुं युक्तमिति** ॥ कृत्रिमाकृत्रिमन्यायबलाच्छास्त्रीयस्य ग्रहणं न्यायप्राप्तम् । लौकिकस्य ग्रहणं तु प्रयत्नलभ्यम् । एवं च यत्र शास्त्रीयस्य ग्रहणासम्भवस्तत्र लौकिकमेव ग्राह्यम् । अत एव स्त्रीप्रत्यये चेति परिभाषाव्याख्यावसरे वाक्यार्थचन्द्रिकायां शास्त्रीयोपसर्जनाग्रहणेऽसम्भवस्य हेतुत्वकथनं स्वरसतः सङ्गच्छते । यत्र त्वबाधस्तत्र शास्त्रीयमेव । यत्र त्वेकदेशे शास्त्रीयग्रहणबाधस्तत्रोभयमपीत्युचितम् । शास्त्रीयस्य ग्रहणसम्भवे सुतरां तत्परित्यागेन लौकिकस्य ग्रहणं तु न युक्तिमत् । सर्वथा प्रकरणबाधे मानाभावात् । अतोऽत्रावधारणमयुक्तमेव । शास्त्रीयोपसर्जनत्वं महासंज्ञाबलेन लौकिकोपसर्जनत्वसामानाधिकरण्येनैवाभ्युपगन्तव्यमित्यप्ययुक्तम् । भाष्यादितस्तदलाभात् । पूर्वकायादौ व्यभिचाराच्च । भाष्ये तु महासंज्ञाबलादप्रधानत्वसामानाधिकरण्येन शास्त्रीयोपसर्जनत्वं व्यवस्थापितम् । न तु लौकिकोपसर्जनत्वसामानाधिकरण्येन । अप्रधानत्वं तु शाब्दार्थभेदेन द्विविधम् । तत्र पूर्वकायादौ शाब्दमिति न व्यभिचार इति स्पष्टं शब्देन्दुशेखरे । एवं च शास्त्रीयोपसर्जनत्वनैयत्येन लौकिकोपसर्जनत्वग्रहणं प्रत्याशा न कार्या । अत उभयोर्ग्रहणमिति मूलोक्तमेव युक्तम् । अत्र युक्तमुत्पश्यन्तु सुधिय इत्याहुः ।

युक्तांशोपपादनाभिनिवेशेन । कार्मस्ताच्छील्य इति टिलोपनिपातनेनान्निति प्रकृतिभावषिड्ढेत्यणणन्तलक्षणङीबणो द्व्यच इति फिञित्येतत्त्रितयमपि ताच्छीलिके णे ज्ञापनीयतया भाष्यकाराभिप्रेतम् । अत एवात्र सूत्रे भाष्ये ताच्छीलिके णेऽण्कृतानि भवन्तीति कार्यबहुत्वाभिप्रायकबहुवचनान्तप्रयोगोपपत्तिः । तत्र निपातनेन प्रकृतिभावनिवृत्तावपि चौरीत्यादिङीबन्तप्रयोगश्चौरायणीति फिञन्तप्रयोगश्च ज्ञापनफलं द्रष्टव्यम् । यद्यपि छत्रादिभ्योऽणिति विधाने लाघवं, निरुक्तसकलकार्यनिर्वाहश्च ज्ञापनपरिक्लेशमन्तरैव सुगम इति णप्रत्ययः प्रत्याख्यातुं युक्तः, तथापि क्लेशोपहितं न्यासं गौरवपराहतं च ज्ञापनमेवादृतं भगवता, ज्ञापकसिद्धस्यासार्वत्रिकत्वेन क्वचिदप्रवृत्त्या छत्रेत्यादिप्रयोगसमर्थनाभिसन्धानात् । अणूप्रत्यये हि विधीयमाने तदुपपत्तिर्दुरुपपादैवेति वदन्ति ॥

**वार्तिकप्रत्याख्यानायेति** ॥ यञश्चेति ङीब्विधायके भवार्थकस्य द्वीपादनुसमुद्रं यञिति विहितस्य यञो ग्रहणाभावार्थमापत्यग्रहणं द्वीपाद्यञः प्रतिषेधार्थमिति वार्तिककृदारब्धवचनं गर्गादिभ्यो यञित्यनेनाकारात्मकानुबन्धोपहितस्यायञः प्रत्ययस्य विधानम् । स एव क्षरपोऽयञश्चेति संहितापाठेनाकारप्रश्लेषान्ङीब्विधावनूद्यते । ततो नास्ति भवार्थकस्य यञो ग्रहणशङ्केति भाष्यकृता प्रत्याख्यातमिति भावः । ननु वार्तिकमते तद्राजस्याभिजिद्विदभृदित्यादिसूत्रेणापत्यबोधकाणन्तात्स्वार्थे विधीयमानस्य यञोप्यपत्यार्थकत्वाद्भवति ङीप्प्रत्ययः । प्रत्याख्याने तु नायमयञ्प्रत्यय इति ङीपा न भाव्यमतः प्रत्याख्यानारम्भयोः फलवैजात्यादयुक्तमिदं प्रत्याख्यानमत आह ॥ **अभिजित्यादि** ॥ **अस्त्रियामित्यनुवृत्तेरिति** ॥ व्रातच्फञोरस्त्रियामित्यतस्तदनुवृत्तिरिति भावः । **सिद्धान्तेपीति** ॥ वार्तिककारस्येति शेषः । अस्त्रियामेव यञः प्रवृत्त्या स्त्रियां यञन्तत्वाभावादित्याशयः । यदि तु देवाद्यञञाविति विहितस्य यञोपि प्राग्दीव्यतीयस्यापत्यार्थकताया निर्बाधत्वाद्वार्तिकमते ङीब्दुर्वारः । प्रत्याख्यातृभाष्यकारमते तु नायमञञ्प्रत्यय इति नास्ति ङीपः प्रवृत्तिरित्येवं प्रत्याख्यानप्रतिबन्धकतया प्रसक्तस्य फलवैलक्षण्यस्य निरासार्थमापत्यग्रहणस्य वार्तिककारचोदितस्यापत्याधिकारविहितपरत्वमभ्युपेयते, तदा स्वार्थिकस्य तद्राजस्याताद्दृशत्वादेव वार्तिकमतेपि ङीप्प्रत्ययाप्रवृत्त्या नास्ति फलवैजात्यसम्भवः प्रकृतविषयेपि । तस्माद-

स्त्रियामित्यस्यानुवृत्त्या तन्निवृत्त्यभिनिवेशो नातीवोपयुज्यत इति बोध्यम् । ननु भाष्ये यस्कादिभ्यो गोत्रे यञञोश्चेति लुग्विधावकारप्रश्लेषेण निर्वाहेपि सङ्घाङ्कलक्षणेष्वित्यत्राकारप्रश्लेषासम्भवादनिष्टप्रसङ्ग इत्यत आह ॥ **सङ्घाङ्केति** ॥ **भाष्यप्रामाण्यादिति** ॥ अभिजिद्विदभृदिति सूत्रेणाण्णन्ताद्विधीयमानस्य स्वार्थिकस्य यञ्प्रत्ययस्य गोत्रप्रत्ययान्ताद्विधाने गोत्रार्थताया अपि सम्भवेन गोत्रग्रहणानुवृत्तिबलेन तदनुबन्धकपरिभाषाप्रवृत्तिप्रतिबन्धो वक्तुमशक्य इति भावः ॥

**लिङ्गविशिष्टपरिभाषयेति** ॥ ष्फान्ते यञन्तस्य प्रातिपदिकत्वस्यारोपादभीष्टसिद्धिरित्याशयः । यत्तु तद्धितान्तत्वस्यारोप इति तन्न ॥ दाक्षी दिदृक्षू इत्यादावन्तवद्भावप्रयुक्ततद्धितान्तत्वनिबन्धनप्रातिपदिकत्वप्रयुक्तानिष्टवारणाय कृत्तद्धितांशेऽप्यप्रत्ययग्रहणसम्बन्धेन कृत्तद्धितातिरिक्तप्रत्ययान्तभिन्नस्यैव तदन्तस्य प्रातिपदिकत्वप्रसक्त्या तद्धितान्तत्वातिदेशमात्रेण ष्फान्ते प्रातिपदिकत्वस्य दौर्लभ्यात् ॥ **तत्समानार्थकभाष्येति** ॥ तत्र हि षित्करणसामर्थ्येन ङीषमुपपाद्य तद्धितग्रहणस्य प्रकृतविषये प्रयोजनाभावः फलमित्युक्तम् । लिङ्गविशिष्टपरिभाषाप्रवृत्तौ च सुलभतयैव प्रातिपदिकत्वलाभेनाभीष्टसिद्ध्या सामर्थ्यपर्यन्तानुधावनपरिक्लेशो भाष्यकृतां विफल इत्याशयः । परिभाषाप्रवृत्तौ च डाबुभाभ्यामिति विहितडाबन्तदामाशब्दस्य द्विशब्देन बहुव्रीहौ दामहायनान्ताच्चेति ङीपः प्रसङ्ग

---

१. **नातीवोपयुज्यत इति** ॥ वस्तुतस्तु अभिजिद्विदेत्यादिसूत्रे गोत्रमिति वक्तव्यमिति वार्तिकमारब्धम् । गोत्रत्वप्रयुक्तं कार्यं भवतीति तदर्थः । अनेन वार्तिकेन गोत्रप्रत्ययप्रयुक्तकार्यातिदेशे प्रकृतवार्तिकेऽपत्याधिकारग्रहणेऽपि गोत्रप्रत्ययस्यापत्यप्रत्ययाधिकारस्थत्वाव्यभिचारेणात्र ङीपो दुर्वारतया तत्र तद्वारणमस्त्रियामित्यनुवृत्त्यधीनमेव । न च तन्निराकर्तुं शक्यम् । गोत्रादयं स्वार्थिको गोत्रमेव भवतीति तत्प्रत्याख्यानपक्षेऽपत्याधिकारस्थत्वं दुर्वचमिति वाच्यम् । आरम्भप्रत्याख्यानयोः फलैक्याय तत्र स्त्रीत्वमेव नास्तीति वक्तव्यत्वात् । अत एवास्त्रियामित्यस्य मण्डूकानुवृत्तिरप्युपपद्यते । अत एव तत्र भाष्ये वार्तिकप्रयोजनकथनावसरे आभिजितक इति वुञेव प्रयोजनत्वेनोक्तः । न तु स्त्रीप्रत्ययविशेषः । एवं चास्त्रियामित्यनुवृत्तिर्मूलोक्ता न्याय्यैव । मूलस्थस्य सिद्धान्तेऽपीत्यस्य अभिजिदित्यादिसूत्रस्थे भाष्यवार्तिककारयोस्सिद्धान्तेपीत्यर्थः । एतेन सिद्धान्तेऽपीति प्रतीकमुपादाय वार्तिककारस्येति शेष इति व्याख्यानमपि परास्तम् । भवदुक्तरीत्या अस्त्रियामित्यस्याननुवर्तनेऽतिदेशेन तत्र ङीपो दुर्वारत्वादिति दिक् ।

इत्याशयः ॥ **अप्रातिपदिकत्वेपीति** ॥ षिद्गौरादिभ्य इत्यत्र षिदंशे प्रातिपदिकाधिकारस्यासम्बन्धः । त्रपूष् लज्जायामित्यादिभ्यो धातुभ्यस्तु नायं प्रवर्तते । विशेषविहितेन षिद्भिदादिभ्य इत्यङा बाधादत इत्यधिकाराच्च । अङन्तात्तु षिदन्तत्वाभावादप्रसङ्ग एवेति नास्ति तद्धितग्रहणस्य प्रयोजनम् । तस्मादासुरेरुपसंख्यानमिति वार्तिकार्थोपसंग्रह एव तस्य प्रयोजनमिति मूलव्याख्याकारयोराशयः । केचित्तु दक्षानन्तरापत्ये दाक्षायणीत्यप्येतस्य प्रयोजनमिति वदन्ति ॥

नन्वायनो नकारोच्चारणात्फिनो नकारस्येत्संज्ञा बाध्यतां, तत्राह ॥ **असञ्जातेति** ॥ उपसञ्जातविरोधो बाध्यते न त्वसञ्जातविरोध इति न्यायः । प्रकृते च फिनो नस्येत्संज्ञाप्रवृत्तिकाले न कश्चिद्विरोधः । किन्तु तदादेशभूतस्यायनो नकारस्य तत्प्रवृत्तावेव विरोध इत्याशयः ।

ननु पञ्चाश्वेत्यादावपरिमाणेत्यनेन द्विगुनिमित्तस्यैव निषेधे ठञ्निमित्तस्य दुर्वारतया निषेधवैयर्थ्याद्बाध्यसामान्यचिन्तया ङीप्रत्ययमात्रस्य निषेधोऽयमिति वक्तुं युक्ततया तदप्रवृत्तये व्याख्यान्तराश्रयणपरिक्लेशो मूलकारस्यायुक्त इत्यत आह ॥ **द्वाभ्यां शताभ्यामित्यादीति** ॥ बहूनां लाभानां निमित्तभूता दक्षिणभुजस्फूर्तिर्बहुलाभेत्यत्र गोद्व्यच इति विहितस्य यतो लुक्यपि निषेधचारितार्थ्यं सुवचम् ॥ **कनो लुगिति** ॥ शताच्च धन्यतावित्यत्रासमासग्रहणानुवृत्त्या समासे धन्यतोरप्रवृत्तेस्संख्याया अतिशदन्ताया इत्यनेन भाष्यकाराभीष्टतदन्तविध्युपहितेन प्राप्तोऽयं कन्प्रत्यय इति बोध्यम् ॥

**अवान्तरवाक्यार्थबोधेति** ॥ येन विधिरित्यस्य विशेषणविशेष्यभावपरिज्ञानाधीनतया तत्परिज्ञानाय स्वीक्रियमाणे सामान्यवाक्यार्थबोधे क्षेत्रपदार्थान्वितस्यैव काण्डस्य द्विगुविशेषणतया तदन्तविधौ पुनर्द्विगुना क्षेत्रस्य सम्बन्धायोग इति भावः । ननु येन विधिरित्यनेन तदन्तविध्युत्तरं पूर्वं वा सामानाधिकरण्यवतो विशेषणवाचकस्य स्वं रूपमित्येतच्छास्त्रबोधितस्वरूपाभिधायकशक्तिमतः स्वाभिधेयचरमावयवके लक्षणायां तात्पर्यमवगम्यते, तत्र क्षेत्रवृत्तित्वविशिष्टकाण्डस्वरूपाभिधायकस्य वाक्यस्य लक्षणानौचित्याल्लक्ष्यैकदेशभूतकाण्ड-

पदार्थे क्षेत्रान्वयायोगाच्च तदन्तेनैव क्षेत्रस्य सम्बन्धस्स्यादिति व्यर्थमेवान्तग्रहणमिति चेत्सत्यम् । सामान्यवाक्यार्थबोधकाले क्षेत्रवृत्तित्वविशिष्टस्यैव विशेषणत्वपरिज्ञानात्काण्डशब्दस्य क्षेत्रवृत्तित्वविशिष्टकाण्डशब्दचरमावयवके लक्षणा, क्षेत्रपदं च तात्पर्यग्राहकं, यथा गभीरायां नद्यां घोष इत्यत्र गाम्भीर्यावच्छिन्ननदीतीरे नदीपदस्य लक्षणा गभीरपदं तात्पर्यग्राहकं तद्वत् । ङमो ह्रस्वादचीत्यादावप्येषैव गतिरिति नास्ति वैयर्थ्यमन्तग्रहणस्येत्याशयो विभावनीय इत्याहुः ॥ **तिर्यङ्मानमिति** ॥ यद्यप्यूर्ध्वाधरभावावस्थितवस्तुपरिच्छेदकत्वमपि काण्डस्य सम्भवति, तथापि पुरुषादिशब्दवन्नोर्ध्वमानवाचित्वेन प्रसिद्धोऽयं काण्डशब्दः ॥

**तदिदं चेति** ॥ भारपरिच्छित्तिसाधनमूर्ध्वदैर्घ्यपरिच्छित्तिसाधनं चेत्युभयमपि उन्मानलक्षणबोधकेनोर्ध्वमानशब्देन गृह्यते, तदन्यतर[illegible]त्वबोधकप्रमाणानुपल[illegible]म्भादिति तदर्थः ॥ **तिर्यङ्मानस्यैवेति** ॥ पुरुषशब्दो न तिर्यङ्मानत्वेन प्रसिद्ध इति न तस्य प्रमाणत्वम् । किन्तु बाहुजान्वादिवदूर्ध्वमानवाचित्वेनोन्मानत्वमेव । ततश्च तिर्यङ्मानबोधकप्रमाणशब्दानुवृत्त्या पुरुषशब्दान्ताद्द्विगोर्न तेन लुग्विधानसम्भवस्तदाह ॥ **प्रमाण इत्यनुवर्तत एवेति** ॥ **प्रसिद्धिरक्षतेति** ॥ तिर्यगूर्ध्वगतोभयविधदैर्घ्यपरिच्छेदकतायोग्यत्ववतां यत्परिच्छेदकत्वेन व्यवहारनिरूढिस्तत्परिच्छेदकत्वेनैव ग्रहणम् । ततश्च काण्डहस्तवितस्तिप्रादेशप्रभृतीनां तिर्यङ्मानत्वेन प्रमाणत्वमेव । पुरुषबाहुहस्तजान्वादीनान्तूर्ध्वमानत्वेनोन्मानत्वमेव, सर्वथा नैकस्योभयथा व्यवहारप्रसिद्धिरिति तत्त्वम् ॥ **असम्बन्धादिति** ॥ ननु द्विगोर्नित्यमित्युत्तरवाक्ये नित्यग्रहणात्पूर्ववाक्यबोधितस्य वैकल्पिकत्वज्ञापनादिह विकल्पस्सिद्धः । अत एव प्रादेशमात्रमित्यादिप्रयोगनिर्वाहस्तथा च कथं पुरुषद्वयसमित्यस्यानुपपत्तिरत आह ॥ **शम इत्यादाविवेति** ॥ ज्ञापितोऽयं विकल्पो व्यवस्थितः । तत्र प्रादेशमात्रमित्यादौ न भवति लुक्, शम इत्यादौ च भवति ॥ तथा च यत्र नित्यं लुग्भवति तद्दृष्टान्तेनात्रापि लुक्स्यादित्याशयः ॥ **ठक्ष्ठञो वेति** ॥ अगोपुच्छसंख्यापरिमाणादित्यत्र पर्युदस्यमानसमर्पकपरिमाणशब्देन प्रस्थादिरूपपरिमाणविशेषस्य निष्कादिरूपस्योन्मानविशेषस्य च ग्रहणे ठक्, परिच्छेदकमात्रग्रहणे च ठञिति भावः ॥

उत्तरसूत्रानुरोधेनेति ॥ अत्रेदं बोध्यम् । प्रमाणपरिमाणशब्दौ परिच्छेदकसामान्ये तद्विशेषे च व्यवह्रियेते । तथाहि । प्रमाणे द्वयसजिति सूत्रे प्रमाणशब्दः संख्यातिरिक्तपरिच्छेदकमात्रपरः । अत एव परिच्छित्तिसाधनीभूतार्थबोधकेभ्यो द्रोणाढकादिभ्य ऊर्ध्वायामपरिच्छेदकाभिधायिकेभ्यो बाहुजान्वादिभ्यस्तुलाद्यारोपपूर्वकपरिच्छेदसाधकार्थप्रतिपादकेभ्यो कर्षनिष्कादिभ्यश्च तेन प्रत्ययविधानमुपपद्यते । द्वयसच्दघ्नचौ तूर्ध्वमानवाचकेभ्य एवेति भाष्यकृत्कल्पिता व्यवस्थेत्यन्यदेतत् । पुरुषात्प्रमाण इत्यत्रापि परिच्छेदकमात्रपर एव, ऊर्ध्वमानवाचिना पुरुषशब्देनान्वयानुरोधात् । वर्षप्रमाण इत्यत्रापि परिच्छेदकपर एव, मूषिकाबिलप्रमित्यादिवृत्तिकाराद्युदाहरणानुसारात् । प्रमाणे ल इति श्लोकवार्तिके तु तिर्यगायामपरिच्छेदकशमदिष्टिवितस्त्यादिमात्रपर एव । अत एव पञ्चारत्निरित्यादाविव पञ्चप्रस्थमात्रं पञ्चकर्षमात्रमित्यादौ मात्रचो न लुक् । यद्यपि प्रमाणे द्वयसजित्यत्र प्रमाणवाचकात्प्रत्यय इत्यर्थलाभात्तदन्तविधिर्दुर्लभः । तथापि द्विगोर्लुगिति लुगारम्भात्संख्यापूर्वपदके तदन्तविधिरिति सिद्धान्तः । एवं प्रमाणे चेति णमुल्विधायके द्विगौ प्रमाण इति स्वरविधायके च तिर्यङ्मानमात्रपर इति स्पष्टमाकरे । एवं परिमाणशब्दोऽप्यपरिमाणेति ङीब्निषेधबोधके पर्युदस्यमानसमर्पकस्सर्वतः परिच्छित्तिसाधनाभिधायकद्रोणाढकादिपर एव, न तु परिच्छेदकमात्रपरः । आचितकम्बल्ययोरुन्मानवाचिनोः पृथगुपादानं नियमार्थमिति स्पष्टमाकरे । तदस्य परिमाणमित्यत्र तु परिच्छेदकमात्रपरः, उत्तरसूत्रघटकसंख्याया इत्यनेनान्वयानुरोधात् । यत्तदेतेभ्य इति वतुब्विधायके परिमाणशब्दस्त्रिविधपरिच्छेदबोधकस्यापि बोधकः । द्विस्ता वा त्रिस्ता वा वेदिरिति सूत्रस्थाकरस्वरसात् । परिमाणान्तस्यासंज्ञाशाणयोरिति वृद्धिविधायकेऽप्येवमेव, उन्मानविशेषाभिधायकशाणपर्युदासात् । आर्हादिति सूत्रे पर्युदस्यमानसमर्पकपरिमाणशब्दस्तून्मानसर्वतः परिच्छेदवाचकयोर्द्वयोर्बोधकः । असमासे निष्कादिभ्य इत्युत्तरसूत्रस्थभाष्यस्वरसात् । तत्र हि निष्कादिभ्यः पूर्वसूत्रे पर्युदस्तस्य ठको विधानाय सूत्रमावश्यकमित्यभिप्रेत्य तद्घटकस्यासमासेग्रहणस्य वैयर्थ्यापादनपूर्वकं तदन्तविधिज्ञापनमाश्रितम् । पर्युदस्यमानसमर्पकपरिमाणशब्दस्य सर्वतः परिच्छित्तिसाधकद्रोणादिमात्रपरत्वे तदसङ्गतिरेव । केचित्तु सामान्येनैतद्भाष्यप्रामाण्यात्त्रिविधस्यापि परिच्छेदकस्य ग्रहणमिच्छन्ति ॥ परिमा-

णाख्यायां सर्वेभ्य इति घञ्विधायके सर्वतः परिच्छित्तिसाधकपरिमाणविशेषस्यैव ग्रहणमिति स्पष्टमाकरे । नित्यं पणः परिमाण इत्यादौ परिच्छेदकमात्रपर इति स्पष्टमेवेत्याहुः ॥

**आत्मनेपदार्थमिति** ॥ धेटष्टित्त्वमिवास्य ङित्त्वस्यावयवे चारितार्थ्याभावात्समुदायोपकारकत्वमित्याशयः ॥

नन्वाशाशब्दोऽयं दिग्वाची तत्पतित्वमिन्द्रादिषु पुंस्त्वमेवेति कथं स्त्रीलिङ्गनिर्देश इत्यत आह ॥ **आशापूरकत्वेनेति** ॥ मनोरथवाचकोयमाशाशब्दः । तत्पूरकत्वमेव तत्स्वामित्वं, तच्च स्त्रीपुंससाधारणमित्याशयः ॥

**छान्दसत्वादिति** ॥ छन्दोवत्सूत्राणीति भाष्यकारेष्टिरङ्गत्वप्रयुक्ता । अङ्गत्वं च कल्पसूत्रे प्यविशिष्टमेवेति तात्पर्यम् ॥ **ङीप् णत्वं चेति** ॥ बहुव्रीहौ तु द्वयमपि छान्दसं, तत्पुरुषे तु णत्वमेवेति बोध्यम् ॥

**असिद्धवत्सूत्रे भाष्ये इति** ॥ तत्र हि बहुशुनीत्यत्र वार्णादाङ्गमिति सम्प्रसारणपूर्वत्वं निराकृत्याल्लोपप्रवृत्तेर्निर्बाधतया भाव्युपधालोपविषयत्वान्ङीपि बहोर्नञ्वदिति श्वन्शब्दस्यान्तोदात्ततया तदीयाकारलोपमाश्रित्योदात्तनिवृत्तिस्वरप्रवृत्तिर्ङीप इत्याशङ्क्य प्रतिपादितम् । आचार्यप्रवृत्तिर्ज्ञापयति नोदात्तनिवृत्तिस्वरश्शुन्यवतरतीति, यदयं गौरादिषु श्वन्शब्दं पठतीति ॥ **नस्तद्धित**

---

१. **अङ्गत्वप्रयुक्तेति** ॥ इदन्तु चिन्त्यम् । यदि भाष्येष्टिरङ्गत्वप्रयुक्ता, तदाऽस्य गृह्यसूत्रत्वेनाङ्गत्वस्याप्रसिद्धत्वेन अस्य छन्दोवदित्यतिदेशाविषयत्वापत्तेरिति ॥

अत्रेदं बोध्यम् । छन्दोवदित्यतिदेशः सूत्रसामान्यविषय इत्येव मनोरमाकारो मन्यते । अत एवाङ्गानीति वक्तव्ये सूत्राणीति कथनं स्वरसतस्सङ्गच्छते । तदनुसारेणात्र मूले छान्दसत्वादित्युक्तम् । यदि त्वस्या इष्टेरङ्गत्वप्रयुक्तत्वं, तदा छान्दसत्वादित्यस्यार्षत्वादित्यर्थ उचितः । अत एव शेखरे "आर्षमत्र णत्वम्" इत्येवोक्तम् । अत्र मूले छान्दसत्वादित्युक्तिस्तु परममूलसाधारण्यायेति सुधियो विभावयन्त्वित्याहुः ।

२. **कल्पसूत्रेऽपीति** ॥ अस्य गृह्यसूत्रत्वेन कल्पसूत्रेऽङ्गत्वोपपादनस्य प्रकृतानुपयोगितया व्याख्यातुरयं प्रयासो विफल एवेति बोध्यम् ॥

इति ॥ सम्प्रसारणोत्तरमन्तरङ्गत्वात्पूर्वरूपे प्रकृत्यैकाजित्यनेन टेरित्यस्य निवृत्त्या नस्तद्धित इत्यस्य प्रवृत्तिरित्याशयः । न चेष्ठवद्भावेन नस्तद्धित इत्यस्य प्रवृत्तिरित्ययुक्तम्, इष्ठनि तस्यादृष्टत्वेनातिदेष्टुमशक्यत्वादिति वाच्यम् । ब्रह्मवच्छब्दादिष्ठेयसोर्ब्रह्मिष्ठो ब्रह्मीयानित्यादौ विन्मतोर्लुकि तस्य टेरिति लोपं प्रत्यपवादतया लुगुत्तरं टिलोपाप्रवृत्त्या नस्तद्धित इत्यस्य प्रवृत्तेर्दृष्टत्वेन तदतिदेशस्य सुवचत्वात् । न चाजादी गुणवचनादेवेति नियमात्तद्धितान्ताद्ब्रह्मवच्छब्दात्कथमिष्ठेयसोः प्रवृत्तिरिति वाच्यम् । विन्मतोरिष्ठेयसोः परयोर्लुगारम्भान्मत्वर्थीयप्रत्ययान्तस्य गुणवचनत्वज्ञापनेनादोषात् । अत एव कारकविभक्तेर्बलवत्त्वात् द्वितीयेत्यादिप्रयोगनिर्वाहः । यदि चेष्ठवद्भावेन नस्तद्धित इत्यस्याप्यतिदेशे युवानमाचष्टे कनयतीत्यत्रापि टिलोपप्रसङ्गः । न च प्रकृत्यैकाजित्यनेन नस्तद्धित इत्यस्यापि निवृत्तिरिति वाच्यम् । तदंशे येन नाप्राप्त्यभावेन प्रकरणान्तरस्थत्वेन च तद्बाधकत्वायोगात् । न च कादेशेनैव सर्वादेशत्वसिद्ध्या नकारोच्चारणसामर्थ्या-

---

१. गुणवचनत्वज्ञापनेनेति ॥ इदमयुक्तम् । विन्मतोर्लुगिति सूत्रस्थशेखरग्रन्थविरोधात् । तत्र हि "अत एव ज्ञापकादाभ्यामजादी । न च विन्विषये मतुबस्सत्त्वेन तल्लुकैव सिद्धौ विन्ग्रहणं व्यर्थमिति वाच्यम् । तत्करोतीत्यादिना णिचि इष्टवद्भावेन विनो लुगर्थं तत्सत्त्वात्" इत्युक्तम् । यद्यस्य गुणवचनत्वज्ञापने तात्पर्यं, तदा विन्नन्तस्यापि गुणवचनत्वसम्पत्त्यर्थं विन्ग्रहणस्याप्यावश्यकत्वेन तद्ग्रहणवैयर्थ्यशङ्काया असङ्गतिः स्पष्टैव । कारकविभक्तेर्बलवत्त्वादित्यादयः प्रयोगास्तु कुक्कुट्यादीनामण्डादिष्विति वार्तिकप्रत्याख्यातृभाष्यरीत्या सामान्ये नपुंसकमित्यनेन वा उपपाद्याः । अत एव "नेष्टं पुरो द्वारवतीत्वमासीत्" इति माघप्रयोगस्सङ्गच्छते । भवद्रीत्या द्वारवतीशब्दस्य मतुबन्ततया गुणवचनत्वेन त्वतलोरिति पुंवद्भावो दुर्वार एव । न च द्वारवतीशब्दस्य संज्ञात्वात्त्वतलोर्गुणवचनस्येति न पुंवद्भाव इति मल्लिनाथोक्तरीत्या निर्वाह इति वाच्यम् । तत्र द्वारवतीशब्दस्य द्वारविशिष्टार्थबोधकत्वमन्तरा तद्वाक्यस्य योजयितुमशक्यत्वेन तत्र संज्ञात्वस्य कविविवक्षाविषयत्वाभावात् । पुरस्य द्वारवैशिष्ट्यस्य हरिनिष्क्रमणानुकूलतया तद्विरहमसहमानानां हरिनिष्क्रमणानुकूलद्वारवैशिष्ट्यमनिष्टमासीदिति तद्वाक्याशयस्याभ्युपगन्तव्यत्वात् । अत एव मल्लिनाथेन "अन्यत्र द्वारवतीत्वं द्वारवत्त्वं नेष्टम् । तस्य हरिनिष्क्रमणहेतुत्वात्" इति व्याख्यातम् । अनेन व्याख्यानेन द्वारवतीत्वशब्दस्य द्वारवत्त्वशब्दसमानार्थकत्वं स्पष्टमेव प्रतिपादितम् । अत्र पक्षे द्वारवतीशब्दस्य गुणवचनत्वाभावात्पुंवत्त्वस्य प्रसक्तिरेव नेति तदाशयः । अत एव एतत्प्रयोगसाधनाय प्रवृत्तस्य त्वतलोरित्यत्रत्यमनोरमाग्रन्थस्य व्याख्यानावसरे "भाष्यरीत्या तद्धितान्तत्वेन गुणवचनत्वाभावाच्च" इति शब्दरत्नोक्तिस्सङ्गच्छत इति दिक् ।

तत्र टिलोपाभाव इति वाच्यम्। कादेशे प्रकृतिभावेन टिलोपाप्रवृत्त्या वृद्धि-पुगागमयोः कापयतीति स्यात्। कनि तु नस्तद्धित इति टिलोपे कयतीति प्राप्नोतीति फलवैलक्षण्येन सामर्थ्योपक्षयान्न तन्मूलकष्टिलोपाभाव इत्युच्यते, तर्हि युवाल्पयोः कनन्यतरस्यामित्यत्र शकन्ध्वादिपररूपेणाकारप्रश्लेषादकारान्तः कनादेश इति टिलोपस्याभीयासिद्धत्वान्नास्ति नस्तद्धित इत्यस्य प्रवृत्तिः। अत एव कनिष्ठः कनीयानित्यत्रापि न टिलोपशङ्केत्याहुः। ननु प्रकृत्यैकाजित्यत्र नैकाच इत्येव सिद्धे प्रकृत्येत्यनेन स्वविषये प्राप्तस्य प्रकरणान्तरस्थस्यापि सामान्येन बाधकताया औचित्यान्नस्तद्धित इत्यस्य प्रवृत्तिरिह दुर्लभेत्यत आह॥ **वस्तुतो नस्तद्धित इति**॥ **षपूर्वेत्यादि**॥ तत्र हि भाष्ये प्रकृतिग्रहणसामर्थ्यमूलकप्राबल्यतात्पर्येणान्नितिप्रकृतिभावेन सन्निहितस्य नस्तद्धित इत्यस्येव व्यवहितस्य प्रकरणान्तरस्थस्याल्लोप इत्यस्यापि निवृत्तिमाश्रित्य षपूर्वेत्यस्य विधायकत्वं व्यवस्थापितम्। तेन प्रकृत्यैकाजिति प्रकृतिभावोपि तुल्यरीत्या सन्निहितस्य टेरित्यस्य व्यवहितस्य नस्तद्धित इत्यस्य च निवर्तक इति ध्वनितमित्याशयः॥ **प्रकृत्यैकाजिति**॥ तत्र हि भाष्ये वृत्तिकारोपदर्शितेषूदाहरणेषु प्रेष्ठः प्रेयानित्यादिषु प्रादीनामाभीयासिद्धत्वेन श्रेष्ठश्श्रेयानित्यादिषु श्रादीनामकारोच्चारणसामर्थ्येन स्रजिष्ठ इत्यादिषु विन्मतोर्लुका येन नाप्राप्तिन्यायेन टेरित्यस्य निवृत्तिकल्पनेन च सूत्रवैयर्थ्यमापादितम्। तेन कनिष्ठः कनीयानित्यादौ क्वादेशविधानेनैव शित्त्वप्रयुक्तसर्वादेशत्वसिद्ध्या कनादेशविधानसामर्थ्याट्टिलोपाभाव इति सूचयता भाष्यकारेण सूत्रमतेपि प्रकृतिग्रहणसामर्थ्यात्तयोरुभयोरपि टिलोपयोर्निवृत्तिरिति ध्वनितमित्यभिप्रायः। ननु वार्णपरिभाषाया अनित्यत्वेपि विना प्रामाणिकप्रयोगावलम्बनमप्रवृत्तिकल्पनाया अयुक्तत्वादाङ्गत्वात्पूर्वरूपं परत्वान्नस्तद्धित इति लोपं च बाधित्वा टेरित्यस्यैव प्रवृत्तेर्न्याय्यतया नस्तद्धित इत्येतत्प्रवृत्त्यापादनमयुक्तमित्यत आह॥ **पूर्वं टिलोपाभावेपीति**॥ सूत्रकारमते प्रकृत्यैकाजित्यनेन बाधात्सम्प्रसारणात्पूर्वं टिलोपाभाव इति युक्तम्। प्रकृतिभावमनाद्रिय-

---

१. **वस्तुतो नस्तद्धित इतीति**॥ इदानीन्तनशब्दरत्नग्रन्थेषु वस्तुत इति नास्ति। प्राक्तनपुस्तकपाठानुरोधेनेदम्। मुख्यमते इति प्रतीकस्थग्रन्थे वस्तुत इति नातीवोपयुज्यते॥

माणस्य भाष्यकारस्य मते तु सम्प्रसारणात्पूर्वं टिलोपाप्रवृत्तौ निमित्तमालोचनीयम्[1] ॥ **तस्य दौर्लभ्यमिति** ॥ नान्तप्रकृतिकङ्यन्तस्येत्यर्थः। ननु सम्प्रसारणपूर्वत्वादाङ्गबलीयस्त्वमनिष्टम्। अन्यथा श्वन्शब्दमघवन्शब्दयोरन्तोदात्तयोस्सम्प्रसारणोत्तरमाङ्गत्वात्पूर्वरूपं बाधित्वा तयोरल्लोपप्रवृत्तौ शुनो मघोन इत्यादावुदात्तनिवृत्तिस्वरापत्तिः। अत एव बहुश्वा बहुमघवेत्यादावन उपधालोपिन इति नियमप्रयुक्तो ङीबपि न प्रवर्तते। ध्वनितं चेदं लिट्यभ्यासस्येति सूत्रे भाष्ये। तत्र हि जुहुवतुः शुशुवतुरित्यादावाङ्गत्वेन पूर्वरूपं बाधित्वा प्रसक्तानामातोलोपयणादीनां बाधनाय सम्प्रसारणं तदाश्रयं च कार्यं बलवदिति वचनमातोलोपादीनां पूर्वरूपगतान्तरङ्गत्वेन प्रवृत्तिनिरोधमाश्रित्य भाष्यकृता प्रत्याख्यातम्। वार्णपरिभाषायाः पूर्वरूपांशे प्रवृत्त्यभ्युपगमे च तदसङ्गतिरेव। तस्मादनित्यायास्तस्याः परिभाषायाः प्रकृतविषये प्रवृत्त्यभाव एव युक्तः। एवञ्च पूर्वरूपस्यैवान्तरङ्गत्वात्प्रथमतः प्रवृत्तावेकाच्त्वेन प्रकृतिभावाट्टिलोपाप्रवृत्त्या ण्यन्तपक्षेपि नान्तघटितङ्यन्तप्रयोगो निर्बाधः। नाजानन्तर्यपरिभाषा तु जातबहिरङ्गविषयत्वान्न प्रकृते प्रवृत्तिमर्हतीति प्राचीनानामाशयस्य सुवचत्वादयुक्तमेवेदं दौर्लभ्यापादनमिति चेन्न। पूर्वरूपोत्तरमेकाच्त्वेन सूत्रमते प्रकृतिभावाट्टिलोपाप्रवृत्तावपि प्रकृतिभावं प्रत्याचक्षाणस्य भाष्यकारस्य मते पूर्वरूपोत्तरमपि टिलोपं वारयितुमुपायाभावेन फलभेदात्प्रत्याख्यानस्यासङ्गत्यापत्त्या सत्यभिधाने सूत्रमतेपि प्रकृतविषये वार्णपरिभाषावलम्बेन पूर्वरूपात्पूर्वमेव टिलोपप्रवृत्तेरवश्याश्रयणीयतया तथाविधरूपदौर्लभ्यमित्याशयात्॥ **एकदेशविकृतन्यायेनान्नन्तत्वमिति** ॥ नन्वनुनासिकस्येति दीर्घोत्तरमेकदेशविकृतन्यायेनान्त्ये तदन्तत्वमार्थसमाजग्रस्तमिति विवक्षितमुत स्थानिवद्भावोपलक्षकत्वादानुमानिकस्थानिवद्भावेन समुदायस्यान्नन्तत्वमिति। नाद्यः। अर्थविकारे सादृश्यमूलकतत्त्वप्रत्यभिज्ञाया

---

१. **निमित्तमालोचनीयमिति** ॥ अत्रेदं बोध्यम्। भाष्यस्य प्रेष्ठाद्युदाहरणानामन्यथासिद्धिमात्रे तात्पर्यम्। न तु सूत्रप्रत्याख्याने इति मन्यते मनोरमाकारः। अत एव सिद्धान्तकौमुद्यां नामधातुप्रक्रियायां "प्रकृत्यैकाजिति सूत्रं भाष्ये प्रत्याख्यातमिति न भ्रमितव्यम्" इत्युक्तिस्सङ्गच्छते। अत्रत्यमूलं मनोरमाकाराशयपरमेव। अत एवाल पूर्वं टिलोपाप्रवृत्तौ प्रकृतिभावस्यैव हेतुत्वोपपादनं सङ्गच्छते। प्रत्याख्यानपक्षेऽत्र टिलोपो भवति न वेत्यन्यदेतदिति॥

दौर्लभ्येनोक्तविषयताया दुर्वचत्वात् । न द्वितीयः । सामान्यातिदेशे विशेषानतिदेश इति न्यायेन त्रादेशोत्तरं मघवन्शब्द इव प्रकृतेपि विशेषधर्मस्यानुमानिकेन स्थानिवद्भावेनातिदेष्टुमशक्यत्वात् । न च स्थानिवत्सूत्रस्थेन प्रपठ्येत्यादौ विशेषणतयाप्यलाश्रयणे निषेधसमर्पकेणानल्विधाविति विधिग्रहणेन विशेषधर्मस्यापि स्थानिवत्त्वेनातिदेशस्य बोधनात्कथं तदतिदेशाभाव इति वाच्यम् । श्रौतस्थानिवद्भावेन विशेषधर्मस्याप्यतिदेश इत्यस्य ज्ञापनेन कृतार्थस्य तस्य विधिग्रहणस्यानुमानिकेन शब्दानित्यत्वसंरक्षणाय परिकल्पितेन सामुदायिकस्थान्यादेशभावेन प्रसक्तस्य स्थानिवत्सूत्रस्थादेशग्रहणानुमीयमानाचार्यतात्पर्यविषयतापन्नस्य तादृशस्थानिवद्भावस्य न्यायबाधनेन तदतिदेशसम्पादकत्वकल्पनायां मानाभावात् । न च समुदाय एवैकदेशविकृतन्यायेनान्नन्तत्वं किं न स्यादिति वाच्यम् । विकृतावयवविशिष्टे विकारविरहिततदवयवविशिष्टधर्मप्रतिपत्तेर्लोकविरुद्धत्वात् । ध्वनितं चेदं श्वयुवेति सूत्रे भाष्ये । तत्र हि त्रादेशोत्तरं मघवन्शब्दे सम्प्रसारणवारणाय वार्तिककृदारब्धं नकारान्तग्रहणमनकारान्तप्रतिषेधार्थमिति वचनमल्लोपोऽन इत्यत अन इत्यस्यापकर्षणेनान्नन्तानां सम्प्रसारणविधानान्न दोष इति प्रत्याख्यातम् । तान्तेप्यन्नन्तत्वस्य येन केनाप्यतिदेशे तदसङ्गतिरेव । कैयटेपि स्फुटमेतत् । ततोऽत्र न किञ्चिद्वैषम्यम् । अतः कथमन्नन्तत्वमिति चेत्सत्यम् । स्थानिवत्सूत्रस्थेनानल्विधावित्येतद्घटकेन विधिग्रहणेन श्रौतानुमानिकसाधारणतया स्थानिवद्भावस्य विशेषधर्मातिदेशसमर्पकत्वं ज्ञाप्यते, असति बाधके प्रमाणानां सामान्ये पक्षपातात् । अत एवामूदृगित्यादावासर्वनाम्न इत्याकारादेशविधानोत्तरमदश्शब्दत्वमानुमानिकेन स्थानिवत्त्वेन लभ्यत इति न मुत्वासङ्गतिः । अन्यथा स्थानितावच्छेदकतया गृहीतसर्वनामत्वापेक्षया विशेषधर्मत्वाददश्शब्दत्वस्यातिदेशायोगात्तदसङ्गतिरेव । ज्ञापकसिद्धस्यास्य विशेषधर्मातिदेशस्यासार्वत्रिकतया क्वचित्तदतिदेशाभाव इति नास्ति श्वयुवेति सूत्रस्थभाष्यकैयटयोर्विरोधः । प्रकृते चान्नन्तत्वस्यानुमानिकेन स्थानिवत्त्वेनातिदेशे न किञ्चिद्बाधकम् । तदेतत्कथंचिदिति वदता मूलकृता सूचितमित्यलम् ॥ **अनभिधानमिति** ॥ इदं च ह्रस्वनद्याप इति सूत्रस्थभाष्यबलाल्लभ्यते । तत्र हि कास्प्रत्ययादिति सूत्रविषयस्यामो मकारस्येत्कार्याभावादित्संज्ञा न प्राप्नोतीत्युपक्रम्य प्रत्ययान्तादाम् विधीयते तत्र मिदचोन्त्यादिति परत्वे प्रत्ययपरत्वे वा नास्ति विशेष इत्युक्तम् । हलन्तानामा-

चारक्विबन्तानामभिधाने च विशेषसद्भावात्तदसङ्गतिरेव । सत्यप्यभिधाने वादिनामभीष्टसिद्धिर्नेत्याह ॥ अनुपसर्जनत्वादिति ॥ उपसर्जनत्वं च स्वार्थनिष्ठप्रकारतानिरूपितविशेष्यतापन्नपदार्थोपस्थापकत्वम् । तच्च स्त्रीप्रत्ययप्रकृतेराचारक्विबन्तप्रकृतिककर्तृक्विबन्तस्य नास्तीति नेह गौरादिङीषः प्रवृत्तिप्रतिबन्ध इत्याशयः । ननु मास्तूपसर्जनत्वमप्रसिद्धत्वरूपगौणत्वस्य निर्विवादत्वादभिव्यक्तेति न्यायेन तत्प्रवृत्तिप्रतिबन्धो दुर्वार इत्यत आह ॥ अभिव्यक्तेति ॥ "अभिव्यक्तपदार्था ये स्वतन्त्रा लोकविश्रुताः । शास्त्रार्थस्तेषु कर्तव्यश्शब्देषु न तदुक्तिष्विति" न्यायः । तत्राभिव्यक्तपदार्थत्वं प्रचुरप्रतीतिविषयस्वार्थसमर्पणतात्पर्यप्रयुक्तोच्चारणविषयत्वम् । तेनाचारक्विबन्तादीनामप्रसिद्धानां व्यावृत्तिः । आरोपानधीनस्वार्थनिमित्तकप्रवृत्तिविषयत्वं स्वातन्त्र्यम् । एतेन गौणलाक्षणिकानां व्यावृत्तिः । लोकविश्रुतत्वमाधुनिकसङ्केतविषयताशून्यत्वम् । अनेन संज्ञाभूतानां व्यावृत्तिः । गौणमुख्यपरिभाषामूलकमिदमभियुक्तानां वचनम् । तत्र गौणत्वं गुणकृतसादृश्यमूलकारोपविषयार्थनिमित्तप्रवृत्तिविषयत्वम् । इदं चाभियुक्तवचनघटकविशेषणत्रयव्यावर्त्येष्वप्रसिद्धगौणलाक्षणिकसंज्ञाशब्देष्वक्षतमेवेति नानयोर्विशेषः । अनुकरणेष्वष्टन आ विभक्तावित्यादावल्लोपादिवदनुकरणस्वरूपभङ्गभयादेवानिष्टस्य शास्त्रीयकार्यस्य निवृत्तिरिति न तेषां गौणत्वापेक्षा, यद्यपि लोकविश्रुता इत्यनेनैव प्रसिद्धार्थकेनाधुनिकसंज्ञाशब्दानामाचारक्विबन्तादीनां चाप्रसिद्धत्वाविशेषाद्व्यावृत्तिस्सिद्धा, तथापि लोकविश्रुतत्वव्यतिरेकेण झटिति परिस्फुरतामाधुनिकसङ्केतविषयाणामेव व्यावृत्तिरिति भ्रान्तिमतामुपलालनाय प्राथमिकमभिव्यक्तेतिविशेषणम् ।

वस्तुतोऽत्राभिव्यक्तपदार्था इत्यस्य विवरणमग्रिमं विशेषणद्वयम् । अत एव मध्ये यच्छब्दपाठस्स्वरसत उपपद्यते । स्वतन्त्रा लोकविश्रुताश्च येऽभिव्यक्तपदार्थास्तेषु शास्त्रविधेयं कर्तव्यम् । न तु तत्सजातीयोच्चारणविषयेषु तदन्येष्विति तदर्थ इत्याहुः ॥

पदकार्यविषय इति ॥ गौणमुख्यपरिभाषायाः पदकार्यविषयत्वात्तन्मूलकस्यास्य न्यायस्य तत्समानयोगक्षेमत्वौचित्यादिति भावः । पदकार्यत्वञ्च स्त्रीत्वानिमित्तकत्वे सति प्रातिपदिकत्वनिमित्तकप्रत्ययानिमित्तकत्वमित्यन्यत्र

प्रपञ्चितम् । प्रत्ययोत्तरपदयोश्चेत्यत्रापि विभक्तावित्यस्यानुवृत्तेरन्यत्र व्यवस्थापितत्वात्तद्विहितयोरपि त्वमयोः प्रातिपदिकत्वनिमित्तकप्रत्ययनिमित्तकत्वमतः पदकार्यत्वाभावात्त्वद्भवति मद्भवतीत्यादिच्व्यन्तविषये नायं न्यायः प्रवर्तत इति बोध्यम् ॥

**बहुशब्दश्च संख्येति** ॥ विशेषविहितया संख्यासंज्ञया गुणवचनसंज्ञाया बाधान्न बहुशब्दस्य गुणवचनत्वमिति भावः । इदं च सूत्रकारस्याप्यभिप्रेतमित्याह ॥ **अत्रार्थे इति** ॥ बहुशब्दस्य गुणवचनत्वाभावे बहुग्रहणमत्रत्यं ज्ञापकमन्यथा पूर्वेण सिद्धे तद्वैयर्थ्यमेवेत्याशयः । ननु गुणवचनत्वेऽप्याचारक्विबन्तात्कर्तरि क्विपि निष्पन्नस्य बहुच्छब्दस्य तान्तत्वेनोवर्णान्तत्वाभावादुपदर्शितश्वन्शब्दवदुपसर्जनत्वाभावाच्च ततो ङीष्विधानाय सार्थक्यात्कथमुक्तार्थलाभ इति चेत्तथाभूतानामभिधाने दृढतरमानाभाव इत्याशयोऽत्र विभावनीय इत्याहुः । ननु सत्त्वे निविशते इति लक्षणान्तरेण भाष्यकारोदीरितेन गुणवचनत्वं दुर्वारमेवं च वयोवाचिनां जातिवचनत्ववद्गुणवचनताया विकल्पे व्यर्थमेव बहुग्रहणमत आह ॥ **सत्त्वे निविशत इति** ॥ "सत्त्वे निविशतेऽपैति पृथग्जातिषु दृश्यते । आधेयश्चाक्रियाजश्च सोऽसत्त्वप्रकृतिर्गुण" इति लक्षणान्तरोपपादकं भाष्यकारीयं वचनं, तेन च द्रव्यनिरूपितवृत्तित्वतदभावोभयविशिष्टत्वे सति द्रव्यत्वव्याप्यजातितदभावोभयसमानाधिकरणत्वे सति कार्यत्वतदभावोभयविशिष्टत्वे सति द्रव्यभिन्नत्वं गुणत्वमिति पर्यवसन्नम् । तत्र सामान्यजातिवारणाय प्राथमिकं विशेषणम् । व्याप्यजातिवारणाय द्वितीयम् । क्रियावारणाय तृतीयम् । द्रव्यवारणाय चतुर्थं विशेष्यदलम् । एवञ्च द्वित्वादिवद्बहुत्वस्याप्यपेक्षाबुद्धिजन्यत्वेन कार्यतया क्रियावारकतृतीयविशेषणघटकनित्यत्वबाधान्न निरुक्तलक्षणेन बहुत्वस्य गुणत्वं, नापि तद्वाचकस्य गुणवचनत्वमित्याशयः । तदाह ॥ **एकवाक्यतापन्नमिति** ॥ यद्यपि क्रियावारणार्थेन तृतीयविशेषणेनैव यावज्जातिवारणे प्राथमिकविशेषणद्वयवैयर्थ्याद्द्रव्यकर्मभिन्नत्वे सति जातिमत्त्वमित्येव सिद्धे विशिष्टवैयर्थ्याच्चैतदेकदेशयुक्तं लक्षणम् । अत एव भाष्यकृता न व्याख्यातमित्योतो गुणवचनस्येति सूत्रे निराकृतमुद्योतशेखरयोस्तथापि प्रकृतविषये सत्यामेकवाक्यतायां कुतस्तन्निराकरणमित्युपाध्यायगूढाशय इत्याहुः । तदाह ॥ **अन्यत्र प्रपञ्चितमिति** ॥ ननु

निरुक्तरीत्या गुणवचनत्वाभावेनात्रैवावश्यकत्वात्कथमुत्तरार्थत्वमत आह ॥ **ददतां मते इति ॥**

**अदन्तत्वाभावेनेति** ॥ अत इत्यस्योत्तरत्र सम्बन्ध आवश्यक इति मण्डूकानुवृत्तिवारणायेन्द्रवरुणेत्यत्रापि सम्बन्धादेतादृशानां व्यावृत्तिरित्याशयः ॥ **बहुव्रीहेरूधस इति सूत्रभाष्यसम्मततयेति** ॥ तत्र हि कुण्डोध्नीघटोध्नीत्यूधसोनङ्घल्लोपघटितः प्रयोग उपदर्शितः । तेन च निरुक्तार्थे भाष्यकारसम्मतिरनुमीयत इत्याशयः ॥ **कल्पनानवकाशेति** ॥ न च ङीष एव नुटि कर्तव्ये प्रकृतेरनुगागमविधानसामर्थ्याद्विनिगमनाविरहेणाल्लोपपररूपयोरपि बाधे सवर्णदीर्घेणाभीष्टसिद्ध्या प्राचीनकल्पनायाः प्रतिबन्धकाभाव इति वाच्यम् । ङीषोऽप्यनेनैव विधानात्स्वविधेयस्य स्वस्मिन्नुद्देश्यत्वासम्भवेन प्रकृतेरेव नुडापत्तावनिष्टप्रसङ्गात् । न च पुंयोगादित्यनेनैव प्रत्ययस्य सिद्धतया पञ्चमीनिर्देशेन ङीष्प्रत्ययस्य नुड्विधाने बाधकाभाव इति वाच्यम् । हिमारण्ययवयवनानां पूर्वेणाप्राप्तस्य ङीषो विधेयतया स्वविधेयस्य स्वस्मिन्नुद्देश्यत्वासम्भवस्य तादवस्थ्यात् । तस्मादयुक्तैव ब्रह्माणीशब्दसाधनोपायतया निरुक्तकल्पनेत्याशयः ॥ **स्वरे न विशेष इति** ॥ रूढिशब्दत्वादयुक्तोपि न विशेष इति बोध्यम् ॥

**अनित्यत्वेनेति** ॥ कर्तृकरणे कृता बहुलमित्यत्र गतिकारकोपपदानामित्येतत्परिभाषावशात्सुपेत्यस्यासम्बन्धे सुबुत्पत्तेः प्राक्कृदन्तेनैव सार्वत्रिकतया समासस्य प्रसक्तौ बहुलग्रहणेन परिभाषानित्यत्वबोधनद्वारेण क्वचित्सुबन्तेनापि समासोऽभ्यनुज्ञात इत्याशयः ॥

**एतदन्तमिति** ॥ लिङ्गानां च न सर्वभागित्यादीति शेषः । **आकारस्येति** ॥ अवयवसंस्थानस्येत्यर्थः ॥ **भाष्यप्रामाण्येनेति** ॥ तत्र हि स्त्रिया अपि युवसंज्ञामाश्रित्य प्रयोगे स्त्रीत्वविशिष्टयुवापत्यबोधकप्रत्ययश्रवणाभावाय गोत्राद्यूनि

---

१. रूढिशब्दत्वादयुक्तोऽपीति ॥ सर्वत्रोपलभ्यमानेषु पुस्तकेष्वयमेव पाठो दृश्यते । वाक्यस्यास्यार्थसङ्गतिर्नास्ति । अतो " रूढिशब्दत्वादवयवार्थभानप्रयुक्तोऽपि " इति पाठस्य स्थितिरनुमेयेति ध्येयम् ।

स्त्रियां लुगित्येकदेशिना प्रदर्शितस्य न्यासस्य ग्लुचुकायनीभार्य इत्यजातेश्चेति पुंवद्भावनिषेधानुपपत्तिरूपदूषणमुपन्यस्य सिद्धान्तिना प्रत्याख्यानं कृतम् । तेन च पारिभाषिकातिरिक्तयुवापत्यप्रत्ययान्तस्य जातित्वाभावबोधनाज्जातिलक्षणे पारिभाषिकस्यैव गोत्रस्य ग्रहणमिति स्पष्टमेव भाष्यकारः प्रतिपादयतीत्याशयः ॥

**प्रातिपदिकत्वस्य चेति** ॥ प्रातिपदिकत्वतद्व्याप्यान्यतरबोधकशब्दोपादाने प्रातिपदिकात्परो यो लिङ्गबोधकप्रत्ययस्तद्विशिष्टस्यापि ग्रहणमिति परिभाषार्थः । गौरीत्यादौ तु यस्येति लोपोत्तरमवशिष्टस्यैकदेशविकृतन्यायेन प्रातिपदिकतया परिभाषाप्रवृत्तिसौलभ्यात्स्वाद्युत्पत्तेरविरोधः । कुरूरित्याद्येकादेशविषये तु यौगपद्येन पूर्वान्तत्वपरादित्वयोर्व्यपवर्गस्य चातिदेष्टुमशक्यत्वे परिभाषायाः प्रवृत्त्ययोगात्पूर्वान्तत्वमेव स्वाद्युत्पत्तेर्निदानमिति तदाशयः । तदुक्तं ॥ **नात्रेयमिति** ॥ एकादेशविषये इति तदर्थः ॥ **असिद्ध्यापत्तेरिति** ॥ इन्द्राणीत्यादावप्यागमागमिनोरेकादेशोऽस्तीति परिभाषाया अप्रवृत्तौ सुबुत्पत्तेरनुपपत्तिः । यदि तु यत्र प्रकृतिलिङ्गबोधकप्रत्यययोरेकादेशस्तथाभूतस्यैव परिभाषाया अप्रवृत्तिविषयत्वमुभयत आश्रयणप्रसक्तेः । इह तु न तथाविध एकादेश इत्युच्यते, तावतापि न निर्वाहः । आगमैकदेशभूतेनाकारेणैकादेशे पूर्वान्तवत्त्वेनैकादेशविशिष्ट एव प्रातिपदिकत्वविश्रान्त्या नकारव्यवधानाल्लिङ्गबोधकप्रत्ययस्य प्रातिपदिकात्परत्वाभावेन परिभाषाप्रवृत्त्ययोगादतो लिङ्गबोधकप्रत्ययांशे प्रातिपदिकपरत्वनिवेशे नास्ति तत्सिद्धिरित्याशयः । ननु यदागमन्यायेनैकादेशात्पूर्वमागमविशिष्टे विद्यमानस्य प्रातिपदिकत्वस्यैकादेशोत्तरमानुमानिकेन स्थानिवत्त्वेन नकारान्त एव लाभेन नास्ति परिभाषाप्रवृत्तेर्विरोध इति चेन्न । यदागमपरिभाषया विशिष्टे प्रातिपदिकत्वातिदेशात् पूर्वमेवान्तरङ्गत्वात्प्रत्यक्षवचनबोधितत्वाच्च सवर्णदीर्घे तदसिद्धिरित्याशयात् ॥ **प्रातिपदिकत्वोपयोगो नेत्रेति** ॥ दोषाधायकत्वान्नास्यां परिभाषायां तन्निवेश इत्यर्थः । वस्तुतो नास्ति तन्निवेशसम्भव इत्याह ॥ **नापीति** ॥ लिङ्गविशिष्टप्रातिपदिकस्येति लिङ्गविशिष्टं प्रातिपदिकं यस्मिन्निति बहुव्रीहिणा स्वोत्तरव-

---

१. **प्रातिपदिकत्वोपयोगो नात्रेतीति** ॥ **न कश्चिदितीदानीन्तनशब्दरत्नपाठः । कश्चिदित्यस्य स्थानेऽत्रेति पाठाभिप्रायेणेदम् ।**

र्तिलिङ्गबोधकप्रत्ययविशिष्टप्रातिपदिकघटितसमुदायार्थकतयेति भावः । वस्तुतः परिभाषायां प्रातिपदिकत्वांशनिवेशस्यैव नासाङ्गत्यमपि तु तदुपवर्णितस्य परिभाषावाक्यार्थस्यापीत्याशयेनाह ।। **तथेत्यादि** ।। **अतिदेशाच्चेति** ।। प्रातिपदिकत्वतद्व्याप्यान्यतरधर्मावच्छिन्नबोधकशब्दोपादाने तद्धर्मारोपेण लिङ्गबोधकप्रत्ययविशिष्टस्यापि ग्रहणमित्येव परिभाषार्थो न तु लिङ्गबोधकप्रत्ययविशिष्टस्याप्यध्याहार इति ।। अत एव बहुव्रीहेरूधस इति सूत्रे भाष्ये कुण्डोध्नीत्यादौ नद्यृतश्चेति बहुव्रीहिलक्षणं नित्यं कप्रत्ययमाशङ्क्य नद्यन्तानां यो बहुव्रीहिरित्यर्थेन समाहितम् । लिङ्गबोधकप्रत्ययविशिष्टे नद्यन्ते बहुव्रीहित्वातिदेशानभ्युपगमे च तदसङ्गतिरेवेत्याशयः ।

ननु ङ्याप्सूत्रे भाष्ये युवतिः कुरूरित्यादौ स्वाद्युत्पत्तये वार्तिककारचोदितं त्यूङ्ग्रहणं तिप्रत्ययांशे तद्धिताधिकारादूङ्विषये पूर्वान्तवद्भावाच्च प्रातिपदिकत्वमाश्रित्य भाष्यकृता प्रत्याख्यातम् । ततश्च सप्तम्यधिकरणे चेत्यादिनिर्देशानां सामान्येन पूर्वान्तवत्त्वप्रयुक्तप्रातिपदिकत्वातिदेशाभावकल्पकतायां भाष्यविरोधस्य दुर्वारत्वाद्विभक्त्यादेशमात्रप्रयोज्यपूर्वान्तवद्भावप्रयुक्तप्रातिपदिकत्वातिदेशाभावकल्पकत्वमेव तेषां न्याय्यम् । अतः कुरूरित्यादेर्लिङ्गविशिष्टपरिभाषैकसाध्यत्वं मूलकारोक्तमयुक्तमित्याशयेन तस्यारुचिग्रस्ततां प्रदर्शयन्नाह ।। **ननु सप्तमीत्यादि** ।। काण्डे कुड्ये इत्यादिषु सत्यपि प्रातिपदिकत्वे न क्षतिरित्याह ।। **उत्सर्गस्येति** ।। द्विबह्वोर्द्विवचनबहुवचने इति संख्यानिरपेक्षस्याप्येकवचनमित्यनेन प्रवर्तमानस्योत्सर्गस्यैकवचनमिति महासंज्ञाबलात्संख्यामनपेक्ष्य प्रवृत्तिः प्रमाणानुरोधिनी, अव्ययेभ्यस्तदुत्पत्तावव्ययादाप्सुप इति यथा, ततश्च न केवलमौत्सर्गिकस्यापि प्रवृत्तौ प्रातिपदिकत्वमेव निमित्तमपि तु संख्या प्रमाणं वा । प्रकृते च तयोरुभयोरप्यभावान्नास्त्यौत्सर्गिकैकवचनस्य प्रसक्तिरिति भावः । नन्वेवमपि नपुंसकत्वप्रयुक्तो ह्रस्वो दुर्वार इत्यत आह ।। **ह्रस्वस्येति** ।। **सत्त्वप्रधान एवेति** ।। ह्रस्वो नपुंसक इत्येव सामर्थ्याच्छब्दस्वरूपाध्याहारेण सिद्धावतिरिच्यमानं प्रातिपदिकग्रहणं सत्त्वविशेष्यकप्रतीतिजनकप्रातिपदिकलाभार्थम् । काण्डे इत्यादि तु विभक्त्यर्थप्रधानतया न तद्विशेष्यकप्रतीतिजनकमिति भावः ।

वस्तुतः प्रथमाद्विवचनान्तकाण्डे इत्यादेर्ह्रस्ववारणाय पूर्वान्तवत्त्वप्रयुक्तप्रातिपदिकत्वाभावज्ञापनस्यैवाश्रयणीयतया तेनैवात्रापि सिद्धौ प्रातिपदिकग्रहणलभ्यसत्त्वप्रधानतायाः फलमन्यदन्वेषणीयमित्याहुः[1] ॥

वृत्त्यादिपठितमिति ॥ एतेन श्वश्रूशब्दस्य निरुक्तप्रकारेणोङ्प्रत्ययान्तत्वं न भाष्यकृत्सम्मतमिति सूचितम् । इदमव्युत्पन्नं प्रातिपदिकमिति हि ङ्याप्सूत्रस्थभाष्यात्प्रतीयते । तत्र हि त्यूङ्ग्रहणस्य पूर्वान्तवत्त्वप्रयोज्यप्रातिपदिकत्वेन निर्वाहमाश्रित्य प्रत्याख्यानमभिहितम् । निरुक्तरीत्या श्वश्रूशब्दस्योङन्तत्वे डाबन्तसीमादिशब्दविषयकत्वेनाब्ग्रहणवत्प्रकृतविषयकत्वेनोङ्ग्रहणस्याप्यावश्यकतया तत्प्रत्याख्यानमसङ्गतमेव स्यादित्याहुः[2] ॥

---

१. आहुरिति ॥ अत्र यद्वक्तव्यं तदर्थंतत्सूत्रव्याख्यानावसरे उक्तमस्माभिः ॥

२. आहुरिति ॥ उद्योतकारादय इत्यर्थः । नन्वेवं श्वशुरस्य स्त्रीत्यर्थे पुंयोगादिति ङीष्प्रसङ्गः । मनोरमारीत्या वचनारम्भे तूङो ङीषपवादत्वान्न तत्प्रसङ्ग इति चेन्मैवम् । योनिसम्बन्धवाचिभ्यः पुंयोगे ङीषोऽप्रवृत्तेः । अत एव तातस्य स्त्री पितृव्यस्य स्त्रीत्यर्थे न ङीषन्तप्रयोगाः । अत एव मातरि षिच्चेति षित्त्वनिपातनं सार्थकम् । अन्यथा मातामहादेः पुंयोगे ङीषि मातामहीत्यादिसिद्धौ तद्वैयर्थ्यं स्पष्टमेव । नन्वेवमप्यव्युत्पन्नश्वश्रूशब्दादपत्येऽर्थे स्त्रीभ्यो ढगिति ढगापत्तिः । न च स्त्रीभ्यो ढगित्यत्र स्त्रीशब्दे शुभ्रादिषु विमातृशब्दपाठारम्भात्स्वरितत्वं प्रतिज्ञाय स्त्रीप्रत्ययान्तेभ्य इत्यर्थस्यान्यत्रोक्ततया प्रकृते न ढकः प्रसक्तिरिति वाच्यम् । ढकि लोप इति सूत्रारम्भाद्दृष्यन्धकेति सूत्रभाष्यप्रामाण्याच्च स्त्रीभ्य इत्यर्थग्रहणमेवेति स्त्रीभ्यो ढगिति सूत्रशेखरादौ सिद्धान्तितत्वेन प्रकृते ढको दुर्वारत्वात् । मनोरमोक्तवचनारम्भपक्षे तु श्वश्रूशब्दस्य लिङ्गविशिष्टपरिभाषया श्वशुरशब्दत्वेन राजश्वशुराद्यदिति यतः प्रवृत्त्या न ढगापत्तिरिति चेत्सत्यम् । सिद्धान्तभूतेऽर्थे विमातृशब्दात् स्त्रीभ्यो ढगित्यनेनैव ढक्सिद्धौ शुभ्रादिषु विमातृशब्दपाठसामर्थ्यादसति विशेषानुशासने, सति तद्बोधकयोनिसम्बन्धवाचके शब्दे, योनिसम्बन्धवाचकेभ्यस्तद्बोधकापत्यप्रत्ययस्याभावकल्पनेनादोषात् । अत्र ज्ञाप्यांशेऽसति विशेषानुशासन इत्युक्त्या पौत्रदौहित्रादिसिद्धिः । सति तद्बोधकेत्याद्युक्त्या भागिनेयसिद्धिः । अत एव ढकि लोप इति सार्थकम् । अस्ति च प्रकृते श्वश्रूशब्दादपत्यप्रत्ययेन बोध्यो योऽर्थस्तद्वाचकः श्यालशब्द इति नात्र ढक् । विमातृशब्दप्रकृतिकापत्यप्रत्ययेन बोध्येऽर्थे योनिसम्बन्धबोधकभ्रात्रादिशब्दानां सत्त्वेन तत्राप्यपत्यप्रत्ययसम्पादनार्थं शुभ्रादिषु तत्पाठस्सार्थकः । अत एव तातस्यापत्यमित्यर्थे अत इञित्यादेर्न प्रवृत्तिः । किञ्च विभिन्नयोनिसम्बन्धवाचकेभ्योऽप-

केचित्तु तद्भाष्यप्रामाण्यात्पत्युर्न इतिवदूङादेश उकारलोपश्च विधेयः । प्रवर्तमानश्चोङादेशोऽन्त्यस्य भवन्नकारं निवर्तयतीति न तन्निवृत्त्यर्थं यत्नापेक्षा । एवं च प्राथमिकाकारस्य निवृत्तिशङ्काया अपि नावकाशः । अयं च पुंयोगलक्षण-ङीष्प्रत्ययापवाद इति न पुंयोगविवक्षायां श्वशुरीत्यनिष्टस्य प्रसङ्गः । अत एव स्थानिवत्त्वेन श्वशुरशब्दत्वादस्मादपि राजश्वशुरादिति यति पुंवद्भावे श्वशुर्य इत्यस्य सिद्धिः । प्रत्ययाप्रत्यययोरिति परिभाषायाः प्रत्याख्यानान्नोङ्धात्वोरित्य-स्यापि प्रवृत्तिरव्याहतेति सर्वमुपपन्नमन्यथा त्वनिष्टस्यानभिधानेन वारणे क्लिष्ट-त्वमभीष्टस्य दौर्लभ्यं च स्पष्टमेवेत्याहुः ।

ननु संहितोरूरित्यादावुपमानवाचकपूर्वपदाभावेऽपि शफोरुशब्दे शफ-

---

त्यप्रत्ययेन एकस्यार्थस्य बोधनं यत्र सम्भवति, तत्र सन्निकृष्टयोनिसम्बन्धवाचकप्रकृति-कापत्यप्रत्ययान्तेनैव सोऽर्थो बोध्यते, नान्येन, शब्दशक्तिस्वाभाव्यात् । अत एव पौत्र इत्यर्थे न स्नुषाशब्दादपत्यप्रत्ययः, दौहित्र इत्यर्थे न जामातृशब्दात्सः । पुत्राद्यपेक्षया स्नुषादेरसन्निकृष्टत्वात् । प्रकृते श्वशुरयोर्मध्ये श्वशुरस्यैव सन्निकृष्टस्सम्बन्धः । न श्वश्र्वाः । बीजप्राधान्यस्य स्मृतिषु निर्णीतत्वात् । एवञ्च न श्वश्रूशब्दादपत्यप्रत्यय इति न काप्यनुपपत्तिः । एवञ्च निर्देशादपूर्ववचनकल्पनाप्रयासो विफल एव मनोर-माकारादीनामित्युद्योतकारादीनामाशयः । एतेनात्र केचित्त्वित्याद्याहुरित्यन्तो ग्रन्थः प्रत्युक्तः । किञ्च स्त्रीप्रत्ययप्रकरणे प्रकरणपठितादेशादिविधायकेषु स्त्रियामित्यधिकारात् स्त्रीत्वे द्योत्ये इत्यर्थस्यावश्यकतया तद्द्योतकतायास्सर्वथाऽनर्थकेष्वादेशेषु बाधात्तत्प्रयो-ज्यप्रत्ययद्वारा निर्वाह्यतया प्रकृते ऊङादेशस्यातथात्वेन कल्प्यमानस्य वचनस्य शैली-विरुद्धत्वापत्तिः । अपि च स्त्रीप्रत्ययप्रकरणे प्रत्ययविधानमन्तराऽऽदेशादिविधानं न क्काप्युपलभ्यते । लुगादिविधायकशास्त्रेषूत्तरत्र मण्डूकानुवृत्तिक्लेशपरिहाराय ङीबाद्यनु-वृत्तेरावश्यकतया तैरेव प्रत्ययस्यापि विधानमिति प्रत्ययविधानासन्नियुक्तादेशादिविधान-मपि सूत्रकारशैलीविरुद्धमित्यपि वक्तुं शक्यते । कौमुद्यादिषु ऋन्नेभ्यो ङीबित्युक्तिर्न-कारादिषु कृतेषु जायमानङीबाद्यनुवादकमेवैतत्सूत्रेषु ङीबादि, अपूर्वविधाने तु गौरवा-पत्तेरित्याशयिका । सर्वथा तन्निवृत्तौ च मण्डूकानुवृत्तिपरिक्लेशो दुष्परिहर एव । यदि त्वव्युत्पन्नत्वपक्षे श्वशुरशब्दात्पुंयोगे ङीषापत्तिः, श्वश्रूशब्दादपत्यप्रत्ययापत्तिश्च दुष्परिहरेत्यभिमानस्तर्हि निपातनेन श्वशुरस्योकारलोप ऊङादेशश्च भविता, अनन्तरमूङुत इति प्रवर्तते । एवं सति प्रत्ययाप्रत्यययोरिति परिभाषामभ्युपगच्छतां प्राचीनानां नोङ्धात्वोरित्यत्रास्य सङ्ग्रहोऽपि सिद्ध्यतीति न काप्यनुपपत्तिः । नापि ङ्याप्सूत्रस्थभाष्यव्याकोपः । अत्र युक्तमुत्पश्यन्तु सुधियः ।

शब्दस्योपमानवाचकस्य विद्यमानत्वात्कथं तदभाव इत्यत आह ॥ **उपमेत्यादि** ॥ **समासवाच्यत्वाभावादिति** ॥ अयं भावः । ऊरूत्तरपदादौपम्ये इत्यूङ्विधायके औपम्यमुपमा, स्वार्थे ष्यञ् । सादृश्यं तदर्थः । ततश्च सादृश्यवाचकादूरूत्तरपदादित्युक्ते सादृश्यस्योपस्थितत्वादूरूशब्दात्मकोत्तरपदार्थगतस्यैव ग्रहीतुमौचित्यात्पूर्वपदमुपमानवाचकं सम्पद्यत इत्युपमानवाचिपूर्वपदादूरूत्तरपदादिति फलविधया व्याख्यातं परममूले, इत्थं च समासीयसादृश्यवाचकत्वमेतच्छास्त्रविधेयस्योङो निमित्तम् । करभोरुशब्दादौ बहुव्रीहिनिर्वाहकसामानाधिकरण्योपपत्तये पूर्वपदस्य तत्सदृशेऽजहल्लक्षणा, ततस्समासस्य सादृश्यवाचकता, शफोरुशब्दे च गौर्वाहीक इतिवत्सादृश्याख्यसम्बन्धप्रयोज्या शफत्वारोपरूपा गौणी लक्षणेति न समासस्य सादृश्यवाचकत्वमिति । ननु नायमक्षरमर्यादालभ्योर्थ इत्यत आह ॥ **यद्वेति** ॥ **न भवत्येवेति** ॥ शफोरुशब्दे तूभयथापि तत्प्रवृत्तिरिति बोध्यम् ॥ **तस्येति** ॥ संज्ञापूर्वको विधिरनित्य इत्यस्येत्यर्थः ॥

**पुंयोगे दुर्वारमिति** ॥ जातेरिति हि सम्बध्यते । अत एव किन्नरीणां नरीणामित्यादिप्रयोगनिर्वाह इत्याशयः ॥ **न्याय्य इति** ॥ शास्त्रकारोपदर्शितबाधकताबीजविरहितस्य सामर्थ्यमात्रप्रयोज्यस्य[2] गुण एव कल्पना, न तु प्रधाने, गुणबाधनेनोपक्षीणस्य तस्य प्रधानबाधकताया अयुक्तत्वादिति न्यायशरीरमिति बोध्यम् । ननु यस्येतिलोपालोन्त्यविध्योः प्रधानाप्रधानभावस्य सुप्रसिद्धतया न्यायप्रवृत्तिसौलभ्येन परिभाषयोरिति न युक्तमत आह ॥ **व्याख्यातृग्रन्थानुसारेणेति** ॥ इत्थं च व्याख्यातॄणामेवायं दोषो न तु मूलकारस्येति तत्त्वम् । ननु रान्तानुकरणेन नृशब्दस्य नरो योकारस्तस्य च वृद्धिरित्यर्थे ङीन्प्रत्ययस्य दौर्लभ्यं, न हि स्थानषष्ठ्यन्तघटितवाक्येन प्रत्ययस्य समुच्चित्य विधानं सम्भवति, तद्विधौ दिग्योगपञ्चम्या आवश्यकत्वादत आह ॥ **आवर्तत**

---

१. **उपमेत्यादीति** ॥ "उपमानाभावादिति ॥ उपमा-उपमानं-सादृश्यम्" इति शब्दरत्नपाठाभिप्रायेणेदं प्रतीकम् । अयमेव पाठः साम्प्रदायिकः । अधुनातनपुस्तकेषु उपमानाभावादिति प्रतीकस्य उपमेत्यस्य च त्यागः प्रामादिक इति बोध्यम् ।

२. **सामर्थ्यमात्रप्रयोज्यस्येति** ॥ अस्य बाधस्येति शेषः ।

इति ॥ एकत्रेति ॥ प्रत्ययविधावित्यर्थः । ननु विश्रवसो विश्रवणरवणाविति शिवाद्यन्तर्गणसूत्रेणादेशमात्रविधानेपि यथा तत्राण्प्रत्ययस्तथा प्रकृतेपि वृद्धिमात्रविधानेपि गणपाठादष्टाध्यायीस्थसूत्रेणैव ङीन्प्रत्ययसिद्ध्या वृथैवैषा सूत्रावृत्तिरित्यत आह ॥ अत एवेति ॥ यतो नरशब्दादिति ॥ आवृत्त्या ङीन्विधाने सन्निहितत्वादयमर्थो लभ्यते। नान्यथेति भावः। ननु वृद्धिविधावर्थवद्ग्रहणपरिभाषया नरो रान्तस्यार्थवतो ग्रहणे गणपाठप्रयुक्तङीन्प्रवृत्त्युत्तरकालिकयस्येतिलोपावशिष्टस्य रान्तस्यावयवीभूतो योकारस्तस्यैव स्यान्न तु वानरशब्दान्तर्गतस्यानर्थकस्येति व्यर्थ एवायं प्रयास इति चेत्सत्यम्। गणे वृद्धिविधानाय रान्तग्रहणे तदितरस्यादन्तस्य गणे पाठाभावादाचक्षाणणिजन्तत्वादिना सम्पादिताद्रान्तादेव प्रत्ययस्स्यान्न त्वदन्तादतोत्रावृत्तिः। अदन्तात्प्रत्ययविधानाय स्वीक्रियमाणायामावृत्तौ सन्निहितत्वान्ङीन्प्रकृतित्वेन गृहीतनरशब्दस्यैकदेशस्यैव वृद्धिविधौ ग्रहणमिति न कोपि दोष इत्याशय इत्याहुः ॥

अत्र केचित्। तस्य धर्म्यमित्यधिकारस्थेन ऋतोऽञिति सूत्रेण नराच्चेति

---

१. अत्र केचिदिति ॥ नागेशादय इत्यर्थः। स्पष्टा चेयं सरणिश्शब्देन्दुशेखरे। नन्वेवमपि जातिमात्रप्रतिपिपादयिषायां गणसूत्राभावे नृशब्दादृन्नेभ्य इति ङीपो नरशब्दाज्जातेरिति ङीषश्च वारयितुमुपायाभावात्पाक्षिकानिष्टापत्तिः। वसेस्तव्यदिति वचनं तु वास्तव्यशब्दसाधनार्थमेव, न तु पाक्षिककृदन्तरव्यावृत्त्यर्थम्। वचनारम्भेऽपि वासरूपविधिना तेषां पाक्षिकप्राप्तेर्दुर्वारत्वेनेष्टापत्तेः। अतस्तत्प्रत्याख्यानं न प्रकृतार्थसाधकमिति चेन्न। नृशब्दस्य पुरुषादिशब्दवन्नित्यपुंस्त्वाभ्युपगमेन ऋन्नेभ्य इति ङीपोऽप्राप्तेः। अत एव नामलिङ्गानुशासने "मनुष्या मानुषा मर्त्या मनुजा मानवा नरा" इति षट् शब्दान्मनुष्यसामान्यवाचिनोऽभिधाय "स्युः पुमांसः पञ्चजनाः पुरुषा पूरुषा नर" इति पञ्च शब्दान् पुंव्यक्तिबोधकान्प्रादर्शयदमरसिंहः। स्फुटीकृतश्चायमाशयः पूर्वार्धस्थान् षडुपादाय "एते मनुष्यसामान्यवाचिनः" उत्तरार्धस्थानुपादाय "एते पञ्च मनुष्यजातौ पुरुषस्य" इति वदता भट्टोजीदीक्षितसुतेन भानोजीदीक्षितेन स्वकृतनामलिङ्गानुशासनव्याख्यायां सुधायाम्। महेश्वरकृतामरविवेकेऽपि "पुमांस इत्यादिपञ्चकं पुंव्यक्तावेव प्रायेण प्रयुज्यते" इत्युक्तया नृशब्दस्य नित्यपुंस्त्वं स्पष्टं प्रतीयते। अन्यथा पुमादिशब्देभ्योऽपि जातिमात्रविवक्षायां स्त्रीप्रत्ययापत्तिस्तव दुर्वारा। नरीति तु पुंयोगे ङीषि दुर्वारमेव। न च जातिमात्रप्रतिपिपादयिषायां तन्नेष्टमिति वाच्यम्। पुंयोगादाख्यायामिति सूत्रविषये स्त्रीप्रत्ययप्रकृतीनां लाक्षणिकताया भाष्यसम्मतत्वेन शाब्दिकनये लक्षणास्थले शक्यतावच्छेदकप्रकारकबोधस्य

वक्तव्यमिति वार्तिकेन च नृशब्दान्नरशब्दाच्च जायमानेनाऽप्रत्ययेनाऽन्तत्वलक्षणे ङीन्याद्युदात्तस्य नारीशब्दस्य सिद्धिः। रूढिशब्दत्वाच्च नार्थवैलक्षण्यशङ्कावकाशः। अत एव तव्यत्तव्यानीयर इति सूत्रे भाष्ये वास्तव्यशब्दसाधनाय प्रवृत्तं वसेस्तव्यत्कर्तरि णिच्चेति वचनं वास्तुशब्दप्रकृतिकभवार्थकदिगादियत्प्रत्ययेन सिद्धिमास्थाय भाष्यकृता प्रत्याख्यातम्। कैयटेन च नित्यानां शब्दानां यथाकथंचिदन्वाख्यानं कर्तव्यमित्युक्तम्। तस्मादनुपयुक्तत्वेनानार्षत्वादनुपादेयमिदं गणसूत्रमित्याहुः॥

अन्ये तु नृशब्दनरशब्दयोर्यथाकथंचिदअन्तत्वसम्पादनेन नारीशब्दस्य सिद्धावपि जातिमात्रप्रतिपिपादयिषायां गणसूत्राभावे नृशब्दादृन्नेभ्य इति ङीपो नरशब्दाज्जातेरस्त्रीविषयादिति ङीषश्च वारयितुमुपायाभावात्पाक्षिकानिष्टापत्तिः। वसेस्तव्यदिति वचनं तु वास्तव्यशब्दसाधनार्थमेव, न तु पाक्षिककर्तृबोधककृदन्तरव्यावृत्त्यर्थम्। वासरूपविधिना वचनारम्भेऽपि पाक्षिकतया तेषां दुर्वारत्वात्। अतस्तत्प्रत्याख्यानं न प्रकृतार्थसाधकम्। प्रकारान्तरेण कथंचिद्रूपसिद्धावप्यौत्सर्गिकानिष्टवारणात्मकं प्रयोजनं यत्र, तथाभूते विषये प्रत्याख्यानं भाष्यकाराणामनिष्टमेव। अत एव तस्येदमित्यपत्येऽपि बाधनार्थं कृतं भवेदिति समर्थितो योगविभागो न तु प्रत्याख्यातः। किञ्च पञ्चभिर्नारीभिः क्रीतः पञ्चनेत्यादिप्रयोगो गणसूत्रैकसाध्यः। आर्हीयस्य ठकोऽध्यर्थेति लुक्युपसर्जनस्य ङीनो लुका तत्सन्नियुक्ताया वृद्धेरपि निवृत्तिसम्भवात्। अअन्तान्ङीनि तु तस्य लुक्यअन्तस्यावशेषा-

---

सिद्धान्तसिद्धतया जातिवाचकप्रकृतिकपुंयोगादिति सूत्रविहितङीषन्तस्थले जातिप्रकारकबोधस्यावश्याभ्युपगन्तव्यतया तत्प्रकारकबोधे तादृशप्रयोगस्यानिष्टत्वस्य दुर्वचत्वात्। प्रकारीभूतश्च धर्मो मुख्य आरोपितो वेत्यन्यदेतत्। न च पञ्चभिर्नारीभिः क्रीतः पञ्चनेत्यादिप्रयोगसिद्धये गणसूत्रमावश्यकमिति वाच्यम्। प्रागुपदर्शितनामलिङ्गानुशासनादिविरोधादुक्तार्थे तस्यानिष्टत्वात्। पञ्चनेति यदि प्रमितः प्रयोग उपलभ्येत, तदा पञ्चभिः नृभिः क्रीत इत्यर्थेन निर्वाह्यः। एतेन अन्येत्वित्यादिना वदन्तीत्यन्तेन गणसूत्रस्यावश्यकत्वोक्तिः परास्ता। किञ्चास्य सूत्रस्य भाष्यादिप्रमितग्रन्थेष्वदर्शनेन विना प्रमाणमार्षत्वं निश्चेतुं नैव शक्यते। अन्यथा "अङ्गगात्रकण्ठेभ्यो वक्तव्य" मित्यादीनामपि आर्षत्वेन प्रामाण्यप्रसङ्गः। किञ्चोपदर्शितकोशादिबलेन नृशब्दस्य स्त्रीत्वाभावात् गणसूत्रे नृशब्दग्रहणमनर्थकं दुरर्थकं चेत्यादि स्वयमूहनीयमित्याहुः।

त्तदसिद्धिरेव । अनभिधानवादस्तु लक्षणानुसन्धानपूर्वकत्वेनैव लक्ष्यं विजानतामस्मदादीनां शास्त्रप्रत्याख्यानाय न क्षमते । तस्मादिदमावश्यकमार्षं च गणसूत्रमिति वदन्ति ॥

नन्वात्मज इत्यादिना कोशेन पुत्रशब्दस्य स्त्रीपुंससाधारणत्वाभिधानादपत्यशब्दसमकक्षतया तदन्यतरविषयकबोधनिश्चयाभाव इत्यत आह ॥ ईकारेति ॥ तत्प्रकृतिकस्त्र्यधिकारविहितेकारसमभिव्याहार इत्यर्थः । तेन पुत्रीयतेः क्विपा निष्पन्नेन पुत्रशब्दार्थसमवेतस्त्रीत्वबोध इति बोध्यम् । ननु वार्तिकस्य सुतरां फलाभावे फलस्य चिन्ताविषयत्वप्रतिपादनमयुक्तमत आह॥ चिन्ताबीजमिति ॥ अन्तोदात्तत्वमिति ॥ सूतादीनां दुहितृशब्देन समासे परत्वात्पुत्रडादेशे विशिष्टस्य समासस्वरेणान्तोदात्तत्वे यस्येति लोपेनानुपसर्जनटिदन्तत्वप्रयुक्ते समुदायप्रकृतिके ङीप्यनुदात्ते परतोऽतो निवृत्तावनुदात्तस्य च यत्रोदात्तलोप इति ङीप ईकारस्योदात्तत्वं वार्तिकारम्भप्रयोजनमिति भावः । ननु सूतोग्रमेरुभ्यः परीभूतपुत्रीशब्दोकारे प्रागुक्तरीत्या प्रसक्तस्योदात्तत्वस्य वारणेन तदंशे पुत्रडादेशविधानस्य साफल्येपि नाचार्यराजर्त्विक्संयुक्तज्ञात्याख्येभ्य इत्यनेनाख्याग्रहणबलात्स्वरूपपर्यायविशेषसाधारणतया निषेधकेन राजभोजशब्दाभ्यां परस्य नपुंसकतया कुलशब्दात्परस्य च पुत्रीशब्दस्य पकारोकारोदात्तविषयत्वाभावेन तन्निवारणात्मकफलासम्भवादेतदंशे वार्तिकारम्भो विफल एवेति चेत्सत्यम् । उत्तरपदाधिकारे पक्वेष्टकचितमित्यादिप्रयोगोपपत्तये प्रकरणप्राप्तोत्तरपदाक्षिप्तपूर्वपदरूपविशेष्यसम्बन्धेन गृह्यमाणस्य तदन्तविधेरभीष्टतया सूताद्यन्तात्परस्यापि तस्य तदधिकारस्थेनानेन वार्तिकेन पुत्रडादेशस्य न्याय्यत्वान्नाचार्येति निषेधस्याख्याग्रहणस्वारस्येन तदन्ते प्रवृत्त्ययोगात्कुलशब्दान्तबहुव्रीहेः पुंवाचकत्वसम्भवाच्च महाराजपुत्री प्रियभोजपुत्री सत्कुलपुत्रीत्यादिषु प्रागुक्तरीत्या प्रसक्तस्य पकारोकारोदात्तत्वस्य निवृत्त्यर्थमथवा वार्तिके राजभोजशब्दौ सदृशलाक्षणिकौ, तेन तद्विषये क्षत्रियतद्विशेषबोधकतादृशशब्दविषये प्रवर्तमानस्य निषेधस्य प्रवृत्त्ययोगात् । अर्श आद्यजन्तस्य कुलशब्दस्य पुंवाचकत्वसम्भवाच्च तद्विषये प्रागुपदर्शितस्वरनिवारणार्थं तदंशेपि वार्तिकारम्भस्सफल एवेत्याशयो विभावनीय इत्याहुः ।

केचित्तु[1] वार्तिकारम्भस्य मध्योदात्तनिवृत्तिमात्रफलकत्वे पुत्रीशब्देन समासे तत्प्रवृत्तिः, पुत्रडादेशे तु नेति विकल्पस्य फलिततया पुत्रः पुंभ्य इत्युत्तरं सूतोग्रराजभोजकुलमेरुभ्यो वेत्येव वक्तव्ये तादृशादेशविधायकवार्तिकारम्भो व्यर्थ एव । तस्माद्राजपुत्रीव मनुष्यो राजपुत्रीत्येवं प्रतिकृत्यर्थकस्य कनो लुपि बहुव्रीहावतिशब्देन वा तत्पुरुषे पुत्रडादेशविषये विशिष्टस्यैव ङीबन्तत्वादुपसर्जनत्वप्रयुक्ते तदादिनियमेप्युत्तरपदस्य स्त्रीप्रत्ययान्ततताया निर्बाधत्वेन प्रियराजपुत्रिरतिराजपुत्रिरित्यादौ गोस्त्रियोरिति ह्रस्वो निर्विवादः । पुत्रीशब्दान्ततत्पुरुषप्रकृतिककन्नन्तोत्तरपदके तादृशसमासे तदादिनियमेन पुत्रीशब्दस्यैव ङीबन्तत्वादुत्तरपदस्य स्त्रीप्रत्ययान्तत्वाद्ध्रस्वो दुर्लभ इति साफल्यं वार्तिकारम्भस्येत्याहुः ।

यत्तु केचित् राजपुत्र्यादिनीत्यादौ लिङ्गविशिष्टपरिभाषया ङीनन्ते प्रवर्तमानस्य नादिनीति निषेधस्य पुत्रडादेशे सानुबन्धके प्रवृत्त्यभावो वार्तिकप्रयोजनमित्याहुस्तदसम्भवग्रस्तमित्याह ॥ नादिनीति ॥ परत्वासम्भवादिति ॥ पुत्रादिनीत्यादावादिन्शब्दपरकपुत्रशब्दावयवे द्वित्वनिषेध इत्यर्थे येन नाव्यवधानन्यायेन रेफमात्रव्यवधाने निषेधसम्पादनेन कृतार्थस्य तादृशनिषेधस्य पुत्र्यादिनीत्यादौ रेफयकारात्मकवर्णद्वयप्रयुक्ते व्यवधाने प्रवृत्त्ययोगान्नैतस्य वार्तिकारम्भप्रयोजनत्वसम्भव इत्याशयः । ननु श्रुतत्वात्पुत्रशब्द एवादिन्शब्दपरत्वेन

---

१. केचित्त्विति ॥ वस्तुतस्तु मूलोक्तवार्तिकफलमन्यादृशवार्तिककरणेनोपपाद्य प्रकृतवार्तिकस्य वैयर्थ्यप्रतिपादनमयुक्तम् । वार्तिकाक्षरेषु लाघवगौरवचर्चाया अयुक्तत्वात् । अतो मूलोक्तमपि फलं सम्यगेव । किञ्च भवत्प्रदर्शितदिशा फलान्तरस्यापि सम्भवादेतद्वार्तिकस्यावश्यकतया तेनैव मूलोक्तफलस्यापि सिद्धावन्यादृशवार्तिकेन तत्फलसाधनपूर्वकमेतद्वार्तिकस्य वैयर्थ्यकथनं सर्वथानुपपन्नम् । मूले तन्मात्रमेव फलमिति नोक्तं, येन भवदुक्तेरवकाशः स्यात् । अतो मूलस्थं फलं भवदुक्तफलस्याप्युपलक्षणमिति व्याख्यानमुचितम् । न तु मूलस्य न्यूनत्वभ्रान्तिजनकं मतान्तरत्वस्फोरकतया केचित्त्वित्यादिना व्याख्यानम् । किञ्च मूलस्थफलस्य फलान्तरोपलक्षणतया व्याख्यानमन्येषां सुकरम् । स्त्रीप्रत्यये चानुपसर्जने नेति परिभाषाव्याख्यानावसरे भवदीयवाक्यार्थचन्द्रिकायां तत्परिभाषायामुपसर्जनपदस्य शास्त्रीयोपसर्जनपरताया भवता व्यवस्थापितत्वेन तद्रीत्याऽत्र तदादिनियमाप्रसक्त्या अतिराजपुत्रिरित्यादेः पुत्रडादेशमन्तरापि सिद्धेस्तदसाधारणफलत्वप्रतिपादनं भवतो न सङ्घटत इत्यलं परस्परविरुद्धार्थकथनेनेत्याहुः ।

विशेष्यते, लिङ्गविशिष्टपरिभाषया पुत्रीशब्दे पुत्रशब्दत्वमक्षतमेव । यद्विशेषणत्वे च येन नाव्यवधानन्यायेन निर्दिष्टपरिभाषाबोधितस्याव्यवहितांशस्य रेफात्मक-व्यञ्जनातिरिक्तपरत्वेन सङ्कोचकल्पनायां क्लेशेनायुक्तत्वादतस्सम्भवत्येवैतत्प्रयोजनं वार्तिकारम्भस्येति चेन्न । प्रधानभूतयद्विशेषणत्वसम्भवे तद्विशेषणीभूतपुत्रशब्द-विशेषणत्वस्य न ह्युपावेरिति न्यायेनायुक्तत्वात् । अत एव पुंस्पुत्रादिनीत्यादौ शरः खय इति पकारद्वित्वे नायं निषेध इति वदन्ति ॥ ङीब्मात्रबाध-कत्वादिति ॥ यद्यपि पञ्चेत्यत्र भूतपूर्वषट्त्वनिमित्तकत्वेन टाबपि वारणीयोऽस्ति, तथापि ङीबंशे सन्निहितत्वात्स्वस्रादिसाहचर्याच्च तन्मात्रविषयकत्वमित्याशयः ॥ टित्त्वसामर्थ्यादिति ॥ सानुबन्धकताया अनुबन्धान्तरेणापि सुवचत्वादित्यभिप्रायः ॥ ङीपोऽप्राप्तेश्चेति ॥ ततश्च तद्विषयकभाष्यकारीयप्रयोगविरोधापत्तिरिति भावः ॥

ङित्करणसामर्थ्यादिति ॥ षित्करणन्तु प्रकृतेर्ह्यनुबन्धकस्य ष्यङो ग्रहणाविघातार्थम् । सम्प्रसारणविधौ तस्य ग्रहणाभावार्थं चेति बोध्यम् । न च षित्करणाभावे सन्यङोरिति द्विर्वचनप्रसङ्ग इति वाच्यम् । परस्परसाहचर्येण धातुविहितप्रत्यययोरेव तत्र ग्रहणात् । धातोरित्यनुवर्त्य सन्नन्तयङन्तयोर्धात्वोरेव द्वित्वविधानाच्च । यङोऽचि चेति लुगपि न भवति, अदिप्रभृतिभ्यश्शप इत्येतत्साहचर्यादित्याहुः ॥ द्योतकत्वाच्चेति ॥ गार्ग्यायणीत्यादौ ष्फप्रत्ययेन बोधितस्य स्त्रीत्वस्य द्योतने ङीषः प्रवृत्तिदर्शनाद्व्यतिलुनीत इत्यादावात्मनेपदद्योतित-कर्मव्यतीहारद्योतकत्वेन व्यतीत्यनयोरुपसर्गयोस्सहप्रयोगदर्शनाच्चोक्तार्थानामिति न्या-यस्य वाचकविषयताया आवश्यकत्वेन ष्यङा द्योतितस्य स्त्रीत्वस्य द्योतने चापः प्रवृत्तौ बाधकाभावेन तत्समर्थनाय सामर्थ्याश्रयणपरिक्लेशो निष्फल एवेत्याशयः ॥

इदन्त्विति ॥ अनेन भाष्याविचारितप्रयोजनैस्सूत्राक्षरैरर्थविशेषकल्प-नया प्रयोगाणामस्मदादिभिस्साधुत्वोपवर्णनमयुक्तम् । तदंशे भाष्यकारस्या-ज्ञानकल्पनापत्तेः । अत ईदृशानामसाधुत्वमेवेति सूचितम् । ननु टापः प्राक्तद्धिताधिकारे ङीबादीनामपि तद्धितसंज्ञायामित्संज्ञाविधौ लशक्वत-द्धित इति तद्धितपर्युदासादादिभूतस्य ङकारस्येत्संज्ञानापत्तिरित्यत आह ॥ इत्संज्ञेति ॥ चुटुडु इति ॥ यस्येति चेति सूत्रस्थेद्ग्रहणाकरणलाघवस्य ष्फविधौ

तद्धितग्रहणाकरणलाघवस्य चाधिकस्य सत्त्वादिदं न गौरवाधायकमिति भावः ॥ जादय इति ॥ अनुवादविषये हलङ्याभ्य इत्यादावीकारान्तरव्यावृत्तये यथा ङकारस्तथायं जकार इति भावः । ननु टापः प्राक्तद्धिताधिकारे स्त्रीप्रत्ययान्तानां सर्वेषामेव प्रातिपदिकत्वाद्यत्र अनुदात्तस्य च यत्रोदात्तलोप इत्यस्याप्रवृत्तिर्यथा वर्णादनुदात्तादिति विधीयमानङीबन्तविषये श्येनीत्यादौ, तथाभूते विषये फिषोन्त उदात्त इत्यनेनान्तोदात्तत्वप्रसङ्ग इत्यत आह ॥ **फिट्स्वरो नेति** ॥ **प्रकृतिप्रत्ययविभागशून्ये एवेति** ॥ अन्यथा प्रत्ययेषु स्वरविशेषनिर्णायकविजातीयानेकानुबन्धासञ्जनवैयर्थ्यप्रसङ्ग इति भावः । इदं च भगवतः पाणिनेर्मतेन, तन्मते हि अव्युत्पन्नानि प्रायशः प्रातिपदिकानि ॥ शाकटायनमते तु सर्वेषामेव प्रातिपदिकानां प्रकृतिप्रत्ययविभागोपहितत्वेन तद्गतानुबन्धत्वप्रयुक्तस्वरविशेषानुवादकान्येव लाघवेन तत्परिज्ञानसाधकानि फिट्सूत्राणीति बोध्यम् ॥ **अपरं लाघवमिति** ॥ ङित्त्वप्रयुक्तकार्यविशेषाभावेन टाबुभाभ्यामित्येव वक्तुं शक्यत्वादित्याशयः ॥ **ज्ञापनार्थमिति** ॥ ङीबादिरूपस्त्रीप्रत्ययात्मकेकारे तद्धितत्वप्रयुक्तकार्यसामान्याभावज्ञापनार्थमीद्ग्रहणमित्यर्थः । तेन नान्तलक्षणे ङीपि दण्डिनीत्यादौ टिलोपोपि नेति बोध्यम् । न च सन्निपातपरिभाषया तदभावसिद्धिरिति वाच्यम् । टिलोपविषये तत्परिभाषाया अप्रवृत्तेः । अन्यथा अनश्चेति विहिते समासान्ते टचि अधिराजमित्यादौ टिलोपानापत्तेः । ननु निरुक्तार्थज्ञापनार्थमीद्ग्रहणस्यावश्यकत्वे प्राक्तद्धिताधिकारारम्भे लाघवाभावः, न च ष्फविधौ तद्धितग्रहणाकरणमेव महल्लाघवमिति वाच्यम् । तस्याप्यन्यतो विधानबोधनद्वारेणासुरेरुपसंख्यानमित्येतद्वार्तिकार्थोपसङ्ग्राहकत्वेनावश्यकत्वात् । अन्यथा वार्तिकस्य वाचनिकत्वापत्तेर्लाघवस्य दुर्वचत्वादिति चेन्न । ईद्ग्रहणेन निरुक्तरीत्या तद्धितकार्याभावज्ञापने पुरस्तात्तद्धितसंज्ञारम्भस्य बहुराजेत्यादौ डाबुभाभ्यामिति विहिते टिलोपमात्रफलकत्वेन ङित्त्वेनापि तत्सिद्ध्या नैष्फल्यात्तेनैवान्यतो विधानबोधनद्वारा वार्तिकार्थोपसङ्ग्रहस्य सिद्धतया ष्फविधौ तद्धितग्रहणाकरणेपि निर्वाहेन लाघवस्य सुवचत्वात् । निरुक्तरीत्या तद्धितकार्याभावज्ञापनस्य पट्वी दण्डिनीत्यादौ गुणटिलोपयोर्निवारकत्वेपि यावल्लक्ष्यनिर्वाहकत्वाभावेनाव्यापकत्वादसङ्ग-

---

१. **जादय इतीति ॥ टीबादय इत्यस्य स्थाने जादय इति पाठः क्वचिद्दृश्यते तदनुरोधेनेदम् ।**

तिरित्याक्षिपति ॥ **कुरूरित्यादि** ॥ **ज्ञापनायामिति** ॥ इत्थं च स्त्रीप्रत्ययसामान्यविषयकत्वेन निरुक्तार्थज्ञापनायामासुरायणीत्यस्यासिद्धिः । स्त्रीप्रत्ययविशेषविषयकत्वेन ज्ञापनायां कुरूरित्याद्यसिद्धिः । अतोत्र ज्ञापनेन निर्वाहाभावादयुक्तोयं प्राक्तद्धिताधिकारप्रारम्भ इत्याशयः ॥ **लोपानापत्तेरिति** ॥ ननु धर्मिग्राहकसाधर्म्यादेकवर्णात्मकस्त्रीप्रत्यये तद्धितकार्याभावो ज्ञाप्यतां, ततश्च ष्फप्रत्यये यस्येति लोपो निर्बाध एवेति नास्ति प्राक्तद्धितारम्भे लक्ष्यविसंवाद इति चेतर्हि विशेषज्ञापनाभिनिवेशे विनिगमनाविरहादेकवर्णस्थानिकतद्धितकार्याभावस्य धर्मिग्राहकसाजात्यादेव ज्ञापनापत्तौ नान्तलक्षणे ङीपि दण्डिनीत्यादौ टिलोपो दुर्वारस्तस्मादयुक्त एवायं ज्ञापनप्रयासस्तद्ध्वनयन्नाह ॥ **अत एवेति** ॥ ननु ष्फडिति न्यासेन ङित्त्वप्रयुक्तटिलोपादासुरायणीत्यस्य निर्बाधत्वात्सामान्ये तद्धितकार्याभावज्ञापनेनान्यत्र निर्वाहाच्च युक्त एवायं प्राक्तद्धिताधिकारप्रारम्भ इति चेत्सत्यम् । निरुक्तार्थज्ञापनार्थमीङ्ग्रहणस्य ज्ञापनोत्तरं टिलोपोपपत्तये डाबुभाभ्यामिति विहिते ङित्त्वस्य च कर्तव्यत्वेन लाघवाभावात् । निरुक्तज्ञापनेन ष्फप्रत्यये तद्धितनिमित्तकयस्येतिलोपस्य प्रवृत्त्ययोगात्तत्प्रवृत्तिप्रयुक्तसार्थक्यसम्पादकप्रातिपदिकान्तरविषयप्रत्ययविधानानुमितेर्दुष्करतया वार्तिकार्थोपसङ्ग्रहासम्भवेन फलाभावाच्च ष्फप्रत्ययङित्त्वेनैव तादृशवार्तिकार्थोपसङ्ग्रहस्य सुवचत्वाच्च लिङ्गविशिष्टपरिभाषाया अनित्यताज्ञापनस्यैव तत्प्रयोजनत्वेन कल्पनीयतया तस्य यथाश्रुतपाठेनापि कल्पयितुं शक्यत्वादस्थानारम्भ एवायं प्राक्तद्धिताधिकारप्रारम्भ इति विभावनीयमित्याहुः । तदेतत्सकलं मनसि निधायाह ॥ **इति दिगिति** ॥

**आत्मानमिति** ॥ व्यवायविषयकाभिलाषोपहितान्तःकरणवतीत्यवयवमर्यादालभ्योऽर्थ इत्याशयः । **वृद्ध्यादीनामिति** ॥ इदन्तु न युक्तम् । यं विधिं प्रत्युपदेशोऽनर्थकस्स विधिर्बाध्यते, यस्य तु विधेः पुनर्निमित्तमेव, नासौ बाध्यत इति न्यायेन भिक्षादिगणस्थयुवतिशब्दपाठस्यानुदात्तादेरञित्येतन्निवृत्तिफलकतया पुंवद्भावे युवन्शब्दस्य कनिनन्तत्वेनाद्युदात्तत्वादौत्सर्गिकस्याणस्सिद्धतया तद्वैयर्थ्येन पुंवद्भावमात्रबाधकताया एव न्याय्यत्वेन वृद्ध्यादिबाधकताया अप्रसक्तेः । तस्मान्मूलकारोक्तो भाष्यविरोध एव वृत्तिग्रन्थासाङ्गत्यहेतुरित्याहुः ॥

अत एवेति ॥ शत्रन्ताभ्युपगमादेवेत्यर्थः । कतिप्रत्ययान्तत्ववादिनां तु कृदिकारादक्तिन इति ङीषा तत्सिद्धिः । परन्तु तत्र भाष्यानुग्रहश्चिन्त्यः । एतस्माद्विहितस्याञो निवर्तकतया भिक्षादिपाठस्यावश्यकत्वात्तत्प्रत्याख्यानस्यासाङ्गत्यापत्तेः । शत्रन्तप्रकृतिके ङीबन्तेपि शतुरनुमो नद्यजादी इत्यन्तोदात्तत्वमेवेत्याशयः ॥ अनित्यत्वज्ञापनार्थमिति ॥

केचित्तु यूनस्तिरित्यतः प्राक्तद्धिताधिकारस्तिप्रत्ययस्य तद्धितत्वे युवतिशब्दस्य गुणवचनत्वाभावाय, तेन युवतित्वमित्यत्र त्वतलोर्गुणवचनस्येत्यस्याप्रवृत्तेर्न पुंवत्त्वमित्यभीष्टसिद्धिरित्याहुः ॥

श्रीः इति स्त्रीप्रत्ययाः ।



---

१. आहुरिति ॥ अत्रेदं तत्त्वम् । आकडारसूत्रभाष्यपठितसमासादिसाहचर्येण तद्धितान्तपदेन वृत्तिभूततद्धितान्तस्यैव ग्रहणे युवतिशब्दस्याताद्दशत्वेन गुणवचनत्वमिष्टमेव । अत एव यवीयसीति सिद्धम् । अन्यथा आतिशायनिकप्रत्ययानां सुबन्तादेवोत्पत्त्या सुपः पूर्वं तिप्रत्यये तत ईयसुनो दुर्लभत्वेन तदसिद्धिः स्पष्टैव । स्त्रीत्वविवक्षायामातिशायनिकः युवतिशब्दादेव, न तु स्त्रीप्रत्ययात्प्रागिति ङ्याप्सूत्रस्थभाष्यात्स्पष्टं प्रतीयते । एवं च युवतिशब्दात्त्वतलोः पुंवद्भाव इष्ट एव । विपरीतं तवानिष्टापत्तिः । वस्तुतस्तु वयोवाचकानां जातिकार्यस्य भाष्यसम्मततया जातेश्चेति निषेधेन युवतित्वमित्यस्य गुणवचनत्वेऽपि सिद्धया तदर्थमस्य तत्त्वाभावकल्पनाप्रयासो विफल एव । न च युवतीनां भाव इत्यर्थे वयोवाचकानां जातिकार्यस्य वैकल्पिकतया निषेधाभावपक्षे युवत्वमिति दुर्वारमिति वाच्यम् । त्वद्रीत्यापि कुक्कुटाण्डवद्वृत्तौ तस्य दुर्वारतया तत्रानिष्टत्वस्य भवतापि वक्तुमशक्यत्वात् । एवं च मतद्वयेऽपि युवतीनां भाव इत्यर्थे युवत्वयुवतित्वशब्दयोरसाधुत्वस्य दुर्वारतया तिप्रत्ययात्प्राक् तद्धिताधिकारस्य लिङ्गविशिष्टपरिभाषानित्यत्वज्ञापनार्थत्वकथनमेव युक्तम् । अतो व्यर्थ एवायमसम्भवफलकल्पनाभिनिवेश इत्यलं पल्लवितेनेत्याहुः ॥

# अथ कारकप्रकरणम् ।

श्रीपरदेवतायै नमः । श्रीगणेशाय नमः । ननु "न कर्मधारयान्मत्वर्थीयो बहुव्रीहिश्चेत्तदर्थप्रतिपत्तिकर" इति सकलतान्त्रिकसमाजाभिनन्दितमनुशासनम् । अत एव पीताम्बरवान् हरिः शीतकिरणवानिन्दुरित्यादयो न साधवः प्रयोगा इत्यभियुक्ताः । नीलोत्पलवान्कासारः कृष्णसर्पवान्वल्मीक इत्यत्र तु कर्मधारयस्य जातिविशेषावच्छिन्नव्यक्तिबोधने रूढतया बहुव्रीहिणा तदर्थानवगतेः कर्मधारयादेव मत्वर्थीय इति नानुशासनविरोधः । ततश्च नीलरूपवत्पर इति मूलकारीयकर्मधारयप्रकृतिकमत्वर्थीयान्तनिर्देशो न युक्तः । नीलाभिन्नरूपसम्बन्ध्यात्मकस्य तदर्थस्य बहुव्रीहिणा प्रतिपादनसौलभ्येनानुशासनविरोधादत आह ॥ **भाष्यप्रयोगेणेति** ॥ नन्वसुब्वत इति भाष्यकारीयप्रयोगस्य नञ्तत्पुरुषप्रकृतिकमत्वर्थीयप्रत्ययान्ततया कर्मधारयप्रकृतिकमत्वर्थीयविषयकनिषेधबोधकानुशासनसङ्कोचे कथं प्रमाणं स्यात् सत्यं, नेदमपूर्वमनुशासनम् । किन्तु यत्रैकया वृत्त्या निर्वाहस्तत्र वृत्तिद्वयाश्रयणं गौरवपराहतत्वादयुक्तमिति न्यायलब्धमेतत् । ततश्च यत्र तत्पुरुषान्तरेप्युक्तरीत्या लाघवसम्भवस्तत्रापि मत्वर्थीयो निषेधविषय एवेत्यानुशासनिककर्मधारयपदं तत्पुरुषपरम् । अत एव कण्ठे कालवानित्यादयोऽपि न प्रयोगाः । तथा च नञ्तत्पुरुषप्रकृतिकमत्वर्थीयस्यापि निषेधविषयतया युक्तमेतत्सङ्कोचकत्वं भाष्यस्येति विभावनीयमित्याहुः । मत्वर्थीयोपि क्वचिदित्युत्तरं ज्ञापनादित्यपपाठः । सूचनादित्यनेनैवैतदर्थावगमात् । यद्वा सूचनादित्यन्तो ज्ञापनादित्यन्तश्च पाठभेदः ॥ **नामार्थश्च नामार्थश्चेति** ॥ नामार्थश्चेतिद्वन्द्वभ्रान्तिवारणार्थमेतत् ॥ **अभेदो न संसर्ग इति** ॥ भेदे[1]संसर्गो यथा भेदाद्विलक्षणस्तथैवाभेदे[2]संसर्गो-

---

१. **भेदसंसर्ग इति** ॥ भेदे संसर्ग इत्यर्थः ।

२. **अभेदसंसर्गोऽपीति** ॥ अभेदे संसर्गोऽपीत्यर्थः ।

प्यभेदाद्विलक्षण इत्याशयः । ननु सम्बन्धस्संसर्ग इति नार्थान्तरम् । स च सम्बन्धिभ्यां भिन्न उभयाश्रितः । भेदस्तु प्रतियोगितावच्छेदकेन विरोधान्मास्तु संसर्गः । कुतोयमभेदो न संसर्ग इति तत्राहै ॥ **राहोश्शिर इत्यादि ॥ औपाधिकभेदेनेति ॥** राहुत्वशिरस्त्वरूपोपाधिगत-भेदारोपेण परिकल्पितावयवावयविभावसम्बन्धे इत्यर्थः । अभेदस्य संसर्गत्वे तेनैव षष्ठ्युपपत्तौ व्यर्थोयं भाष्यकारीयप्रयास इत्याशयः ॥ **तेन शब्देनेति ॥** न विद्यते भेदस्तन्मूलकस्संसर्गो यस्मिन्विशेषणविशेष्यभावे सोयमभेदस्स चासौ संसर्ग इति बहुव्रीहिगर्भकर्मधारयेण सम्बन्धान्तरानवच्छिन्नविशेषणविशेष्य-भावोऽत्राभेदसंसर्गशब्देनोच्यत इति भावः ।

केचित्तु नीलो घट इत्यादौ नीलाभिन्नो घट इत्येवं सार्वजनीनतया बोधविषयत्वेन प्रसिद्धस्याभेदस्य प्रकारतासंसर्गतान्यतररूपा का च नावश्यमभ्युपेया विषयता । तत्र पदानुपस्थिते प्रकारतया भानस्यानिष्टत्वाल्लक्षणाश्रयणापत्त्या ला-घवादाकाङ्क्षागम्यत्वेन प्रसिद्धा सांसर्गिकविषयतैव तस्य न्याय्या । धान्येन धनवानित्यादौ सांसर्गिकविषयतया तद्भानं सकलसुप्रसिद्धम् । राहोश्शिर इत्यत्रारोपिताभेदपुरस्कारेण षष्ठीं समर्थयतो भाष्यकारस्य च षष्ठी शेष इति सूत्रस्थशेषपदार्थतया नाभेदो ग्रहीतव्य इत्येव तात्पर्यमिति वक्तुं युक्तम् । किञ्च संसर्गानवच्छिन्नोपि यदि विशेषणविशेष्यभावस्स्यात्तर्हि भेदस्थलेपि तथाविधः प्रसज्येत । यदि च पदार्थे पदार्थान्तरवैशिष्ट्यस्य सम्बन्धविशेषमन्तरा दुर्वचत्वे-नाकाङ्क्षावशादुपस्थितस्य तस्य सांसर्गिकविषयतया भानमावश्यकमित्युच्यते, तर्हि प्रकृतेपि तथाविधाकाङ्क्षा दुर्वारैव ॥ अपि च नीलविशिष्टो घट इत्येवं

---

१. **तत्राहेति ॥** वस्तुतस्तु इदमवतरणमयुक्तम् । अत्राभेदस्य भट्टाचार्योक्त-दिशा स्वप्रतियोगिवृत्तित्वस्वानुयोगिवृत्तित्वोभयसम्बन्धेन भेदविशिष्टान्यत्वरूपस्य निर्वक्त-व्यतया तस्य चान्ततस्तद्व्यक्तित्वरूपत्वेन तस्याप्युभयाश्रितत्वस्य वक्तुमशक्यतया भेदस्येव सम्बन्धत्वायोग्यत्वेन भेदाद्वैषम्यस्य दुरुपपादत्वात् । अतोऽभेदस्य संसर्गत्वं भाष्यानभिप्रेतमपीति दर्शयितुमाहेत्यवतरणं युक्तम् । अस्माद्भाष्यात्सम्बन्धो हि सम्बन्धिभ्यां भिन्नः, उभयाश्रित इत्युक्तेः प्रमितत्वमपि बोध्यत इति दिक् ।

बोधेभेदेनाभेदेन वेति सन्देहात्प्रवृत्तिर्दुर्लभा । तस्मादभेदो न संसर्ग इति निर्युक्तिकं निष्प्रमाणं चेत्याहुः ॥

---

१. आहुरिति ॥ परे तु अभेदस्सम्बन्ध इति न युक्तम् । भेदनियतत्वात्तस्य । षष्ठ्यापत्तेश्च । न च नीलो घट इत्यादितो जायमानबोधस्य विशिष्टबुद्धित्वात्तस्यास्सम्बन्धविषयकत्वनियमादत्राभेदस्य सम्बन्धत्वमावश्यकमिति वाच्यम् । तत्र भासमानविशेषणविशेष्यभावरूपसामान्यसम्बन्धस्यैव विशिष्टबुद्धिनियामकत्वाभ्युपगमेनादोषात् । न चान्यत्र तत्तत्सम्बन्धविशेषाणां तन्नियामकत्वदर्शनात्प्रकृतेऽपि तथैवोचितमिति वाच्यम् । तत्र तत्र तत्तत्सम्बन्धानां तन्नियामकत्वकल्पनापेक्षया सर्वत्रानुस्यूतस्यास्यैव तन्नियामकत्वकल्पनस्यैव लाघवेन युक्तत्वात् । किञ्च तत्तत्सम्बन्धानां तन्नियामकत्वे तेषां षष्ठ्यादिवाच्यत्वेन तदुपस्थाप्यानां तन्नियामकत्वमत्र त्वाकाङ्क्षालभ्यस्य तत्त्वमिति वैरूप्यापत्तिः । मम तु विशेषणविशेष्यभावस्य सर्वत्राप्याकाङ्क्षालभ्यत्वेन तस्यैव तन्नियामकत्वे वैकरूप्यं स्पष्टमेव । न च विशेषणविशेष्यभावस्य किञ्चित्सम्बन्धावच्छिन्नत्वनियमानुरोधेन अभेदस्य संसर्गत्वमावश्यकमिति वाच्यम् । तादृशनियमानङ्गीकारात् । न च सम्बन्धमन्तरा यदि विशेषणविशेष्यभावः स्यात्तदा घटः पट इत्यत्रापि स स्यादिति वाच्यम् । पदार्थतावच्छेदकसामानाधिकरण्यज्ञानस्य पदार्थद्वयसंसर्गज्ञानस्य वा तन्नियामकत्वाभ्युपगमेनादोषात् । पदार्थद्वयसंसर्गस्य षष्ठ्यादिवाच्यतायामसमर्थसूत्रादौ भाष्ये उक्तत्वेन प्रकृते तस्याप्यभावात् । न चाभेदस्य भानाभावे नीलविशिष्टो घट इति बोधे भेदेनाभेदेन वेति सन्देहात्प्रवृत्तिर्दुर्लभेति वाच्यम् । भासमानविशेषणविशेष्यभावस्य निरवच्छिन्नत्वसावच्छिन्नत्वाभ्यां बोधवैलक्षण्येन प्रवृत्तेस्सुलभत्वात् । न च विशेषणत्वादेरभानम् , अन्यथा तस्यापि किञ्चिद्विषयतया भानावश्यकत्वेन तस्यापि किञ्चिद्विषयतयेत्यनवस्थापत्तेरिति वाच्यम् । तवापि सम्बन्धस्य किञ्चित्सम्बन्धेनेत्येवमनवस्थापत्तेस्तुल्यत्वात् । अथ सम्बन्धः स्वरूपेणैव भासत इति नानवस्थेति चेन्ममापि विषयता स्वरूपेणैव भासत इति तुल्यम् । न च विषयताया बोधे भाने न मानमिति वाच्यम् । नीलत्वावच्छिन्नप्रकारतानिरूपितघटत्वावच्छिन्नविशेष्यताशालिज्ञानवानहमित्यनुव्यवसायस्यैव मानत्वात् । व्यवसायेऽभासमानस्याप्यनुव्यवसाये भाने तु द्वन्द्वत्वादेरपि भानप्रसङ्गः । अत एव राज्ञ इत्येतावन्मात्रोक्तावपि तस्य विशेषणतायाः प्रतीतेस्तस्य षष्ठ्यर्थत्वमावश्यकमिति षष्ठी शेष इति भाष्योक्त्या विशेषणतायाः षष्ठ्याद्यर्थत्वोक्तिर्मञ्जूषायां सङ्गच्छते । न हि वाच्यस्याभानमिति वक्तुं शक्यते । अत एव च समर्थसूत्रे भाष्ये जहत्स्वार्थावृत्त्युपपादनावसरे राज्ञः पुरुष इत्यादौ राजपदार्थे विद्यमानस्य विशेष्यत्वरूपार्थस्य त्याग इत्युक्तम । विशेष्यतायाश्शाब्दबुद्धावभाने तस्यागोक्तिरसङ्गता स्यात् । तस्माद्भाष्यानुभवसिद्धमेव विषयताभानम् । किञ्च विषयताया ज्ञानमात्रे भानम् । अत एव जात्याकृतिव्यक्तयस्तु पदार्थ इति न्यायसूत्रे तुशब्देन प्रधानोपसर्जनभावस्यानियमेन पदार्थत्वमिति वदता प्रज्ञापनीयधर्म-

**उपलक्षणमिति** ॥ यथा पीताम्बर इत्यादिषष्ठ्यर्थबहुव्रीहौ यन्निष्ठस्वामितानिरूपितस्वत्ववदम्बरं पीताभिन्नमिति विग्रहार्थः । पीताभिन्नाम्बरनिष्ठस्वत्वनिरूपितस्वामित्ववानिति वृत्त्यर्थः, तथा वीरपुरुषक इत्यादिसप्तम्यर्थबहुव्रीहावपि यदधिकरणकाः पुरुषा वीराभिन्ना इति विग्रहार्थः । वीराभिन्नपुरुषाधिकरणीभूतो ग्राम इति वृत्त्यर्थ इति नास्ति वर्तिपदार्थयोरभेदान्वये वैषम्यमिति भावः ॥ **प्राप्तोदकादाविति** ॥ कर्तृनिष्ठान्तस्य प्राप्तशब्दस्य

---

विशिष्टो धर्मी साध्य इति प्रस्तावे शब्दस्यानित्यत्वस्य च सिद्धत्वान्न साध्यता, अपि त्वन्यधर्मत्वेन प्रज्ञातस्यानित्यत्वस्य धर्मिणा शब्देन यो विशेषणविशेष्यभावस्स साध्य इति वदता च न्यायवार्तिककारेण शाब्दे अनुमितौ च विषयताभानं स्पष्टमेवोक्तम् । स्पष्टं चेदं मञ्जूषायां शक्तिवादे । किञ्च राज्ञः पुरुष इत्यादौ स्वस्वामिभावादेर्विभक्तिवाच्यत्वमिति वैयाकरणमते विशेषणविशेष्यभावस्यैव वाक्यशक्यतया तस्य भानं नेति वक्तुमशक्यम् । न च स्वस्वामिभावादिस्तथा । अन्यलभ्यत्वात् । तस्यैव तत्त्वे वाक्यार्थस्यापूर्वत्वसिद्धान्तभङ्गः । एवं च सर्वत्र तस्यैव तत्त्वमुचितम् । अभेदस्य संसर्गत्वे तु तस्यापि वाक्यार्थत्वकल्पनायां गौरवम् । न चाभेदः प्रथमार्थ इति वाच्यम् । अनुशासनाभावात् । नीलं घटमित्यादौ तथाप्यनिर्वाहाच्च । न चैवमपि विशेषणविशेष्यभावरूपसम्बन्धमादाय षष्ठ्यापत्तिरिति वाच्यम् । तस्य वाक्यार्थतया षष्ठीवाच्यत्वासम्भवेन तत्र तदप्रवृत्तेः । विनिगमनाविरहात्तद्वाचिका षष्ठ्येव कुतो नेति तु न शङ्क्यम् । शेषपदेन पर्युदासन्यायेन क्रियाकारकभावादेस्सम्बन्धविशेषादन्यस्य सम्बन्धविशेषस्यैव ग्रहणेन विशेषणविशेष्यभावस्य सामान्यसम्बन्धतया षष्ठ्यप्राप्तेः । अभेदस्य सम्बन्धत्वे तस्य विशेषरूपतया सा दुर्वारा । अत एव राहोः शिर इत्यादावौपाधिकभेदेनावयवावयविभावकल्पनया षष्ठीसमर्थनं भाष्यकृतस्सङ्गच्छते । अभेदस्य सम्बन्धत्वं नव्यनैयायिकानामप्यसम्मतम् । अत एव कर्मधारयोत्तरभावप्रत्ययस्य सामानाधिकरण्यवचनत्वं कृत्तद्धितसमासेभ्यः सम्बन्धाभिधानं भावप्रत्ययेनेत्यभियुक्तोक्तेरित्युक्तं तैः । अन्यथा राजपौरुष्यमित्यादौ पूर्वोत्तरपदार्थयोस्सम्बन्धस्येव अभेदस्य तत्त्वे तस्यैव तदर्थत्वमुक्तं स्यात् । न चैवमपि नीलोत्पलत्वमित्यत्र विशेषणविशेष्यभावस्य भावप्रत्ययार्थत्वं स्यादिति वाच्यम। अभियुक्तोक्तौ सम्बन्धपदस्य तद्विशेषपरत्वेनादोषात्। अन्यथा कृत्तद्धितसमासेभ्य इति स्थूलविशेषनिर्देशवैयर्थ्यात् । नीलाभिन्नो घट इति बोधस्तु स्ववासनामात्रकल्पित इति तदनुरोधेनाभेदस्य संसर्गत्वव्यवस्थापनमयुक्तम् । इतरसम्बन्धानवच्छिन्नविशेषणविशेष्यभावरूपो वा तत्र भासमानाभेदः । व्यक्त्यभेद एव तादृशविशेषणविशेष्यभावप्रतीतेः । स्फुटीकृतं चेदं इतरसम्बन्धानवच्छिन्नविशेषणविशेष्यभावरूपस्य तेन शब्देनाभिधानादिति वदता मूलकृता । एवञ्चाभेदस्य संसर्गत्वं निर्युक्तिकं निष्प्रमाणकमित्यलं तस्य तत्त्वस्थापनप्रयासेनेत्याहुः ।

वृत्तिविषये प्राप्तिमात्रपरत्वम् । तत्र स्वकर्तृकत्वसम्बन्धेनोदकस्यान्वयः । प्राप्तेश्च कर्मण्यन्यपदार्थे, वृत्तिविग्रहयोरीदृशे विषये विशेषणविशेष्यभाववैपरीत्यस्य प्रसिद्धत्वात् । ततश्चोदककर्तृकप्राप्तिकर्म ग्राम इति बोधः । तस्य प्राप्तिकर्तृरूपार्थपरत्वे तु प्राप्त्यंशे विशेष्यभूतस्य कर्तुर्वा तदन्वितस्योदकस्य वा कर्मण्यन्यपदार्थे नास्त्यन्वयसम्भव इति भावः ॥ **क्व व्यभिचार इति** ॥ प्राप्तशब्दस्य कर्तृनिष्ठप्राप्तिपरतया प्राप्तिविशेषणे कर्तर्युदकस्याभेदेनैवान्वय इत्याशयः ॥ **नामजन्यप्रतीतिविशेष्ययोरेवेति** ॥ नामजन्यप्रतीतिविषययोर्यद्यन्वयस्तर्हि विशेष्ययोरेवेति नियमाकारः । प्रकृतिप्रत्ययार्थयोरप्यन्वयदर्शनात् ॥ **अभेदेनैवेति** ॥ नामार्थयोरेवाभेदान्वय इति न नियमः, स्तोकं पचतीत्यादावभेदान्वयदर्शनात् ॥ **द्योतकतयेति** ॥ टाबादिद्योत्यस्त्रीत्वस्येव तिङ्द्योत्यार्थस्यापि विशेषणत्वेनैवान्वय इति भावः । भावप्रधानमाख्यातमिति वदतो यास्कमुनेरपि तिङां द्योतकत्व एव पक्षपात इति तात्पर्यम् ॥ **मानाभाव इति** ॥ वृत्तौ द्योतकत्वमन्यत्र वाचकत्वमित्यप्ययुक्तम् । जीविकाप्राप्त इत्यादौ कर्तृविशेष्यकबोधानुपपत्तेः ॥ **एकोपस्थितिरिति** ॥ विशेषणविशेष्यभावापन्नानेकार्थविषयकैकोपस्थितिनियामिका समुदायशक्तिरेकार्थीभाव इति तदंशे पृथगुपस्थितिविषयानेकार्थगोचरान्वयनियामिका व्युत्पत्तयः कथं प्रवर्तेरन्नित्याशयः ॥ **अपास्तमिति** ॥ एतद्व्युत्पत्तिभङ्गभयादेव नैयायिकादिभिः पूर्वपदे लक्षणाभ्युपगमाच्छाब्दिकैरेकार्थीभावरूपसमुदायशक्तिस्वीकाराच्च नास्ति तत्रैतद्व्युत्पत्तिविरोध इति भावः ॥ **घटश्चेत्यादाविति** ॥ वाचकत्वे घटसम्बन्धी समुच्चय इति बोधः । द्योतकत्वे तु समुच्चयविशिष्टो घट इति बोध इति द्रष्टव्यम् । ननु निपातद्योत्यार्थस्य समभिव्याहृतपदार्थप्रकारतया आनुभविकत्वेन भवतु निपातानां द्योतकत्वम् । भेदान्वयस्तु दुर्वार एवेति कथं व्यभिचाराभाव इत्यत आह ॥ **विशिष्टोपस्थितिरिति** ॥ एकार्थीभाववत्तत्रापि विशेषणविशेष्यभावावगाहिनी समुदायोपस्थितिरिति नास्ति पृथगुपस्थितिगोचरानेकार्थान्वयनियामकव्युत्पत्तिविषयतेति भावः ॥ **सकर्मकत्वमिति** ॥ व्यापारव्यधिकरणफलवाचकत्वं तत्त्वम् । **अदोष इति** ॥ निपातानां वाचकत्वेपीत्याशयः । एतेन चन्द्र इव मुखमित्यादौ चन्द्रप्रतियोगिकसादृश्यानुयोगि मुखमित्येवंविधबोधस्यानुभविकतया केषांचिन्निपातानां वाचकताया आवश्यकत्वेन तदंशे व्यभिचार एवेत्यपास्तम् ॥ **देवतायुक्तामिति** ॥ वैश्वदेव्या-

मिक्षेत्यादौ श्रुत्या देवतात्वसिद्धये सास्य देवतेत्यनेन विहितस्याणो देवतासम्बन्ध्यर्थकतायामेकदेशभूतदेवतारूपार्थे प्रकृत्यर्थस्याभेदान्वयो जैमिनीयतन्त्रे प्रसिद्ध इति भावः । तदाह ॥ **मीमांसकमते इति** ॥ ननु परिमाणरूपार्थे विशिष्य प्रथमानुशासनात्परिच्छेद्यपरिच्छेदकभावरूपभेदसंसर्गकबोधतात्पर्येण द्रोणो व्रीहिरित्यस्येव द्रोणो व्रीहिमानयेत्यादीनामपि साधुत्वप्रसङ्ग इत्यत आह ॥ **अनभिधानादिति** ॥ प्रयुक्तानामेव साधुत्वान्वाख्यानादिति भावः । ननु परिमाणरूपार्थे प्रथमानुशासनेनैतादृशेषु भेदान्वयस्वीकारे सर्पिः कुडबमात्रमित्यादेः कुडबपरिमाणपरिच्छिन्नं सर्पिरित्यर्थकतया धातुविहितप्रत्ययान्तभिन्नं समानाधिकरणमसमर्थवदित्यर्थकेनाधात्वभिहितं समानाधिकरणमसमर्थवदित्यनेन सामर्थ्याभावस्य वक्तुमशक्यत्वादिसुसोस्सामर्थ्ये इति षत्वापत्तिर्दुर्वारेत्यत आह ॥ **सर्पिः कुडबमात्रमित्यादि** ॥ **व्यवस्थितविभाषयेति** ॥ यद्यपि "देवत्रातो गलो ग्राह इति योगे च सद्विधिः । मिथस्ते न विभाष्यन्ते गवाक्षस्संशितव्रत" इति भाष्यकारपरिगणितासु व्यवस्थितविभाषासु नेयं दृश्यते, तथापि लक्ष्यानुसारादाश्रयितव्येति भावः । यदि तु कुडबमात्रमित्यत्र परिमाणिन्ययं मात्रच्प्रत्यय इत्युच्यते तदा सामानाधिकरण्यस्य निर्बाधतया सामर्थ्याभावस्सुवच एव । मात्रशब्दस्यावधारणार्थकस्यास्वपदविग्रहकमयूरव्यंसकादिसमासे चात्र दोष इति बोध्यम् ॥

**लिङ्गवद्विशेष्यान्वयीति** ॥ प्रवृत्तिनिमित्तानन्तर्भावेणोपस्थितस्य स्त्रीत्वादिरूपलिङ्गस्य यथा द्रव्येणान्वयस्तथा परिमाणरूपार्थस्यापीति तदर्थः । तत्रैतावान् विशेषः । लिङ्गस्य प्रकारतयाभेदेनान्वयः । परिमाणस्य त्वभेदेन विशेष्यतयेति ॥

---

१. **विशेष्यतयेति** ॥ अत्रेदं चिन्त्यम् । परिमाणस्य प्रातिपदिकवाच्यतया पृथगुपस्थित्यङ्गीकारेऽपि लिङ्गवत्प्रकारतयैवान्वय उचितः । न तु विशेष्यतया । एवञ्च सति लिङ्गवद्विशेष्यान्वयीति मूलमैकरूप्येणोपपद्यते । अन्यथा दृष्टान्तविषये विशेष्येऽन्वयीति दार्ष्टान्तिके विशेष्यतयान्वयीति विभिन्नरूपेणार्थकथने वैरूप्यं स्पष्टमेव । अतो भेदेनाभेदेनेत्येतावानेव विशेषो वर्णयितुमुचित इति ।

वस्तुतस्तु घटश्चेत्यादौ विशिष्टोपस्थितिरिति मूलोक्तरीत्या तत्र भवद्वर्णितरीत्या चैतादृशस्थलेषु विशिष्टशक्तिरेवेति अन्वय एव न सम्भवति । पृथगुपस्थित्यङ्गीकारे उद्देश्यविधेयभावेनान्वयस्यौत्सर्गिकस्य त्यागप्रसङ्गात्पृथगुपस्थितयोस्तथैवान्वय उचित इति निरूपितं धात्वर्थवादे मञ्जूषायाम् । पृथक्शक्तिकल्पनायामन्वयौपयिकसामग्रीक-

**द्वौ ब्राह्मणाविति** ।। ब्राह्मणपदोत्तरद्विवचनप्रतिपाद्यद्वित्वानुवादकत्वेन यथा द्विशब्दस्य सहप्रयोगस्तथा द्रोणादिशब्दप्रतिपाद्यपरिमाणरूपार्थानुवादकतया परिमाणशब्दस्येति भावः । इयत्ताविशेषेत्यादेः इयत्ताविशेषावच्छिन्नं यत्पलादिपरिच्छिन्नं यद्धान्यादि तत्परिच्छेदकत्वसमानाधिकरण इत्यर्थः ।। **इत्येवेति** ।। न तु व्रीह्यादिपरिच्छेद्यसमभिव्याहृतं भेदान्वयोपपादकमित्यर्थः । नन्वेवं द्रोणो व्रीहिरित्यादावनन्वयापत्तिः, तत्राह ।। **लक्षणयेति** ।। ननु सिंहो माणवक इत्यत्र सिंहनिष्ठशौर्यादिगुणसजातीयगुणवत्तामूलकसादृश्यप्रयोज्या गौणी लक्षणा, प्रकृते तु परिच्छेद्यपरिच्छेदकभावसम्बन्धप्रयुक्ताजहत्स्वार्थेति वैजात्यात्कथं दृष्टान्तदार्ष्टान्तिकभाव इत्यत आह ।। **शक्यतावच्छेदकारोप एवेति** ।। शक्यसम्बन्धस्तु शक्यतावच्छेदकारोपरूपलक्षणानियामकत्वाल्लक्षणेति व्यवह्रियते । सादृश्यहेतुकश्च शक्यतावच्छेदकारोपस्सादृश्यनिर्वाहकगुणारोपमूलकत्वाद्गौण इत्युच्यते न तु शक्यतावच्छेदकारोपे कश्चन विशेष इति नास्ति वैलक्षण्यमतो युक्त एवायं दृष्टान्तदार्ष्टान्तिकभाव इत्याशयः ।। **प्रातिपदिकार्थ इत्यस्येति** ।। यथा न्यास इत्यादिः ।। अलिङ्गा असत्त्वभूतार्थबोधका उच्चैरादयः । लिङ्गप्रवृत्तिनिमित्तका स्त्रीपुमानित्यादयः ।। **उपलक्षणमिति** ।। तेन पलं घृतमित्याद्युन्मानविषयेप्येषैव गतिरिति भावः । यत्तु प्रमाणस्यापीदमुपलक्षणं तेन हस्तः पट इत्यादौ प्रमाणे प्रथमासिद्ध्याऽभेदान्वयोपपत्तिरिति ।। तदसत् । तथाविधेषु प्रमाणार्थकस्य मात्रचः प्रमाणे ल इति वार्तिकेन लोपे परिच्छेद्यवाचकहस्तादिशब्देभ्यः प्रातिपदिकार्थे प्रथमामाश्रित्याभेदान्वयस्य सर्वानुभवसिद्धत्वात् ।।

**तत्सर्वमिति** ।। अर्थे लिङ्गे च प्रथमेति न्यासे प्रत्यासत्त्या स्वादिविधानावध्युच्चारणव्यापकोपस्थितिविषयस्सर्वोऽप्यर्थो विनिगमनाविरहाद्गृह्यते । तेन द्रोणादिप्रातिपदिकविषये परिमाणरूपार्थस्य मृडानी हिमानीत्यादिलिङ्गबोधकप्रत्ययविशिष्टांशे दाम्पत्यमहत्त्वादिरूपार्थस्य च नियतैवोपस्थितिरित्यर्थशब्देन ग्रहणात्प्रथमासिद्धिः । लिङ्गन्तु न तादृशमतस्तस्य पृथगुक्तिः ।। **तटस्तटमिति** ।।

---

ल्पनायां गौरवाच्च । अतो मूले विशेष्यान्वयीत्यस्य लिङ्गं यथा विशेष्ये विशेषणतयोपस्थितिविषयः तद्वत्परिमाणमपीत्याशयो वर्णनीयः । एवं चोभयत्र विशिष्टोपस्थितिरित्येव मूलतात्पर्यम् । अत्र युक्तमुत्पश्यन्तु सुधियः ।

तटीत्यादितो लिङ्गस्य स्त्रीप्रत्ययद्योत्यस्य नियमेनोपस्थितेर्न तल्लिङ्गाधिक्योदाहरणम् । तदाह ॥ **अकारान्तेति** ॥ **प्रवृत्तिनिमित्ततदाश्रययोरिति** ॥ यथान्यासे लिङ्गग्रहणाद्भगवतस्सूत्रकारस्य द्विकपक्ष एव पक्षपात इत्याशयः ॥ **असङ्गतिस्स्पष्टैवेति** ॥ एवञ्च मूलोक्तद्रोणो व्रीहिरित्यादौ भेदान्वयनिरूपणं सूत्रकाराभिप्रायवर्णनमेव । न तु स्वाभिप्रायाविष्करणमिति भावः ॥ **स्वरूपकथनमिति** ॥ प्रातिपदिकसंस्कारवेलायामन्वयानुपपत्तिरूपलक्षणाबीजपरिस्फूर्त्यभावाल्लक्षणाया अनौचित्येन शक्यार्थमादाय विभक्तेर्निर्बाधत्वाल्लाक्षणिकार्थस्य प्रथमाविभक्तिप्रवृत्तिप्रयोजकत्वाभावेन लक्ष्यस्वरूपपरिज्ञानमात्रप्रयोजनकमेवात्रैतन्निरूपणमिति भावः ॥ नन्वन्वयानुपपत्तिवत्तात्पर्यानुपपत्तिरपि लक्षणाबीजमेव । यथा काकेभ्यो दधि रक्ष्यतामित्यादावुपघातुकजन्तुमात्रलक्षणायां दध्युपघाताभावतात्पर्यानुपपत्तिः । ततश्च यत्र रघवो भवन्ति लघव इत्यादौ प्रातिपदिकसंस्कारवेलायामेव तात्पर्यानुपपत्तिप्रयुक्ता तदपत्यादौ लक्षणा, तत्र लक्ष्यार्थस्यापि प्रथमाविभक्तिप्रयोजकत्वमावश्यकम् । अन्यथा बहुवचनानुपपत्तेः । तस्मात्कथं लक्षणायाः प्रकृते स्वरूपकथनमात्रप्रयोजनकत्वमिति चेन्न । सकलविधलक्षणास्वरूपनिरूपणस्य स्वरूपपरिज्ञानमात्रप्रयोजनकत्वमित्याशयात् । तदाह ॥ **स्वार्थे इत्यादि** ॥ शक्यार्थे विभक्त्यादिना संस्कृतस्य परिनिष्ठितस्य तथाविधपदान्तरसमभिव्याहारे बोद्धृभिरन्वयानुपपत्तिसमुन्नीतवक्तृतात्पर्यविशेषानुरोधिनी लक्षणावृत्तिरभ्युपगम्यते । वक्तुरपि तथाविधेषु स्वार्थे संस्कृतस्य प्रयोगकाल एव समभिव्याहारविशेषानुसन्धानप्रयुक्तान्वयानुपपत्तिनिमित्तकलक्षणावगतिरित्याशयः ।

केचित्तु[1] तात्पर्यानुपपत्तिप्रयुक्तलक्षणावगतिरपि वक्तृबोद्धृसाधारण्येन प्रयोगकाल एव, न तु प्रातिपदिकसंस्कारवेलायाम् । यत्किञ्चित्समभिव्याहारानुसन्धानेन

---

१. **केचित्त्विति** ॥ ननु मूलोक्तस्य लक्षणा चेति प्रतीकस्थस्य ‘ इदं स्वरूपकथनमितिग्रन्थस्य सकलविधलक्षणास्वरूपनिरूपणस्य स्वरूपपरिज्ञानमात्रप्रयोजनकत्वमित्याशयकत्वे रघव इत्याद्यर्थं लक्षणास्वरूपप्रदर्शनस्य प्रकृतोपयोगित्वेन स्वरूपकथनत्वोक्तिरसङ्गता स्यात् । गौणीप्रसङ्गस्य स्वरूपकथनतात्पर्यकत्वे गौणी त्विति प्रतीकमुपादाय तद्वक्तुमुचितम् । न तु लक्षणा चेति प्रतीकमुपादाय । ततश्चाशयान्तरवर्णनमेव युक्तमित्याशयेनाह ॥ केचित्त्वित्यादिना ॥

संस्कारप्रवृत्तौ विरोधाभावात् । ततश्च शक्यार्थे संस्कृतस्य समभिव्याहारविशेषानुसन्धानेन प्रयोगचिकीर्षायां तात्पर्यविरोधाल्लक्षणाप्रसक्त्या नास्ति काकेभ्य इत्यादावपि प्रातिपदिकसंस्कारवेलायां लक्षणावसरः । गुरवस्समागता इत्यादौ यथा योग्यगुणगतबहुत्वारोपेण बहुवचनोपपत्तिस्तथा तदपत्यगतबहुत्वारोपाद्रघव इत्यादावपि तदुपपत्तिरतो नास्ति प्रातिपदिकसंस्कारवेलायां कस्यापि लक्षणाप्रसक्तिरिति क्वचिदपि न लक्ष्यार्थस्य प्रथमाप्रवृत्तिप्रयोजकत्वमित्याहुः[1] ॥

**मीमांसकरीत्येति** ॥ तन्मते हि सिंहो माणवक इत्यादौ गुणगतसादृश्यात्सिंहादिपदजन्यप्रतीतिविषयता माणवकादेः । सेयं न शक्तिस्तस्यास्तत्तत्पदगतवाचकतारूपत्वात् । नापि लक्षणा, तस्यास्तत्तल्लक्ष्यगतशक्यसम्बन्धविशेषरूपत्वात् । तस्माद्वृत्त्यन्तरमेव गौणीति व्यवस्थापयन्ति ॥

शाब्दिकास्तु शक्यतावच्छेदकारोप एव लक्षणा, सम्बन्धस्तु तन्नियामकः । न ह्यारोपमन्तरा तद्धर्मप्रकारको लक्ष्यविशेष्यकश्च सर्वजनसाधारणो बोध उपपद्यते । न वा गङ्गायां घोष इत्यादौ भगीरथरथखातावच्छिन्नप्रवाहत्वप्रकारकतीरविशेष्यकबोधमन्तरेण शैत्यपावनत्वादिप्रतीतिराञ्जस्येन परिस्फुरति ॥ अत एव गङ्गायां मीनघोषावित्यादावारोपितानारोपितप्रवाहत्वप्रकारकैकोपस्थितिविशेष्ययोः प्रवाहतीरयोः साहित्यावच्छेदेन मीनघोषात्मकपदार्थान्तरान्वयोपपत्त्या द्वन्द्वसाधुत्वेन प्रयोगनिर्वाहः । अन्यथा शक्त्या शक्यसम्बन्धरूपलक्षणया च पर्यायेण पृथगुपस्थितयोरावृत्तिमन्तरेण पदार्थान्तरान्वयायोगाद्द्वन्द्वोपपादकसाहित्याभावेन साधुतया प्रचुरव्यवहारविषयस्य तादृशप्रयोगस्यासाङ्गत्यमेव स्यात् । अतस्सकललक्ष्यसाधारणश्शक्यतावच्छेदकारोप इति नास्ति गौण्या लक्षणातो वैलक्षण्यम् । किन्तु गुणकृतसादृश्यमूलकस्य तस्य गौणत्वाद्गौणीति व्यवहार इत्याहुः ॥

---

१. आहुरिति ॥ नन्वेवमपि मृडानीत्यादिनित्यलाक्षणिकानां प्रातिपदिकसंस्कारवेलायामेव लक्षणोपयोग इति कथं तत्स्वरूपकथनमिति चेन्न । प्रसिद्धान्यशक्यार्थकस्य तदन्यार्थे तद्विशेषार्थे वा यत्र प्रयोगस्तत्रैव लक्षणाव्यवहारेण प्रकृतस्यातथात्वेन लक्षणाया अभावेन शक्तेरेवाङ्गीकारात् । अत एव भवानीप्रभृतीनां कोशेषु गणनम् । न हि लाक्षणिकानां कोशेषु गणनं दृष्टमतो न काप्यनुपपत्तिरिति बोध्यम् ।

ननु प्रकृतसूत्रगतप्रातिपदिकग्रहणस्योक्तरीत्या प्रत्याख्याने भाष्यविरोधो दुर्वारः । तथाहि । प्रातिपदिकाधिकारेण स्वौजसित्यादिना विहितानां प्रत्ययाना-मर्थनिर्णायकत्वादस्य प्रकरणस्यार्थे प्रथमेत्युक्तावपि यतो विहितास्तदर्थ इत्यस्य सौलभ्यात्प्रातिपदिकग्रहणमन्तरापि प्रातिपदिकार्थ इत्येव लभ्यत इति व्यर्थं प्रातिपदिकग्रहणमित्याशङ्क्य संख्याविध्येकवाक्यतया प्रातिपदिकार्थगतैकत्वादा-वेकवचनमित्याद्यर्थे लिङ्गसंख्याविनिर्मुक्तासत्त्वभूतार्थबोधकेभ्योऽव्ययेभ्यस्तदनुत्पत्त्या प्रातिपदिकग्रहणमावृत्त्या तथाविधेभ्योप्यव्ययेभ्यस्सुबुत्पत्त्यर्थमिति समर्थितं भाष्ये । ततश्च प्रत्याख्याने प्रयोजनासिद्धिर्भाष्यविरोधश्च स्पष्ट एवेत्यत आह ॥ **एकवाक्यतयेत्यादि** ॥ **प्रकारान्तरेणेति** ॥ एकवचनम् । द्विबह्वोर्द्विवचन-बहुवचने । इति न्यासेनैकग्रहणं प्रत्याख्याय संख्यानपेक्षस्यौत्सर्गिकस्यैकवचनस्य विधानेनेत्यर्थः ॥ **प्रत्याख्यानमिति** ॥ एवञ्चैतत्प्रत्याख्यानं भाष्यकारानुगृहीत-मेवेति नास्ति विरोध इत्याशयः ।

**प्रातिपदिकार्थ एवेति** ॥ नियमपक्षे प्रातिपदिकार्थेतरनिरूपितवाचक-त्वाभाववती प्रातिपदिकार्थनिरूपितवाचकत्ववती प्रथमेति प्रत्ययनियमे कर्मादिषु प्रथमाया अप्रसिद्ध्यर्थं मात्रग्रहणं, निरुक्तार्थसाधनाय सम्बोधने चेति सूत्रं च मास्त्वित्याशङ्काभिप्रायः ॥ **कर्मत्वाभावेत्यादि** ॥ कर्मत्वबोधाभावकालिकबोध-विषयस्य पर्यायेण बुद्ध्यमानस्यैव कारकान्तरस्य व्यावृत्तिरित्यर्थः ॥ **गां दोग्धीति** ॥ नन्विदमयुक्तम् । अकथितं चेत्यनुशासनेन ह्यपादानत्वादिरूपकारकधर्मविशेषै-रविवक्षितस्यैव दुह्यादिकारकस्य कर्मत्वं बोध्यते । ततश्चापादानत्वादिसामाना-धिकरण्येन गवादिषु कर्मत्वप्रतीतेर्दुर्लभतया निरुक्तनियमे प्रयोजनाभावात् । न चापादानत्वादीनां प्रकृत्यर्थनिरूपितप्राधान्याविवक्षायां कर्मत्वमित्यकथितं चेत्यनु-शासनतात्पर्यम् । ततश्चापादानत्वशक्तिमद्गवीनिष्ठकर्मतानिरूपकः पयोनिष्ठकर्मता-निरूपकश्च यो विभागस्तदनुकूलो व्यापार इत्यादि तदर्थ इति सम्भवत्येव सामानाधिकरण्यमिति वाच्यम् । तादृशार्थस्यानुभवविरुद्धत्वात् । द्योतकतापक्षे सर्वासामेव कारकशक्तीनां सुब्विभक्तिद्योत्यानां प्रकृत्यर्थं प्रति प्रकारतयैव भान-नैयत्यात्तादृशानुशासनस्योक्तरीत्या वाक्यार्थकल्पनायोगेन पक्षान्तरेपि तत्पक्षैक-रूप्यायापादानत्वादिभिरविवक्षितं कारकं कर्मेत्यर्थस्यैव न्याय्यत्वाच्चेति चेत्तर्हि

गतिबुद्धीति सूत्रबोधितकर्मत्वांशस्य कर्तृत्वोपजीवकतया तद्विषये ग्रामं गमयति देवदत्तमित्यादौ कर्मत्वसामानाधिकरण्येन प्रतीयमानस्य कर्तृत्वस्याक्षान् दीव्यतीत्यादौ दिवः कर्म चेति सूत्रबोधितकर्मत्वसामानाधिकरण्येन प्रतीयमानस्य करणत्वस्य च नियमनिवर्त्यत्वाभावस्तत्फलमित्याहुः[1] ॥

**सामर्थ्यादिति** ॥ स्वौजसित्यनेन सामान्यतो विहितानां स्वादीनां नियमार्थेऽत्र प्रकरणे कर्मणि द्वितीयेत्यादिवदुपात्तार्थाभावसमानाधिकरणार्थान्तरबोधकत्वाभावरूपनियमसम्पादकत्वानुपपत्तौ प्रातिपदिकार्थे प्रथमेत्यनुशासनं व्यर्थमेव स्यात् । शास्त्रवैयर्थ्यं च भाष्यकारैरसकृन्निराकृतमत उपात्तार्थसमानाधिकरणार्थान्तरनिवर्तकत्वरूपनियमसम्भवाद्यर्थं मात्रग्रहणमित्याशयः ॥ **फलत्वादिति** ॥ सुतरां वैयर्थ्ये तन्मूलकत्वेनोक्तार्थो लभ्येत । प्रकृते च प्रातिपदिकार्थ एव प्रथमा, न तु तदभाव इत्यनर्थकाव्ययेभ्यो विभक्तिनिवर्तकानिष्टप्रत्ययनियमसम्पा-

---

१. आहुरिति ॥ परे तु कारकशक्तिः शक्तिमदभेदेन भासते । सति गमके क्वचिद्भेदेनापि । गमकं च द्वितीयादिवाच्यसंसर्गघटकतया भानमेव । सम्बन्धस्य सम्बन्धिभिन्नत्वनियमात् । यत्राभेदेन भानं तत्र तस्या अनुद्भूतत्वम् । यत्र भेदेन तत्रोद्भूतत्वमिति निष्कर्षः । स्पष्टं चेदं मञ्जूषायाम् । गमयति कृष्णमित्यत्र कर्तृत्वस्य अक्षैर्दीव्यतीत्यत्र कर्मत्वस्य चानुद्भूततयैव भानम् । तस्य विभक्तिवाच्यकोटावप्रवेशात् । दिवः कर्म चेति कर्मसंज्ञा तु न द्वितीयाप्रयोजिका । परया करणतृतीयया बाधात् । एतद्विषये अक्षान्दीव्यतीत्यसाध्वेव । अक्षशब्दस्याक्षजेयधनपरत्वे तु धनस्य साधकतमत्वाभावात्करणसंज्ञाप्रसक्त्यभावेन साध्वेव । स्पष्टं चेदं मूल एवाग्रे । किञ्च फलाश्रयत्वसमानाधिकरणकर्मत्वविवक्षायां तत्साध्विति शेखरे स्पष्टम् । न चैवं कर्मसंज्ञाविधानं व्यर्थमिति वाच्यम् । धातोस्सकर्मकत्वसम्पादनेन कृतार्थत्वात् । अत एव दीव्यन्तेऽक्षा इत्यत्र कर्मणि लकारः, अक्षैर्देव्यते इत्यत्र अणावकर्मकादिति परस्मैपदाभावश्च सिद्धः । किञ्चाक्षाणां देवितेत्यत्र तृतीयातः परत्वात्कर्मणि षष्ठ्यपि फलम् । न च दीव्यन्तेऽक्षा इत्यत्र करणत्वस्यानुक्तत्वात्तृतीयापत्तिरिति वाच्यम् । एकस्याः शक्तेरभिधाने तत्समानाधिकरणशक्त्यन्तरस्याभिहितवद्भानात् । अत एव गौर्दुह्यते पय इत्यत्र न पञ्चमी । स्पष्टं चेदं शेखरादौ । न च तत्रापादानत्वस्याविवक्षया न भानमिति वाच्यम् । तथासति गां दोग्धीत्यत्रापादानत्वस्याप्राप्त्या अपादानमुत्तराणि कारकाणि बाधन्ते परत्वादित्याकडारसूत्रभाष्यासङ्गतेः । अविवक्षितत्वं चानुद्भूतत्वमिति तदाशयः । एवञ्च गमयति कृष्णमक्षैर्दीव्यतीत्यत्र कर्तृत्वकर्मत्वाभ्यामत्रापादानत्वस्य न वैलक्षण्यमिति तद्वदस्यापि नियमाव्यावर्त्यत्वरूपफलत्वमक्षतमेव । तस्मात्तत्र स्ववासनामात्रेण वैलक्षण्यं परिकल्प्य मूलस्यायुक्तत्वप्रतिपादनमयुक्तमेवेति सुधियो विभावयन्त्वित्याहुः ।

दनेन कृतार्थस्य तस्योक्तार्थसम्पादकत्वानौचित्यादभीष्टसिद्ध्यर्थमावश्यकं मात्रग्रहणमिति निष्कर्षः । ननु सत्यपि मात्रग्रहणे कथमभीष्टसिद्धिरत आह ॥ **तत्सत्त्वे इत्यादि** ॥ प्रातिपदिकार्थसमभिव्याहृतमात्रग्रहणस्य कारकव्यावर्तकतया संसर्गवद्विप्रयोगस्यापि विशेषावगतिहेतुत्वात्तत्सम्बन्धयोग्यार्थकप्रातिपदिकाच्चेत्तथाविध - प्रातिपदिकार्थ एवेत्येवंविधनियमपर्यवसानादसत्त्वभूतार्थकानामनर्थकानां चाव्ययरूपप्रातिपदिकानां नियम्यकोटावनन्तर्भूततया तेभ्यो विभक्तिप्रवृत्तेर्निर्बाधत्वादभीष्टसिद्धिरिति परमार्थः । ननु मात्रपदेन प्रातिपदिकार्थादधिकतया भासमानकारकवत्संख्याया अपि प्रथमाविभक्तिबोध्यत्वानुपपत्तौ घटोऽस्तीत्यादौ सार्वजनीनस्संख्यानुभवो विरुध्येतेत्यत आह ॥ **संख्याधिक्ये इति** ॥ **एकवाक्यत्वादिति** ॥ अर्थवत्प्रातिपदिकात्प्रथमैकवचनं चेदेकत्वोपहितप्रातिपदिकार्थ एव, न तु तत्राधिक्येन भासमानकर्मादाविति तदेकवाक्यता बोध्या । ननूक्तरीत्या प्रत्ययनियमप्रसक्तस्यानिष्टस्य वारणार्थमेव यदि मात्रग्रहणं तर्हि प्रातिपदिकार्थे प्रथमैवेत्येवमर्थनियमे कर्मणि द्वितीयैवेत्यादिनियमवशात्कारकाधिक्ये प्रथमाया अप्रवृत्तेरव्ययेभ्यो यथेष्टं विभक्तिप्रवृत्तेश्च सर्वनिर्वाहाद्यर्थमेव मात्रग्रहणम् । अन्यदपि तज्जातीयं व्यर्थमेवेत्यत आह ॥ **वार्त्तिककृतेति** ॥ **अर्थनियममाश्रित्येति** ॥ अर्थविशेषानुपादानेन विहितानां स्वादीनामर्थप्रत्यायकत्वरूपप्रत्ययत्वान्यथानुपपत्तिवशादाकाङ्क्षितस्यार्थस्यैव नियन्तुमौचित्यादिति भावः । युक्तं चैतत् । कर्मणि द्वितीयेत्यादौ प्रत्ययनियमे प्रवृत्तिनिमित्ततदाश्रयात्मकप्रातिपदिकार्थव्यतिरेकेण कर्मत्वादिरूपकारकशक्तेर्भानासम्भवात्प्रातिपदिकार्थादाधिक्येन भासमाने कर्मण्येव द्वितीयेत्येवं रीत्या नियमपरिकल्पनायां तदाधिक्येन भासमाने पुंस्त्वादिरूपे लिङ्गे द्वितीयाद्युत्पत्तेरयोगात्पशुना यजेत पशुमालभेतेत्यादिविधिषु पुंस्त्वविशिष्टपशुव्यक्तेरेव यागाङ्गत्वसम्पत्तये सजातीयकारकान्तरव्यवच्छेदक एवायं नियमो न तु विजातीयलिङ्गव्यवच्छेदक इति कल्पनायां क्लेशः । तथा प्रातिपदिकार्थसूत्रेण च मात्रशब्दबलात्प्रातिपदिकविशेषविषयकविजातीयनियमकल्पनेनाताद्दशेभ्योऽव्ययेभ्यस्सु - बुत्पत्तिसमर्थने क्लेशः । सम्बोधने चेति सूत्रस्य मात्रग्रहणस्य च कर्तव्यतायां गौरवं चेत्येवमनर्थभूयिष्ठत्वात्प्रत्ययनियमो न युक्त इति वदन्ति ॥

**धर्मविशिष्ट इति** ॥ सत्तात्वेन सत्तायाः प्रातिपदिकार्थत्वाभावप्रयुक्तानु-

पपत्त्या प्रवृत्तस्य सत्ताश्रयत्वप्रकारकप्रतीतिविषयतारूपविवरणस्य सत्त्वासत्त्वसाधारणतया सत्त्वव्यावृत्तये प्रतिपादितस्य न जात्यादिरूप इति प्रकृतसूत्रगृहीतनिष्कर्षस्य विशिष्टव्युदासपरत्वमेव युक्तमिति भावः। ननूच्चैरादीनां शब्दानां सन्नित्याकारकप्रतीतिजनकत्वाभावेपि तादृशप्रतीतिविषयार्थबोधकत्वं दुर्वारमुच्चैरस्तीत्यादिसामानाधिकरण्यानुरोधादित्याशयेन शङ्कते ॥ **नन्वित्यादि** ॥ **तद्विरोध इति** ॥ उच्चैरादीनामसत्त्वार्थकत्वेनाभिमतानामस्त्यादिना सन्नित्यनेन वा सामानाधिकरण्ये संख्याकारकसम्बन्धस्यावर्जनीयतया स्वरूपहानिरेव स्यादिति भावः ॥ **कृष्णत्वादेरिति** ॥ लिङ्गस्याश्रयाविनाभूतत्वाल्लिङ्गांशे द्वन्द्वघटकतया मात्रपदसम्बन्धेपि प्रातिपदिकार्थादाधिक्येन यत्र लिङ्गमेव भासते तत्र प्रथमेत्यर्थे प्रातिपदिकार्थत्वेन सत्ताश्रयस्य कृष्णादेरेव ग्रहीतव्यतया कृष्णत्वादेराधिक्यान्न प्रथमायाः प्रवृत्तिरित्याशयः। ननु लिङ्गाविनाभूतस्य तदाश्रयद्रव्यस्य भानमन्तरेण लिङ्गस्य प्रतीत्ययोगात्प्रातिपदिकार्थद्रव्यभानसहकृतमेव तद्भानं लिङ्गांशोदाहरणे इत्यवश्यमभ्युपेयम्। तत्र द्रव्यभानं च यत्किञ्चिद्धर्मपुरस्कारेणैव, जात्यखण्डोपाध्यतिरिक्तपदार्थानां स्वरूपेण प्रतीतेः कुत्राप्यदृष्टत्वात्। एवञ्च प्रकारीभूततत्तद्धर्मस्याधिकस्य भानेन प्रथमाया अप्रवृत्तौ व्यर्थमेव लिङ्गग्रहणं स्यादतस्सामर्थ्यादेव तदाधिक्ये प्रथमायाः प्रवृत्तिरिति कथमव्याप्तिरिति चेन्न। लिङ्गप्रवृत्तिनिमित्तकेषु स्त्रीपुमानित्यादिषु प्रथमासम्पादनेन लिङ्गग्रहणस्य कृतार्थत्वादुपदर्शितविषये प्रथमाप्रवृत्तिसम्पादकसामर्थ्यस्य दुर्वचत्वात् ॥

**विशेष्यतानिरूपितत्वादिति** ॥ प्रकारतापन्नस्य प्रवृत्तिनिमित्तस्य शब्दतः प्रतीतिः। प्रकारता च विशेष्यतानिरूपितैव। ततश्च विशेष्यवाचकतामन्तरेण प्रवृत्तिनिमित्तवाचकत्वमसम्भवि। यदि त्वाकृत्यधिकरणोक्तदिशा प्रकारत्वानुपहिता प्रवृत्तिनिमित्तत्वेनाभिमता जातिरेव प्रातिपदिकानां शक्तिगम्योर्थः। व्यक्तेर्भानं चाक्षेपादेवेति जैमिनीयानां मतमुपादीयते तर्हि गामानय गामालभेतेत्यादौ समभिव्याहृतक्रियाकर्मत्वादेराकृतौ बाधितस्याक्षिप्यमाणव्यक्तावन्वयो दुर्घटः। किं च गोत्वन्नित्यमित्यादिवद्गौर्नित्येत्याद्यापद्येत। यदि च व्यक्तिरेव प्रातिपदिकानां वाच्योर्थ इति व्याडेर्मतमाश्रीयते तर्हि व्यक्तीनामानन्त्यात्सर्वत्र शक्तिग्रहोऽसम्भवग्रस्तः। एकत्र शक्तिग्रहादपरत्र बोध इत्यभ्युपगमे च गोपदा-

दर्थबोधप्रसङ्गः। किञ्च शब्दानां सर्वेषां व्यक्तावेव शक्तिस्वीकारे तद्विषयकशाब्दबुद्धित्वावच्छिन्नं प्रति तद्विषयकशक्तिग्रहस्य कारणतया शक्तिग्रहाविषयपदार्थगोचरबोधानुपपत्त्या गौश्शुक्लश्चल इत्यादेस्सहप्रयोगानुपपत्तिः। तस्मात्प्रवृत्तिनिमित्ततदाश्रयात्मकमुभयं प्रातिपदिकार्थः। प्रवृत्तिनिमित्तं च जातिर्गुणः क्रिया संज्ञा चेत्यन्यत्। चतुष्टयी शब्दानां प्रवृत्तिरिति सिद्धान्तः। अतो न काप्यनुपपत्तिरिति निष्कर्षः॥

**गौणत्वाभावाच्चेति**॥ परिभाषायां गौणपदेन गुणारोपमूलकयोस्सदृशलाक्षणिकाप्रसिद्धयोरेव ग्रहणस्य स्वारसिकत्वादन्यादृशानां लाक्षणिकानां तद्विषयत्वाभाव इत्याशयः। सदृशलाक्षणिकाप्रसिद्धयोस्तु सत्यामपि गौणतायामगौर्गौस्समपद्यतेत्यादिभाष्यबलान्न्यायस्य पदकार्यविषयत्वान्न ततो विभक्त्युत्पत्तेर्विरोध इत्यलम्॥

**वाक्यलक्षणमिति**॥ अत्राख्यातपदेन क्रियाप्रधानं सर्वं परामृश्यते। न तु तिङन्तमात्रम्। तेन होतव्यं दीक्षितस्य गृहा३इ, न होतव्यमित्यादेर्भावकृत्यप्रत्ययान्तस्यापि सविशेषणस्य वाक्यतया वाक्यस्य टेरित्यधिकारविहितो विचार्यमाणानामिति प्लुतो निर्बाधः॥ **अस्येति**॥ विभक्त्यर्थसम्बोधनस्येत्यर्थः। अयं भावः। सम्बोधनं सम्यक् ज्ञापनम्। सम्पूर्वाद्बुध्यतेर्ण्यन्ताद्भावे ल्युट्। ज्ञापने सम्यक्त्वं चाभिमुखीकरणपूर्वकत्वम्। एवञ्चाभिमुखीकरणपूर्वकोऽज्ञातार्थविषयकज्ञानानुकूलव्यापारानुकूलव्यापारस्सम्बोधनमिति लभ्यते। तत्फलं प्रवृत्तिनिवृत्ती। तेन सम्बोधनविभक्तेरनुवाद्यविषयतया कुमारावस्थायां राजा भव युध्यस्वेति राजावस्थायां राजन् युध्यस्वेति प्रयोगो न तु कदापि वैपरीत्येन। प्रयोजकव्यापारस्य शब्दप्रयोगात्मकस्यान्यलभ्यत्वान्न तस्य विभक्तिवाच्यता। किन्त्वभिमुखीभवनपूर्वकाज्ञातार्थविषयकज्ञानानुकूलव्यापारस्य सम्बोध्यधर्मस्यैव विभक्तिवाच्यता। तस्य ज्ञानद्वारकज्ञेयाकाङ्क्षामुपादाय व्रजानि देवदत्तेत्यादिप्रयोगीयनिघातनिष्पादकसमर्थसूत्रभाष्यकारोपपादितलक्षणलक्षितवाक्यत्वोपपत्तये हरिकारिकाबलेन ज्ञाप्यमानक्रियायां विशेषणत्वमिति॥ **न स्यादिति**॥ तस्यैकवाक्यतैकसाध्यत्वादित्याशयः। एतेन सम्बोधनमनन्तरवाक्यजन्यबोधाश्रयत्वेनेच्छा। तस्याश्च प्रकृत्यर्थे

प्रकारत्वेनान्वयः । तादृशेच्छाविषयत्वमेव सम्बोध्यत्वम् । असत्यपि तदाश्रयत्वे तद्विषयकेच्छाया निर्बाधत्वात्तद्बोधासमर्थेऽपि तत्प्रयोगो मा गर्वमुद्वह बिडालमहीपतीनामित्यादौ, ततश्च राम मां पाहीत्यादौ त्वंपदाध्याहारस्यावर्जनीयतया सम्बोध्यो रामः प्रार्थनाविषयमन्निष्ठसुखोत्पत्तिदुःखनिवृत्त्यन्यतरानुकूलकृत्याश्रयस्त्वमित्याकारको वाक्यभेदेन बोधः । तत्र युष्मदस्सम्बोध्यतावच्छेदकत्वोपलक्षिततत्तद्धर्मावच्छिन्नबोधकतया रामचन्द्रे रक्षणकर्तृत्वमर्थतस्सिद्धम् । अतो नात्रैकवाक्यताया अवसरो निराकाङ्क्षता चेति वैशेषिकोक्तमपास्तम् । व्रजानि देवदत्तेत्यादावेकवाक्यतामन्तरेण निघातप्रवृत्त्युपायाभावादिति दिक् । नन्वेकवाक्यतासमर्थनाय तादृशसम्बोधनरूपार्थस्य व्यपेक्षाविरहितसमभिव्याहृतक्रियासम्बन्धो न युक्तः । किन्तु प्रकारान्तरेणैव तदुपपत्तिराश्रयणीयेत्याशयेनाह ॥ **वस्तुत इति** ॥ **नैतस्य क्रियान्वयसाधकमिति** ॥ ननु नायमेकवाक्यत्वान्यथानुपपत्त्या समभिव्याहृतक्रियासम्बन्धः । किन्तु चिरन्तनानुभवस्यान्यथा कर्तुमशक्यत्वादिति युक्त एवायमन्वय इत्यत आह ॥ **अनुभवश्चेदिति** ॥

**दिगिति** ॥ दिगर्थस्तु, इदन्तु न युक्तम् । सिद्धस्याभिमुखीभावमात्रं सम्बोधनं विदुः । प्राप्ताभिमुख्यो ह्यर्थात्मा क्रियासु विनियुज्यते, सम्बोधनं न वाक्यार्थ इति वृद्धेभ्य आगम इति सिद्धान्तभूतहरिग्रन्थविरोधात् । तस्मादभिमुखीभवनानुकूलव्यापार एव सम्बोधनम् । तत्र शब्दप्रयोगात्मकमन्यलभ्यं व्यापारमुपेक्ष्याभिमुखीभवनमेव विभक्त्यर्थः । तस्य च प्रकृत्यर्थे प्रकारत्वेनान्वयः । संबोध्यस्य च क्रियासु विनियुज्यत इत्युक्तेरुद्देश्यत्वेन विधेयभूतक्रियायामन्वयः । ततश्च राम मां पाहीत्यादावभिमुखीभवद्रामोद्देश्यकं मत्कर्मकं प्राप्तकालं रक्षणमित्यादिको बोधः । प्राप्तकाले चायं लोट् । न चैवं व्रजानि देवदत्तेत्यत्र सम्बोध्योद्देश्यकविधानविषयत्वाभावेन व्रजिक्रियाया-

---

१. **नैतस्य क्रियान्वयसाधकमितीति** ॥ इत्यपास्तमित्यनन्तरं "एवं चैतन्नैतस्य क्रियान्वयसाधकम् । अनुभवश्चेत्प्राचां तथास्ति तर्ह्यस्त्विति दि"गिति शब्दरत्नपाठः क्वचिद्दृश्यते । तदभिप्रायेणेदम् ।

२. वस्तुत इत्यादिना संक्षिप्तमुपाध्यायसिद्धान्तं विवृणोति ॥ दिगर्थस्त्वित्यादिना ॥

मन्वयायोगान्निघातसम्पादकैकवाक्यत्वानुपपत्तिरिति वाच्यम् । जानीहीत्यध्याहारेण तदर्थे व्रजनस्य कर्मत्वेन सम्बोध्यस्योद्देश्यत्वेन च सम्बन्धादभिमुखीभवद्देवदत्तोद्देश्यको मत्कर्तृकव्रजनविषयकज्ञानानुकूलः प्राप्तकालो व्यापार इति बोधेन तदुपपत्तेः । न चैवं ब्रूहि ब्रूहीत्यादेर्द्विरुक्तिविषयस्य विशेषणान्तरविशिष्टत्वाभावेनाभीष्टस्य वाक्यत्वस्य प्रागुपदर्शितलक्षणानधीनत्वात्तिङतिङ इति सूत्रस्थातिङ्ग्रहणाकरणलाघवानुरोधाच्चैकतिङ्वाक्यमिति कात्यायनपरिभाषितसिद्धान्तभूतलक्षणविरुद्धत्वाज्जानीहीत्यध्याहारे कथमेकवाक्यतेति वाच्यम् । तस्य श्रूयमाणैकतिङन्तमित्यर्थेनादोषात् । न चैवमपि ब्रूहि ब्रूहीत्यादेर्द्विरुक्तिविषयस्य तिङन्तद्वयघटितत्वेनैकतिङन्तघटितत्वरूपवाक्यलक्षणानुपपत्तिरिति वाच्यम् । विभिन्नानुपूर्वीकतिङन्तद्वयाघटितत्वमेवात्रैकतिङन्तघटितत्वमिति विवक्षणेनादोषात् । न चैवमप्योदनं पच तव भविष्यतीति वाक्यद्वयघटकस्य पच तवेत्यस्याप्युक्तलक्षणलक्षितत्वाद्वाक्यत्वापत्त्या युष्मदाद्यादेशापत्तिरिति वाच्यम् । परस्परान्वितपदार्थबोधकत्वविशेषणेनादोषात् । असत्त्वभूतक्रियाबोधकभावकृत्यप्रत्ययान्तघटितस्य तिङन्तघटितत्वाभावेपि विभिन्नानुपूर्वीकतिङन्तद्वयाघटितत्वस्य निर्बाधत्वान्न वाक्यत्वानुपपत्तिः । अत एव भूतले घट इत्यादेरध्याह्रियमाणतिङन्तसापेक्षस्यापि वाक्यत्वसिद्धिरिति सर्वेष्टसङ्ग्रह इत्याहुः ।

केचित्तु स्वघटितवाक्यार्थबोधप्रयोज्यप्रवृत्तिनिवृत्त्यन्यतराश्रयत्वप्रकारकेच्छोद्देश्यत्वं सम्बोधनमिदमेव सम्बोध्यत्वं, अस्य खण्डशो विभक्तिवाच्यता, प्रवृत्तिनिवृत्त्यन्यतरत् प्रकृत्यर्थविशेष्यमन्यत्प्रकृत्यर्थविशेषणम् । इत्थं च राम मां पाहीत्यादौ सम्बोधनविभक्त्यन्तघटितवाक्यजन्यबोधाश्रयत्वप्रकारकेच्छोद्देश्यभूतो यो रामस्तत्सम्बन्धिप्रवृत्तिविषयो मत्कर्मकरक्षणानुकूलः प्रार्थनाविषयो व्यापार इत्येवं बोधः । व्रजानि देवदत्तेत्यत्र तु व्रजनप्रवृत्तेर्देवदत्ते बाधादध्याह्रियमाणजानीहीत्यर्थे तत्सम्बन्धः । ततश्च मत्कर्तृकव्रजनविषयकज्ञानानुकूलः प्राप्तकालः प्रार्थनाविषयो वा प्रकृतवाक्यार्थबोधाश्रयत्वप्रकारकेच्छोद्देश्यभूतदेवदत्तसम्बन्धिप्रवृत्तिविषयो व्यापार

---

१. प्रवृत्तिनिवृत्त्यन्यतरप्रयोजकस्वघटितवाक्यजन्यबोधाश्रयत्वप्रकारकेच्छाविषयत्वं सम्बोधनमिति सूचितम् ।

इति बोधः। प्राप्तकाले प्रार्थनायां वा लोट्प्रत्ययः। नञ्समभिव्याहारे च निवृत्तिप्रतीतिर्न मां मुञ्च जनार्दनेत्यादौ। क्रियासु विनियुज्यत इत्युत्तरहरिग्रन्थस्वारस्यादयमत्रार्थो न्याय्यः। रूढ एवायं सम्बोधनशब्द इत्याहुः॥ इति प्रथमा॥

व्याख्यानादिति॥ तथायुक्तमित्युत्तरसूत्रे प्रकृतसूत्रोपात्तस्योद्देश्यस्य तत्सूत्रगृहीतस्यानुद्देश्यस्य च दृष्टान्तदार्ष्टान्तिकभावेन साधारणधर्मतया फलाश्रयत्वरूपसम्बन्धस्य गृहीततया क्रियाशब्दत्वेन व्याख्यानमन्तरा तदनुपपत्तिरित्याशयः॥ सम्बद्धुमिति॥ कर्मणि कर्तृसम्बन्धः स्वनिष्ठव्यापारप्रयोज्यफलाश्रयत्वम्। ननु व्यापाराश्रयस्यैव कर्तृत्वे व्यापारद्वयवाचकनयत्यादियोगे प्राथमिकव्यापाराश्रय-

---

१. आहुरिति॥ इदमयुक्तम्। सम्बोधनस्य विभक्तिवाच्यताया भाष्यादिविरुद्धत्वात्। तथाहि। भाष्ये कर्मादिविशिष्टे प्रथमाभावे सम्बोधने चेति सूत्रं ज्ञापकमाश्रित्य प्रातिपदिकार्थसूत्रे मात्रग्रहणं प्रत्याख्यातम्। तेन सम्बोधनविषये प्रातिपदिकार्थेत्यनेन प्रथमासिद्धिस्सूचिता। तिङ्समानाधिकरणे प्रथमेत्याश्रित्य प्रातिपदिकार्थसूत्रप्रत्याख्याननये च वार्तिकेनैव तत्सिद्धिस्सूचिता। एवं च मतद्वयेऽपि सम्बोधनस्य प्रथमावाच्यत्वाभावः स्पष्ट एव। न च भवन्मते तस्य प्रातिपदिकार्थत्वसम्भवः। तदेकदेशप्रवृत्त्यादेः भवत्सम्मतविशेष्यत्वासम्भवात्। सत्त्वप्रधानानि नामानीति निरुक्तोक्तेः। नामपदेन च सुबन्तमेवेति मञ्जूषायां निरूपितम्। किञ्च विभक्त्यर्थस्य प्रातिपदिकार्थनिरूपितविशेष्यतायाः क्वाप्यदर्शनेनात्रैव तदाश्रयणमयुक्तम्। सूत्रशैलीविरोधात्। किञ्च सम्बोधनफलीभूतयोः प्रवृत्तिनिवृत्त्योर्विभक्त्यर्थत्वमयुक्तम्। तुल्ययुक्त्या विधिफलीभूतस्येष्टसाधनत्वादेर्विधिप्रत्ययार्थत्वापत्त्या अपसिद्धान्तात्। किञ्च प्रवृत्तेस्तदर्थत्वेन यथाकथंचिद्बोधविषयत्वसम्भवेऽपि निवृत्तेस्तदसम्भवः। नञ्समभिव्याहारे धात्वर्थे आरोपितत्वभानाङ्गीकारेण न मां मुञ्च जनार्दनेत्यत्र भवद्रीत्या एतद्वाक्यजन्यबोधाश्रयत्वप्रकारकेच्छोद्देश्यजनार्दनसम्बन्धिनिवृत्तिविषयीभूतं मत्कर्मकं मोचनमिति बोधे निवृत्तिविषयत्वस्यारोपितमोचने भानेन वास्तविकमोचनाभावस्य निवृत्तिविषयत्वप्रतीत्या मुञ्चेत्यतः फलेऽविशेषप्रसङ्गात्। न च तत्रापि प्रवृत्तिरेवार्थः मोचनाभावस्य प्रवृत्तिविषयत्वप्रतीतौ मोचनान्निवृत्तिः फलतीति वाच्यम्। एवं सति निवृत्तेर्वाच्यत्वकथनवैयर्थ्यापत्तेः। किञ्च वक्तृच्छायास्सम्बोधनविभक्तिघटितवाक्यप्रयोगानुमेयत्वेन वाच्यत्वकथनमयुक्तम्। अन्यलभ्यत्वात्। स्पष्टा चेयं रीतिर्मञ्जूषायाम्। किञ्च विभक्तिवाच्यस्य संसर्गत्वातिरिक्तविषयतया भानं न क्वापि दृष्टम्। किञ्च सम्बोधनस्योक्तार्थकता रूढिमन्तरा न सम्भवति, सा च दुर्लभा। तदर्थे क्वाप्यप्रयोगात्। तस्मादयुक्त एवायं स्वकपोलकल्पितो मार्ग इत्याहुः।

स्याप्यजादेरजां ग्रामं नयतीत्यादौ कर्तृत्वापत्तिरत आह ॥ **प्रधानधात्वर्थव्यापाराश्रय इति** ॥ प्राधान्यं च तद्धात्वर्थनिष्ठविशेष्यतानिरूपितप्रकारतानाश्रयत्वम् ॥ **करणाकाङ्क्षेति** ॥ न च सम्बन्धस्य व्यापारघटितत्वेन कथं तत्र व्यापारस्य करणत्वम्। व्यापारोपहितस्य कारणस्य करणतया कारणस्य कार्यकोटिप्रवेशायोगादिति वाच्यम्। पटाद्यवयवतन्त्वादेर्विशिष्टमवयविनं प्रति कारणत्वेन दृष्टतया सम्बन्धघटकस्य विशिष्टसम्बन्धं प्रति करणत्वे बाधकाभावात्। न चैवमपि करणस्य व्यापारान्वयनियमात्सम्बन्धानुकूलव्यापारस्यापि सम्बन्धघटकविक्रियादिफलानुकूलतया फलानुकूलव्यापारस्य तत्र करणत्वेनान्वयो न युक्तः, स्वस्मिन् स्वस्य करणत्वायोगादिति वाच्यम्। सम्बन्धानुकूलव्यापारस्तत्समर्थाचरणं; फलानुकूलस्तु फूत्कारादिरूप इति भेदेन करणत्वस्य निर्बाधत्वात् ॥

केचित्तु सम्बन्धोऽत्राश्रयत्वम्। सनिरूपकधर्मस्यैव सम्बन्धत्वौचित्यात्। तच्च केनेति निरूपकाकाङ्क्षायामुपस्थितकर्तृविशेषणीभूतक्रियानिरूपकत्वेन सम्बन्धे प्रधानव्यापारात्मकक्रियानिरूपितस्य तस्य कर्तुरन्यस्मिन्बाधात्फलद्वारकया तया सम्बन्धादभीष्टार्थलाभ इति मूलकाराशय इत्याहुः ॥

**व्यापारप्रयोज्येति** ॥ प्रधानव्यापारवाचकधातूपात्ततत्प्रयोज्यफलाश्रयत्वेनोद्देश्यत्वं कर्मत्व पर्यवसन्नम्। तमप्ग्रहणाच्च प्रधानव्यापारप्रयोज्यत्वलाभः। अत एवाग्नेर्माणवकं वारयतीत्यादौ माणवकादेरपादानत्वम्। अन्यथा संयोगानुकूलव्यापाराभावानुकूलव्यापारवाचकवारयत्यादियोगे प्रधानव्यापारवाचकधातूपात्तसंयोगात्मकफलाश्रयत्वेन अग्न्यादेरपि कर्मत्वप्रसक्त्या निरवकाशेनापादानत्वेन बाधा-

---

१. प्रधानधात्वर्थव्यापाराश्रय इतीति ॥ सम्बद्धमित्यनन्तरं "धातूपात्तव्यापाराश्रय इति ॥ प्रधानधात्वर्थव्यापाराश्रय इत्यर्थः" इत्यधिकं शब्दरत्नपाठमभिप्रेत्येदम्।

२. आहुरिति ॥ परे तु कर्तुराप्तुमिष्यमाणमित्यर्थे आप्नोत्यर्थस्य सम्बन्धस्य साध्यरूपस्य साधनाकाङ्क्षानैयत्येन निरूपकाकाङ्क्षाया अनुत्थानेन करणाकाङ्क्षैवोचिता। तादृशप्रयोगे व्यापारेणेति पदसत्त्वे तदर्थस्य करणत्वैवान्वयनियमात्क्रियाकारकभावातिरिक्तविशेषसम्बन्धनिरूपितत्वस्य धात्वर्थक्रियायां वैयाकरणैरनभ्युपगमेन निरूपकाकाङ्क्षाया अनौचित्येन दुर्वचतया मूलोक्तरीत्यैव परममूलाशयवर्णनमुचितमित्याहुः ॥

न्माणवकादीनामपि तदापत्तिः । प्रयोज्यत्वनिवेशे तु संयोगस्य प्रधानव्यापार-प्रयोज्यत्वाभावेन तदाश्रयीभूताग्न्यादौ कर्मत्वाप्राप्तिविषये चरितार्थस्यापादानत्वस्य परत्वात्कर्मत्वेन बाधान्माणवकादीनां नापादानत्वमित्यभीष्टसिद्धिः । न च प्रयोज्य-त्वनिवेशाभावेऽपि कर्मत्वस्योद्देश्यताघटितत्वेन प्रधानव्यापारवाचकधातूपात्तसंयोगा-त्मकफलाश्रयत्वेन कर्तुरुद्देश्यत्वाभावादेवाग्न्यादेः कर्मत्वाप्राप्त्या न निरुक्तदोष-प्रसक्तिरिति वाच्यम् । प्रयोज्यत्वनिवेशे प्रधानव्यापारप्रयोज्यफलाश्रयत्वेनोद्देश्यत्व-मित्युक्तौ प्रत्यासत्त्या प्रधानव्यापाराश्रयीभूतकर्तुरेव तदुद्देश्यत्वमिति लभ्यते । तदभावे च कर्तृग्रहणस्य व्यापारांशे प्राधान्यसम्पादनेन कृतार्थत्वेन फलस्य व्यापारप्रयोज्यत्वावश्यंभावेन च यदीयव्यापारप्रयोज्यता फलस्य तदुद्देश्यत्वस्यैव ग्रहीतव्यत्वान्माणवकाद्युद्देश्यतामादायाग्न्यादेरपि कर्मत्वप्रसक्तावनिष्टप्रसङ्ग इत्या-शयात् । प्रधानव्यापारप्रयोज्यफलाश्रयत्वमात्रोक्तौ घटो जायते चक्रभ्रमणेन नदी वर्धते वर्षेणेत्यादौ घटनद्यादीनामपि तथाभूतव्यापारप्रयोज्योत्पत्तिवृद्ध्यादिरूपफला-श्रयत्वेन कर्मत्वापत्तिरतः प्रधानव्यापारवाचकधातूपात्तत्वं फलविशेषणम् । ननूद्दे-श्यत्वनिवेशे रथो ग्रामं गच्छतीत्यादावचेतनस्योद्देश्यत्वासम्भवात्कथं कर्मत्वमिति चेन्न । नौश्शकटं वहति शकटं नावं वहतीत्यादिभाष्यकारीयव्यवहारबलेनाचेत-नेष्वपि चेतनत्वारोपेणोद्देश्यताया निर्बाधत्वेन कर्मत्वस्य सुवचत्वात् । यत्तु तमब्ग्रहणं धातूपात्तफलाश्रयत्वलौकिकफलाश्रयत्वरूपोभयसम्बन्धेनेच्छाविषयत्व-रूपोद्देश्यगतप्रकर्षलाभार्थम् । तेन पयसा ओदनं भुङ्क्त इत्यत्र गलाधोदेश-संयोगरूपधातूपात्तफलाश्रयत्वेऽपि क्षुन्निवर्तकत्वरूपलौकिकफलाश्रयत्वाभावेन पयसो न कर्मत्वमित्याहुस्तदयुक्तम् । कृतभोजनस्य पयोलाभेन भोजनार्थं प्रवृत्तौ क्षुन्नि-वर्तकत्वरूपलौकिकफलाश्रयत्वाभावेनौदनस्य कर्मत्वानुपपत्त्या निरुक्तप्रकर्षस्य निरूपयितुमशक्यत्वात् । उद्देश्यत्वाभावविवक्षया पयसः कर्मत्वाभावस्य सुवचत्वाच्च । तद्विवक्षायान्तु व्यञ्जनौदनयोस्सहजसिद्धप्रधानाप्रधानभावेन सह युक्त इत्येतत्सूत्रविषयतया तृतीयाप्रवृत्तेरविरोधः । प्रधानाप्रधानभावस्याविवक्षा-यान्तु इष्यत एव द्वयोरपि कर्मत्वमोदनपयसी भुङ्क्त इति धवखदिरौ छिन्धीति-वदिति वदन्ति ॥

फलस्यापीति ॥ यत्तु तत्तत्फलोत्पत्त्यनुकूलव्यापारस्यैव धात्वर्थतया

फलाश्रयत्वेन तण्डुलादीनामिव तदुत्पत्त्याश्रयत्वेन फलस्यापि कर्मत्वोपपत्तिरिति तदसत् । उत्पत्त्यर्थकधातुयोगे फलीभूतोत्पत्तेरुत्पत्त्यन्तराभावेन निरुक्तरीत्या फले कर्मत्वस्य दुर्वचत्वात् । नापि तादात्म्यं वृत्तिनियामकत्वेन कस्य चिदभिमतम् । अतो व्यपदेशिवद्भाव एव फलस्य कर्मत्वे शरणमिति सूचयन्नाह ॥ **व्यपदेशिवद्भावेनेति** ॥ यद्यपि ज्येष्ठत्वकनिष्ठत्वादीनामेकस्मिन् लोके दृष्टतया विशिष्टव्यवहारप्रयोजकभेदारोपेण तथा व्यवहारेपि तदाश्रयत्वप्रयोजकभेदारोपेण घटो घटवानित्यादिको व्यवहारो न क्वचिद्दृष्टः ; तथापि फलस्य कर्मतायाः प्रामाणिकत्वात्तन्निर्वाहकोपायान्तराभावादिदमपि प्रामाणिकमित्याशयः ।

केचित्तु प्रधानव्यापारवाचकधातूपात्तफलाश्रयत्वमिव तदपेक्षया पूर्वोपस्थितिकत्वाल्लाघवेन तदुपात्तत्वमपि सम्बन्धः । अयमेव तु न सम्बन्धः । अनध्वनीत्यादिपर्युदासविरोधात् । एवं च प्रधानव्यापारवाचकधातूपात्तफलाश्रयत्वेन बहिर्भूततण्डुलादीनामिव तदुपात्तत्वेन फलस्यापि कर्मतायास्सुवचतया व्यपदेशिवद्भावाश्रयणपरिक्लेशो विफल इत्याहुः ॥

ननु कारक इति सप्तमीनिर्देशबलात्क्रियापरताया एव न्याय्यत्वात्कथं संज्ञाविधानसम्भव इत्यत आह ॥ **तदुक्तमिति** ॥ अत्र पक्षे व्यत्ययेन प्रथमार्थे सप्तमीति बोध्यम् ॥ **नटश्रुतमिति** ॥ नियमपूर्वकविद्यास्वीकाराभावादाख्यातोपयोग इत्यपादानत्वस्याप्राप्तावपि कारकत्वसामान्योपहितनटसम्बन्धबोधकषष्ठ्यन्तघटितस्तत्पुरुषः । **स्वरितप ठादिति** ॥ तेन क्रियाविशेषगत्वव्याप्यापादानत्वादिविशिष्टार्थकादिति लभ्यत इति भावः । यत्तु प्राञ्चः । क्रियान्वयित्वं कारकत्वम् ।

---

१. आहुरिति ॥ इदमयुक्तम् । धातूपात्तत्वस्यापि सम्बन्धत्वस्वीकारेऽन्यतरसम्बन्धेनाश्रयत्वं कर्मत्वमित्युक्तौ गौरवाद्व्यपदेशिवद्भावेन निर्वा[illegible]दविशेषात् । किञ्च तेन सम्बन्धेन तदाश्रयत्वस्य व्यापारेऽपि सत्त्वेन तस्यापि कर्मत्वापत्त्या तद्वि[illegible]षणेभ्यो द्वितीयापत्तेः । न च तिङन्ते व्यापारविशेषणता नास्त ति वक्तुं शक्यम् । मन्दं गच्छति कुटिलं गच्छति भक्तिपूर्वकं सोमेन यजेतेत्यादौ व्यापारविशेषणत्वमन्तरा गत्यभावात् । ईदृशेषु प्रथमान्तमिति कृदर्थवादे मञ्जूषायामुक्तत्वाच्च । न च तत्र नपुंसकत्वान्न रू[illegible]वैलक्षण्यमिति वाच्यम् । रूपावैलक्षण्येऽपि “न शिक्षितस्त्वया तेन मन्दं ते याति वारण” इत्यादाविष्टस्य “सपूर्वायाः प्रथमाया विभाषेति विकल्पस्यासिद्धेर्दुर्वारत्वात् । तस्मान्मूलोक्तसरणिरेव तत्राश्रयणीयेत्याहुः ”॥

अत एव ब्राह्मणस्य पुत्रं पन्थानं पृच्छतीत्यत्र क्रियानन्वयिनो ब्राह्मणस्य कारकत्वाभावादकथितसूत्रबोधितपृच्छिकर्मत्वाभावः । न च तण्डुलं पचतीत्यादौ कर्मणः फलान्वयित्वेपि क्रियान्वयाभावात्कारकत्वानुपपत्तिरिति वाच्यम् । स्ववृत्तिफलानुकूलत्वेन कर्मणः क्रियायामेवान्वयस्वीकारेणादोषात् । एवमधिकरणस्यापि कर्तृकर्मान्यतरद्वारकसम्बन्धेन क्रियायामेवान्वय इति न कारकत्वव्याघात इति वदन्ति ॥ तदसत् । करोति क्रियां निर्वर्तयतीति व्युत्पत्तिं प्रदर्शयता भगवता भाष्यकारेण क्रियाजनकत्वं कारकत्वमित्यभिधानात् । किञ्च क्रियान्वयित्वमेव कारकत्वमित्येतावन्मात्रोक्तौ कदाचिद्ब्राह्मणस्य क्रियान्वये कारकत्वस्य दुर्वारतया निरुक्तकर्मताया निवारणासम्भवः । न च सुबन्तार्थप्रकारकक्रियाविशेष्यकशाब्दबुद्धिं प्रति तदन्वययोग्यनामसमभिव्याहारस्य प्रतिबन्धकताकल्पनान्न निरुक्तदोषावकाश इति वाच्यम् । एवमपि तदसमभिव्याहारदशायां सम्बन्धसामान्यषष्ठ्या वृक्षस्य पततीत्यादिप्रयोगस्याभीष्टस्य दौर्लभ्यापत्तेः । यदि तु जनकत्वेन क्रियान्वयित्वे कारकत्वं न तु सम्बन्धित्वेन तदन्वये तत्त्वमत एव वृक्षस्य पर्णं पतति वृक्षात्पर्णं पततीत्यादिको व्यवस्थितो व्यवहार इत्युच्यते; तर्हि क्रियाजनकत्वं कारकत्वमित्येव सिद्धे व्यर्थोयमन्वयित्वपर्यन्तानुधावनपरिक्लेश इति ध्वनयन्नाह ॥ **तत्रान्वयप्रयोजकजनकत्वाभाववत इति** ॥ ननु जनकत्वं कारकत्वमित्युक्तौ ब्राह्मणस्य पुत्रं पन्थानं पृच्छतीत्यत्र पुत्रद्वारा क्रियाजनकत्वेन ब्राह्मणस्यापि कर्मत्वापत्तिरित्यत आह ॥ **अन्यथासिद्धेरिति** ॥ नन्वेवंरीत्या पृच्छिसमभिव्याहारे प्रश्नविषयेण मार्गेण पुत्रस्याप्यन्यथासिद्धिः । किञ्च कर्त्रादिद्वारा क्रियासम्बन्धादधिकरणस्याप्यन्यथासिद्धिरेव; तस्माज्जनकत्वं प्रयोजकत्वमिति विवक्षणीयम् । तथा च पुत्रं विना प्रश्नानुपपत्त्या यथा पुत्रः प्रयोजकस्तथा पितरमन्तरा पुत्रस्याप्यनुपपत्त्या ब्राह्मणोपि प्रयोजक एवेति स्यादेव कारकत्वप्रयुक्तं पृच्छिकर्मत्वमिति चेत्तर्हि

१. **स्यादेव कारकत्वप्रयुक्तं पृच्छिकर्मत्वमिति** ॥ इदमयुक्तम् । प्रश्नरूपक्रियाजनकपुत्रनिरूपितपूर्ववृत्तित्वग्रहमन्तरा ब्राह्मणे प्रश्नक्रियानिरूपितपूर्ववृत्तित्वाग्रहादस्ति ब्राह्मणस्य पुत्रेण चतुर्थान्यथासिद्धत्वम् । न तथा प्रकृते । पुत्रमन्तरा प्रश्नानुपपत्त्या अन्वयव्यतिरेकाभ्यां प्रश्नक्रियानिरूपितपूर्ववृत्तित्वग्रहस्तस्य । न हि तस्य पूर्ववृत्तित्वग्रहे मार्गस्य पूर्ववृत्तित्वग्रहोऽपेक्षितः, येन मार्गेण पुत्रस्यान्यथासिद्धत्वमापाद्येत । एवं चात्रान्यथासिद्धेरभावेनान्यथासिद्धत्वमुपपाद्य जनकत्वस्थाने प्रयोजकत्वं च निवेश्य ब्राह्मणे कारकत्वोपपादनमयुक्तमेवेति बोध्यम् ।

भवतु कारकत्वं, कर्मत्वन्तु दुर्निरूपम् । गृहीतपरम्परातिरिक्तपरम्परास्वीकारे मानाभावेन प्रकृतधातूपात्तप्रधानव्यापारप्रयोज्यप्रकृतधातूपात्तफलाश्रयात्मकप्रधान-कर्मघटितसम्बन्धेन दुहादिधातुसम्बन्धिनि पुत्रादौ कर्मत्वविधानेन कृतार्थस्या-नुशासनस्य तदतिरिक्तगौणकर्मघटितपरम्परासम्बन्धेन तत्सम्बन्धिनि ब्राह्मणादौ कर्मत्वोपपादकत्वायोगादतो न काप्यनुपपत्तिरिति दिक् ॥ अत एवेति ॥ जनकत्वाभावादेवेति तदर्थः । इदं तु न युक्तम् । वृक्षस्य पतति नटस्य शृणोतीत्यादौ सम्बन्धसामान्येनाप्यन्वयदर्शनेन जनकत्वस्य क्रियानुयोगिका-न्वयबुद्धित्वावच्छिन्नप्रयोजकताकल्पनाया अनौचित्यादित्याहुः[1] ॥

व्यपदेशान् करोतीति ॥ केचित्तु नैतादृशव्युत्पत्तिलभ्येऽर्थे व्यवहारतो रूढिरुपलभ्यते, नापि दृढतरभाष्यानुग्रहः । तस्मात्करोतीति कारको व्यापारः । तस्य च फलानुकूलत्वात्फलानुकूलपरिणामरूपव्यापाराश्रयत्वाच्च कर्तृत्वम् । इत्थं च फलोत्पत्त्यनुकूलव्यापाराश्रयत्वेनैव क्रियापरत्वं कारकशब्दस्येति वदन्ति[2] ॥

घटत्ववत्त्वेति ॥ केचित्तु कारकाणां क्रियाजनकत्वं नियतमिति वाक्यस्या-प्येतत्तौल्यात्प्रयोगविषयत्वानुपपत्तिः क्रियाजनकत्वं कारकत्वमिति परिष्कुर्वतां दुर्वारा । तस्मादीदृशे विषये कारकशब्दस्य तत्संज्ञकपरताया आवश्यकत्वान्नास्ति दूषणावकाश इत्याहुः[3] ॥

---

१. आहुरिति ॥ इदमयुक्तम् । अत्र वृक्षादेः क्रियाजनकत्वरूपकारकत्व-स्येष्टत्वेन तस्य सम्बन्धसामान्येनान्वयेऽपि क्रियाजनकत्वक्रियानुयोगिकान्वयप्रयोजक-त्वकल्पने बाधकाभावात् । न च तत्रापादानत्वाभावात्कारकत्वमपि नेति वाच्यम् । कार-कसंज्ञाभावेऽपि क्रियाजनकत्वरूपकारकत्वस्यानपायात् । अत एव कारके इत्यस्य सप्तम्य-न्ततामाश्रित्य क्रियापरत्वमिति पक्षे तत्र तत्र कारकशब्दस्य स्वरितत्वेन कर्त्रादिषट्कान्य-तमपरत्वकथनं सङ्गच्छते । ततश्च युक्तमेव मूलोक्तमित्याहुः ।

२. वदन्तीति ॥ फलोत्पत्त्यनुकूलव्यापाराश्रयत्वस्य कर्तृसाधारण्येन तद्व्यावृत्त-क्रियापरत्वलाभार्थं रूढेस्तत्राप्याश्रयणीयतया तदाश्रयणे मूलोक्तस्यैव सामञ्जस्येन तत्परित्यागेनापूर्वार्थकथनं ग्रन्थकृतो न सम्यगित्याहुः ।

३. आहुरिति ॥ परे तु अधिकरणस्य कारकत्वेन क्रियान्वय इति कारकाणां भावनान्वय इति च दीक्षितादिव्यवहारदर्शनात्तत्र दोषापादनं युक्तम् । कारकाणां

तदुपयोगीति ॥ तत्समर्थाचरणरूपा तदुपयोगिनी क्रियेति द्रष्टव्यम् । नन्वेवं दानवेलायामविद्यमानेपि तदुत्तरभाव्युत्पत्तिके निरूढसम्प्रदानत्वव्यवहारवति लक्षणघटककार्यनियतपूर्ववर्तित्वरूपजनकत्वस्य दौर्लभ्येन कारकत्वानुपपत्त्या तत्समनैयत्येन विधीयमानसम्प्रदानत्वासङ्गतिरत आह ॥ अविद्यमानस्यापीति ॥ बुद्धयेति ॥ तद्विषयकबुद्धिसत्ताप्रयुक्तमपि पूर्वत्वं कारणतावच्छेदककोटावाश्रीयते । अत एवाध्ययनेन वसतीत्यादौ फलस्यापि हेतुत्वेन व्यपदेश इत्याशयः । न च तादृशीं बुद्धिमाश्रित्य अन्यथासिद्धया कथं जनकत्वमिति वाच्यम् । तदस्मै इत्यादिनिर्देशबलेन प्रयोजकत्वरूपमेवेह जनकत्वं, न तु कार्यनियतपूर्ववर्तित्वरूपमित्याश्रयणेन निर्वाहादिति दिक् । ननु मूले न भविष्यतीत्ययुक्तम् । स्वार्थद्रव्यलिङ्गसंख्याकारकात्मकं पञ्चकं प्रातिपदिकार्थ इति पक्षे कर्मत्वविशिष्टेऽर्थेऽभिधित्सिते द्वितीयेत्यर्थस्य वक्तव्यतया कटं करोतीत्यादौ प्रातिपदिकेनोक्तेपि कर्मत्वे

---

क्रियाजनकत्वं नियतमिति व्यवहारस्तूपाध्यायानुयायिनां न क्वापि दृश्यते । येन प्रतिबन्द्या दोष आपादयितुं शक्यते । किञ्च तद्व्यवहारे कारकपदस्य लक्षणया कारकसंज्ञकपरत्वमयुक्तम् । भाष्यसम्मतक्रियाजनकपरतयोपपत्तौ मुख्यार्थबाधरूपलक्षणाबीजस्याभावात् । अत एवैतदुक्तं अत एवेत्यादिना भाष्यप्रमाणप्रदर्शनं स्वारस्यमधिरोहति । किञ्चैतद्ग्रन्थस्य कारक इति सूत्रस्थकारकशब्दस्य क्रियापरत्वं, न तु संज्ञापरत्वमिति पक्षोपपादकतया तद्व्याख्यानावसरे कारकसंज्ञाया एवाभावेनाधुना प्राचीनव्यवहारे कारकशब्दस्य कारकसंज्ञकपरत्वं वक्तुमशक्यम् । अपि च कर्तृण्वुलन्तकारकशब्दस्य क्रियान्वयीत्यर्थकथने लक्षणा रूढिर्वाश्रयणीयेति गौरवम् । न च स्वन्मतेऽपि कर्तुः करणत्वाद्यसम्भवेन कारकं कर्म करणमित्यादि विरुद्धम् । कर्मादीनां कर्तृत्वाभावात् । कर्ता कारकमिति च पुनरुक्तमिति वाच्यम् । स्वव्यापारे सर्वेषामेव कारकाणां स्वातन्त्र्येण कर्तृत्वानपायादाद्यदोषस्य कर्ता कारकमित्यत्र कर्तृपदस्य प्रधानव्यापाराश्रयपरतया घटो नीलघट इतिवत्पौनरुक्त्यस्य चाभावात् । तदुक्तं हरिणा "निष्पत्तिमात्रे कर्तृत्वं सर्वत्रैवास्ति कारके । व्यापारभेदापेक्षायां करणादित्वसम्भव" इति । स्पष्टं चेदं मञ्जूषायाम् । ततश्च प्राचीनमतरक्षणप्रयासो ग्रन्थकर्तुरभिनिवेशमूलक एवेति सुधीभिराकलनीयमित्याहुः ॥

१. अन्यथासिद्धयेति ॥ इदमयुक्तम् । तत्त्वापेक्षया तद्बुद्धित्वस्य गुरुत्वाद्बुद्धेरेव पञ्चमान्यथासिद्धत्वात् । एतदेवाभिप्रेत्य सम्प्रदानस्य ज्ञानद्वारा पूर्वकालिकत्वं जनकत्वप्रयोजकमुपपादितं शेखरे । कारणत्वशरीरे पूर्ववृत्तित्वस्य तत्तत्सम्बन्धविशेषेणाभ्युपगन्तव्यतया ज्ञानविषयतासम्बन्धेन पूर्ववृत्तित्वमाश्रयणीयमिति तदाशयः । एवञ्च प्रसिद्धजनकत्वं विहाय प्रयोजकत्वरूपस्य तस्य ग्रहणे न किञ्चित्फलं नापि मानमित्याहुः ॥

सामर्थ्यादुक्तार्थानामिति न्यायं बाधित्वा यथा प्रवर्तते तथा क्रियते कट इत्यादावपि द्वितीयाया दुर्वारत्वादत आह ॥ तस्याश्शक्तेरिति ॥ कर्मत्वादिरूपकारकशक्तेरित्यर्थः ॥ उद्भूतेति ॥ उद्भूतत्वं च तद्विषयकबोधानुकूलविधिविषयीभूतचिकीर्षितप्रत्ययेतरप्रत्ययाद्यनपेक्षया प्रातिपदिकजन्यप्रतीतिविषयत्वम्। एवं चोद्भूतशक्तौ द्वितीयादिविधानेन कृतार्थस्यानुद्भूतशक्तौ तद्विधायकत्वे मानाभाव इत्याशयः। द्वितीयादिविधायकशास्त्रारम्भबलेन स्वविषये नाप्राप्तप्रातिपदिकमात्रप्रयुक्ततदुक्तिविषये न्यायबाधाभ्युपगमेपि प्रातिपदिकतदितरैतदुभयकृततदुक्तिविषये तद्बाधो न युक्त इति तात्पर्यम्।

अत्र केचित्। कर्मत्वेऽभिधित्सिते द्वितीयेत्यादिर्विभक्तिविधायकसूत्रार्थः। कारकं च विभक्तेरेवार्थ इति मूलकृदाशयः। न तु पञ्चकं प्रातिपदिकार्थ इति। अत एव किञ्चेत्यादिग्रन्थसङ्गतिः। अन्यथा कर्मत्वविशिष्टेऽर्थे बोधनीये इत्यर्थे तद्विषये कर्मत्वस्याधिक्यान्मात्रपदेन प्रथमाया अप्रवृत्त्या तदसङ्गतिरेव। यदि तु मात्रपदेनोद्भूतकारकशक्तेरेव व्यवच्छेदो न त्वनुद्भूताया अपि कटः क्रियत इत्यादावतः प्रथमायाः प्रवृत्तिर्निर्बाधैवेत्युच्यते, तदा कर्मणि द्वितीयेत्यादिभिरुद्भूतकर्मत्वादिशक्तावेव द्वितीयादेर्वक्तव्यतया प्रकृते तिङ्प्रत्ययेनाभिधानादनुद्भूतायां तस्यां प्रवृत्त्ययोगात्प्रथमया बाधिष्यत इत्युक्तेरसाङ्गत्यं तदवस्थमेव। तस्मात्पञ्चकं प्रातिपदिकार्थ इति पक्षावलम्बी नायं मूलकारग्रन्थ इत्याहुः॥

अत्र बहवः। पञ्चकं प्रातिपदिकार्थ इति पक्षेपि न प्रातिपदिकमात्रोच्चारणेन सर्वं भासते। किन्तु समभिव्याहारानुरोधादेव। तथाहि। स्वार्थद्रव्यलिङ्गसंख्याकारकं प्रातिपदिकस्यैव वाच्यम्। द्योतकसमभिव्याहारादेव तु पञ्चानामर्थानां भानमिति निष्कर्षः। ततश्च कर्मत्वविशिष्टेऽर्थे बुबोधयिषिते द्वितीयेत्यर्थे द्वितीयाप्रवृत्तेः प्रागुद्भूतकर्मत्वशक्तेरभावात्प्रथमाप्रवृत्तिर्निर्बाधैव। परन्तु तिङ्प्रत्ययेनाभिधानादनुद्भूतत्वात्कर्मत्वशक्तेः प्रकृते द्वितीयाया उद्भूतशक्तिनिमित्ति-

---

१. उद्भूतत्वं चेति ॥ वस्तुतस्तु शक्तिमतो भेदेन प्रतीयमानत्वमुद्भूतत्वमिति प्रागुक्तमेवानुसन्धेयम्। भवदुक्तं तु न युक्तम्। गमयति वारीत्यादौ कर्तृत्वस्योद्भूतत्वापत्तेरिति बोध्यम् ॥

कायाः प्रसक्त्यभावात्प्रथमया बाधिष्यत इत्ययुक्तमिति परमवशिष्यते। तत्रेत्थं वक्तव्यम्। अनुद्भूतकर्मताविशिष्टस्याप्युद्भूतकर्मताविशिष्टत्वेन बोधनेच्छायाः प्रतिबन्धकाभावेन तन्निमित्तकत्वेन प्रसक्ता द्वितीया प्रथमया बाधमन्तरेण कथं निमित्ता स्यादतः पञ्चकपक्षावलम्बेपि युक्त एवायं किञ्चेत्यादिग्रन्थ इति वदन्ति॥

अन्ये तु व्यतिलुनीत इत्यादावेकार्थद्योतकानेकसमभिव्याहारदर्शनात् द्योतकविषये नोक्तार्थानामिति न्यायस्य प्रवृत्तिः। अतो बहुपटव इत्यादौ कल्पबादीनां बहुचा येन नाप्राप्तिन्यायमूलकबाधेनैव निवर्तनीयतया प्रकृतविषये कथं चित्प्रथमाया द्योतकद्वितीयया बाधेनैव निवृत्तिरित्याशयकः प्रञ्चकं प्रातिपदिकार्थ इति पक्षानुसारेणायं किञ्चेत्यादिमूलग्रन्थः। अत एव कारकं विभक्त्यर्थ. इति पक्षे सूत्रं प्रत्याख्यातमित्युत्तरग्रन्थस्स्वरसत उपपद्यत इत्याहुः॥

तदेतत् ध्वनयन्नाह॥ **कर्मणि वर्तमानादित्यादि**॥ ननु कर्मणि वर्तमानादित्युक्ते पञ्चकं प्रातिपदिकार्थ इति पक्षे कर्मत्वे बोधनीये द्वितीयेत्यर्थः पर्यवसन्नः। तत्र कटं करोतीत्यादौ द्वितीयाद्युत्पत्तेः पूर्वं कर्मत्वादिबोधकसमभिव्याहाराकाङ्क्षाया उद्भूतत्वात्तथाभूतस्य कर्मत्वादेरुद्भूतत्वम्। कटः क्रियत इत्यादौ तु लकारादिना तद्बोधकसमभिव्याहाराकाङ्क्षाया अनुद्भूतत्वात्तद्विषयस्य कर्मत्वस्यानुद्भूतत्वमिति खलु व्यवस्था। तथा चोद्भूतकर्मत्वादिविशिष्टैकत्वादौ विभक्तिविधानेन कृतार्थस्यानुशासनस्यानुद्भूताकाङ्क्षाविषयत्वादिविशेषे तस्मिन् विभक्तिविधायकत्वस्याप्रसक्तत्वात्सिद्धान्तेप्यनभिहिताधिकारो व्यर्थ इत्यत आह॥ **अनभिहितसूत्रमपीति**॥ **तात्पर्यग्राहकमिति**॥ निरुक्तानुद्भूतत्वानुवादकमेवैतत्सूत्रमिति भावः॥ **अभिधानादिति**॥ सर्वं वाक्यं क्रियया परिसमाप्यते, क्रियान्तराभावेप्यस्तिक्रियाध्याहारो नियत इति तु न युक्तम्। त्वया कर्तव्यमित्यादेस्सुबन्तचयत्वेन पृथग्वाक्यत्वोपपादनपरमहाभाष्यकारोक्तिस्वारस्यात्। अभिहिते प्रथमा तिङ्समानाधिकरणे प्रथमेति वार्तिकद्वयमपि न युक्तम्। पचतिकल्पं पचतिरूपमित्यादौ प्रथमादर्शनादतो वृक्षः प्लक्ष इत्यादौ नास्ति क्रियाध्याहार इति वदतां नैयायिकानामयमभिमान इति बोध्यम्॥ **साकाङ्क्षत्वेनेति**॥ अन्वय इत्यदोषादिति शेषः। व्यत्ययेनायं समाधानग्रन्थः। ईदृशे विषये लक्ष्यसंस्कारकमहावाक्ये सार्वधातुकार्धधातुकयोरित्येतदेकवाक्यत्वेनालोन्त्यस्येको गुणवृद्धी-

त्यनयोर्गुणभावयोरप्यन्यत्र परस्परान्वयाङ्गीकारात्संख्यासंख्येययोरपि साकाङ्क्षत्वेनान्वय इत्यदोषादित्यर्थः ॥

**प्रधानविषय इति** ॥ इदं चिन्त्यम् । मूलोक्तरीत्या कर्मत्वस्योक्तत्वेऽप्येकत्वस्यानुक्तत्वात्संख्याकारकोभयं विभक्त्यर्थ इति मतेऽप्येकस्योक्तत्वेऽप्यपरस्यानुक्तत्वेनोभयस्यानुक्तत्वाद्विभक्तिप्रवृत्तेर्दुर्वारत्वेन न्यायस्य प्रवृत्त्ययोगादिति वदन्ति ॥ **सर्वत्रैवेति** ॥ अन्यतरानुपादानेपि कर्मण्येवेति नियमप्रवृत्तावकर्मकाणामपि देशकालादिकर्मसद्भावादनिहितानभिहितसाधारण्येन कृदन्तयोगे सर्वत्रैव तद्विषयत्वमिति भावः ॥ **उभयप्रयोग इति** ॥ कर्तृकर्मवाचकशब्दद्वयप्रयोग एवेत्यर्थः ॥ नन्वेतद्भाष्यप्रामाण्यादुभयप्रयोग एवोभयप्राप्तावित्यस्य विषय इत्यभ्युपगमे कृत्यानामिति विभक्तसूत्रस्य तथाविधे कर्मणि षष्ठीनिषेधकस्याकृष्टव्या ग्रामं शाखेति कर्तृवाचकपदविरहितं भाष्यकारोपदर्शितमुदाहरणमसम्बद्धं स्यादत आह ॥ **अध्याहृत्येति** ॥ ननु कर्तव्यः कट इत्यादावप्यध्याहारतात्पर्यकत्वे षष्ठीनिषेधाद्द्वितीयां बाधित्वा परत्वेन प्रथमाप्रवृत्तावभीष्टसिद्धिरेवेत्यत आह ॥ **आदिना भवतो लाभ इति** ॥ लभेः कर्मणि घञ् । अधिकाराभावे भवच्छब्दादुभयप्राप्ताविति निषेधात्षष्ठी न स्यादश्वशब्दाच्च कर्मणि सा स्यादिति भावः ॥ **तिङादिभिरुक्तेपीति** ॥ उक्तार्थानामिति न्यायस्तु प्रधानविषय इत्याशयः ॥ **कारकस्येति** ॥ कारकमात्रस्येत्यर्थः । संख्याकारकोभयं विभक्त्यर्थ इति पक्षे तु परस्परविशेष्यविशेषणभावापन्नयोरेव विभक्तिवाच्यतायां कृद्विषये कारकस्योक्तावपि प्रकृत्यर्थे प्रकारत्वेन नियतान्वयवत्या संख्याया अनुक्तत्वेन निरुक्ताधिकारमन्तरा कारकविभक्तेः परिहारासम्भव इति बोध्यम् ॥

**व्यापारांश इति** ॥ अत्रेदं बोध्यम् । कारकं विभक्तेर्वाच्यमिति पक्षे कर्मणि द्वितीयेत्याद्यनुशासनवशाद्धर्मिभूतं कर्माधिकं विभक्तेर्वाच्यम् । अत्र प्रकृतधातूपात्तप्रधानीभूतव्यापारप्रयोज्यप्रकृतधातूपात्तफलाश्रयस्य कर्मतया फलव्यापारयोर्धातुना लाभादनन्यलभ्यस्यैव शब्दाभिधेयत्वेन कल्पनीयत्वादाश्रयमात्रमेव द्वितीयाविभक्तेरर्थः । यद्यप्याश्रयोपि प्रकृत्या लभ्यते, तथाप्याश्रयत्वेन न लभ्यत इति तस्य विभक्तिवाच्यत्वम् । आश्रयत्वत्वेनानुगताया आश्रयतायाः शक्यताव-

च्छेदकत्वान्न शक्यानुगमो दोषः । अखण्डोपाधिराश्रयतेत्यन्ये । प्रकृत्यर्थान्वितस्य तस्याधेयतासम्बन्धेन फले फलस्यानुकूलतासम्बन्धेन व्यापारे चान्वयः । आख्यातवाच्यस्य प्रधानव्यापाराश्रयात्मकस्य कर्तुराधेयत्वेन व्यापार एवान्वयः । तिङ्प्रतिपाद्यसंख्यायाः कर्तर्याश्रय एवेतान्वयः । लट्प्रतिपाद्यो वर्तमानकालस्त्वाधेयतया व्यापारविशेषणम् । एवञ्चैकत्वसंख्यावच्छिन्न आश्रयनिष्ठो हर्यभिन्नाश्रयनिष्ठप्रीत्यनुकूलो वर्तमानकालिको व्यापार इति बोधः । कर्मप्रत्यये तु हरिस्सेव्यत इत्यादौ निरुक्तरीत्या कर्मलकारस्याश्रयमात्रार्थकत्वाद्यत्किञ्चिदाश्रयनिष्ठवर्तमानकालव्यापारजन्या हर्यभिन्नैकत्वसंख्यावच्छिन्नाश्रयनिष्ठा प्रीतिरित्येवं बोध इत्याशयः । यद्वा कर्मादिकारकाणामतिरिक्तकर्मत्वादिरूपतत्तत्कारकशक्तिपुरस्कारेणैव भानम् । तदुक्तं हरिणा "आश्रयोवधिरुद्देश्यस्सम्बन्धश्शक्तिरेव वेति।" ततश्च हर्यभिन्नकर्मत्वशक्तिमन्निष्ठा प्रीतिरित्येवं बोध इत्याशयः । उक्तार्थे लोकानुभवस्य विप्रतिपन्नत्वादाह ॥ अत एवेति ॥ भाष्यकाराद्यनुभवानुरोधिना विशेषणविशेष्यभावेन बोधजनकतायामेव साधुत्वं नान्यथेति भावः ॥ न प्रयोग इति ॥ वृत्तिविग्रहयोस्समानार्थकत्वनियमादिष्यते पुत्र इत्यादौ विशेषणीभूतस्य व्यापारस्य पुत्रीयतीत्यत्र विशेष्यतया प्रतीत्या भिन्नार्थत्वादप्रयोगः । कर्मबोधकतुमन्तादिच्छायां प्रत्यये तदनुकूलव्यापाराश्रयवत्तज्जन्यफलाश्रये कर्मणि न लकारादयः । कर्मणो धातुनैव संगृहीतत्वेन जीवत्यादिवदकर्मकत्वादिति भावः ॥ अयमर्थ इति ॥ क्यजन्तात्कर्मणि लकाराद्यनुत्पत्तिरूप इत्यर्थः । प्रतीकान्तरे पूर्वत्रानभिहितमिति प्रतीके इत्यर्थः ॥ अत्रैवेति ॥ सोऽर्थोऽत्रैव वक्तुं युक्तो भाष्यतात्पर्यानुसारादित्याशयः । ननु कर्मप्रत्ययसमभिव्याहारे सुप आत्मन इति सूत्रस्थाकरप्रामाण्यात्फलमुख्यविशेष्यकबोधाभ्युपगमे भावप्रधानमाख्यातमिति यास्कोक्तिमूलकः क्रियामुख्यविशेष्यक एव शाब्दबोध इति रूपसूत्रस्थभाष्यकारोपदर्शितशाब्दिकसिद्धान्तव्याकोप इत्यत आह ॥ भाष्ये क्रियेति ॥ अंशद्वयस्यापीति ॥ फलांशस्य व्यापारांशस्य चेत्यर्थः । इदमुपलक्षणम् । यास्कवाक्ये भावशब्दोप्यंशद्वयाभिप्रायकः । अन्यथा सुप आत्मन इति सूत्रस्थभाष्यैकवाक्यताभङ्गप्रसङ्ग इत्याशयः । ननु नामान्याख्यातजानीति शाकटायनवचने धातुपरत्वादाख्यातशब्दस्य तदेकवाक्यतालाभाय यास्कोक्तावप्याख्यातशब्दस्य धातुपरत्वावश्यम्भावेन धातूपात्तफलांशनिरूपितव्यापारांशगतप्राधान्यमुपाश्रित्य लकाराणां

कृतिवाचकतापुरस्कारेण प्रथमान्तविशेष्यकबोधेपि तदुपपत्त्या क्रियामुख्यविशेष्यक एव बोध इति शाब्दिकानामुद्घोषो न युक्तः। न च यास्कोक्ताख्यातशब्दस्य धातुपरत्वे भावशब्देन व्यापारमात्रग्रहणे सुप आत्मन इति सूत्रस्थभाष्यकारोपपादितफलप्राधान्यविषयकबोधोपपादककर्मप्रत्ययघटितप्रयोगासङ्ग्रहः। फलव्यापारोभयग्रहणे कर्तृकर्मप्रयोगभेदेन द्वयोरपि प्राधान्याद्व्यावर्तकं यास्कवचनं स्यादतस्तिङन्तपरत्वं दुष्परिहरमिति वाच्यम्। क्रियाविशेषणत्वसम्पत्तये लकाराणां कालविशेषस्य द्योतकत्वेपि धातोरेव वाचकतया तथाविधकालविशेषनिरूपितव्यापारविशेष्यतामादाय तदुपपत्तेरत आह॥ **आख्यातशब्देनेति**॥ तिङन्तानामेव समासस्याभीष्टत्वादिति भावः॥ **कालसंख्येत्यादि**॥ क्रियाकालसंख्याकारकाश्चत्वारो धातोरेव वाच्या इति भावः। एतेन कारकातिरिक्तं त्रिकं धात्वर्थ इति पक्षे कालनिरूपितं क्रियायां प्राधान्यमिति सूचितम्॥ **साध्विति शेष इति**॥ यद्यपि हन्तीति पलायत इत्यादिवत्कार्यकारणभावाभ्युपगमे पचति व्रजतीत्यस्याप्येकवाक्यतया साधुत्वं सुवचम्; तथापि मूलोक्तार्थे नैकवाक्यतया साधुत्वमित्याशयः॥ **अव्ययातिरिक्तमिति**॥ तेषां लिङ्गसंख्यासम्बन्धविरहितार्थकत्वेन प्रधानतयाऽसत्त्वबोधकत्वादित्याशयः। ननु तिङन्तस्य प्राधान्येन क्रियाबोधकत्वं, सुबन्तस्य तु द्रव्यबोधकत्वमित्येव निरुक्तवाक्याभ्यां लभ्यते। न तु तयोर्विशेषणविशेष्यभाव इति कथं क्रियामुख्यविशेष्यकबोधनिर्वाहकता वाक्यस्येत्यत आह॥ **नमन्तीत्यादि**॥ **नादरणीयमिति**॥ एतन्निरुक्तभाष्याभ्यां विरोधात् कृतिप्रधानानीत्यादिव्याख्यानान्तरं न प्रमाणमिति भावः॥ **इति शेष इति**॥ इदमपि प्रमाणमिति भावः॥ **भाष्ये इति**॥ मूले एवं पचति भवतीति चकारविरहितपाठे इत्यर्थ इत्यनन्तरं भूवादिसूत्रस्थभाष्ये स्पष्ट इति शेषः। तथा च प्रमाणान्तरप्रदर्शनपरमेतत्। एवं चेति पाठे तु फलीभूतबोधस्वरूपनिरूपणपरमिति यथाश्रुतमेव साधु॥ **व्यापारस्य सङ्ग्रह इति**॥ व्यपदेशिवद्भावप्रयोज्यफलाश्रयत्वमूलकत्वेन फलस्यापि कर्मतया कर्तृप्रत्ययसमभिव्याहारदशायां शब्दाध्याहारवादे यथा स्वनिष्ठकर्मतानिरूपकत्वरूपसंसर्गविधया व्यापारविशेषणीभूतफलगतकर्मत्वभानं, यथा वार्थाध्याहारे फलनिष्ठकर्मतानिरूपकत्वविशिष्टो व्यापार इति प्रकारतया भानं, तथा कर्मप्रत्ययसमभिव्याहारदशायां शब्दाध्याहारे व्यापारविशेष्य-

भूतफलगतकर्मत्वस्य स्वनिरूपितकर्मतावत्त्वरूपसंसर्गविधया भानमर्थाध्याहारे च व्यापारनिरूपितकर्मत्वविशिष्टं फलमित्येवं प्रकारतया भानमित्याशयः ॥ **प्रकृतेपीति** ॥ पश्य मृगो धावतीत्याद्याख्यातविषयेपीत्यर्थः ॥

ननु पदजन्यपदार्थोपस्थितेरेव शाब्दबोधीयप्रकारताविशेष्यताख्यविषयताप्रयोजकत्वमित्येवंविधनियमानुरोधेनाध्याह्रियमाणपदजन्यपदार्थोपस्थितिमादाय प्रकारतानिर्वाहाय यत्र शब्दाध्याहारः पदैराश्रीयते, तत्र पदादनुपस्थितेप्यर्थे संसर्गतावत्प्रकारताया अपि स्वीकारे बाधकाभाव इत्यध्याह्रियमाणस्यार्थस्यैव प्रकारताम्भ्युपगच्छन्त्यर्थाध्याहारवादिन इत्येव वैलक्षण्यमस्तु । यत्र शब्दाध्याहारस्यासम्भवेन तादृशाध्याहारवादिनस्संसर्गत्वमाश्रयन्ते, तत्राध्याहारवादिनये प्रकारत्वमित्ययुक्तम् । उपायभेदेनोपेयवैगुण्यस्यायुक्ततया बोधवैगुण्यायोगात् । ततश्च पचतीत्यादौ फलगतकर्मत्वबोधनाय पश्य मृगो धावतीत्यादौ क्रियागतकर्मत्वबोधनाय च समभिव्याहारान्तरानपेक्षया स्वार्थसमर्पकस्यैवाध्याहाराङ्गीकारेण द्वितीयामात्रस्याध्याहर्तुमशक्यत्वात्तादृशकर्मतायास्संसर्गत्वस्यैवोभयवादेपि वक्तव्यत्वेनासङ्गतैव मतभेदप्रयुक्तमूलकारोपदर्शितव्यवस्थेत्यत आह ॥ **वस्तुत इति** ॥ **समवायस्यैवेति** ॥ ननु पदादुपस्थितस्य तस्य कथं संसर्गतेति चेदुच्यते । पदजन्यपदार्थोपस्थितिविषयस्य प्रकारताविशेष्यतान्यतररूपविषयतयैव भानमिति न नियमः । किन्तु पदादनुपस्थितस्य तथाविधविषयतया भानाभाव इति ॥ ततश्च शब्दान्तराध्याहारप्रयुक्तोपस्थितिविषयत्वासम्भवप्रयुक्तमिह समवायस्य संसर्गत्वमिति । ननु सिद्धस्य दृष्टान्तता, साध्यस्य दार्ष्टान्तिकतेति लोकव्यवहारः । प्रकृते च द्वयोरप्यप्रसिद्धत्वात्कथं दृष्टान्तदार्ष्टान्तिकभाव इत्यत आह ॥ **तत्र नव्यनैयायिकेत्यादि** ॥ इत्थं च वादिसम्मतत्वादस्य दृष्टान्तत्वमिति भावः । ननु पदसंस्कारवेलायां विशेषणविशेष्यभावाभावाद्विशेषणसमर्पकादित्ययुक्तमत आह ॥ **बोधकालेति** ॥ कर्मत्वेन सम्बन्धोत्तरं द्वितीयाप्रवृत्तिशङ्केति भावः ॥ **विलय एव स्यादिति** ॥ यत्तु मृगस्य कर्मत्वेपि न द्वितीयाप्रसक्तिः । यत्र कर्मत्वस्य प्रकारतया बुबोधयिषा तत्रैव द्वितीयाप्रवृत्त्यभ्युपगमात् । प्रकृते तु कर्मत्वस्य संसर्गतयैव भानस्याभीष्टत्वान्न तत्प्रसक्तिरिति तदसत् । कर्मत्वादिसंसर्गकनामार्थप्रकारकधात्वर्थविशेष्यकबोधस्याव्युत्पन्नत्वात् । अन्यथा तण्डुलः पचतीत्यादेरपि प्रयोगस्य साधुत्वापत्तेः ॥

**शतृसूत्रस्थेत्यादि** ॥ अपचतो धनं देवदत्तो देहीति शतृविधायकसूत्रस्थं भाष्यम् ॥ पच्यादयः क्रियाः कर्त्र्यो भवन्ति इति भूवादिसूत्रस्थमिति बोध्यम् । ननु प्रमाणोपहितत्वेपि कथमस्मदादीच्छाया अकिञ्चित्करत्वं तत्राह ॥ **ऋषीणामिति** ॥ एवं प्रमाणभूतमुनितात्पर्यविरोधे सत्यस्मदादीच्छा निष्प्रयोजनैवेत्याशयः ॥ **ईदृशे स्थले इति** ॥ कर्मत्वान्वयितावच्छेदकतापर्याप्त्यधिकरणधर्मावच्छिन्नबोधकप्रातिपदिकाद्द्वितीयेतिविभक्तिविधायकसूत्रार्थः । प्रकृते च धावनानुकूलकृत्याश्रयत्वविशिष्टं मृगत्वमवच्छेदकम् । तदवच्छिन्नबोधकता च सङ्घातस्य न तु मृगशब्दमात्रस्येति नास्ति द्वितीयाप्रसक्तिरित्याशयः ॥ **अनापत्तेरिति** ॥ यद्यपि कटं भीष्मं कुर्वित्यादिवत्प्रत्येकं कर्मतया क्रियान्वयेन द्वितीयोत्पत्त्या पार्ष्णिके परस्पराभेदबोधे नीलं घटमित्यादावपि नास्त्यनुपपत्तिः । तथापि राज्ञः पुरुषमानयेत्यादौ तदनुपपत्तिर्दुर्वारेत्याशयः ॥ **मूलेपि तथा व्युत्पन्नानामिति** ॥ यस्य यादृशी व्युत्पत्तिस्तस्य तादृशो बोधः । ईदृशेर्थे शक्तिर्नेत्यपि न, बोधजनकताया एव शक्तित्वात् । न च बोधजनकत्वग्रहाधीनो बोधो बोधाधीनं च बोधजनकत्वमित्यन्योन्याश्रय इति वाच्यम् । शक्तिग्रहाद्बोधो हि स्वस्य परकीयबोधजनकत्वं च शक्तिरित्यन्योन्याश्रयानवकाशात् । भ्रान्त्यभावेपि भ्रान्तविषयकज्ञानवद्बोधाभावेपि बोधजनकत्वज्ञाने बाधकाभावात् । न च नूतनकविविरचितवाक्यात्परकीयबोधाप्रसिद्ध्या शक्तिग्रहाभावेन प्राथमिकबोधानुपपत्तिरिति वाच्यम् । तद्वाक्यघटकपदघटितवाक्यान्तरार्थस्यानुभूतत्वेनान्वयव्यतिरेकाभ्यां तत्पदघटितविशिष्टे बोधजनकत्वस्य सुलभत्वादिति दिक् । ननु पश्य मृगो धावतीत्यादावेकवाक्यतास्वीकारे धावनस्य दृशिक्रियां प्रति विशेषणत्वेनाप्राधान्यात्क्रियाप्रधानमाख्यातमिति सिद्धान्तव्याघात इत्यत आह ॥ **क्रियायाः प्राधान्यमिति** ॥ **इति दिगिति** ॥ शृणु गायतीत्यादौ गानकर्तुः श्रावणविषयत्वानुपपत्त्या पश्य देवो वर्षतीत्यादौ वर्षणकर्तुर्देवस्य चाक्षुषविषयत्वानुपपत्त्या चेदृशक्रियाप्राधान्यमाश्रित्य कर्मतया गानवर्षणादेरेकवाक्यत्वेनैव क्रियान्तरान्वयस्य सार्वजनीनतया सर्वथा स्वीकारे बाधकाभावो लाघवं चेति दिगर्थः । ननु क्रियान्तरनिरूपितकर्तृत्वकर्मत्वातिरिक्तकारकत्वव्याप्यधर्मराहित्यमसत्त्वरूपमिति मूलकारीयनिष्कर्षे हरिं नमेच्चेत्सुखं यायादित्यादौ

नमनादेः करणत्वदर्शनेन तदनुपपत्तिरत आह ॥ **हरिं नमेदित्यादि** ॥ **न कारकत्वमिति** ॥ न कारकत्वव्याप्यकरणत्वमित्यर्थः । तथा प्रतीत्यभाव एवात्र बीजम् । नन्वेवमपि शोभनं पचतीत्यादौ पाकादेर्ज्योतिष्टोमेन यजेतेत्यादौ यागस्य च स्ववाचकधातूपात्तक्रियानिरूपितकर्मत्वकरणत्वयोरसत्त्वेन क्रियान्तरनिरूपितकर्तृत्वकर्मत्वातिरिक्तकारकत्वव्याप्यधर्मवत्तया तत्रासत्त्वरूपताभङ्गो दुर्वार एवेत्यत आह ॥ **नासत्त्वरूपतेति** ॥ स्ववाचकातिरिक्तपदजन्यप्रतीतिविषयः क्रियानिरूपितः कर्तृत्वकर्मत्वातिरिक्तो यो धर्मः कारकत्वव्याप्यस्तद्राहित्यमसत्त्वरूपत्वमिति विवक्षितमित्याशयः । वस्तुतस्सम्प्रदानत्वाभावो वापादानत्वाभावो वात्रासत्त्वरूपत्वमिति वक्तुमुचितम् ॥ **आद्यमेवेति** ॥ कर्तृत्वातिरिक्तनिरुक्तकारकशक्तिराहित्यमसत्त्वरूपत्वमिति सुवचमिति भावः ॥ **निष्ठयाभिधानादिति** ॥ तत्तत्पदार्थगता कर्मत्वादिशक्तिरनेकक्रियानिरूपिताप्येकैवाखण्डा, नानात्वे मानाभावात् । अत एव पक्त्वौदनो भुज्यत इत्यादौ न द्वितीया । ततश्च पक्कमोदनं भुङ्क्त इत्याद्युक्तविषये कथं द्वितीयाप्रवृत्तिरित्याशङ्काभिप्रायः । तत्तत्क्रियानिरूपिताभिन्ना एव कर्मतादिशक्तयः । अत एव सप्तमीपञ्चम्यौ कारकमध्ये इत्यनेन अद्य भुक्त्वायं द्व्यहे द्व्यहाद्वान्नं भोक्तेत्यादौ कारकशक्तिमध्यगतत्वेन सप्तमीपञ्चम्योरुपपत्तिः । ततश्च प्रकृते पचिनिरूपितायास्तस्या उक्तत्वेपि भुजिनिरूपिताया अनभिधानाद्द्वितीया सुवचेत्याशङ्कानिराकरणाभिप्रायः । फलाश्रयत्वादिरूपैव कर्मत्वादिशक्तिर्नातिरिक्तेति मतेपि निरूपकभेदेन भिद्यत एव सेति न क्षतिरिति बोध्यम् । **प्रकाशत इति** ॥ प्रधानक्रियावाचकधातूत्तरविहितनिष्ठादिना कर्मत्वादिकारकशक्तेरभिधाने गुणभूतक्रियानिरूपितापि तत्सजातीया कारकशक्तिरभिहितवन्नोद्भूता भवति, प्रधानक्रियावाचकधातूत्तरविहितैर्निष्ठादिभिरनभिहिता सा गुणभूतक्रियावाचकधातूत्तरविहितैस्तैरभिहिताप्यनभिहितवदुद्भूता भवत्युद्भूतकर्मत्वादिशक्तेरेव हि विभक्त्याद्युत्पत्तौ निमित्तमिति नास्ति तदंशे द्वितीयाद्युत्पत्तौ निर्बन्ध इत्याशयः । ननु मुनित्रयाननुगृहीतार्थबोधकयोरनयोर्हरिकारिकयोः कथं प्रामाण्यमित्याशङ्कां निराकर्तुमाह ॥ **स्वादुमि णमुलित्यादि** ॥ **भाष्ये इति** ॥

---

१. न कारकत्वमिति ॥ मूले "न क्रियाकारकभावेनेति न कारकत्वमिति न दोषः" इत्यधिकतया दृश्यमानं पाठमनुसृत्येदम् । इदानीन्तनपुस्तकेष्वयं पाठो न दृश्यते ॥

आच तुमुनः प्रत्ययास्समानाधिकरणे कारके वक्तव्या इत्येतद्वार्तिकप्रयोजनकथनावसरे इत्यादिः । ननु गुणप्रधानसन्निधावन्यतराभिधाने तदितरानभिधानमाश्रित्य कार्यप्रसक्तौ प्रधानक्रियानिरूपितकारकशक्तेः प्राबल्यात्तदनुरोधेन गुणभूतक्रियानिरूपितकर्मत्वादिशक्तेरभिधानानभिधाने भवत इति युक्तमुक्तहरिवचनादिप्रामाण्यात्। यत्र तु द्वयोरप्यनभिधानं तत्र कथमेकया विभक्त्या द्वयोरभिधानं स्यात्तत्राह ॥ **एवमिति** ॥ गुणशक्तेः प्रधानशक्त्यनुरोधमभिदधता हरिणा पक्त्वौदनं भुङ्क्त इत्यादौ गुणप्रधानभूतकारकशक्तिद्वयमपि सजातीयमेकप्रत्ययेन प्रतिपादयितुं युक्तमित्यर्थोऽप्यननुगृहीत एव तुल्यन्यायादित्याशयः ॥ **ग्रामाय गन्तुमित्यादि** ॥ गत्यर्थकर्मणीति द्वितीयाचतुर्थ्यावत्रेति द्रष्टव्यम् । ननु तुमुनन्तोपस्थाप्यगतिक्रियानिरूपितकर्मत्वस्याप्रधानतया तिङन्तोपस्थाप्यप्रधानीभूतेच्छानिरूपितकर्मत्वप्रयुक्तद्वितीयाया एव न्याय्यत्वान्निरुक्तहरिवचनविरोधेन कथं गुणभूतगतिकर्मत्वप्रयुक्तयोर्द्वितीयाचतुर्थ्योः प्रवृत्तिरिति चेत्सत्यम् । ईदृशप्रयोगप्रदर्शनपरभाष्यबलेनेच्छाकर्मीभूतधात्वर्थनिरूपिताया इच्छानिरूपितायाश्च कारकशक्तेर्युगपदभिधानप्रसक्ताविच्छाकर्मीभूतधात्वर्थनिरूपितकारकशक्तिप्रयुक्तमेव कार्यमित्यर्थोऽवगम्यते । अत एव वैकुण्ठे तिष्ठासतीत्येव, न तु वैकुण्ठमिति प्रयोगः। अत एव चाक्षैरक्षान्वा दुद्यूषतीत्यादयः प्रयोगा इति युक्तमेवोक्तोदाहरणे द्वितीयाचतुर्थ्योर्विधानमित्याहुः । ननु यत्र गुणप्रधानभूतक्रियानिरूपितकारकशक्त्योर्निरूपकभेदप्रयुक्त एव भेदस्तत्र भवतु द्वयोरप्येकया विभक्त्या प्रतिपादनम् । यत्र तु स्वरूपतो भेदो मूलकेनोपदंशमित्यादौ कर्मत्वकरणत्वयोस्तत्र कथमेकया द्वयोरभिधानमिति चेत्सत्यम् । प्रधानीभूतभुजिक्रियायां करणत्वेन सम्बन्धश्शाब्दः कर्मत्वेनोपदंशनक्रियायां सम्बन्धस्त्वार्थ इति मूलकशब्दात्तृतीयैव न द्वितीयेत्याहुः ।

केचित्तु शाब्द एवोभयत्रापि सम्बन्धस्तत्र कर्मत्वकरणत्वाभिधायकयोस्तृतीयाद्वितीययोर्युगपत्प्रवृत्तिविरोधेन परत्वस्य व्यवस्थापकत्वात्तृतीयैव । न च नियमपक्षे करणत्व एव तृतीयाप्रवृत्त्या कर्मत्वस्याधिक्यात्कथमिह तृतीया स्यादिति वाच्यम् । नियमस्य करणत्वाभावसामानाधिकरण्येन शक्त्यन्तरव्यवच्छेदकत्वेपि तत्समानाधिकरणशक्त्यन्तरव्यवच्छेदकत्वाभावात् । अत एव शत्रूनगमयदित्यादौ

कर्तृत्वरूपकर्मत्वरूपशक्तिद्वयाभिधायिनी द्वितीया प्रधानकार्यत्वात्तृतीयां बाधत इति स्पष्टं गतिबुद्धीतिसूत्रस्थाकर इत्याहुः ॥

**आवृत्त्या शाब्दान्वय इति** ॥ केचित्तु नात्र शब्दावृत्त्या गुणप्रधानयोश्शाब्दान्वयः । किन्त्वर्थावृत्त्यैव गुणप्रधानयोस्सम्बन्धः । तत्र पक्त्वौदनं भुङ्क्त इत्यादावादितः प्रधानक्रियासम्बन्धे धर्मिपारतन्त्र्येण पाश्चात्यो गुणक्रियासम्बन्धः । ग्रामं गन्तुमिच्छतीत्यादौ तु प्रथमं गुणभूतक्रियासम्बन्धः । पश्चादिच्छासम्बन्धः । न हि ग्रामो भूयादितीच्छति । किन्तु ग्रामगमनं मे भूयादिति धर्मिपारतन्त्र्येणान्वय इत्यस्य च स्वधर्मिणि यस्य पारतन्त्र्यं स्वधर्मिणो वा यत्र पारतन्त्र्यं तत्र स्वान्वय इति विनिगमनाविरहप्रयुक्तो भाष्यादिसम्मतो वाक्यार्थः । अयमपि शाब्द एव व्यञ्जनाखण्डनायैवंविधस्याप्यन्वयस्याभियुक्तैश्शाब्दत्वाङ्गीकारात् । कटं भीष्मं कुर्वित्यादौ स्वधर्मिभूतक्रियायां परतन्त्रे कटादौ पाश्चात्य एव भीष्मादिपदार्थपदसम्बन्धेनान्यव्यवच्छेदः । ईदृशान्वयस्य शाब्दत्वादेव समासस्याप्युपपत्तिः । इदं च वक्ष्यमाणवार्तिकप्रत्याख्यानस्वरसतो लब्धमित्याहुः ॥

**अत्र प्रयोगे इति** ॥ इष्यते ग्रामो गन्तुमित्यत्रेत्यर्थः ॥ **एतद्विरोधादिति** ॥ शाब्दसम्बन्धो विभक्तिनिमित्तमार्थिकश्च तदभावस्येत्युक्तौ ग्रामो गन्तुमिष्यत इत्यत्रापि गुणभूतगमिक्रियायां शाब्दान्वयमादाय तयोः प्रवृत्तेर्दुर्वारतया न कदापीत्यस्यासङ्गतिरिति भावः । उक्तमर्थं प्रमाणयति ॥ **भाष्ये इति** ॥ समभिव्याहृतेनेत्यस्य विवरणमनुप्रयुज्यमानेनेति ॥ सामानाधिकरण्यं क्रियाद्वारकम् । इत्थं च स्वप्रकृतिभूतधातुवाच्यक्रियासमानाधिकरणक्रियाश्रयीभूतानुप्रयुज्यमानधातुप्रकृतिकप्रत्ययोपस्थाप्ये कारके इत्यर्थः ॥ **न वक्तव्यमिति** ॥ भावे

---

१. **आहुरिति** ॥ अत्रेदं बोध्यम् । आवृत्त्या शाब्दोऽन्वय इति मूले शब्दावृत्त्यर्थावृत्त्योरन्यतरनिश्चायकं न किञ्चिदुपलभ्यते । अतो यस्या युक्तत्वं सैवास्तु । अतो मूलमतादन्यमतत्वस्फोरकं केचिदित्यादिलेखनं ग्रन्थकारशैलीविरुद्धम् । मतान्तरलेखन एव तथालेखनस्यान्यत्र दृष्टत्वात् । वस्तुतस्त्वावृत्तौ मूलकृतो न निर्भरः । एवंविधेषु वाक्यैकदेशन्यायेन वाक्यशक्त्यैव विशिष्टार्थबोध इति सिद्धान्तात् । अतो नात्रातीव प्रयतनीयमित्याहुः ।

प्रत्यये गुणभूते पच्याद्यावोदनस्य कर्मणो धर्मिपारतन्त्र्येणान्वयेऽपि भुजिक्रियानिरूपितप्रधानशक्तेरभिधाने तद्वदप्रधानशक्तेरप्यवभासान्न द्वितीया। कर्तरि क्त्वादिप्रत्ययेऽपि यद्यपि ओदनादिकर्मधर्मीभूतभुजिक्रियायां धर्मिपारतन्त्र्येणान्वितपाकादौ धर्मपारतन्त्र्येणान्वये मानाभावात्पचिकर्मत्वाभावान्न द्वितीया, तथापि धर्मिणः पारतन्त्र्यं यत्रेति व्युत्पत्त्याश्रयणे यतः पाकधर्मिकस्यौदनादिकर्मणो भुजिक्रियायामन्वयो न सम्भवति। कर्तृपारतन्त्र्येणान्वितपाकादिपारतन्त्र्यमुपादाय भुजिक्रियायामन्वये मानाभावात्। अतो भुजधातुप्रकृतिकेन कर्मप्रत्ययेनाभिधानायोगात् द्वितीया स्यादिति बोध्यम्॥ **उभयत्र शाब्दान्वय एवेति**॥ एकत्र शाब्दिकः परत्रार्थिक इति न लभ्यत इति भावः। ननु तत्तात्पर्यकमेवेदं किं न स्यादत आह॥ **वचनारम्भ इत्यादि**॥ **एषां प्रयोगाण**ामोदनं पक्त्वा भुज्यत इत्यादीनाम्॥ **उपपत्त्यभावादिति**॥ कर्मप्रत्ययान्तसमभिव्याहृतानां क्त्वाद्यन्तानां कर्माभिधायकत्वादनभिहितकर्मत्वप्रयुक्तायास्तादृशद्वितीयाया उपपत्त्यभावादित्यर्थः। एवं चारम्भे प्रत्याख्याने च गुणप्रधानयोरेकैवान्वयसरणिः। प्रधानानुरोधाच्च गुणशक्तेरवभासानवभासावित्येव प्रत्याख्यातुर्भगवतो भाष्यकारस्याशयो न त्वन्वयवैचित्र्यमूलकतया प्रयोगनिर्वाह इति, प्रत्याख्यानस्यारम्भविरुद्धफलकत्वेनासङ्गतत्वापत्तेरिति वस्तुस्थितिः। ननु प्रधानानुरोधाद्गुणशक्तेरभिधानानभिधानयोरपूर्वतया कल्पनामाश्रित्य वचनप्रत्याख्यानापेक्षया निरुक्तकल्पनामुपेक्ष्य वचनारम्भ एव युक्त इत्यत आह॥ **स्वभाव इति**॥ शब्दशक्तिस्वभावसिद्ध एवायमर्थो गुणस्य प्रधानानुरोधित्वमिति न त्वपूर्वकल्पनेति भावः। **तद्वदेवेति**॥ अयुक्तमेवेत्यर्थः। **कां क्रियामिति**॥ इष्यत इत्यध्याहारेण साधुत्वमिच्छार्थोपपदकाद्धातोश्छिदेस्तुमुन्प्रत्यय इति वक्तव्यम्। इत्थं च निपातकर्तृत्वाभावादिदमुदाहरणं चिन्त्यमिति भावः॥ न च निपातस्य न युज्यत इत्यर्थकतया शकधृषेत्यादिसूत्रेणाहार्थिकत्वात्तत्सिद्धिरिति वाच्यम्। साहचर्येण धातोरेव तत्र ग्रहणादर्थग्रहणस्यास्तित्वेनैव सम्बन्धाच्च। न च तुमुन्ण्वुलोरित्यनेन तत्सिद्धिरिति वाच्यम्। साध्यत्वेन प्रतीयमानपदार्थस्यैव क्रियात्वेन निपातार्थस्य तथा प्रतीत्यभावेन क्रियात्वाभावात्। क्रियान्तरप्रयोजनकत्वस्याभावाच्च। क्रियाप्रयोजनकक्रियावाचकोपपदकत्वनिबन्धनस्य तुमुनो दुर्लभत्वात्। अतो नात्र निपातमादाय तुमुनस्साधुत्वमित्याहुः॥

**उद्देश्यत्वं भासत इति ।।** ननूद्देश्यत्वनिवेशो व्यर्थः । न चोद्देश्यताया लक्षणघटकत्वाभावे काशीं गच्छन् पथि हत इत्यत्र कर्मत्वानुपपत्तिः । काश्याः प्रकृतधात्वर्थफलभूतसंयोगाश्रयत्वाभावादिति वाच्यम् । भूतले पातितो घटो न पतित इत्यादौ साक्षात्कर्तृद्वारकपरम्परया व्यापाराश्रयत्वाभावेपि वक्तृविवक्षामादायाधिकरणत्ववत्प्रकृतेपि निर्वाहे कर्तुरुद्देश्यताया अनुपयोगात् । तण्डुलं पचति पाको न संवृत्त इत्यत्रापि वक्तृविवक्षैव कर्मत्वसम्पादिकेति नास्ति कर्तुरुद्देश्यत्वनिवेशस्योपयोगो नापि प्रमितं तद्भानमिति चेत्तर्हि न ब्राह्मणं हन्यादित्यादिना ब्राह्मणोद्देश्यकतन्निष्ठप्राणवियोगजनकव्यापारस्यात्यन्तिकप्रत्यवायजनकत्वमन्योद्देश्यकतादृशव्यापारस्य चान्यादृशप्रत्यवायजनकत्वमिति वैजात्योपपत्तये कर्मलक्षणे लक्ष्यगततदवभासप्रयुक्तोऽयमुद्देश्यत्वनिवेशः । अत एव हरिं पूजयेदित्यादौ हर्याद्युद्देश्यकप्रीतिजनकव्यापारस्यैव प्रवर्तनाविषयत्वेनाभ्युदयहेतुत्वम् । न तु तदनुद्देश्यकस्येति शिष्टसमाचारः । रथो ग्रामं गच्छतीत्यादावचेतने त्वारोपविषयो गौणः प्रयोग इति वदन्ति ।

कर्तुरीप्सिततममित्येतत्सूत्रविषयकर्मप्रत्ययान्तप्रयोगेषूद्देश्यताभाने प्रमाणमप्यस्तीत्याह ।। **अत एवेति ।।** ननु चतुर्थ्या उद्देश्यत्वबोधकतानियमे तद्विषये प्रवर्तमानाया अपि द्वितीयायास्तद्बोधकत्वमिति युज्यते वक्तुम् । तदेव कथमित्यत आह ।। **चतुर्थ्या इति ।।** सम्प्रदानचतुर्थीविभक्तेरुद्देश्यत्वबोधकतायां नास्ति विप्रतिपत्तिरिति भावः ।। **फलान्तरमिति ।।** तमब्ग्रहणप्रयुक्तमित्यर्थस्तदाह ।। **ईप्सिततमपदाभावे इति ।।** कर्तुराप्तं कर्मेति न्यासमाश्रित्येप्सिततमानीप्सितपदघटितसूत्रद्वयप्रत्याख्याने इत्यर्थः ।। **धातूपस्थाप्येति ।।** कर्तुराप्तं कर्मेत्युक्तौ सम्बन्धो धात्वर्थः । निष्ठाप्रत्ययश्चाश्रयवाची, स च सम्बन्धः केनेत्याकाङ्क्षायामौचित्यात्क्रिययेति लभ्यते । सम्बन्धश्च तादृशव्यापारवाचकधातूपस्थाप्यफलाश्रयत्वम् । इत्थं कर्तृनिष्ठव्यापारवाचकधातूपस्थाप्यफलाश्रयं कर्मेत्यर्थस्य पर्यवसानात्तथाविधकर्मत्वस्याग्निमाणवकाद्युभयसाधारणतया निरवकाशेनापादानत्वेन बाधे तद्विषये द्वितीयान्तप्रयोगदौर्लभ्यमिति भावः । ननु कर्तुराप्ततमं कर्मेत्यस्तु । तमपा च फले प्रधानव्यापारप्रयोज्यत्वरूपातिशयो बोध्यते । ततश्च कर्तृनिष्ठव्यापारप्रयोज्यफलाश्रयं कर्मेत्यर्थस्य लाभादग्न्यादिनिष्ठसंयोगात्मकफलस्य कर्मभूतमाणवकादिनिष्ठ-

धावनादिरूपव्यापारप्रयोज्यत्वेपि कर्तृनिष्ठतदभावानुकूलव्यापारप्रयोज्यत्वाभावेन कर्मत्वाप्राप्त्या व्यर्थमेवेप्सितानीप्सितयोः पृथगुपादानम् । न च कर्तृग्रहणादेव प्रयोज्यत्वलाभोऽस्तु, मास्तु तद्धितग्रहणम् । अन्यथा धातुमात्रस्य कर्तृव्यापार-वाचकत्वाविशेषात्तद्वैयर्थ्यं स्पष्टमेवेति वाच्यम् । फले कर्तृव्यापारवाचकधातूपात्त-स्वरूपविशेषसम्पादनेन नदी वर्धते वर्षेण माषेष्वश्वं बध्नातीत्यादौ धात्वन्तरोपात्त-तादृशव्यापारप्रयोज्यवृद्ध्यादिरूपफलाश्रयीभूतनद्यादीनां कर्मत्ववारणेन कृतार्थस्य कर्तृग्रहणस्य फलांशे प्रधानीभूतव्यापारप्रयोज्यत्वरूपविशेषसम्पादकत्वे मानाभावा-दिति चेत्सत्यम् । सन्प्रत्ययाभावेपि तमपा फलगतं प्रधानव्यापारप्रयोज्यत्वं बोध-नीयमुत तदाश्रयगतमुद्देश्यत्वं वेत्यत्र विनिगमनाविरहादुद्देश्यत्वस्यैव बोधकत्वे तदुभयबोधकत्वे वा सूत्रद्वयस्याप्यावश्यकतया नास्ति विशेषः । सिद्धान्ते तु सन्प्रत्ययेनोद्देश्यत्वस्य बोधनादतिरिक्तं तादृशप्रयोज्यत्वमेव तद्धितेन बोध्यत इति मूलकाराशयमुद्भावयन्ति ॥

यत्तु सूत्रद्वयारम्भेपि ईप्सिततमं कर्मेत्येवास्तु, मास्तु कर्तृग्रहणम् । तमपा प्रयोज्यत्वलाभेपि यत्किञ्चिद्व्यापारप्रयोज्यत्वस्य फलमात्रसाधारणतया संयोगेपि सत्त्वेनाग्नेर्माणवकं वारयतीत्यादौ दोषध्रौव्यात्सामर्थ्येन प्रधानव्यापार-प्रयोज्यत्वलाभादभीष्टसिद्धिरिति तदसत् । व्यापारांशे प्राधान्यबोधनेन कृतार्थस्य तमप्प्रत्ययस्य फले तादृशव्यापारप्रयोज्यत्वसम्पादकतायां मानाभावेन प्रधानव्या-पारवाचकधातूपात्तफलाश्रयं कर्मेत्यर्थापत्तौ नदी वर्धते वर्षेणेत्यादौ प्रागुपदर्शितदो-षध्रौव्यात् । न च कर्तृग्रहणतमब्ग्रहणयोः फलांशे प्रधानव्यापारप्रयोज्यत्वबोधने-नाग्नेर्माणवकं वारयतीत्यादावग्नेः कर्मत्वनिवारकतया कृतार्थत्वात्तथाविधव्यापारवा-चकधातूपात्तत्वस्य दुर्वचत्वेन प्रयागात्काशीं गच्छति नदी वर्धते वर्षेणेत्यादौ कर्मत्वापत्तिर्दुर्वारेति वाच्यम् । प्रत्यासत्तिवशादेव तदर्थसिद्धेः । किञ्च फले प्रधानव्यापारप्रयोज्यत्वबोधनेपि माणवकादिनिष्ठधात्वन्तरोपात्तप्रधानव्यापारप्रयो-ज्यत्वस्याग्न्यादिनिष्ठसंयोगादावक्षतत्वेनाग्नेर्माणवकं वारयतीत्यादौ दोषस्य तदव-स्थतया प्रत्यासत्तिबोधनमन्तरेण तमब्ग्रहणस्य साफल्यायोगाच्च । यदपि कर्मग्रह-णमनर्थकमधिशीङ्स्थासां कर्मेत्यतस्तदनुवृत्तिसम्भवात् । आधारग्रहणन्तु नानुवर्तते तमब्ग्रहणात् । तद्धि प्रयोज्यत्वबोधनद्वारा कूपादन्धं वारयत्यग्नेर्माणवकं वारयती-

त्यादौ कूपादेः प्रधानव्यापारप्रयोज्यफलाश्रयत्वाभावेन कर्मत्ववारणाय आधारपदानुवृत्तौ च कूपादेराधारत्वाभावादेव तदप्राप्तौ व्यर्थमेव तमब्ग्रहणं स्यात्ततः कर्मेत्यनुवृत्तौ कर्मग्रहणमाधारनिवृत्त्यर्थमिति परममूलोक्तमयुक्तमित्याहुः । तदपि न युक्तम् । कर्मग्रहणाभावे साक्षात्फलाधारग्रहणेन हरिं भजतीत्यादौ कर्मत्वबोधकतया चरितार्थस्य तमपः फलांशे प्रधानव्यापारप्रयोज्यताबोधकतायां मानाभावेन निरुक्तस्थले कूपादीनां कर्मत्वापत्तावनिष्टप्रसङ्गादित्यलम् ॥ **व्याख्यान देवेति** ॥ कर्तुरीप्सिततममिति सूत्रानन्तरं तथायुक्तमित्यनीप्सितग्रहणमन्तरा न्यासेप्यारम्भसामर्थ्यादनीप्सितयोर्द्वेष्योदासीनयोर्ग्रहणं सिद्ध्यतीति भावस्तदाह ॥ **ईप्सिततमभिन्नत्वादिति** ॥

ननूद्देश्यत्वानुद्देश्यत्वकृतबोधवैरूप्यस्यानुभविकत्वात्कथमेकरूप इति मूलकारो मन्यते तत्राह ॥ **इच्छाविषयत्वेत्यादि** ॥ द्वयोरपि विनिगमनाविरहाद्व्याच्यवृत्त्या प्रतीयमानेच्छाविषयत्वानिच्छाविषयत्वाभ्यां न बोधवैरूप्यम् । किन्तु तदुपलक्षिताभ्यामुद्देश्यत्वानुद्देश्यत्वाभ्यामित्यर्थः ॥ **करणवाचकत्वादिति** ॥ पशुना रुद्रं यजत इत्यादौ सम्प्रदानवाचकत्वाच्चेत्यपि बोध्यम् ॥ **शक्तिविशेषरूपस्येति** ॥ कर्मत्वादिरूपस्येत्यर्थः । सम्बन्धश्शक्तिरेव वेति हरिवचनमत्रार्थे प्रमाणम् । तच्चाखण्डमौपाधिकभेदाच्च भिन्नत्वव्यपदेशस्सप्तमीपञ्चम्यावित्यादौ । अत एव धवखदिरौ छिन्धीत्यादावेकमेव कर्मत्वमुभयपर्याप्तं द्वितीयया बोध्यत इत्यभियुक्ताः ॥ **विशेषणत्वं चेति** ॥ ततश्च हरिं भजतीत्यादौ कर्मत्वशक्त्याश्रयीभूतहर्युद्देश्यकः प्रीत्यनुकूलो वर्तमानकालिक एककर्तृको व्यापार इत्यादिरर्थ इति भावः ॥ **तत्फलभूते इति** ॥ हर्यभिन्नाश्रयनिष्ठप्रीत्यनुकूलो व्यापार इत्याद्यर्थे समन्वयवशादुपपन्ने व्यापारप्रयोज्यप्रीत्याश्रयो हरिरित्याद्यर्थस्य फलितत्वादिति भावः । ननु कर्मत्वादिशक्तीनां स्वरूपेण विभक्त्यर्थत्ववादे वाच्यार्थस्यैव वैलक्षण्यमस्तीति नेदं युक्तमत आह ॥ **इदमुपलक्षणमिति** ॥ **नियतत्वेनेति** ॥ फलाश्रयादिरूपार्थस्य कर्तुरित्यादिना कर्मादिशब्दैस्सङ्केतितत्वादिति भावः ॥ **संज्ञाप्रकारिकैवेति** ॥ संज्ञाशब्दानामानुपूर्व्या एव प्रवृत्तिनिमित्तत्वादित्याशयः ॥ **कर्मत्वादिनेति** ॥ विशेष्यतया कर्मत्वादिशक्तीनामुपस्थितावनुभवस्मृतिशाब्दबोधानां समानाकारकत्वनियमात्तत्संज्ञाप्रकारककर्म-

त्वादिविशेष्यक एव बोध इति वाच्यवृत्त्यैव बोधवैलक्षण्यमित्याशयः । अन्यत्रेत्यस्य मञ्जूषायामित्यर्थः । नन्वाधारस्य विभक्तिवाच्यत्वे तन्निष्ठधर्मस्याधारतायाः स्वरूपसम्बन्धविशेषरूपायास्तत्तदाधारानतिरेकेण गौरवं सममेवेति चेत्तत्राह ॥ **आधारता त्विति** ॥ **अखण्डैवेति** ॥ नन्वाधारताया एकत्वे स्पर्शाधारतावति वायौ रूपाधारताया अपि सत्त्वाद्वायुः स्पर्शवानितिवद्रूपवानित्यपि प्रतीतिः प्रसज्येतेति चेन्न । सम्बन्धसत्तायास्सम्बन्धिसत्तानियामकत्वेन रूपप्रतियोगिकत्वविशिष्टसमवायस्यैव रूपवत्तानियामकतया वायौ स्पर्शप्रतियोगिकत्वविशिष्टसमवायस्य सत्त्वेपि तथाविधसमवायस्याभावेन तत्प्रतीत्ययोगात् । किञ्च रूपवानिति प्रतीतौ रूपनिरूपितत्वविशिष्टैवाधारता विषयः । तादृशी चाधारता नास्ति वायाविति न तथाविधप्रतीतिरित्याहुः ॥ **अखण्डमिति** ॥ न ह्याधारतैवाखण्डा, न त्वाधारतात्वमित्यत्र किञ्चिद्विनिगमकमुपलभ्यत इति भावः ॥ **अत्रापीति** ॥ भाष्येपीत्यर्थः ॥ **धर्मभेदमपन्नैवेति** ॥ धर्मधर्मिणोरभेदाभ्युपगमादिति भावः ॥ **लादेशशत्रादेरिति** ॥ लः कर्मणि चेत्याकारकैकसूत्रबोधितलकारशक्त्यनुरोधिनी खलु शत्रादेस्तिङां चार्थवत्ता तत्र नास्ति सम्भवो वैषम्योपपादनस्येति भावः । न च शत्रादिविषये पचन्तं देवदत्तमित्यादौ सामानाधिकरण्योपपत्तये धर्मिणि लक्षणा, तिङान्तु कृतावेव शक्तिरिति युज्यत एव वैषम्यमिति वाच्यम् । कृद्विषये वृत्तिद्वयस्वीकारस्यावश्यकत्वे लकाराणां कृतिमात्रशक्तिकल्पनाप्रयुक्तलाघवस्याकिञ्चित्करत्वात् । अतो न युक्तं तिङां कृत्यर्थकत्वमित्याशयः ।

ननु नटस्य शृणोतीत्यादौ क्रियाजनकत्वरूपकारकत्वस्य दुर्वचत्वान्नियमपूर्वकविद्यास्वीकाराभावेनापादानत्वस्याप्रसक्त्या तदविवक्षाया अयोगाच्च परिगणनाभावेपि कथमकथितं चेति कर्मत्वप्रसङ्ग इत्यत आह ॥ **गीतद्वारेति** ॥ **उभयविधापीति** ॥ अविवक्षा च प्रतिपादनेच्छाराहित्यम् । तच्च प्रसक्तवदप्रसक्तस्यापि सम्भवत्येवेति विनिगमनाविरहादुभयविधापि गृह्यत इत्याशयः ॥ **अनिष्टत्वबोधनादिति** ॥ अन्यथा नटाच्छृणोतीत्यस्याप्यनुपयोगे प्रसक्त्या सूत्रोपात्तमुपयोगग्रहणमव्यावर्तकं स्यादिति सूत्रारम्भे प्रत्याख्याने च तदनभिधानं फलवैगुण्याभावायेति भावः ॥ **गां कर्मकं पयः कर्मकं चेति** ॥ वक्ष्यमाणरीतेरकथितसूत्रबोधितकर्मत्वशक्तेरपि स्वरूपत एव भानमित्याशयः ॥ **पयस एवेति** ॥ द्वयो-

रनीप्सिततमत्वे कर्तुरित्यनेनैव गोपयसोरुभयोरपि कर्मत्वमित्याशयः । ननु दुहेर्विभागानुकूलव्यापारानुकूलव्यापारवाचकत्वेपि कर्तृनिष्ठव्यापाराधीनविभागानुकूलव्यापाररूपफलाश्रयत्वस्य गोरेव सत्त्वेन कथं पयसः कर्तुरित्यनेन कर्मत्वं स्यादिति चेन्न।गोनिष्ठत्यजनात्मकव्यापारजन्यस्यापि पयोनिष्ठविभागस्य जन्यजन्यसाधारणीभूतगोपनिष्ठप्रेरणाप्रयोज्यतायां बाधकाभावेन द्वयोरपि कर्तुरित्येतत्सूत्रविषयत्वस्य सुवचत्वात् ॥ **सूत्रद्वयेति** ॥ हेतुमण्णिच्प्रकृतिभूतधातूपस्थाप्ययोः फलव्यापारयोर्द्वयोरपि प्रधानीभूतप्रेरणात्मकणिजर्थव्यापारप्रयोज्यत्वाविशेषात्तदाश्रययोर्द्वयोरप्युद्देश्यत्वे कर्तुरित्यनेन सिद्धिरन्यतरस्यानुद्देश्यत्वे तथायुक्तमित्यनेन तस्य कर्मत्वमिति बोध्यम् ॥ **तद्ध्वनयन्निति** ॥ गां दोग्धि पय इत्यादावपादानत्वकर्मत्वोभयविवक्षायां परया कर्मसंज्ञया विप्रतिषेधशास्त्रवशादपादानसंज्ञाया बाधात् द्वितीयाया एव प्रवृत्तिरित्यभिप्रायकमपादानमुत्तराणि कारकाणि बाधन्त इति भाष्यम् । तत्र पञ्चकं प्रातिपदिकार्थ इति पक्षे कारकशक्तेर्विभक्तिद्योत्यतया द्योत्यार्थस्य प्रकृत्यर्थं प्रति विशेषणत्वावश्यम्भावाच्छक्तिद्वयप्रकारको बोध उपपद्यते । कारकं विभक्त्यर्थ इति पक्षे तूभयविवक्षायां प्रकृत्यर्थस्य विभक्तिवाच्यतया विशेष्यभूतयोर्द्वयोरपि कारकयोर्युगपदन्वयसम्भवात्तयोरेकविभक्तिवाच्ययोः परस्परान्वयायोगाच्च बोधानुपपत्त्या पञ्चकपक्ष एवैतादृशे विषये भाष्यकृत्सम्मत इत्याशयः ॥ **अपादानत्वकर्मत्वशक्त्योरिति** ॥ ननु शक्तिद्वयस्य यौगपद्येन विवक्षायामेकया विभक्त्या प्रत्येकं तत्तदर्थबोधकत्वेन नियमिततया कथमुभयोश्शक्त्योर्बोधस्स्यादत आह ॥ **ईदृशे विषये इति** ॥ **द्वितीयैवेति** ॥ कर्मणि द्वितीयेत्यादीनां कर्मत्वाभावसमानाधिकरणकारकान्तरबोधकत्वाभावविधयैव नियामकत्वम् । न तु तत्समानाधिकरणकारकान्तरबोधकत्वाभावरूपेणेति भावः । अत्रापीदमेव भाष्यं प्रमाणम् । इत्थं च गां पयो दोग्धीत्यादावेकव्यापारवाचकताया-मुभयविवक्षणे कर्मत्वापादानत्वोभयशक्तिमद्द्वीप्रतियोगिकः कर्मत्वशक्तिमत्पयोनुयोगिकश्च यो विभागस्तदनुकूलः कर्तृत्वशक्तिमद्गोपनिष्ठो वर्तमानकालिको व्यापार इत्यादिरर्थ इति निष्कर्षः ॥

अत्र केचित् । फलतावच्छेदकसम्बन्धेन फलाश्रयत्वं कर्मत्वम् । न तु यथाकथंचित् । अत एव ग्रामं गच्छतीत्यादावनुयोगितैव सम्बन्धस्तेन संयोग-

जनकगम्यादिसमभिव्याहारे प्रतियोगितासम्बन्धेन तदाश्रयस्य देवदत्तादेर्न कर्मत्वम्। दुहेरप्यनुयोगितैव फलतावच्छेदकस्सम्बन्धः। ततश्च गोरनुयोगितासम्बन्धेन विभागाश्रयत्वाभावात्कथमिह कर्मत्वापादानत्वयोर्विवक्षा। यदि भाष्यप्रामाण्यादिह दुहेः प्रतियोगित्वमपि फलतावच्छेदकसम्बन्धः, तर्हि सर्वत्रैव कर्मत्वप्रसक्तेरपादानत्वमनवकाशमेव स्यादिति परबाध्यत्वमयुक्तम्। यदि तु विवक्षातः कारकाणीति सिद्धान्तात्कर्मत्वाविवक्षायामपादानसंज्ञायाश्चरितार्थत्वाद्यौगपद्येन विवक्षायां परत्वेन कर्मसंज्ञाया अपादानसंज्ञाबाधकत्वमित्युच्यते, भवतु तर्हि विरोधो हि परस्य बाधकत्वे बीजम्। विरोधश्च सूत्रारम्भबलादाकडारीयसंज्ञानां स्वरूपत एवेत्यवश्यमभ्युपेयम्। ततश्च संज्ञानामिव तत्प्रयुक्तार्थविशेषाणामपि तथाविधो विरोधो न्यायप्राप्त इति कथमीदृशे विषये संज्ञाद्वयप्रतिपाद्ययोः कारकविशेषयोरन्यतरसंज्ञाप्रयुक्तया विभक्त्या प्रतिपादनं स्यात्। ग्रामं गमयति देवदत्तमित्यादौ गतिबुद्धीति सूत्रविषये कर्तृसंज्ञायाः कर्मसंज्ञोपजीव्यतया ग्रहणादक्षैरक्षान्वा दीव्यतीत्यादौ दिवः कर्म चेति सूत्रविषये चकारबलाच्च संज्ञयोस्समावेशबोधनेन विरोधाभावात्तत्प्रयुक्तविशेषाणामप्यविरोधेन बोधविषयत्वं युक्तम्। धनुषा विध्यति गां पयो दोग्धीत्यादौ चापादानसंज्ञाविरुद्धकरणादिसंज्ञाप्रयुक्तया विभक्त्या स्वबोध्यकरणत्वादिसामानाधिकरण्येन त्वभिधानमसमञ्जसमेवेत्याहुः॥

---

१. आहुरिति॥ परे तु गम्यादौ समवायस्य फलतावच्छेदकसम्बन्धत्वाङ्गीकारेऽपि देवदत्तादेर्न कर्मत्वप्रसक्तिः। परया कर्तृसंज्ञया बाधात्। एवं दुह्यादावपि समवाय एव तादृश इति गोः कर्मत्वं प्राप्तम्। विभागावधित्वादपादानत्वमपीत्युभयविवक्षा सुलभा। न चैवमपादानत्वस्यानवकाशत्वात्परबाध्यत्वोक्तिरसङ्गता स्यादिति वाच्यम्। अनुयोगितायाः फलतावच्छेदकसम्बन्धत्वं वदतस्तत्रापि तदसङ्गतेस्तुल्यत्वात्। विभागजन्यसंयोगस्य पतत्यर्थत्वे विभागस्य फलत्वाभावेन कर्मत्वाप्राप्त्या तत्रापादानसंज्ञायाश्चरितार्थ्याच्च। वस्तुतस्तु सम्बन्धविशेषनिवेशो नोपयुक्तः। फलाश्रयत्वेनोद्देश्यत्वं कर्मत्वमित्यस्यावश्यवक्तव्यतायाः अन्यत्र प्रतिपादितत्वेन तत एवाभीष्टसिद्धेः। अत एव गोर्विभागाश्रयत्वेन प्राप्तकर्मत्वं पयोनिष्ठविभागीयसम्बन्धस्यैव फलतावच्छेदकत्वेन निवार्य तत्त्वेनानुद्देश्यत्वाच्चेति हेत्वन्तरकथनं मञ्जूषायां स्वरसत उपपद्यते। अस्यावश्यकता च कलायां स्फुटीकृतेति बोध्यम्। न चैवं गोः पयो दोग्धीति प्रयोगानुपपत्तिः, कर्मसंज्ञया बाधादिति वाच्यम्। कर्मत्वस्यानुद्भूततया विवक्षणेनादोषात्। उद्भूतत्वेन विवक्षायां तु कर्मसंज्ञैव। अत्र चेदमेव भाष्यं मानम्। न च संज्ञयोर्विरोधे तन्निमित्तार्थयोर्विरोधो न्यायसिद्ध इति कथं तयोस्सामानाधिकरण्यमिति वाच्यम्। तेषां विरोधे

अन्येनासिद्धेरिति ।। नन्वेकव्यापारवाचकतायामपादानत्वकर्मत्वोभय-विवक्षाप्रतिपादनपरेणाकडारसूत्रस्थभाष्येण प्रतियोगितया विभागात्मकफलाश्रयस्य गोशब्दार्थस्य कर्तुरित्यनेन कर्मत्वबोधनादिदमयुक्तम्। न च कर्तुरित्येतत्सूत्र-विधेयकर्मताया उद्देश्यघटितत्वेन गोपदार्थस्येहोद्देश्यत्वाविवक्षणादप्रवृत्तिरेव तादृश-कर्मत्वस्येति वाच्यम्। उद्देश्यत्वाविवक्षणेपि विषं भुङ्क्ते इत्यादिवत्तथायुक्त-मित्यनेन प्रकृतेपि कर्मताया दुर्वारत्वादिति चेन्न। अपादानत्वाविवक्षायामित्यस्य कर्तुरीप्सिततमं तथा युक्तमित्येतत्सूत्रद्वयविधेयकर्मत्वाविवक्षोपलक्षकत्वेनादोषात्। ननु कारकद्वितीयया सर्वत्राखण्डातिरिक्तकर्मत्वशक्तिपुरस्कारेणैव बोधस्याभीष्टतया कर्तुरित्यादिसूत्रबोधितायाः प्रकृतसूत्रबोधिताया वा संज्ञायाः कर्मत्वशक्तिबोधने विशेषाभावेन सूत्रवैयर्थ्यस्य स्पष्टत्वात्कथमावश्यकत्वोक्तिरित्यरुचेराह ।। **किं चेति ।। शक्तिमत्त्वेनेति ।।**

केचित्तु कर्मणि द्वितीयेत्यादीनां लोकानुभवसिद्धतत्तदर्थविषयकबोध-प्रयोजकशक्तिनिर्णायकत्वमेव। न त्वपूर्वार्थविषयकशक्तिनिर्णायकत्वमनुपादेयता-पत्तेः। ततश्च द्वितीयादीनां सार्वजनीनानुभवानुरोधेनाश्रयत्वादिप्रकारकतत्तदर्थ-विषयकशक्तिकल्पनैव न्याय्या, न तु कर्मत्वादिशक्तिपुरस्कारेण, तथाविधबोधस्य शाब्दिकमात्रविषयतया तदनुरोधेन शक्तिकल्पनायाः सहृदयोद्वेजकत्वात्। अतः कथं तत्तच्छक्तिप्रकारको बोध इति वक्तुं युज्यते। किञ्च षष्ठ्यपवादत्वमात्रेण द्वितीयायास्सम्बन्धबोधकत्वमनुचितमित्यपि न युक्तम्। क्रियाकारकयोरभिसम्ब-न्धस्य द्वितीया वाचिकेति द्वितीयाश्रितेति सूत्रस्थभाष्यानुरोधेन कारकविभक्तीनां सम्बन्धबोधकताया अभीष्टत्वात्। कर्मणि द्वितीयेत्यत्र तत्तद्रूपेणोपस्थितेषु द्विती-

---

मानाभावात्। अत एव गमयति चैत्रमित्यत्र कर्मत्वकर्तृत्वयोर्भवदभिमतं सामानाधि-करण्यं सिद्धयति। न च कर्तृत्वस्य कर्मत्वोपजीव्यतया न विरोध इति वाच्यम्। ण्यन्ता-वस्थायां कर्तृत्वस्य तदुपजीव्यत्वाभावात्। न च विवक्षाभेदेन प्रयोगद्वयनिर्वाहेऽकथितं चेति सूत्रं व्यर्थमिति वाच्यम्। तद्वैयर्थ्योपपादकतयैवैतद्ग्रन्थप्रवृत्तेः। तस्मान्मूलग्रन्था-शयवर्णनपरशब्दरत्नग्रन्थव्याख्यानावसरेऽयं प्रयासो विफल एव। किञ्च अक्षान् दीव्यतीत्यस्याक्षैर्दीव्यतीत्यर्थेऽसाधुत्वस्य पूर्वमुपपादितत्वेन तस्याविरोधे दृष्टान्तत्वकथनं सर्वथाऽसङ्गतमेवेति सुधियो विभावयन्त्वित्याहुः।

यायाश्शक्तिकल्पनायां नानार्थकता कर्मपदावृत्तिश्चेति परमवशिष्यते, तदिह सोढव्यमेव लोकानुभवानुरोधित्वादित्याहुः ।

ननु कर्मप्रत्ययसमभिव्याहारे फलस्यैव प्राधान्याद्व्यापारविशेषणफलाश्रयत्वमसम्भवीत्याह ॥ **कर्तृप्रत्ययेत्यादि** ॥ **प्रधानधात्वर्थेति** ॥ धात्वर्थगतं प्राधान्यं च विशेष्यत्वानिरूपकत्वम् । इत्थं च प्रधानफलाश्रयत्वं प्रधानकर्मत्वं, फले प्राधान्यं च फलनिरूपितविशेषणताराहित्यमिति भावः । **गर्गाणां तत्त्वमिति** ॥ "दुहियाचिरुधिप्रच्छिछिञासुपयोगनिमित्तमपूर्वविधौ, ब्रुविशासि गुणेन च यत्सचते तदकीर्तितमाचरितं कविनेति" भाष्यकृत्परिगणितेषु दुहादिषु दण्डेरपरिगणितत्वेन बलात्कारपूर्वकस्वत्वनिवृत्तिप्रयोजकव्यापारानुकूलव्यापारार्थकतया व्यापारद्वयार्थकत्वेनैव द्विकर्मकताया आवश्यकत्वादवान्तरव्यापाराश्रयत्वेन गर्गाणां प्रधान्यमिति भावः । नन्वेवमर्थिनश्च राजानो हिरण्येन भवन्तीति वाक्यशेषमहिम्ना प्रधानभूतस्य शतस्याप्रधानगर्गानुरोधेनावृत्तिकल्पनाया अयुक्तत्वतात्पर्यकतया गर्गाश्शतं

---

१. आहुरिति ॥ परे तु आधारता द्वितीयार्थ इति वादिनामाधारत्वप्रकारकबोधस्य, आधेयता तदर्थ इति वादिनामाधेयत्वप्रकारकबोधस्य चानुभवसिद्धतया तत्तद्व्युत्पत्त्यनुसारेण तत्तद्बोधो दुर्वार एव । परं तु व्याकरणस्य तत्तदर्थविशेषे तत्तच्छब्दानां साधुत्वनिर्णायकतया यादृशार्थबोधानुभवेन मुनित्रयेण साधुत्वमनुशिष्टं तादृशोऽर्थः क इत्येतावदेवात्र विमर्शनीयम् । मुनित्रयस्य च तत्तत्कारकशक्तिमत्त्वेनैवार्थबोधोऽनुभवसिद्ध इति तत्तद्ग्रन्थैर्निर्णीयते । तेनान्यत्रार्थे तेषामसाधुत्वम्, तत्र तेषां याज्ञे कर्मणि प्रयोगे प्रत्यवाय इति ज्ञायते । अन्यथा पामराणामपि लोकशब्देन ग्रहणेऽतिप्रसङ्गः स्यात् । अत एवाख्यातेन कृत्यादिबोधस्यानुभवसिद्धत्वेऽपि तत्रार्थे तस्यासाधुत्वमुक्तं तिङर्थवादे मञ्जूषायाम् । किञ्च सहृदयोद्वेजकत्वादित्यत्र सहृदया अवैयाकरणा इति यदि विवक्षितं, तदा इष्टापत्तिः । यदि वैयाकरणा इति विवक्षितं, तदा भाष्यादिपरिशीलनशालिनां तेषामनुद्वेजकमेव । तदपरिशीलकास्तु वैयाकरणब्रुवा एवेति तेऽप्यत्रासहृदया एवेति सहृदयोद्वेजकत्वापादनमनुचितमेव । तथा षष्ठ्यपवादत्वमात्रेण द्वितीयायाः सम्बन्धबोधकत्वमनुचितमित्ययुक्तमित्युक्तिर्मूलाक्षरादर्शनमूलकैव, मूले सम्बन्धत्वेन बोधकत्वानौचित्यस्योक्तत्वात् । तस्यायं भावः । क्रियाकारकभावरूपसम्बन्धविशेषबोधकशास्त्रे जागरूके षष्ठ्यर्थतया क्लृप्तक्रियाकारकभावातिरिक्तसम्बन्धत्वेन सम्बन्धबोधकत्वमनुचितमिति । एवं च कारकविभक्तीनां क्रियाकारकभावसम्बन्धवाचकत्वं भाष्योक्तमविरुद्धमेव । अतिरिक्तसम्बन्धबोधकत्वस्य भाष्यानुक्तत्वात् । तथा च नानार्थकत्वकर्मपदावृत्तिप्रयुक्तगौरवसहनकृपा मुधैवेत्यलं भाष्यादिविरुद्धकल्पनयेत्याहुः ॥

दण्डयन्तामित्यत्र समुदाये वाक्यपरिसमाप्त्युपपादनपरवृद्धिसूत्रभाष्यविरोध इत्यत आह ॥ **उद्देश्यत्वरूपमिति** ॥ आर्थिकमेव प्राधान्यमावृत्तिप्रतिबन्धकम् । शाब्दन्तु लकाराद्युपपादकमिति नास्ति भाष्यविरोध इत्याशयः ॥ **दुहादियोग इति** ॥ अप्रधाने दुहादीनां ण्यन्ते कर्तुश्च कर्मण, इति प्रागुक्तवचनशेषादिति भावः । ननु व्यापारद्वयार्थकत्वे दुहादीनां प्रधाने लादीनामुत्पत्तिरेकव्यापारवाचकतायां चाप्रधाने तेषामुत्पत्तिरिति वैजात्याव्द्यापारद्वयार्थकत्वप्रयुक्तद्विकर्मकत्वसमर्थनेन कथमेकव्यापारवाचकत्वप्रयुक्तस्याकथितकर्मत्वस्य निराकरणमत आह ॥ **तच्च गवादीनामेवेति** ॥ **फलाश्रयत्वाभावादिति** ॥ न केवलं प्रकृतधातूपात्त-प्रधानव्यापारप्रयोज्यप्रकृतधातूपात्तफलाश्रयत्वं कर्मत्वम् । किन्तु फलतावच्छेदक-सम्बन्धेन तथाविधफलाश्रयत्वम् । ततश्च फलतावच्छेदकसम्बन्धेनानुयोगित्वादिना विभागाद्याश्रयत्वाभावेन गवादीनां न कर्तुरित्यनेन कर्मत्वमपि तु तादृशफलाश्रयी-भूतक्षीरादिरूपप्रधानकर्मसम्बन्धप्रयुक्तमकथितसूत्रबोधितमेव कर्मत्वमित्याशयः ॥ **अयुक्तमिति** ॥ नन्विदमयुक्तत्वं तथाविधानामसाधुत्वेनेति वक्तव्यम् । तच्च न व्यापारद्वयार्थकत्वे, तेषामपि द्विकर्मकताया दुर्वारत्वेन साधुत्वस्य गले पतितत्वादत आह ॥ **एवं हीत्यादि** ॥ **अनभिधानेनेति** ॥ इत्थं च भाष्यकारोपवर्णिताना-मेव व्यापारद्वयार्थकत्वेन द्विकर्मकतायां साधुत्वं नान्येषामिति भावः ॥

**व्युत्पत्तेरिति** ॥ अत एवापादानत्वाविवक्षायां वृक्षस्य पर्णं पततीत्यादौ वृक्षादेः पर्णाद्यर्थान्वय एव साधुत्वं न तु क्रियान्वयविवक्षायामिति वृद्धाः । नामसमभिव्याहाराभावे च क्रियायामन्वयो भवत्येव । न माषाणामश्नीयादिति वत् । नामार्थे स्वान्वययोग्यतानिवेशस्तु सम्प्रदानत्वाविवक्षायां ब्राह्मणस्य कन्यां ददातीत्यादौ ब्राह्मणादेः कन्यायामन्वयवारणायेत्याहुः ॥ **मूलं नास्तीति** ॥ अकथितसूत्रविषयतया भाष्यकारीयं परिगणनं मूलं, तदिह नास्तीति भावः ॥ **जग्राहेत्येवेति** ॥ ननु पराक्रमातिशयद्योतनाय जहारेत्यर्थकतया युक्तमेवेदमुदा-हरणमित्यत आह ॥ **उचितत्वाच्चेति** ॥ न केवलमेतदुदाहरणासाङ्गत्ये भाष्यकृत्कृताकथितसूत्रविषयधातुपरिगणनविषयताराहित्यमेव बीजमपि तु निरुक्ता-र्थासङ्गतिश्चेति भावः ॥ **माधवादिसम्मतत्वादिति** ॥ एतेन भाष्यकृत्परिगणि-तातिरिक्तानामकथितसूत्रविषयतया द्विकर्मकत्वमयुक्तमित्यस्वरसं सूचयति ॥

प्रागुक्तं प्रधानकर्मत्वमिति ॥ शाब्दप्राधान्योपहितं कर्मत्वं लकाराद्युत्पत्तिनियामकम् । दण्डयतेश्च परस्वत्वनिवृत्त्यनुकूलव्यापारानुकूलव्यापारोर्थः । तत्र स्वत्वनिवृत्त्यनुकूलव्यापारात्मकप्रधानफलाश्रयत्वाद्गर्गाणां प्रधानं कर्मत्वमिति तत्रैव लकाराद्युत्पत्तिः । मथ्नातेस्तु सारद्रव्यविभागानुकूलव्यापारानुकूलव्यापारोर्थः । विभागानुकूलव्यापारात्मकप्रधानफलाश्रयत्वादम्बुनिधेः प्रधानं कर्मत्वमिति तत्रैव लकाराद्युत्पत्तिः । अतो गर्गाञ्शतं दण्डयन्तां सुधामम्बुनिधिर्ममन्थेत्यादि निर्बाधम् । शतस्य तूद्देश्यत्वलक्षणमार्थमेव प्राधान्यमावृत्तिप्रतिबन्धकमिति नैतयोरकथितसूत्रविषयत्वं भाष्यकारानभिमतं युक्तमित्यभिसन्धिः ॥ व्यापारद्वयार्थकस्येति ॥ रूपादिपरावृत्त्यनुकूलव्यापारानुकूलव्यापारार्थकस्येत्यर्थः ॥ वृक्षस्येति ॥ उदुम्बरं फलं पचतीत्यत्र प्रधानकर्मत्वापन्नस्य वृक्षस्य कर्मत्वाविवक्षया सौकर्याय कर्तृत्वविवक्षायां रूपादिपरावृत्त्यनुकूलव्यापारमात्रवाचकतायामपि पचतेस्सकर्मकतया दुहिपच्योर्बहुलं सकर्मकयोरित्येतद्वचनविषयताया निर्बाधत्वाद्भाष्यसामञ्जस्ये पचेर्भाष्यकारपरिगणितानन्तर्भूतस्यास्य प्रकृतभाष्यबलादकथितसूत्रविषयताकल्पनमयुक्तमित्यरुचेर्मूलम् ।

ननु परिगणितातिरिक्तानामकथितसूत्रविषयत्वाभावस्य प्रागुक्तरीत्या भाष्यसम्मततया हरदत्तोक्तेर्मतान्तराभिप्रायकत्ववर्णनमयुक्तमत आह ॥ पूर्वोपपादितेत्यादि ॥ सिद्धमिति ॥ अहमपीदमचोद्यं चोद्ये इति भाष्यकारीयप्रयोगस्यापि व्यापारद्वयार्थकत्वप्रयुक्तद्विकर्मकत्वेनैव साधुत्वमिति भावः ॥ सूचयतीति ॥ वैकुण्ठादेः प्रसिद्धदेशत्वाभावे तदीयकर्मतानिर्वाहार्थमधिशीङिति सूत्रमिति वदता मूलकृता स्वप्यादीनामकर्मकधातूनां शयनपूर्वकव्यापनाद्यर्थकत्वेन देशकालादीनां कर्तुरित्यनेन कर्मत्वमाश्रित्याकर्मकधातुभिरिति वार्तिकप्रत्याख्याने शीङादेस्तादृशार्थकत्वमादाय वैकुण्ठादेर्न कर्मत्वमारम्भप्रत्याख्यानयोः फलवैलक्षण्यादतो नाधिशीङ्स्थासामित्यस्य वैयर्थ्यमिति सूचितमिति भावः ॥ कालत्वाभावादिति ॥ जन्यानां जनकः काल इत्यनादिरयं व्यवहारः । तेन जन्यमात्रं प्रति कालस्य कुलालादिवन्निमित्तकारणत्वमिति तान्त्रिकाः प्रवदन्ति ॥ अतो न घटादिरूपजन्यजातस्य कालत्वमपि तु कालजन्यत्वमेवेति भावः ।

केचित्तु तादृशव्यवहारगतं जन्यत्वं विनिगमनाविरहात्तदुपादानकत्वमेव ।

तेन कालपरिणामरूपस्यास्य जन्यप्रपञ्चस्य कालत्वम्। मृत्परिणामरूपघटादेर्मृत्त्वमिवेति विवदन्ते, तदाह॥ यदीत्यादि॥ यद्यस्तीत्यनेनास्य मतस्यायुक्तत्वमनिष्टत्वं च सूचितम्[1]॥ नापूर्वमिति॥ शीङादीनामकर्मकाणां शयनादिपूर्वकव्यापनार्थवृत्तितायां कर्तुरीप्सिततममित्येव सिद्धेरिति भावः। ननु स्वपधातोश्शयनपूर्वकव्याप्त्यर्थकत्वे कर्तुरित्यनेन कर्मत्वस्य निर्बाधत्वेन साधुत्वस्याभीष्टतया कथमध्वानं स्वपितीत्यस्यानिष्टत्वेनापत्तिविषयत्वमत आह॥ स्वापमात्रार्थक इति॥ तन्मात्रार्थकतायामध्वनः कर्मत्वमनिष्टमित्याशयः॥

कृत्रिमकर्मत्वोक्तेरिति॥ कर्तरि कर्मव्यतीहार इति सूत्रे कृत्रिमाकृत्रिमन्यायेन कर्मपदस्य कारकपरत्वमेव स्यान्न तु क्रियापरत्वम्। इत्थं च देवदत्तस्य धान्यं यज्ञदत्तो व्यतिलुनीत इत्यत्रैव स्यान्न तु व्यतिलुनाते व्यतिलुनत इत्यादाविस्याशयेन क्रियाग्रहणं कर्तव्यमिति वार्तिककृदारब्धस्य वचनस्य प्रत्याख्यानोपायतया नियमतः प्रतीयमानैः संदर्शनप्रार्थनारम्भणैराप्यमाणत्वात्क्रियापि कृत्रिमं कर्मेत्युक्तम्। अतः कर्मग्रहणसामर्थ्यादेवात्र कारकपरत्वमिति तत्त्वम्। स्वधर्मेणेत्यस्य तृतीययेत्यर्थलाभः कथमत आह॥ स्वकार्येणेति॥ धर्मपदस्येह कार्यपरत्वमौचित्यादित्याशयः। वादिनिग्रहाभिनिवेशमूलकमधिकार्थकथनमभ्युच्चयः॥ मन्यत इति॥ वक्ष्यमाणरीत्या नियमात्मकैकपक्षपरत्वेनैव सकलभाष्यसामञ्जस्ये पक्षभेदपरतया तदर्थोपवर्णनमयुक्तमित्याशयः॥ अनभिमतत्वमिति॥ अभिधत्ते वक्तीत्यादीनां बोधविषयीभवनानुकूलव्यापारानुकूलव्यापारवाचकत्वेन द्विकर्मकतायामवान्तरव्यापाराश्रयस्य पुत्रादेः प्रधानकर्मतया लकारादिसिद्ध्या लक्ष्यविसंवादाभावेन संज्ञाया अर्थनिबन्धनत्वमनुपयुक्तमित्याशयः। न चैवंरीत्या ब्रूधातोरपि द्विकर्मकत्वेनाभीष्टसिद्धौ दुहादिषु तत्परिगणनं भाष्यकारीयं निष्फलमिति वाच्यम्। बोधानुकूलव्यापारवाचकतायां विषयतासम्बन्धेन बोधाश्रयस्य धर्मादेरेव कर्तुरित्येतत्सूत्रबोधितमुख्यकर्मतया तत्सम्बन्धिनि पुत्रादौ गौणे कर्मणि लकारादिसिद्धये तस्यावश्यकत्वात्। न

---

१. सूचितमिति॥ अविच्छिन्नक्षणधाराया एव कालत्वमिति मञ्जूषायां विस्तरतो निरूपितत्वेन पूर्वोक्ततान्त्रिकमतस्य केचित्कारमतस्य च वैयाकरणसिद्धान्तविरुद्धत्वेनानिष्टत्वं सूचितमिति भावः।

चैवमभिधत्त इत्यादीनामपि बोधानुकूलव्यापारवाचकतायां निरुक्तरीत्या लकाराद्युपपत्तये संज्ञाया अर्थनिबन्धनत्वमावश्यकमेवेति वाच्यम् । एकव्यापारवाचकतायामुक्तरीत्या तेषां द्विकर्मकत्वे मानाभाव इत्याशयात् । किञ्च यथाकथं चित्प्रमितलक्ष्यसाधुतायाः प्रयत्नमन्तरेणोपपत्तौ प्रामाणिकानभिमतेन क्लिष्टकल्पनेन तत्समर्थनाभिनिवेशो न युक्त इत्यसमञ्जसमेव संज्ञाया अर्थनिबन्धनत्वमित्याहुः । तदेतल्लक्ष्यविसंवादाभावः प्रधानं शास्त्रप्रयोजनमिति वदन्मूलकारस्सूचयतीत्युपाध्यायो मन्यते ।

ननु विधिनियमयोरन्यतरपक्षावलम्बस्यौचित्ये नियमापेक्षया लाघवकृतेन विधिबलीयस्त्वेन विधिरेव कुतो नाद्रियत इत्याशङ्कां परिहर्तुमारभते ॥ **तुना अरुचिरिति** ॥ प्रकृतधातूपात्तप्रधानव्यापाराश्रयत्वं कर्तृत्वम् । प्राधान्यस्य मुख्यविशेष्यभूतप्रयोजकव्यापारगतस्य सम्भवे यत्किञ्चिन्निरूपितस्य विशेषणगतस्य तस्य परिग्रहायोगान्नास्ति प्रयोज्यव्यापाराश्रयस्य कर्तृत्वसम्भव इत्याशयः । ननु प्रयोज्यव्यापाराश्रयस्य कर्तृत्वाभावे तदनुवादेन कर्मत्वविधानमसम्बद्धं स्यात् । अत आह ॥ **किञ्चेति** ॥ **उपलक्षणमिति** ॥ न्यायविरोधोऽत्र बीजम् । नन्वारम्भसामर्थ्यादिति भाष्यं विधित्वाभावे कथमुपपद्येतेत्यत्राह ॥ **नियमारम्भसामर्थ्यादित्यर्थ इति** ॥ **नियमार्थकतैवेति** ॥ प्राक्कडारात्परं कार्यमिति पाठान्तरैकरूप्यार्थमाकडारादेका संज्ञेति यथाश्रुतेपि नियमार्थकतैवोचितेति भावः ॥ **बाधापत्तेरिति** ॥ प्राक्कडारात्परं कार्यमिति शास्त्रं च तत्तच्छास्त्रारम्भात्पूर्वा, परकार्यविधानाच्च परेति संज्ञाद्वयसमावेशार्थम् । निरुक्तविपरीतनियमे संज्ञान्तरव्यावृत्तौ शास्त्रबाधस्स्पष्ट एवेति भावः ॥ **सार्थाद्धीयत इति** ॥ मिलितप्रयोजनकः प्राणिसमूहस्सार्थः । तस्य तदेकदेशभूतव्यक्तिविशेषनिष्ठविभागजनकव्यापारात्मकप्रधानीभूतजहात्यर्थाश्रयत्वेन सत्यपि स्वातन्त्र्ये तदविवक्षया विभागावधित्वमात्रविवक्षणेनापादानत्वेपि वस्तुभूतस्वातन्त्र्योपहिततथाविधसमुदायनिष्ठव्यापारप्रयोज्यविभागात्मकफलाश्रयत्वेनैकदेशस्य कर्मतया लकाराद्युपपत्तिरिति निष्कर्षः । ननु प्रयोजकव्यापारविवक्षायां प्रयोज्यव्यापाराश्रयस्योक्तरीत्या कर्तृत्वाभावे कर्तृव्यापारवाचकप्रयोजकत्वप्रयुक्तस्य हेतुत्वस्य दुर्वचतया हेतुव्यापारनिबन्धनाया णिजुत्पत्तेरनुपपत्तिरत आह ॥ **तत्प्रयोजक इति सूत्रेपीति** ॥

ननु कारकशब्दस्य संज्ञाधिकारपरत्वे कारकसंज्ञाकर्तृसंज्ञयोस्समावेशाय कारकसंज्ञोपहितस्यैव कर्तृसंज्ञाविधानाद्भवतु कर्तृपदवाच्यस्वतन्त्रपदार्थयोस्सामान्यविशेषभावः। यदा च तस्य क्रियापरत्वं तदा कथं सामान्यविशेषभावावधानमत आह॥ **किञ्चेति**॥ **अक्षतमिति**॥ ननु गत्यर्थकर्मणीति सूत्रे गत्यर्थकधातुप्रकृतिकण्यन्तस्यापि ग्रहणे ग्रामं गमयति देवदत्तमित्यादौ प्रयोज्यवाचकादपि द्वितीयाचतुर्थ्यौः पर्यायेण प्रसङ्गः। तदग्रहणे च ग्रामादिकर्मण्यपि तदप्रवृत्तिरतो नेदं युक्तमत आह॥ **किञ्चेति**॥

**अत्र ग्रहणमिति**॥ गतिबुद्धीति सूत्रे इत्यर्थः॥ **सम्बन्धमात्रमिति**॥ सुखं प्राप्त इत्यादौ समवायो धनं प्राप्त इत्यादौ स्वस्वामिभावः। ननु प्राप्त्यर्थानां गत्यर्थत्वाभावे गां प्राप्त इत्यादौ गत्यर्थाकर्मकेति कर्तृनिष्ठाया अनुपपत्तिरत आह॥ **आदिकर्मणीति**॥ **न्यायसिद्धार्थमेवेति**॥ नीवह्योर्गत्यर्थत्वाभावादेव सूत्रेण कर्मत्वाप्राप्त्या निषेधोयं न्यायसिद्धार्थानुवाद इत्यर्थः। नन्वधिकार्थकस्य भाष्यरीत्या गत्याद्यर्थकत्वाभावादणीति सूत्रे व्यर्थमतस्तदेव नीवह्योर्यथाकथं चिद्गत्यर्थयोरपि सूत्रविषयतायां प्रमाणीभवितुमर्हतीति कथमुक्तरीत्या वार्तिककारीयो नीवह्योर्निषेधो न्यायसिद्धस्स्यादित्यत आह॥ **निवृत्तप्रेषणेत्यादि**॥ निवृत्तप्रेषणाद्धातोर्हेतुमण्णौ शुद्धेन तुल्यार्थकतया गमयत्यादीनामपि गत्याद्यर्थत्वात्प्रसक्तस्य कर्मत्वस्य वारणार्थमणीति सार्थकमेवेति न तद्वैयर्थ्यमूलिका गत्यर्थत्वप्रयुक्ता सूत्रविषयता नीवह्योरित्याशयः। न चैवं निवृत्तप्रेषणकतया देशान्तरप्राप्तिमात्रबोधकतायां गत्यर्थत्वान्नीवह्योस्सूत्रविषयत्वेन निषेधस्यावश्यकत्वात्कथं न्यायसिद्धत्वमिति वाच्यम्। न वहिर्गत्यर्थ इति भाष्यविरोधान्नियन्तृकर्तृकस्येति निषेधबाधकवार्तिकस्वारस्यभङ्गापत्तेश्च तथाविधयोस्तयोर्निषेधविषयत्वायोगादित्याहुः॥ **हिंसाङ्ग इति**॥ प्राणवियोगफलके गलाधोदेशसंयोगानुकूलव्यापारे इत्यर्थः॥ **घटादिभिन्नस्मरतेरिति**॥ चिन्तायां पठिष्यमाणस्मृधातुराध्याने मित्त्वार्थं घटादावनूद्यते॥ तत्रानूद्यमानानामर्थान्तरे मित्त्वायोगादाध्यान एव मित्त्वमतो मित्त्वोपहितस्मृधातुप्रकृतिकण्यन्तविषये निषेधबाधनेन भाष्योपपत्तौ सामान्येन तद्बाधकल्पनायां मानाभाव इत्याशयः॥

**न मानमिति**॥ कृष्णश्चाणूरमाह्वयत इतिवत्पुत्रं शब्दायत इति प्रयोगे

बाधकाभाव इत्याशयः ॥ **विधायकाभावादिति** ॥ विशिष्टस्य कृदन्तत्वाभावेन कर्तृकरण इत्यनुशासनाप्रवृत्तेरिति तदर्थः ॥ **असामर्थ्याच्चेति** ॥ अनुशासनबलादवयवीभूतक्रियाद्वारकसामर्थ्येन कर्तृकरणबोधकतृतीयान्तयोः कृदन्तेन समासाभ्युपगमेपि तद्घटितसमुदायेन समासे मानाभाव इत्याशयः । **इष्टसिद्धिरिति** । 'ण्यन्ते कर्तुश्च कर्मण, इति वचनं कर्मत्वविवक्षाविषयप्रयोज्यकर्तृसमभिव्याहारे केवले कर्मणि क्तादिप्रत्ययनिवर्तकम् । न तदसमभिव्याहारदशायामिति भावः ॥ **अभिमानादिति** ॥ एतेन प्रयोज्यस्य णिजुत्पत्तये कर्तृत्वावश्यम्भावेपि तत्समानाधिकरणकर्मत्वाविवक्षामात्रेण णिजुत्पत्तिप्रयोजकव्यापारनिर्वाहकप्रयोज्यगतकर्तृत्वानपगमान्नास्ति कर्मत्वाविवक्षायां दूषणावकाश इति सूचितम् ॥ **अपुष्ट्यापत्तेरिति** ॥ जायापदस्य गन्धमाल्यसम्बन्धिबोधकतया विशिष्टेन तत्सम्बन्धिना सम्बन्धायोगादसामर्थ्यात्षष्ठीसमासानुपपत्तिः । गन्धमाल्ययोर्जायासापेक्षत्वेनासामर्थ्याद्बहुव्रीह्यनुपपत्तिश्चेति बोध्यम् । सर्वथा वृत्तिघटकस्य प्रतिग्राहितशब्दस्य प्रतिगृहीतपरत्वं दुर्लभमिति चोद्यपरिहाराभ्यां प्रदर्शयितुमाह ॥ **नन्वित्यादि** ॥ **गन्धमाल्यपरत्वमिति** ॥ प्राप्तोदकादौ कर्मप्रत्ययान्तस्य प्राप्तशब्दस्य विशेषणविशेष्यभाववैपरीत्येन वृत्तौ प्राप्तिपरत्ववदिति भावः ॥ **सूत्रव्युत्पत्त्यादीति** ॥ व्युत्पत्तिरभियुक्तानुभवः । वृत्तिस्वभाव आदिशब्दार्थः ॥

**समर्थसूत्रस्य इति** ॥ एतद्भाष्यप्रामाण्यादाग्रहरूपाभिनिवेशवाचकतायामेव कर्मत्वमर्थान्तरे त्वधिकरणत्वमभिनिविष्टानामित्यत्र ह्यावश्यकं वर्तनमर्थः । पापेऽभिनिवेश इत्यत्राप्येवमेव । अभिनिविशते सन्मार्गमित्यादौ तु आवश्यकत्वप्रकारकज्ञानरूप आग्रह एवार्थ इति सर्वमुपपद्यत इत्याहुः । ननूभसर्वतसोरित्यस्योभसर्वयोस्तसाविति विग्रहेणोभसर्वशब्दप्रकृतिकतसन्तयोरित्यर्थस्य पर्यवसानादुभयत इत्यादौ वृत्तिविषये तसुत्पत्तेः पूर्वमेवायचः प्रवृत्त्या तसन्तस्यायजन्तप्रकृतिकत्वेप्युभशब्दप्रकृतिकत्वाभावात्कथमुभसर्वतसोरित्युक्तिरत आह ॥ **उभांशे इति** ॥ उभशब्दस्तद्घटितसमुदायपरो लक्षणयेति भावः । समुदायोद्देश्यकत्वमित्यस्य समुदायगतोद्देश्यतानिरूपकत्वमित्यर्थः । उभशब्दप्रकृतिकतसन्तदौर्लभ्येन वार्तिकबलात्तदंशे तद्घटितसमुदायपरत्वाभ्युपगमेपि सर्वशब्दांशे तथा स्वीकारे

मानाभावेन परमसर्वत इत्यादियोगे षष्ठ्येव साधुरिति वदन्ति ॥ वृत्तिविषये इत्यस्य वृत्तौ कृतायामित्यर्थो न युक्त इत्यत आह ॥ **प्राचीनैरिति** ॥ **व्याख्यातमिति** ॥ एवञ्च वृत्तिघटके परत अयजिति व्याचक्षाणानामुभशब्द एव तत्प्रकृतिरिति लक्षणाश्रयणमयुक्तमिति तात्पर्यम् ॥ **दृष्टान्तबलेनेति** ॥ गवित्ययमाहेति तदुपदर्शितदृष्टान्तविरोधाल्लुप्तविभक्तिकत्वमेवाविभक्तिकत्वमिति कल्पनया जश्त्वसमर्थनं न युक्तमिति भावः ॥ **पञ्चम्यस्तसिलिति** ॥ आद्यादित्वकल्पनामपेक्ष्य पञ्चम्यन्तात्तसिलित्येव न्याय्यमिति भावः ॥ **विनापि सम्बन्धमिति** ॥ अभेदस्य संसर्गत्वाभावात्संसर्गमन्तरापीत्यर्थः । नन्वभियुक्तवचनघटकस्य नाम्नोरित्यतदर्थपरतया षष्ठीविभक्त्या कथं तत्सम्बन्धस्स्यादत आह ॥ **भेदमात्रपूर्वकेत्यादि** ॥ षष्ठीपदं तथाविधार्थपरमिति भावः ॥ **सम्बोधनस्येति** ॥ धिङ्मूर्ख निषिद्धमाचरसीति वाक्यार्थे प्रयुज्यमानाद्धिङ्मूर्खेति वाक्यात्प्रतीयमाननिषिद्धाचरणक्रियया सम्बोधनविभक्त्यन्तार्थस्यान्वयेऽपीत्यर्थः ॥ **बहूपप्लव इति** ॥ देव त्वां भजे इत्यादौ वास्तवफलाश्रयत्वादिकमादाय कर्मत्वाद्यापत्तिरिति भावः ।

केचित्तु[1] "सिद्धस्याभिमुखीभावमात्रं सम्बोधनं विदुः । प्राप्ताभिमुख्यो ह्यर्थात्मा क्रियासु विनियुज्यत" इति हरिकारिकाबलेन सम्बोधनविभक्त्यन्तार्थस्य नियमतः प्रवर्तनाविषयक्रियान्वयबोधनेन तद्विषये सम्बोध्यस्य कर्तृत्वावश्यम्भावात्तस्य कर्तृकारकत्वं युक्तमेव । अजानि देवदत्तेत्यत्र तु जानीहीत्यध्याहारादिष्टसिद्धिः । तथाविधक्रियायामुद्देश्यत्वेन सम्बध्यमानस्य तस्य कर्मत्वादीनामसम्भव एव । अत एवाभिहिते प्रथमेति वार्तिकमते सम्बोधने चेत्यस्य प्रत्याख्यानेपि प्रथमासिद्धिरित्याहुः ॥

ननु प्रतिशब्दस्य कर्मप्रवचनीयत्वे पृथक् द्वितीयाविधानारम्भवैयर्थ्यादुपसर्गत्वस्यावश्यकतया क्रियागतविशेषद्योतकेन तेन बुभुक्षितादिपदार्थसम्बन्धायोगात्तत्सम्बन्धनिबन्धनप्रातिपदिकप्रकृतिकद्वितीयानुशासनानुपपत्तिरत आह ॥ **प्रत्यर्थसम्बन्धस्येति** ॥ प्रतिशब्दस्य क्रियागतसम्बन्धबोधकत्वादुपसर्गत्वम् । तद्द्यो-

---

१. **केचिदिति** ॥ उपाध्यायप्रभृतय इत्यर्थः । एवं चात्रत्यमूलग्रन्थः मनोरमाकाराशयवर्णनपर एव । न तु स्वाशयवर्णनपर इति सूचितम् ।

त्यसम्बन्धेन बुभुक्षितादिपदार्थस्य क्रियान्वयादेव द्वितीया । एतावानेवात्र प्रतिशब्दयोगो द्वितीयानिमित्तमित्याशयः ॥ **मध्ये इत्यर्थकमिति** ॥ अन्तरान्तरेणशब्दौ मध्यभागवाचकावधिकरणशक्तिप्रधानौ, अभाववद्वाचकौ च, द्वितीयानुशासने च विनिगमनाविरहादुभयविधयोरपि तयोर्ग्रहणम् । अन्तरान्तरेणशब्दप्रतिपाद्यार्थान्वयप्रयोजकसम्बन्धप्रतियोगिभूतेऽर्थे वर्तमानात्प्रातिपदिकात्तथाविधे सम्बन्धे द्वितीयेत्यनुशासनार्थः । अन्तरा त्वां मां हरिरित्यादौ मध्यभागवाचकतायामवधित्वं द्वितीयार्थः । ततश्च त्वन्मदवधिकमध्यभागाधिकरणिका हरिकर्तृका सत्तेत्यादिरर्थः । अन्तरेण हरिं न सुखमित्यादावभाववद्वाचकतायां प्रतियोगित्वं द्वितीयार्थः । हरिशब्दस्तद्भक्तौ लाक्षणिकः । ततश्च हरिभक्तिप्रतियोगिकाभाववन्निष्ठस्सुखाभाव इत्यर्थः ॥

अत्रेदं बोध्यम् । कारकविभक्तिवद्यासामुपपदविभक्तीनां सम्बन्धविशेषे विधानं तत्र सम्बन्धस्य विशेषरूपेणाविवक्षायां सम्बन्धत्वेन विवक्षणे षष्ठ्येव । स्पष्टं चेदं चतुर्थी तदर्थेति सूत्रे भाष्ये । तत्र हि गुरोरिदं गुर्वर्थमित्यादौ तादर्थ्यस्य सम्बन्धत्वेन षष्ठीत्युक्तम् । सम्बन्धविशेषे विधानं च क्वचिद्विशेषोक्त्या, यथा लक्षणेत्थंभूतेत्यादिना प्रत्यादीनां कर्मप्रवचनीयत्वे तद्योगाल्लक्ष्यलक्षणभावादौ द्वितीया । क्वचिदाकाङ्क्षानैयत्यादन्तरा त्वामित्यादाववधित्वादौ । एवञ्चान्तरादिशब्दयोगेपि सम्बन्धमात्रविवक्षायां द्वितीयाप्रवृत्तिप्रयोजकसम्बन्धविशेषस्याविवक्षायां सम्बन्धसामान्ये षष्ठ्या निर्बाधत्वात्तव च मम चान्तरा कमण्डलुरित्यादयो निर्विवादाः प्रयोगाः । यत्तु युष्मदस्मत्पदबोध्यार्थस्य नात्रान्तरापदार्थेन योगः । किन्तु कमण्डलुना, ततो नात्र द्वितीयाप्रसक्तिरिति न निरुक्तकल्पनोपयोग इत्याहुः । तदसत् । त्वन्मत्स्वामिकः कमण्डलुरन्यावधिकमध्यभागवर्तीत्यर्थे प्रकृतप्रयोगनिर्वाहेपि त्वन्मत्सम्बन्धिमध्यभागवर्ती परकीयः कमण्डलुरित्यर्थे तादृशप्रयोगसमर्थनस्योक्तकल्पनैकसाध्यत्वात् ॥

**वृक्षो लक्षणमिति** ॥ वृक्षशब्दप्रकृतिकद्वितीयया बोधितेन लक्ष्यलक्षणभावेन वृक्षपदार्थस्य विद्युद्विद्योतनान्वये फलविधया भासमानोयमर्थः । इदमेवाभिसन्धाय संज्ञासूत्रेषु लक्षणेत्थम्भूतेत्यादिना धर्मिनिर्देशः । न तु लक्षणादिरूपो

धर्मी प्रत्यादिद्योत्यः। तेषां सम्बन्धबोधकतानैयत्यात्। तदुक्तं हरिणा। "क्रियाया द्योतको नायं सम्बन्धस्य न वाचकः। नापि क्रियापदाक्षेपी सम्बन्धस्य तु बोधक" इति ॥ लक्ष्यत्वं ज्ञानजन्यज्ञानविषयत्वम्। ज्ञानजनकज्ञानविषयत्वं च लक्षणत्वम्। वृक्षं प्रतीत्यादिवाक्यार्थबोधे वृक्षविद्युद्विद्योतनयोस्साक्षाल्लक्ष्यलक्षणभावानुपपत्त्या देशद्वारके तस्मिन् स्वीक्रियमाणे वृक्षाधिकरणकदेशज्ञानेन तत्सामीप्योपहितविद्युद्विद्योतनदेशो ज्ञाप्यत इति देशयोरयं लक्ष्यलक्षणभावः फलति ॥ एतदेवात्र प्रयोजनम्। ईदृशवाक्यानां क विद्योतते विद्युदित्येतत्प्रश्नोत्तरत्वात्। यद्यपि कदा वृष्टो देव इत्यादिप्रश्नोत्तरभूतेषु जपमनु प्रावर्षदित्यादिषु कालद्वारकेऽपि लक्ष्यलक्षणभावे प्रकृतसूत्रेणैव संज्ञासिद्धिरनुशब्दस्य, तथापि जपादेर्हेतुतया परत्वात्प्रसक्ततृतीयाबाधकतया द्वितीयाविधानायानुर्लक्षण इति सूत्रारम्भः। प्रकृत्यादियोगे तु तथाविधे विषये तृतीयैव बाधकाभावादित्याहुः ॥ **द्योत्या एवेति** ॥ यद्यपि लक्षणादयो धर्मिपदार्था न द्योत्याः। किन्तु लक्ष्यलक्षणभावादयस्सम्बन्धविशेषा एव तथापि लक्षणादिपदानां तत्तत्सम्बन्धोपलक्षकत्वमित्याशयः। ननु वृक्षादीनां कर्मतया विशिष्टक्रियासम्बन्धेपि कर्मप्रवचनीयद्योत्यार्थसम्बन्धाभावात्कथं तत्सम्बन्धनिबन्धनायाः पञ्चमीविभक्तेः प्रसङ्ग इत्यत आह ॥ **विशिष्टक्रियेत्यादि** ॥ विशिष्टसम्बन्धे धर्मिपारतन्त्र्येण विशेषणसम्बन्धस्य क्लृप्तत्वादिति भावः। यद्यप्यत्रोपपदविभक्तेरिति न्यायादेव पञ्चमीवारणं सुकरम्, तथाप्युपायान्तरप्रदर्शनाय साहचर्याश्रयणं मूलकारस्येति द्रष्टव्यम् ॥ **अन्वर्थत्वेनेति** ॥ कर्म क्रियां प्रवचनीयाः प्रोक्तवन्त इति महासंज्ञाबललभ्यव्युत्पत्तिवशादन्यत्र क्रियाविशेषबोधकत्वेन दृष्टानां तदभाववतां संज्ञेत्याश्रीयत इति भावः ॥ **भागस्याप्रतीत्येति** ॥ भागोंशः, तत्त्वं चान्यदीयस्वत्वाभावविशिष्टं स्वत्वं, तन्निरूपकत्वं चांशित्वम्। शेषशेषिभाववदंशांशिभावोऽपि सम्बन्धविशेषः। एवं च लक्ष्मीर्हरिं प्रतीत्यादौ निरुक्तसम्बन्धो द्वितीयावाच्यः कर्मप्रवचनीयद्योत्यः। हरिनिरूपितांशत्ववती लक्ष्मीरित्येवं बोध इति भागरूपार्थः प्रतीयते। यदत्र ममाभिष्यादित्यत्र तु मत्स्वामिकयत्कर्तृकसत्ता सम्भावनाविषय इत्यर्थात्स्वस्वामिभाव एव प्रतीयते न तु निरुक्तांशांशिभाव इति भागरूपार्थप्रतीतिप्रयुक्तस्य कर्मप्रवचनीयत्वस्य प्रसक्त्यभावान्नेदं प्रत्युदाहरणमित्याशङ्काभिप्रायः ॥ **भागे पर्यवसानमिति** ॥ तद्दीयतामिति वाक्यशेषेण स्वत्वनि-

वृत्तिविशिष्टस्वत्वोत्पत्तिप्रतीत्या दानक्रियाविषयस्य यच्छब्दार्थस्य भागे पर्यवसानात्संज्ञाप्रसक्त्या युक्तमेव प्रत्युदाहरणम्। एवंविधविषयेऽपि संज्ञाप्रवृत्ताविदमेव गमकम्। अत एव यदस्मान्प्रति स्यात्तद्दीयतामित्यादौ संज्ञासिद्धिरित्याहुः॥

**अध्वना कालेन वेति**॥ सूत्रे कालाध्वनोरिति सप्तमीति मन्यते। मूलकृद्रीत्या षष्ठ्यन्तत्वे तु श्रुतत्वादत्र सूत्रे कालाध्ववाचकाभ्यां द्वितीयाया उपपत्तावप्युत्तरसूत्रे तृतीयाया अनुपपत्तिरुभयोरप्यश्रुतत्वादित्याशयः। अत्यन्तसंयोगो व्यापकत्वं, तच्च कालाध्वनिरूपितं द्रव्यगुणकर्मणामेवेत्यौचित्यात्तल्लाभः। इत्थं च मासमधीत इत्यादौ व्यापकत्वं द्वितीयार्थः। मासव्यापकमध्ययनमित्यादिको बोधः। द्वितीयाप्रकृतिभूतकालाध्ववाचकशब्दाभ्यां संख्याविशेषावच्छिन्नतत्तदवयवानतिरिक्तस्समुदायो गृह्यते। मासशब्देन त्रिंशद्दिनकूटो दिनानतिरिक्तः। क्रोशमधीत इत्यादौ क्रोशशब्देन च संख्याविशेषपरिच्छिन्नदण्डानतिरिक्तो दण्डकूटः। एवं चैकदिनैकदण्डाध्ययनाभावेऽपि व्यापकताविरोधान्न द्वितीयायास्साधुत्वम्। व्यापकत्वं च तद्वन्निष्ठात्यन्ताभावीयप्रतियोगितानवच्छेदकधर्मावच्छिन्नत्वम्। मासत्वक्रोशत्वादेर्यावदवयवपर्याप्तत्वात्तद्वन्निष्ठात्यन्ताभावो न सर्वदिनानुगतस्याध्ययनस्याभावः, किन्तु घटाद्यभावः। तदीयप्रतियोगितावच्छेदकत्वं घटत्वादेरनवच्छेदकत्वमध्ययनत्वस्येति तदवच्छिन्नत्वादध्ययनस्य व्यापकतासिद्धिः। न च दिवसावान्तरदण्डावच्छेदेन विद्यमानाध्ययनाभावमाश्रित्याध्ययनस्य व्यापकताभङ्ग इति वाच्यम्। व्यापकताघटकाभावस्य प्रतियोगिव्यधिकरणस्य विवक्षणेन यत्किञ्चिद्दण्डावच्छेदेनाध्ययनस्य विद्यमानतया दण्डान्तरावच्छेदेन विद्यमानतदीयाभावमाश्रित्य व्यापकताभङ्गस्य दुर्वचत्वात्। मासत्वादेर्बुद्धिविशेषविषयत्वेन विवक्षणान्न मासान्तरीयतदभावमाश्रित्य व्यापकताविरोधः। प्रतिमासमधीत इत्यादौ मासशब्दः मासानतिरिक्तमासकूटपरो, मासास्त्वखण्डा एव। मासत्वं च तत्र यावन्मासावयवकूटो बुद्धिस्थस्तावदवयवपर्याप्तो धर्मः। ततोऽवान्तरमासैकदेशे तदभावेऽपि यावदवयवात्मकाखण्डमाससम्बन्धस्य विद्यमानत्वादध्ययनस्य न व्यापकताभङ्गः। एवं क्रोशमधीते प्रतिक्रोशमधीत इत्यादावप्यूहनीयमित्याहुः। एवं मासं कल्याणी क्रोशं कुटिला नदीत्यादौ मासव्यापककल्याणगुणवती क्रोशव्यापककौटिल्यगुणवती नदीत्येवं

बोधः । मासं गुडधानाः क्रोशं गिरिरित्यादौ च मासव्यापिका गुडधानाः क्रोशव्यापको गिरिरित्यादिको बोध इति सर्वतान्त्रिकसम्मतः पन्थाः ॥ इति द्वितीया ॥

श्रीः ॥ कर्तृसंज्ञाविधायके "स्वतन्त्रः कर्ता" इति सूत्रे स्वतन्त्रशब्दोऽर्श आद्यजन्तः । तत्प्रकृतिभूतेन प्रधानवाचिना स्वतन्त्रशब्देन व्यापारो गृह्यते । तत्र प्राधान्यं परिष्कर्तुमाह ॥ प्राधान्यं चेति ॥ धात्वर्थनिष्ठविशेष्यतानिरूपितप्रकारतानाश्रयधात्वर्थत्वं प्राधान्यमित्येतन्मात्रोक्तौ कर्मप्रत्ययसमभिव्याहारे पच्यते तण्डुल इत्यादौ सुप आत्मन इति सूत्रस्थभाष्यप्रामाण्येन फलस्यैव प्राधान्यात्फलनिष्ठविशेष्यतानिरूपितप्रकारतापन्नव्यापारस्य निरुक्तप्राधान्याभावात्तदाश्रयस्य देवदत्तादेः कर्तृत्वानुपपत्तिः । अतः कर्तृप्रत्ययसमभिव्याहारे इति ॥ न च धात्वर्थनिष्ठप्रकारतानिरूपकधात्वर्थत्वं प्राधान्यमित्येव सिद्धे प्रकारतानाश्रयत्वनिवेशो व्यर्थ इति वाच्यम् । व्यापारद्वयार्थकनयत्यादियोगे संयोगानुकूलव्यापारानुकूलव्यापारस्य धात्वर्थतया संयोगनिष्ठप्रकारतानिरूपकस्यावान्तरव्यापारस्यापि प्राधान्यात्तदाश्रयस्याजादेरप्यजां ग्रामं नयतीत्यादौ कर्तृत्वापत्तेः ॥

वस्तुत इदं चिन्त्यम् । प्रधानव्यापाराश्रयत्वरूपकर्तृलक्षणे प्राधान्यघटकतया कर्तुः प्रवेशेनात्माश्रयापत्तेः । न च कर्मप्रत्ययासमभिव्याहारे धात्वर्थनिष्ठविशेष्यतानिरूपितप्रकारतानाश्रयधात्वर्थत्वं प्राधान्यम् । तदुपहितव्यापाराश्रयत्वं कर्तृत्वमिति विवक्षणान्न दोष इति वाच्यम् । कर्मलक्षणे कर्तुः प्रवेशेनात्माश्रयस्य तदवस्थत्वात् । तस्मात्करणतानिरूपकधात्वर्थातिरिक्तधात्वर्थत्वं प्राधान्यम् । तद्विशिष्टव्यापाराश्रयत्वं च कर्तृत्वं विवक्षणीयमतो न काप्यनुपपत्तिरित्याहुः ॥

केचित्तु णिजर्थव्यापारातिरिक्तव्यापारनिरूपितप्रकारताराहित्यं प्राधान्यमिति वदन्ति ॥ धातुनोक्तक्रिये इत्यस्य धातूपात्तप्रधानव्यापाराश्रये इत्यर्थः ॥

---

१. वदन्तीति ॥ परे तु कर्तृप्रत्ययेत्यस्य कर्तृवाचकतृजादिप्रत्ययेत्यर्थः । तथा च तृजादिप्रत्ययसमभिव्याहारे इति मूलकृता विवक्षितम् । अत एवैतत्फलतया पक्वस्तण्डुल इत्यादौ फलस्य प्राधान्येऽपि चलादेः कर्तृत्वसिद्धिरिति कृदन्तस्थलप्रदर्शनं शेखरादौ स्वरसत उपपद्यते । अन्यथा पच्यते इत्याख्यातस्थलमपि प्रदर्शयेत् । एवं

**विशेषणत्वादीति** ॥ ननु विशेषणं विशेष्येण बहुलमिति सूत्रस्थभाष्यबलात् द्रव्यगुणक्रियावाचकानां विशेष्यविशेषणभावो व्यवस्थित एवेति कथमव्यवस्थायां दृष्टान्तत्वसम्भव इत्यत आह ॥ **खञ्जकुब्जादाविति** ॥ गुणवाचकानां क्रियावाचकानां वा यथा विशेषणविशेष्यभावो न व्यवतिष्ठते तद्वत्कारकत्वादीत्यर्थः। ननु कारकत्वव्याप्यकर्तृत्वादीनां विवक्षाधीनतया भवतु न व्यवस्था। कारकत्वं क्रियान्वयित्वरूपं क्रियाजनकत्वरूपं वा कुत्र न व्यवस्थितं तत्राह ॥ **तण्डुलानामिति** ॥ **शब्दशक्तिस्वाभाव्यादिति** ॥ अत एव व्यपदेशिवद्भावेन फलाश्रयतया कर्मत्वेन शोभनं पचतीत्यादयो यथा प्रयोगास्तथा व्यापारस्य व्यापाराश्रयत्वमूलकेन कर्तृत्वेन शोभनेन पचतीत्यादयो न प्रयोगा इत्याहुः ॥ **ज्ञानविषयत्वे इति** ॥ ज्ञानस्य ज्ञानविषयत्वे ज्ञानविषयीभवनतद्विषयीकरणयोर्भिन्नाधिष्ठानावस्थितिस्वभावयोरेकत्रावस्थानायोगात्कर्तृकर्मभावविरोधः कथमयं विरोधो न स्यात्, यद्यभेदेपि विषयविषयिभावस्स्यात्। स च दुर्लभ इत्याह ॥ **विषयविषयिभावस्याभावादिति** ॥ ज्ञेयज्ञातृभावस्य लोकन्यायविरोधेन व्यपदेशिवद्भावानधीनत्वादित्याशयः ॥ **शब्दविशेषनिमित्तकस्येति** ॥ कर्तृत्वकर्मत्वादेस्तत्तद्विभक्त्यन्तपदजन्यशाब्दप्रमाविषयतया तद्विरोधस्य दीपवत्प्रत्यक्षतया ज्ञानस्य स्वप्रकाशकत्वे प्रतिबन्धकत्वायोग इति परमार्थः॥ **गम्यादिकर्तरीति** ॥ चैत्रो ग्रामं गच्छतीत्यादौ संयोगस्य द्विनिष्ठतया क्रियाजन्यफलाश्रयत्वरूपकर्मलक्षणस्य चैत्रादौ कर्तरि प्रसक्ताया अतिव्याप्तेर्वारणार्थमित्यर्थः ॥ **संयोगस्यैवेति** ॥ धात्वर्थतावच्छेदकत्वं च धात्वर्थनिष्ठविशेष्यतासमर्पकत्वेनोपस्थितिविषयत्वम्। तच्च गम्यादे-

---

च नात्माश्रयशङ्केति मूलाक्षरास्पर्शिलक्षणकथनं विफलमेव। एतेन मूलस्य चिन्त्यतोक्तिः परास्ता। यत्तु करणतानिरूपकधात्वर्थातिरिक्तधात्वर्थत्वं प्राधान्यमिति, तदसत्। एवं सति करणव्यापारस्य प्राधान्यानापत्तौ काष्ठानि पचन्तीत्यस्यासिद्ध्यापत्तेः। न च तस्मिन्प्रयोगे करणतानिरूपकत्वं तस्य नास्तीति वाच्यम्। प्रयोगभेदेन लक्षणकरणे यस्मिन्प्रयोगे करणतानिरूपकधात्वर्थोऽप्रसिद्धः, तत्र प्रतियोग्यप्रसिद्ध्या तदतिरिक्तत्वस्याप्रसिद्धेस्तत्र लक्षणस्याव्याप्त्यापत्तेः। किं च मूलाक्षरास्पर्शित्वमत्राप्यस्तीति बोध्यम्। वस्तुतस्त्विदं मनोरमानुरोधेनेति नात्र मूलकृतो निर्भरः। परं तु तद्धात्वर्थीयकारकचक्रप्रयोक्तृत्वं स्वातन्त्र्यमिति कारक इति सूत्रभाष्याल्लभ्यते। स्वेच्छाधीनप्रवृत्तिनिवृत्तिकत्वं स्वातन्त्र्यमिति स्वतन्त्रः कर्तेति सूत्रभाष्याल्लभ्यते। मनोरमोक्ते तु स्वतन्त्रपदस्वारस्यभङ्गः। अपूर्वपरिभाषापत्तेः। विस्तरस्तु मञ्जूषातोऽवसेय इत्याहुः ॥

स्संयोगावच्छिन्नव्यापारविषयकशक्त्याश्रयत्वे संयोगस्यैव न विभागस्येति प्रयागात्काशीं गच्छतीत्यादौ विभागाश्रयस्यास्यापादानस्य न कर्मत्वमिति भावः ॥ **धात्वर्थतावच्छेदकत्वेनेति** ॥ धात्वर्थनिष्ठविशेष्यतानिरूपकत्वे सति धातुजन्योपस्थितिविषयत्वं धात्वर्थतावच्छेदकत्वमिति विवक्ष्यते । अत एव फलव्यापारयोर्विशकलितयोरेव धातूनां शक्तिरित्यभ्युपगमेपि गम्यादिवाच्यसंयोगादेर्धात्वर्थतावच्छेदकत्वम् । ग्रामं गमयति देवदत्तमित्यादौ च विशिष्टशक्त्यभावेन विशेष्यतानिरूपकत्वेनोपस्थित्यभावेपि गमयतीत्यादौ प्रयोज्यव्यापारे शाब्दबोधीयणिजर्थव्यापारनिष्ठविशेष्यतानिरूपकत्वेन धातुजन्योपस्थितिविषयत्वेन च धात्वर्थतावच्छेदकत्वमव्याहतमेवेति णिच्समभिव्याहारेपि गम्यादिकर्तरि कर्मत्वमुपपद्यते । अपादानस्य तु न कर्मत्वप्रसक्तिस्तन्निष्ठविभागस्य धातुजन्योपस्थितिविषयत्वाभावेन धात्वर्थतावच्छेदकत्वाभावादित्याशयः । ननु प्रयागात्काशीं गच्छतीत्यादौ शाब्दप्रमाविषयतया प्रतीयमानस्य विभागस्य धातुनिष्ठशक्तिगम्यत्वमभ्युपगच्छतां फलांशे धात्वर्थतावच्छेदकत्वनिवेशो नापादानस्य कर्मत्वं वारयति किन्तु शास्त्रकृत्कल्पितो बाध्यबाधकभाव एवेति मूलकारसूचितं विशदयन्नाह ॥ **ननु विभागस्येत्यादि** ॥ **सावकाशाया इति** ॥ विषस्य गलाधोदेशसंयोगाश्रयत्वेनानुद्देश्यत्वात्कर्तुरिति कर्मत्वस्याप्राप्तिर्विभागानुकूलव्यापाररूपस्यापायस्याभावादपादानत्वस्याप्राप्तिरिति तथायुक्तमिति कर्मत्वस्यायमवकाश इति भावः ॥ **द्वितीयासिद्धिरिति** ॥ नन्वेवं यत्र फलाश्रयत्वेनोद्देश्यत्वाभावस्तत्र तथायुक्तमित्यनेन प्राप्तकर्मत्वस्य विषये निरवकाशेनापादानत्वेन बाधः । यत्र तु तादृशफलाश्रयत्वेनोद्देश्यता तत्र परेण कर्तुरिति कर्मत्वेन बाध इति पर्यवसन्नम् । तथा च वृक्षं त्यजतीत्यादावुद्देश्यत्वेनाविवक्षायामपादानत्वं प्रयागात्काशीं गच्छतीत्यादौ तद्विवक्षायां कर्तुरित्यनेन कर्मत्वं च दुर्वारमतो न निरुक्तव्यवस्थया निर्वाह इत्यत आह ॥ **फलतानवच्छेदकत्वादिति** ॥ प्रयागात्काशीं गच्छतीत्यादौ गम्याद्यर्थविभागीयफलतावच्छेदकसम्बन्धश्चानुयोगित्वम् । तेन सम्बन्धेन प्रयागादेर्विभागात्मकधात्वर्थफलानाश्रयत्वात्केनापि कर्मत्वस्याप्राप्त्या निरपवादमपादानत्वमतो ग्रामं त्यजतीत्यादौ फलतावच्छेदकीभूतप्रतियोगितासम्बन्धेन विभागाश्रये ग्रामादौ प्रसक्तमपादानत्वं परत्वात्कर्मत्वेन बाध्यते । फलतावच्छेदकसम्बन्धेन धातूपात्तफलाश्रयत्वमेवोद्देश्यानुद्देश्यसाधारणमिह कर्मत्वमत एव चैत्रो ग्रामं गच्छतीत्यादौ

संयोगाश्रये कर्तरि न कर्मत्वप्रसक्तिः । अनुयोगित्वस्यैव धात्वर्थसंयोगीयफलतावच्छेदकसम्बन्धतया तेन सम्बन्धेन कर्तरि तदाश्रयत्वाभावादतो न काप्यनुपपत्तिरित्याशयः ।

केचित्तु गम्यादीनां संयोगानुयोगित्वानुकूलो व्यापारो धात्वर्थः । तदनुयोगित्वं च प्रधानव्यापारप्रयोज्यफलं ग्रामं गच्छति चैत्र इत्यादौ धातूपात्ततथाविधफलाश्रयत्वाद्ग्रामादेः कर्मत्वं, कर्तरि तदाश्रयत्वाभावादेव न कर्मत्वप्रसक्तिः । त्यजत्यादीनां तु विभागीयप्रतियोगित्वानुकूलो व्यापारोऽर्थः । विभागप्रतियोगित्वं च धातूपात्तं तादृशव्यापारप्रयोज्यं फलमिति वृक्षं त्यजतीत्यादौ तदाश्रयस्य वृक्षादेः कर्मत्वम् । अपादानत्वस्य तु न प्रसक्तिरपायाभावात् । विभागानुकूलव्यापार एव ह्यपायः । वृक्षात्पततीत्यादौ विभागविशिष्टसंयोगानुयोगित्वानुकूलो व्यापारोऽर्थ इति विशिष्टसंयोगानुयोगित्वरूपफलाश्रयस्य भूम्यादेरेव कर्मत्वं, न वृक्षादेस्तादृशफलाश्रयत्वाभावात् । एवं च फलतावच्छेदकसम्बन्धस्य कर्मतानियामकत्वकल्पना निष्फलैवेत्याहुः[1] ।

अत्रेदं बोध्यम् । गम्यादीनां संयोगानुयोगित्वानुकूलो व्यापारो वाच्य इत्युक्तावपि स्वरूपसम्बन्धेन संयोगानुयोगित्वरूपफलाश्रयत्वेन गम्यमानग्रामवत्कालिकसम्बन्धेन तादृशफलाश्रयत्वाद्ग्रामान्तरस्याप्युदासीनस्य कर्मत्वापत्तिः । तथा चैत्रादौ कर्तर्यपि । किञ्च वृक्षादपसरतीत्यादौ विभागानुयोगित्वानुकूलव्यापारवाचकत्वे विभागानुकूलव्यापारात्मकापायाभावादपादानत्वानुपपत्तिः । विभागानुकूलव्यापारस्यैव तदर्थत्वे तु विभागात्मकफलाश्रयत्वेन वृक्षादेः कर्मत्वापत्तिः । अपि च परस्परस्मान्मेषावपसरत इतिवत्स्वस्मात्स्वयमपसरतीति प्रयोगो दुर्वारः । तत्र ह्यौपाधिकभेदेन परस्परशब्दप्रतिपाद्यस्य भेदमाश्रित्यापादानत्वनिर्वाहोऽन्यथा परत्वात्कर्तृत्वेन बाध एव स्यात् । फलतावच्छेदकसम्बन्धस्य कर्मतानियामकत्वे तु तेन सम्बन्धेन फलव्यधिकरणव्यापारस्यैव प्रकृते धात्वर्थताया वक्तव्यत्वात्तादृशप्रतियोगित्वेन विभागान्वयस्तादृशप्रतियोगित्वसम्बन्धेन व्यापारवैयधिकरण्यासम्भवात्कर्मत्ववदपादानत्वस्यानुपपत्तिरेवेति नायं प्रयोगः । अनभिधानं तु न युक्तम् ।

---

१. आहुरिति ।। अत्र यद्वक्तव्यं तदधस्तान्निरूपितम् ।

प्रकारान्तरेण परिहारसम्भवे तस्यायुक्तत्वात् । न च मेषाभ्यां परस्परमपसरतीत्यस्यानिष्टस्यानभिधानं तवाप्यावश्यकमिति वाच्यम् । व्यासज्यवृत्तिधर्मावच्छिन्नसमभिव्याहृतक्रियोद्देश्यतावच्छेदकावच्छिन्नतदवच्छेदकतावच्छेदकावच्छिन्नान्यतरबोधकत्वेन परस्परशब्दस्य शक्तिग्रहे तदीयोद्देश्यप्रसिद्धेरावश्यकत्वेन तदभावादेव तादृशप्रयोगाभावात् । परस्परतपस्सम्पदित्याद्युपपत्त्यर्थमुद्देश्यतावच्छेदकतावच्छेदकावच्छिन्नत्वनिवेशः । न चैवमपपूर्वस्य सृधातोः प्रतियोगित्वेन विभागव्यधिकरणव्यापारवाचकत्वे फलतावच्छेदकीभूतप्रतियोगितासम्बन्धेन विभागाश्रये वृक्षादौ कर्मत्वेन बाधादपादानत्वाप्राप्त्या वृक्षादपसरतीत्यादिकः प्रयोगो न स्यात्किन्तु वृक्षं त्यजतीतिवद्वृक्षमपसरतीत्येव स्यादिति वाच्यम् । कर्मत्वाविवक्षायां वृक्षाद्विभजतीतिवत्तादृशप्रयोगस्य निर्बाधत्वाद्वृक्षं त्यजतीतिवद्वृक्षमपसरतीत्यभीष्टमेव, सत्यभिधाने इत्याहुः ॥

**संसर्गत्वमते इति** ॥ तत्तत्कारकशक्तिः क्रियाकारकभावसम्बन्धश्च कारकविभक्तीनामर्थः । तत्र कारकशक्तिश्च कर्मत्वादिरूपा प्रकृत्यर्थविशेषणं, संख्यावत् । कर्मत्वादिरूपकारकशक्तिविशेषितप्रकृत्यर्थस्य क्रियायां विशेषणत्वे क्रियाकारकभावात्मकविभक्त्यर्थसम्बन्धस्संसर्ग इति मते इत्यर्थः । ननु यत्किञ्चित्पदार्थप्रतियोगिकपदार्थान्तरानुयोगिकसम्बन्धस्य वाक्यादुपस्थितस्याकाङ्क्षालभ्यस्य वा संसर्गतया भानं न तु पदादुपस्थितस्येति कथमिह विभक्त्युपस्थापितस्य संसर्गत्वमिति चेदत्र केचित् । वाक्यादुपस्थितस्यैव संसर्गत्वमिति न नियमो, मानाभावात् । किन्तु तस्य संसर्गत्वमेव न तु प्रकारत्वम् । पृथगुपस्थितस्य तस्य प्रकारत्वेनानुपस्थित्या शाब्दबोधीयप्रकारत्वायोगात् । अन्यथा समानाकारकत्वनियमव्याकोपः । पदादुपस्थितस्य तु प्रकारत्वेनोपस्थितस्य प्रकारता संसर्गत्वेनोपस्थितस्य संसर्गता । अत एव राज्ञः पुरुष इत्यादौ षष्ठ्युपस्थापितस्यापि संसर्गत्वम् । अत एव च घटपदादुपस्थितेषु घटत्वघटसमवायेषु घटत्वं विशेषणम् । घटो विशेष्यस्समवायस्संसर्ग इति सकलतान्त्रिकसम्मतो व्यवहार इति वदन्ति ॥

**मूले धातूपस्थाप्ययोरिति** ॥ धातूनां फलव्यापारयोः पृथगुपस्थापिका विशेषणविशेष्यभावानवगाहिनी विशृङ्खला शक्तिः । तयोर्वैयधिकरण्यं सामानाधि-

करण्यं च वस्तुसत्। अनुकूलत्वं संसर्गः। कर्मकर्तृप्रत्ययावेव तयोर्विशेषणविशेष्यभावनियामकौ। फलावच्छिन्नव्यापारे व्यापारावच्छिन्नफले च शक्तिरिति तु न युक्तम्। गौरवादित्याशयः। नन्वेकपदनिष्ठशक्तिप्रयोज्यपृथगुपस्थितिविषयाणामर्थानां परस्परान्वयो व्युत्पत्तिविरुद्धः। अन्यथा हर्यादिपदोपस्थाप्यानामपि परस्परान्वयप्रसङ्गः। न चैकपदनिष्ठविभिन्नशक्त्युपस्थाप्यनामेवार्थानां परस्परान्वयो व्युत्पत्तिविरुद्धः। प्रकृते चैकैव पृथगुपस्थापिका विशृङ्खलशक्तिरिति न तादृशव्युत्पत्तिविरोध इति वाच्यम्। पुष्पवन्तावित्यत्र पुष्पवत्पदीयविशृङ्खलशक्त्युपस्थाप्ययोस्सूर्याचन्द्रमसोः परस्परान्वयवारणार्थमेकपदोपस्थाप्ययोर्विभिन्नशक्तिनिरूप्ययोर्विशृङ्खलशक्तिनिरूप्ययोर्वा परस्परान्वयाभावव्युत्पत्तेरवश्याश्रयणीयत्वादत आह ॥ तद्व्यत्यासेनैवेति ॥ तत्तत्फलावच्छिन्नव्यापारे व्यापारावच्छिन्नफले च धातूनां पृथग्विशिष्टशक्तिराश्रीयते, प्रामाणिकत्वाच्च गौरवं न दोषावहमिति भावः ॥

केचित्तु एकपदोपस्थापितानामित्यस्यैकशक्यतावच्छेदककोपस्थितिविषयाणां परस्परान्वयो नेत्यर्थः। पुष्पवन्तावित्यत्रोभयानुगतमेकमेव शक्यतावच्छेदकमिति न तदुपस्थाप्ययोस्सूर्याचन्द्रमसोः परस्परान्वयः। फलव्यापारयोस्तु फलत्वव्यापारत्वरूपशक्यतावच्छेदकभेदेनैकयैव शक्त्या तदुपस्थापनान्न परस्परान्वयविरोधः। हर्यादिनानार्थकस्थले तु तत्पदीयैकार्थविषयकतात्पर्यप्रयोज्यबोधस्य तदितरार्थविषयकबोधं प्रति प्रतिबन्धकत्वकल्पनाद्युगपदुभयार्थविषयकबोधाभाव एवेति न दोषः।

---

१. न दोषावहमिति भाव इति ॥ वस्तुतस्त्वेवमाशयवर्णनमयुक्तम्। तत्र गौरवाभावस्यैवोपाध्यायाभिप्रेतत्वात्। तथाहि। पृथक्शक्तिवादिनामेव पृथगुपस्थितयोरन्वयसामग्रीकल्पनाप्रयुक्तं गौरवम्। न च गुरुधर्मावच्छिन्ने शक्तिद्वयकल्पनायां तवाप्यस्त्येव गौरवमिति वाच्यम्। तस्य सामग्रीकल्पनागौरवेण निमातुं शक्यत्वेन पृथक्शक्तिद्वयकल्पनाप्रयुक्तगौरवस्यातिरिच्यमनत्वात्। किञ्चान्वये वाक्यस्य शक्तेर्वैयाकरणैरभ्युपगमेनात्र वाक्यस्थानीयस्य धातोर्विशिष्टार्थे शक्तिद्वयकल्पनमपरिहार्यमेवेत्यतिगौरवम्। स्पष्टा चेयं रीतिर्मञ्जूषायाम्। एवं च विशिष्टशक्तिवादिनां लाघवस्यैव सत्त्वेन वैपरीत्येन गौरवमापाद्य तस्य प्रामाणिकत्वेन दोषावहत्वाभावकथनमयुक्तमेव। अतो लाघवात्पृथगुपस्थितयोरौत्सर्गिकस्योद्देश्यविधेयभावेनान्वयस्य त्यागप्रसङ्गाच्च विशिष्टशक्तिकल्पनं युक्तमिति मूलाशयवर्णनं युक्तमिति बोध्यम्।

पुष्पवत्पदे चन्द्रत्वसूर्यत्वरूपशक्यतावच्छेदकद्वयावगाहिनी विशृङ्खलितशक्तिरिति मते तु पृथगुपस्थितयोरेकया शक्त्या परस्परान्वयो नेत्येवास्तु, फलव्यापारयोस्तु जन्यजनकभावापन्नयोरगत्या व्युत्पत्तिवैचित्र्यादेव परस्परान्वयः। एकपदोपस्थापितानामिति त्वयुक्तमेव, संख्याकारकयोः परस्परान्वयानुपपत्तेः। विशिष्टशक्तिस्त्वयुक्ता, गौरवादेकदेशान्वयदोषदूषितत्वाच्चेत्याहुः॥

**प्राथमिकान्वय इति**॥ हरिणा भवतीत्येवं प्राथमिकान्वये पश्चादाकाङ्क्षावशात्कृदन्तेन पार्ष्णिकस्सम्बन्ध इति तेषामाशयः॥ **कर्तृत्वेनेति**॥ कर्तृतानिर्वाहाय कल्पिते प्राथमिकबोधे तथैवान्वयस्यावश्यकत्वादिति भावः॥ **नामसम्बन्धीति**॥ ननु नामतैक्ष्ण्यं कथं तद्वाच्ये स्यात्। अन्यधर्मस्यान्यत्र वक्तुमशक्यत्वात्। न च नामसम्बन्धितैक्ष्ण्यज्ञाप्यतैक्ष्ण्यवानित्यर्थः। ज्ञाप्यत्वं तृतीयार्थ इति वाच्यम्। तथासतीत्थंभूतलक्षण इत्यनेनैव तृतीयासिद्धावेतदुदाहरणत्वासङ्गतेरिति चेन्न। सुतीक्ष्णादिशब्दानां तीक्ष्णत्वबोध्यतीक्ष्णत्ववानित्यादिरर्थः।

---

१. आहुरिति॥ परे त्विदमयुक्तम्। एकपदोपस्थितानामित्यस्यैकशक्यतावच्छेदककानामित्यर्थस्य शक्त्याऽलाभेन लक्षणापत्तेः। न च यथाश्रुते तिङर्थकारकसंख्ययोः परस्परान्वयदर्शनेन परेषामेवकारार्थान्यनिरूपितवृत्तित्वाभावयोर्लिङर्थकृतिसाध्यत्वेष्टसाधनत्वयोश्च तद्दर्शनेन च लक्षणाश्रयणमावश्यकमिति वाच्यम्। अस्मन्मते लिङेवकारयोस्तदर्थकत्वाभावस्यान्यत्रोक्तत्वेन परेषां बाधस्यास्माकमप्रतिबन्धकत्वात्। तिङर्थसंख्याया धात्वर्थक्रियायामन्वयस्य मञ्जूषायां विस्तरतो निरूपितत्वेनैकपदोपस्थापितानामिति नियमस्य प्रकृते प्रसक्त्यभावाच्च। वस्तुतस्तिङां सिद्धान्ते द्योतकत्वेन धातुना संख्याकारकविशिष्टोपस्थितेर्न काप्यनुपपत्तिः। एवं च तत्तदन्वयबोधौपयिकसामग्रीकल्पनापि नेति लाघवम्। एतेन विशिष्टशक्तौ गौरवमित्यपास्तम्। तत्र लाघवस्योपपादितत्वाच्च। किञ्चैकशक्यतावच्छेदककानामिति स्वीकारेऽपि पुष्पवन्तपदे उभयत्वं शक्यतावच्छेदकमिति मीमांसकमते ज्ञानशक्तिवादिनां च मते यथाकथंचिदुपपत्तावपि चन्द्रत्वसूर्यत्वरूपशक्यतावच्छेदकद्वयमिति भट्टाचार्योक्तसिद्धान्तमते तावताप्यनिर्वाहः। किञ्च हर्यादिपदोपस्थितयोः परस्परमन्वयवारणाय प्रतिबध्यप्रतिबन्धकभावकल्पने गौरवम्। अपि च विशिष्टशक्त्या निर्वाहे फलव्यापारयोः पृथगुपस्थितिमाश्रित्य अगत्या व्युत्पत्तिवैचित्र्येण परस्परान्वय इत्ययुक्तमेव। गतेस्सत्त्वात्। क्रियायाः कारकांशे नित्यसाकाङ्क्षत्वात्तत्रैकदेशान्वयो दोष इत्यन्यत्र प्रपञ्चितम्। तस्मादयुक्त एवायं मूलखण्डनाग्रह इत्याहुः॥

तृतीयार्थसम्बन्धस्यैकदेशेन तीक्ष्णत्वेनान्वयः। इत्थं च नामसम्बन्धितीक्ष्णत्वबोध्यतीक्ष्णत्ववानित्यादिरर्थ इत्याशयात्।

केचित्तु इत्थंभूतलक्षण इत्यनेन विधीयमानतृतीयाया अर्थो न ज्ञानज्ञाप्यत्वमपि त्ववच्छिन्नत्वमेव, ततश्च जटावच्छिन्नस्तापस इत्यादिरर्थः। अत एव घटत्वेन घट इत्यादावित्थंभूतलक्षणतृतीयेति प्रवादः। इत्थं च नामज्ञाप्यतीक्ष्णत्ववानित्यर्थेऽपि न काप्यनुपपत्तिरित्याहुः॥

अन्ये तु ज्ञानज्ञाप्यत्वमेवेत्थंभूतलक्षणतृतीयाया अर्थः। अत एवानुशासनघटकलक्षणपदोपस्थानसङ्गतिः। ज्ञाप्यत्वस्य तदर्थत्वाभावे च कथमपि लक्षणस्य तृतीयाबोध्यत्वाभावेन तदनुपपत्तिस्स्पष्टैव। धूमादग्निमानित्यादौ हेतुपञ्चम्या अपि ज्ञाप्यत्वमर्थ इत्यन्यत्। नाम्ना सुतीक्ष्ण इत्यादौ च तृतीयायास्तादृशज्ञाप्यत्वार्थकत्वेऽपीत्थंभूतलक्षण इत्यनेन न तत्प्रवृत्तिस्तेन हि ज्ञापकवाचकात् ज्ञाप्यत्वे तृतीया विधीयते। प्रकृते तु नाम न ज्ञापकम्। किन्तु तद्गतं तीक्ष्णत्वम्। इत्थंभूतलक्षणतृतीयाविषये ज्ञाप्यधर्मस्य प्रमाणान्तरविषयत्वमपेक्षितम्। अत एव यत्र ब्राह्मणत्वादिकं प्रत्यक्षविरुद्धं तथाविधे विषये यज्ञसूत्रेण ब्राह्मण इत्यादिको न प्रयोगः। सुतीक्ष्णे च तीक्ष्णत्वं न प्रमाणान्तरसिद्धमिति नानेन तत्र तृतीयासिद्धिरतो युक्तमेव प्रकृत्यादित्वम्। घटत्वेन घट इत्यादावपि तृतीयाप्रवृत्तौ प्रकृत्यादित्वमेव शरणम्। सुतीक्ष्णादिशब्दानां लाक्षणिकत्वकल्पनायां मानाभाव इत्याहुः॥

**धात्वर्थाश्रयस्यैवेति**॥ साधकतमव्यापारो न धात्वर्थः। किन्तु तृतीयार्थस्य करणकारकस्य व्यापारद्वारकसंसर्गेणान्वयबलात्प्रतीयत इत्याशयः॥ **मानाभावादिति**॥ ननु कृदन्तत्वज्ञानसापेक्षसमभिव्याहृतपदान्तरोपस्थापितक्रियायोगनिमित्तकषष्ठ्यपेक्षया क्रियाकारकभावमात्रपुरस्कृतकरणत्वप्रयुक्ततृतीयायाश्शीघ्रोपस्थितिकत्वमेव प्रकृतविषये षष्ठ्या अप्रवृत्तौ मानं भवितुमर्हतीत्यत आह॥ **ध्वनितं चेदमिति**॥ तत्र हि कैयटे कृत्प्रयोगे षष्ठ्या द्वितीयाऽपवाद-

---

१. **आहुरिति**॥ अस्यायुक्तत्वं विशदयन् उपाध्यायसिद्धान्तमाह। अन्ये त्वित्यादिना॥

त्वाद्बाध्यते, तृतीया तु परत्वादित्युक्तम् । प्रकृतिविशेषविहितत्वेन षष्ठ्या अपि शीघ्रोपस्थितिकत्वमूलकमन्तरङ्गत्वमित्युभयोरप्यन्तरङ्गत्वात्परत्वमेवात्र व्यवस्थापकमिति तदाशयः । सर्वमिदं मनसादेवशब्दस्य संज्ञात्वे सति प्रामाण्ये त्वया सम्भाव्येत तदेव दुर्लभमित्याह ॥ **संज्ञात्वे इति** ॥ ननु मनसस्संज्ञायामित्यत्र संज्ञाशब्देन योगरूढस्य ग्रहणम् । अत एव मनसागुप्तेत्यादौ तत्प्रवृत्तिः । इत्थं च पङ्कजं मनसादेव इत्यभियुक्तवचनघटकतया मनसादेवशब्दस्यापि योगरूढेषु परिगणितत्वात्कथमलुक्प्रयोजकसंज्ञात्वाभाव इत्यत आह ॥ **दृढतरेति** ॥ तत्र मनसागुप्तेत्येव पाठ इति नात्र दृढतरप्रमाणमिति भावः । नन्वाकडारीयसंज्ञासु यथोद्देशपक्ष एवेत्यन्यत्र बहुशः स्पष्टत्वात्कथमिह दिवः कर्म चेति विहितकर्मसंज्ञायाः कार्यकालत्वाश्रयणेन द्वितीयातृतीययोस्समावेशसाधनमत आह ॥ **अक्षान् दीव्यतीत्यत्रेति** ॥ **न च तदा करणत्वमिति** ॥ धनस्य देवनसाध्यत्वेन साधकतमत्वायोगादिति भावः ॥

**शाब्दगुणाद्यन्वयित्वाभाव इति** ॥ शाब्दत्वं च इतरसम्बन्धं विना प्रतीयमानत्वम् ॥ **गुणादीत्यादिना** क्रियाद्रव्ये । अयं भावः । पुत्रेण सहागतः पितेत्यादौ सहार्थस्साहित्यम् । तच्च समभिव्याहृतपदार्थयोस्समानकालिकत्वादिरूपम् । पदार्थद्वयसमानकालिकत्वस्योभयप्रतीतिमूलकत्वादेकेन गम्यादिना सकृदर्थद्वयप्रत्यायनायोगादेकस्य शब्दतः प्रतीतिरपरस्य सहार्थसम्बन्धवशादाक्षेपः । तत्र यस्य शब्दतः प्रतीयमानेन गुणक्रियादिना सम्बन्धस्तस्य प्राधान्यम् । यस्य पुनराक्षिप्यमाणेन सम्बन्धस्तस्याप्राधान्यम् । पुत्रकर्तृकगमनसमानकालिकगमनकर्ता पितेत्यादिको बोधः । तिलैस्सह माषान् वपतीत्यादौ समानदेशवर्तित्वरूपं तत् । तिलकर्मकवापसमानदेशवर्तिमाषकर्मकवापानुकूलो व्यापार इत्यादिकस्तत्र बोध इति ॥ वस्तुतो निरुक्तसमानकालिकत्वादिसमनियतमखण्डोपाधिरूपं साहित्यम् । तत्प्रतियोगित्वमेव चाप्राधान्यम् । तच्च वैवक्षिकम् । राज्ञा सह सेना गच्छति सेनया सह राजा गच्छतीत्याद्युभयविधप्रयोगदर्शनादित्याहुः[1] ॥ **तत्सम्बन्ध इति** ॥ साहित्यं समभिव्याहृतगुणादिसम्बन्धेनैवेति पाश्चात्यो मानसस्तत्सम्बन्ध आवश्यक इति भावः ।

---

१. **आहुरिति ॥ परे त्वत्रागमनस्य पाश्चात्यमानसिकबोधविषयत्वकथनं**

केचित्तु समभिव्याहृतपदार्थसमानकालिकत्वादिरूपे साहित्ये समभिव्याहृतपदार्थो गमनादिरेव सहार्थः। समानकालिकत्वादिकं च संसर्गस्तत्र यस्य शाब्दप्राधान्योपहितगम्याद्यर्थान्वयस्तस्य प्राधान्यमप्रधानीभूतसहार्थान्वयिनश्चाप्राधान्यमिति न मानसिकान्वयापेक्षेत्याहुः ॥

**आपत्तेरिति** ॥ एवञ्चापवादविषयत्वात्तद्विषये प्रधानादपि प्रथमाया अप्रवृत्तिरप्रधानग्रहणप्रत्याख्यानादिति भावः। नन्वपवादोऽपि यद्यन्यत्र चरितार्थस्तर्ह्यन्तरङ्गेण बाध्यत इति न्यायेनापवादभूताया अपि तृतीयाया अन्तरङ्गभूतया प्रथमया बाधादभीष्टसिद्धिरिति नायं दोष इत्यत आह ॥ **अनन्तरस्येति** ॥ ननु बाध्यविशेषबाध्यसामान्यचिन्तयोर्लक्ष्यानुरोधेन व्यवस्थितत्वादिह बाध्यसामान्यचिन्तामाश्रित्य प्रागुक्तन्यायेन प्रथमाया उपपत्त्या पक्षान्तरेण दोषापादनमयुक्तम्। किञ्च पितुरागमनमित्यादौ समभिव्याहृतपदान्तरनिमित्तकोपपदविभक्त्यपेक्षया क्रियामात्रनिमित्तककारकविभक्तेरन्तरङ्गत्वादेव प्रातिपदिकार्थमात्रनिमित्तकप्रथमाया इव तृतीयाबाधकत्वसिद्ध्या वाचनिकतया कारकविभक्तेर्बिल-

---

मतान्तराभिप्रायेणैव। स्वमते तु साहित्यबलात्प्रतीयमानस्यागमनस्य शाब्दबोधविषयत्वमेव। प्रतीयमानागमने पुत्रस्य क्रियाकारकभावसम्बन्धेनान्वयः। तस्य च साहित्ये। तस्य चाङ्पूर्वकगम्यर्थे, तस्य कृदर्थकर्तरि, तस्य पितरि। तथा च पुत्रकर्तृकागमनसाहित्यवदागमनकर्ता पितेति बोधः। अत्र साहित्यं समानकालिकत्वादि। तत्समनियतमखण्डोपाधिर्जातिर्वा। एवं चात्र कर्तृकरणयोरित्यनेनैव तृतीया। अत एवैतत्सूत्रस्य नियामकत्वशङ्कासमाधानादिकं भाष्यकारीयं सङ्गच्छते। अन्यथाऽत्र कर्तृकरणयोरित्यस्याप्राप्त्या नियामकत्वशङ्का निर्दलैव स्यात्। अत्र शब्दोपात्तक्रियाकर्तुरुक्तत्वेऽपि प्रतीयमानक्रियाकर्तुरनुक्तत्वान्न तृतीयानुपपत्तिः। अत एव पुत्रेण सह पितुरागमनमित्यत्र पुत्रशब्दात्कर्तृकर्मणोरिति षष्ठी न। सूत्रं तु पुत्रेण सह स्थूल इत्याद्यर्थम्। तत्र पुत्रस्थौल्यसाहित्यवत्स्थौल्यवानिति बोधेन पुत्रस्य प्रतीयमानस्थौल्येऽन्वयेन कर्तृत्वाभावात्। न च तत्र सहार्थयोगाभाव इति वाच्यम्। प्रतीयमानगुणक्रियाद्वारकयोगस्य विवक्षणेनादोषात्। स्पष्टं चेदं मञ्जूषायामित्याहुः ॥

१. आहुरिति ॥ वस्तुतस्तु आगमनस्य सहार्थत्वमयुक्तम्। धातूपस्थितक्रियाया एव कारकान्वययोग्यतावच्छेदकरूपाक्रान्तत्वस्यान्यत्र प्रतिपादितत्वेन प्रकृते पुत्रस्य कारकत्वेनान्वयासम्भवेन नियामकत्वशङ्कापरपूर्वोक्तभाष्यविरोधापत्तेः। अतो मञ्जूषोक्तपूर्वरीत्यैव निर्वाह उचित इति बोध्यम्।

क्षणबलवत्त्वोपवर्णनं व्यर्थमन्यत्रानुपयुक्तं चेत्यत आह ॥ **किं चेति** ॥ **क्रियाकारकभावसम्बन्धमूलकत्वेनेति** ॥ राज्ञः पुरुष इत्यादौ राजपुरुषादेः स्वस्वामिसम्बन्धस्य पोषणक्रियाप्रयुक्तः क्रियाकारकसम्बन्धो मूलमित्यादि षष्ठी शेष इति सूत्रभाष्यकारोपदर्शितरीत्येति भावः ॥ **अनापत्तेरिति** ॥ सूत्रन्तु गुणद्रव्यसमभिव्याहारे षष्ठीविषये चरितार्थमिति भावः । ननु पितुरागमनमित्यादौ क्रियायोगनिमित्तत्वेन षष्ठ्यादीनां क्रियानिमित्तत्वात्तद्गतं प्राधान्यमुपादाय प्रधानकार्यत्वं, तृतीयायास्तु समभिव्याहृतक्रियाकर्तृत्वादिमूलकसाहित्यप्रयुक्तत्वेन कारकनिमित्तकत्वादप्रधानीभूतकारकनिमित्तकत्वेनाप्राधान्यम् । इत्थं चान्तरङ्गत्वाभावेपि प्रधानकार्यतया सर्वतो बलवत्त्वेनाभीष्टस्थले कारकविभक्तेर्निर्बाधतया न्यायस्य यौक्तिकत्वेनैवोपपत्तौ वाचनिकत्वोपवर्णनमयुक्तं व्यर्थं चेत्यत आह ॥ **एकक्रियेत्यादि** ॥ **अप्रधानक्रियायामपीति** ॥ पितुरागमनमित्यादौ भावल्युडन्तत्वेन कथञ्चित्क्रियायाः प्राधान्येपि पुत्रेण सह पितुः पालक इत्यादौ कृदर्थकर्तृविशेषणीभूतपालनक्रियाया अप्राधान्येन क्रियायाः प्राधान्यनियमाभावेन तत्प्रयुक्तविभक्तेः प्रधानकार्यत्वानुपपत्त्या कारकविभक्तेर्वाचनिकबलवत्त्वस्यावश्यकत्वेन यौक्तिकत्वं न्यायस्य न सम्भवतीत्याशयः ॥ **पितेत्यस्य सङ्ग्रह इति** ॥ प्रथमाया अपि कथञ्चित्कारकार्थकविभक्तित्वरूपकारकविभक्तित्वेनैव निर्वाहो न त्वन्तरङ्गत्वेन, तिङ्समानाधिकरणे प्रथमेत्यादिवार्तिकस्वारस्येनाध्याह्रियमाणास्तिक्रियासापेक्षत्वेनान्तरङ्गत्वायोगादित्याशयः ॥

**अलमिति** ॥ अत्रेदं बोध्यम् । प्रकृतन्यायघटककारकत्वं च क्रियान्वयित्वं, न तु क्रियाजनकत्वम् । नापि कारकविभक्तिः कारकार्थकविभक्तिः, किन्तु यदपेक्षया यदर्थस्य साक्षात्प्रधानक्रियासम्बन्धस्सा तदपेक्षया कारकविभक्तिः । अत एव पुत्रेण सह पितुर्धनं पुत्रेण सह पित्रे नम इत्यादौ प्रतीयमानास्तिक्रियायां साक्षादन्वितार्थकत्वेन कारकविभक्तितया षष्ठीचतुर्थ्योरुपपत्तिः । अन्यथा कारकविभक्तित्वाभावेन प्रकृतन्यायाप्रवृत्त्या निरुक्तस्थले षष्ठ्या अपवादत्वाच्चतुर्थ्याः परत्वाच्च बाधा स्यादिति तदनुपपत्तिः । किञ्च परम्परया क्रियान्वय्यर्थकविभक्त्यपेक्षया साक्षात्तदन्वय्यर्थकविभक्तेरन्तरङ्गत्वस्य न्याय्यतया न्यायस्यापि नापूर्वत्वम् । नमस्करोति देवानित्यादौ तु नमश्शब्दार्थसम्बन्धमूलकचतुर्थ्यपेक्षया क्रियानिमित्तककर्मत्व-

प्रयुक्तविभक्तेः प्रधानकार्यत्वादेव निर्वाहः । प्रथमाया अपि प्रतीयमानास्तिक्रियायां साक्षात्सम्बन्धमूलकं कारकविभक्तित्वमव्याहतमेवेति वदन्ति ॥

**सम्भवतीत्यर्थ इति** ॥ इत्थं च सामर्थ्यादवयववाचिना यच्छब्देन विकृतावयव एव परामृश्यत इति भावः । अक्ष्णा काण इत्यत्र दर्शनसामर्थ्यहीनताप्रयुक्तदर्शनाभाववान् सचक्षुष्कः काणपदार्थः । एवं चाक्षिसम्बन्धिदर्शनसामर्थ्यहीनताप्रयुक्तदर्शनाभावविशिष्टसचक्षुष्कत्ववानिति बोधः । सम्बन्धस्तृतीयार्थः । यद्वा दर्शनसामर्थ्यहीनताप्रयुक्तत्वं तृतीयार्थस्सम्बन्धः । दर्शनाभाववान् सचक्षुष्क इत्येव काणपदार्थः । एकदेशान्वयस्तूभयथाप्यगत्या स्वीकर्तव्य एव । चक्षुस्सम्बन्धिदर्शनसामर्थ्यहीनताप्रयुक्तदर्शनाभाववानन्धः । एकचक्षुस्सम्बन्धिदर्शनसामर्थ्यहीनताप्रयुक्तदर्शनाभाववान् काण इत्यन्धताव्याप्यत्वं काणे, अत एव सुतरां दर्शनाभावमपेक्ष्य किञ्चिद्दर्शनं ज्याय इत्यभिप्रायकमन्धानां काणो राजेति यतश्चेति सूत्रस्थं भाष्यमुपपद्यते । अतिशायने तमबिति सूत्रे तु भाष्ये त्वन्धानां कारणतम इत्युदाहृत्य कणिरयं सौक्ष्म्ये वर्तते । सर्व इमे किञ्चित्पश्यन्ति, अयमेषां काणतम इत्युक्तम् । कैयटेन च दर्शनाभावप्रकर्षाश्रयस्तमबित्युक्तम् । तेन च काणत्वान्धत्वयोर्न वैषम्यमिति लभ्यते । तत्त्वमत्र सुधीभिराकलनीयम् । कर्णेन बधिर इत्यत्र श्रोत्रसम्बन्धिश्रावणसामर्थ्यहीनताप्रयुक्तश्रावणज्ञानाभाववानिति बोधः । पादेन खञ्ज इत्यत्र पादसम्बन्धिविकारप्रयुक्तसंस्थानवैधुर्यवानिति बोध इत्येवमन्यत्रापि स्वयमूहनीयम् । मुखेन त्रिलोचन इत्यादौ प्रकृत्यादित्वप्रयुक्ता तृतीया, मुखसम्बन्धित्रिलोचनत्ववानित्यादिको बोध इत्याहुः ॥

---

१. **वदन्तीति** ॥ परे तु प्रकृतन्याये कारकत्वं क्रियाजनकत्वमेव ग्राह्यम् । क्रियान्वयित्वस्य ग्रहणे लक्षणापत्तेः । न चैवं पुत्रेण सह पितुर्गौः, पुत्रेण सह पित्रे नम इत्यादौ पितुरपि तृतीयापत्तिः । क्रियान्वयित्वमित्युक्तौ तु यदपेक्षया यस्य साक्षात्प्रधानक्रियान्वयस्सा तदपेक्षया कारकविभक्तिरिति विवक्षणेन न्यायात्सिद्धिरिति वाच्यम् । षष्ठीवद्विशेषणवाचकादेव तृतीयेति स्वीकारेण प्रकृते दोषाभावेनोक्तविवक्षाया अनुपयोगात् । एवञ्चैतन्न्यायमन्तरापि पुत्रेण सहागतः पितेत्यस्य सिद्धिः । तदेतत्सूचितमित्युपसंहरता मूलकृता । एवं चाननुभूतापूर्वार्थकल्पनाप्रयासो विफल एवेत्याहुः ।

१. **क्रियासाधारणमितीति** ॥ इदानीन्तनमूलग्रन्थेष्वयं पाठो नोपलभ्यते ।

क्रियासाधारणमिति ॥ तदितरनिरूपितत्वे सति तन्निरूपितत्वं तत्साधारण्यम् ॥ वैषम्यान्तरमिति ॥ क्रियानिरूपितं व्यापारोपहितं साधनत्वं करणत्वम् । क्रियानिरूपितमपि व्यापारानुपहितं हेतुत्वम् । गुणद्रव्यनिरूपितं व्यापारोपहितमनुपहितं वा साधनत्वं हेतुत्वमेवेत्येवं रूपं वैषम्यमित्यर्थः । नन्वेवं वैषम्येपि व्याप्यव्यापकभावापन्नतया व्यापके हेतुत्वे तृतीयाविधानेनैव तद्व्याप्ये करणत्वे तृतीयायास्सिद्धत्वेन कर्तृकरणयोरिति पृथक्करणत्वे तद्विधानं व्यर्थमित्यत आह ॥ एवं चेति ॥ सूत्रद्वयमिति ॥ तृतीयाविधायकमिति शेषः । नन्वेकस्मिन्विषये कार्यद्वयविधाने विकल्प इति व्यवहारः, प्रकृते तूपकार्योपकारकभावे चतुर्थी हेतुहेतुमद्भावे तृतीयेति विषयभेदात्कथमयं विकल्पव्यवहार इत्यत आह ॥ तदर्थत्वेनेत्यादि ॥ अभेदभानमिति ॥ उपकार्यान्यपदार्थकस्वार्थिकष्यअन्तस्तादर्थ्यशब्द इत्याश्रित्य धर्मिण एव विभक्त्यर्थत्वोपगमे इदम् । यदि तूपकार्यत्वादेरननुगतस्य शक्यतावच्छेदकत्वायोगादुपकार्यतात्वादेरखण्डस्य शक्यतावच्छेदकसम्भवाच्च तथाविधो धर्म एव विभक्त्यर्थ इत्युच्यते तदा प्रकृत्यर्थस्याधेयत्वेन विभक्त्यर्थान्वयः । तथा चाध्ययननिष्ठोपकार्यतानिरूपको वास इत्यादिको बोधः । नन्वेवं नञ्समभिव्याहारे नाध्ययनाय वास इत्यादौ निरूपकतासम्बन्धेनाध्ययननिष्ठोपकार्यत्वाभावस्य वासे वक्तव्यतया वृत्त्यनियामकस्य निरूपकत्वस्याभावीयप्रतियोगितावच्छेदकत्वायोगात्तथाविधप्रयोगस्यानुपपत्तिरेव स्यादिति चेन्न । तादृशोपकार्यतानिरूपकवासाभावस्यैव तद्विषये पुरुषविशेषे प्रतीतिस्वीकारेणादोषात् । न च चतुर्थीविधायकानुशासनघटकतादर्थ्यशब्देनोपकार्यवाचकतच्छब्दघटितबहुव्रीहिप्रकृतिकष्यअन्तेनोपकारकत्वस्यैव लाभात्कथमुपकार्यत्वे चतुर्थ्यास्साधुत्वमिति वाच्यम् । उपकारकवाचकतच्छब्दस्यार्थशब्देन तत्पुरुषे ततः ष्यञि निरुक्तार्थलाभसौष्ठवादिति दिक् ॥

---

परन्तु "एवञ्च त्रितयसाधारणं हेतुत्वम्" इत्येव पाठः । अयमेव पाठः स्वारसिकः । क्रियासाधारणमिति पाठस्तु तत्रत्यग्रन्थसन्दर्भाननुगुण इति बोध्यम् ।

१. वैषम्यमित्यर्थ इति ॥ अत्र गुणद्रव्यनिरूपितमित्यादिना प्रकारान्तरेण वैषम्यकथनं प्रकृतग्रन्थसन्दर्भाननुगुणम् । पूर्वग्रन्थादेवैतद्वैषम्यस्य मूले प्रतिपादितत्वादिति बोध्यम् ।

केचित्तु तादर्थ्यशब्दस्योपकारकपरत्वमाश्रित्य तत्रैव चतुर्थ्यास्साधुत्वमुपगच्छन्तो निरूपितत्वेनोपकारकत्वे प्रकृत्यर्थस्यान्वयस्तस्य च वासादावाश्रयत्वेन, ततश्चाध्ययननिरूपितोपकारकत्वाश्रयो वास इत्यादिको बोध इति न काप्यनुपपत्तिरित्याहुः[1] ॥

ननु सिद्धान्ते शब्दाध्याहारस्यानाश्रयणात्पदजन्योपस्थितिविषयस्यैव शाब्दधीविषयत्वाभ्युपगमाच्च पिण्डीमित्यादाविव वाक्यैकदेशन्यायेनोपात्तस्यैव विशिष्टार्थोपस्थापकताया अवश्यस्वीकर्तव्यत्वेन प्रकृते साधनक्रियाया अपि श्रूयमाणपदजन्योपस्थितिविषयत्वरूपस्य श्रूयमाणत्वस्यैव सत्त्वेन कथं गम्यमानत्वमत आह ॥ **श्रमेणेत्यादि** ॥ **स्पष्टं चेदमिति** ॥ गम्यमानक्रियायाः कारकविभक्तिप्रयोजकत्वमित्यर्थः ॥ **भाष्ये इति** ॥ तत्र हि पुत्रेण सहागत इत्यत्र सहार्थबलात्प्रतीयमानगमिक्रियाकर्तृत्वेन तृतीयामुपपाद्य सूत्रोदाहरणत्वं निराकृतमित्याशयः । ननु गम्यमानत्वमपि यदि पदजन्यप्रतीतिविषयत्वं तर्हि श्रूयमाणत्वगम्यमानत्वयोस्स्वरूपभेदो दुर्निरूप इत्यत आह ॥ **स्वमात्रवाचकेति** ॥ श्रमेणेत्यादि तु कारकविशिष्टक्रियाबोधकं न तु तन्मात्रबोधकमिति भावः । स्वमात्रबोधनतात्पर्यप्रयुक्तोच्चारणविषयपदजन्यप्रतीतिविषयत्वं श्रूयमाणत्वम् । तेन नानार्थकधातुयोगे हरिर्मामवतीत्यादौ रक्षणादिरूपैकतरक्रियायाश्श्रूयमाणत्वं निर्बाधमित्याहुः ॥ इति तृतीया ॥

ननु सूत्रोपात्तस्य कर्मपदस्य कर्मकारकबोधकतया भवतु सामान्येन क्रियाया आक्षेपः । दानक्रियाक्षेपः कथं लभ्यत इत्यतो मूलकार आह ॥ **अन्वर्थसंज्ञेति** ॥ सम्प्रपूर्वकाद्ददातेर्ल्युटि निष्पन्नस्य सम्प्रदानशब्दस्य दानक्रियाघटितार्थकत्वेन तादृशक्रियाकर्मसम्बन्धित्वेनेच्छाविषयस्यैव सम्प्रदानत्वप्रतीत्या दानक्रियाक्षेप इति भावः । ननु स्वस्वत्वनिवृत्तिपूर्वकपरस्वत्वोत्पत्त्यनुकूलव्या-

---

१. **आहुरिति** ॥ वस्तुतस्तु तादर्थ्यमुपकार्योपकारकभावश्चतुर्थीवाच्यः । तस्य संसर्गतयैव भानमन्यविभक्त्यर्थसम्बन्धवत् । एवञ्च तस्य प्रकारतयाऽन्वयाभावेन तस्यान्वयप्रयोजकसम्बन्धप्रतिपादने मूलकारस्य न निर्भरः । अत एव तस्य स्वानभिमतत्वमिति मते इत्यनेन सूचितम् । तस्मादत्र युक्तायुक्तत्वविचारो निष्फल एवेति बोध्यम् ।

पारस्य दानपदार्थतया तद्घटकीभूतस्वत्वनिवृत्त्यंशादेव दीयमानस्यापुनर्ग्रहण-सिद्धया तदंशस्य पृथग्धात्वर्थकोटिप्रवेशो निष्फल इत्यत आह ॥ **इदं चेति** ॥ **फलप्रदर्शनमिति** ॥ अमुमेवांशमुपादाय स्वत्वोत्पत्तौ सत्यामसत्यां वा मुख्यता ददात्यर्थस्य । तेन पितृभ्यः श्राद्धं ददातीत्यादौ स्वत्वानुत्पत्ति-विषये सम्प्रदानत्वोपपत्तिः । न ह्यस्मदादिव्यापारेण देवतानां स्वत्वमुत्प-द्यते । स्वस्वत्ववति संरक्षणमात्रोपयोगिस्वत्वान्तरोत्पत्तिप्रयोजकव्यापाररूपस्य तस्य गौणतेति न संज्ञाविषयत्वम् । अत एव रजकस्य वस्त्रं ददातीत्यादौ न सम्प्रदा-नत्वम् । तदेतत्सूचयता मूलकारेणोक्तं भाक्त इत्यंशं विवृणोति ॥ **अधीनीकरण इति** ॥ प्रत्यर्पणपर्यन्तसंरक्षणमात्रोपयोगिस्वत्वोत्पादने इत्यर्थः । ननु यद्ययमेव दाधात्वर्थस्तर्हि न शूद्राय मतिं दद्यादिति प्रयोगानुपपत्तिः । मतौ स्वत्वोत्पत्ति-स्वत्वनिवृत्त्योर्बाधादत आह ॥ **न शूद्रायेति** ॥ **नोपदिशेदित्यर्थ इति** ॥ धातूनामनेकार्थत्वादिति भावः । तादर्थ्ये चैषा चतुर्थी, शूद्रोपकारकत्वं च शास्त्रे ब्राह्मणाय दधीत्यादाविव पारम्परिकम् । शूद्रोपकारकं शास्त्रं नोपदिशेदिति तदर्थः । उपकारकत्वं चात्र क्लेशनिवर्तनद्वारेति भावः ।

केचित्तु शूद्रस्यात्र सम्प्रदानत्वादेव चतुर्थी, संज्ञाया अन्वर्थत्वेपि स्वत्वनि-वृत्तिपूर्वकस्वत्वोत्पत्त्यनुकूलव्यापारस्यैव ददात्यर्थस्य ग्रहणं नान्यस्येत्यत्र मानाभा-वादिति वदन्ति ॥ तदसत् । अन्वर्थतायामपि शिष्याय चपेटां ददातीत्यत्र संयोगानुकूलव्यापारस्याप्युक्तरीत्या संज्ञानिमित्तत्वोपपत्त्या तथाविधभाष्यकारीय-प्रयोगानुपपत्तिमूलकत्वेनान्वर्थत्वनिराकरणपरसकलग्रन्थासङ्गतेः । विनिगमनावि-रहेण सर्वेषामेव तदर्थानां संज्ञानिमित्तत्वापत्तौ रजकस्य वस्त्रं ददातीत्यत्रापि सम्प्रदानताया दुर्वारत्वापत्तेश्च । न च यत्किञ्चित्स्वत्वोत्पत्त्यनुकूलव्यापाररूपस्य तस्य लक्ष्यार्थतया गौणत्वेन न संज्ञानिमित्तत्वमिति वाच्यम् । विनिगमनावि-रहेण शक्यलक्ष्यविभागस्य दुर्ज्ञेयतया गौणत्वस्य निर्णेतुमशक्यत्वात् । न च प्रसिद्धस्य शक्यत्वमप्रसिद्धस्य लक्ष्यत्वमिति लोकव्यवहारसिद्धप्रसिद्ध्यप्रसिद्धि-भ्यामेव शक्यलक्ष्ययोर्विभागस्य सुवचतया यत्किञ्चित्स्वत्वोत्पत्त्यनुकूलव्यापारात्म-कस्याधीनीकरणस्य ददातेर्लक्ष्यार्थत्वेन गौणतया संज्ञानिमित्तत्वाभावो युक्त एवेति वाच्यम् । न शूद्रायेत्यत्रोपदेशस्यापि तथात्वेन संज्ञानिमित्तत्वस्यायुक्ततया

सम्प्रदानत्वानुपपत्तेस्तदवस्थत्वात् । यदि तु न शूद्रायेत्यत्र सम्प्रदानत्वेनैव बोधस्य सर्वानुभवसिद्धतया तादर्थ्यचतुर्थ्या तत्समर्थनमयुक्तमित्युच्यते, तर्हि भाष्यकारानुगृहीतमन्वर्थत्वनिराकरणमेव शरणमिति दिक् ।

ननु भाष्यकारस्यान्वर्थतायां नाग्रह इति कथं ज्ञायते तत्राह ॥ **अत एवेति** ॥ **प्रत्याख्यातमिति** ॥ सूत्रस्थस्य कर्मपदस्य क्रियापरत्वमाश्रित्य सूत्रेणैव वार्तिकार्थोपसङ्ग्रहादिति भावः । ननु प्रकृतसूत्रस्थस्य प्रत्याख्यानभाष्यस्यैवोक्तार्थे प्रामाण्यस्य सूपपादतया सूत्रान्तरस्थभाष्यकारीयप्रयोगस्य तदंशे प्रामाण्यार्थमन्वेषणं मूलकारीयमप्रयोजकमित्यत आह ॥ **भाष्यान्तरमिति** ॥ प्रकृतसूत्रस्थमेव भाष्यं न तत्र प्रमाणं किन्तु सूत्रान्तरस्थमपि भाष्यं प्रमाणतया योजयितुं शक्यमिति मूलकारस्सूचयतीत्याशयः । ननु सिद्धान्ते कर्मपदस्य क्रियापरतया सम्बद्धुमित्यध्याहारे साक्षात्क्रियासम्बन्धस्य बाधात्फलद्वारके तस्मिन्स्वीक्रियमाणे क्रियाजन्यफलाश्रयत्वेन यमिच्छति स सम्प्रदानमित्यर्थे रजकस्य वस्त्रं ददातीत्यत्र पत्ये शेत इत्यादाविव धात्वर्थानन्तर्भूतस्वामित्वसम्पत्तिरूपफलाश्रयत्वेन रजकस्यापि सम्प्रदानताया दुर्वारत्वाद्रजकस्येति षष्ठ्यन्तप्रयोगोच्छेद इत्याशङ्कां निराकर्तुमाह ॥ **मूले शेषत्वविवक्षायामिति** ॥ तदविवक्षायान्तु सत्यभिधाने रजकायेत्यप्येतादृशे विषये निर्बाधमित्याशयः ॥ **कर्मसंज्ञया बाधादिति** ॥ अयं भावः । प्रधानाप्रधानन्यायेन प्रधान एव सम्प्रदानत्वमित्यभ्युपगमेपि ग्रामोपकारार्थमजानयने संस्कार्यत्वादुद्देश्यत्वलक्षणमार्थं प्राधान्यं ग्रामस्य, शाब्दं तु तदजाया इति प्रकृते तेन न्यायेनातिव्याप्तिपरिहारायोगात्कर्मसंज्ञया परत्वाद्बाध इत्येव युक्तमुभयत्रापीति ॥

**प्रीधात्वर्थकर्मण इति** ॥ प्रीञ् तर्पण इति पठितस्य क्र्यादिकस्य सकर्मकत्वात्केवलस्य प्रीणातेर्निवृत्तप्रेषणाद्धातोर्हेतुमण्णौ प्रीणयतीत्यस्य च तुल्य एवार्थ इति मूले ण्यन्तेनार्थविवरणम् ॥

**प्रथमोपस्थितत्वादिति** ॥ ज्ञाधातुप्रकृतिकहेतुमण्ण्यन्तस्य ज्ञपेर्द्वे कर्मणी, ज्ञानविषयो ज्ञानाश्रयश्च । तत्र प्रकृत्यर्थकर्मणो ज्ञानविषयस्य प्राथम्याद्ग्रहणमिति भावः ॥

केचित्तु[1] ज्ञाप्यमान इत्येव सिद्धे सन्प्रत्ययोपादानात् ज्ञानविषयत्वेनेच्छाविषयस्य प्रकृत्यर्थकर्मणो[2] ग्रहणमिति वदन्ति ॥ तदसत् । बुद्ध्यर्थकधातुप्रकृतिकण्यन्तेभ्यो यथेच्छं लादिविधानाभ्यनुज्ञानात् ज्ञाप्यमानपदेन ण्यन्तकर्मण एव ग्रहणमित्यत्र मानाभावेन सन्प्रत्ययोपादानबलादप्रधानकर्मणो ग्रहणमित्यर्थस्य दुर्वचत्वात् ॥ तदाशय इति ॥ विनिगमनाविरहादुभयथापि प्रयोगस्य साधुत्वमित्याशयः ॥

**स्पृहणीये कर्मणीति** ॥ इच्छाविषयीभवनानुकूलव्यापारः स्पृहेरर्थः । तत्र विषयस्य सम्बन्धित्वेनेच्छायामन्वये सम्प्रदानत्वम् । इच्छाविषयीभवने फले वृत्तित्वेनान्वये तु कर्मत्वमिति भावः । ननु सम्बन्धित्वेनेच्छायामन्वये षष्ठीबाधनार्थत्वात्सम्प्रदानत्वस्य कथं शेषत्वविवक्षया सम्प्रदानत्वनिवर्तनेन षष्ठीसमर्थनं तत्राह ॥ **कर्मण इति** ॥ तत्र तु न सम्प्रदानत्वमिच्छायां सम्बन्धित्वेनान्वये प्रसक्तायाष्षष्ठ्या बाधनेन कृतार्थस्य तस्य कर्मविषये सम्बन्धित्वेन फलान्वये षष्ठीबाधकताया दुर्वचत्वादित्याशयः ॥ **अभिमान इति** ॥ कारकविभक्तीनां तत्तत्कारकशक्तिपुरस्कारेणैव बोधकत्वमिति सिद्धान्ते सम्प्रदानत्वकारकत्वयोरविवक्षायां षष्ठ्या निर्बाधत्वेन कान्तायेति चतुर्थ्यन्तपरिकल्पनाक्लेशो व्यर्थ इत्याशयः ॥

---

१. **केचित्त्विति** ॥ उपाध्यायानुयायिन इत्यर्थः ॥

२. **प्रकृत्यर्थकर्मण इति** ॥ तस्यापीत्यर्थः । तेन ण्यन्तार्थकर्मसमुच्चयः । अयं भावः । ज्ञाप्यमान इत्युक्ते "बुद्धिभक्षार्थयोश्शब्दकर्मकाणां च निजेच्छया" इत्युक्तेर्विवक्षाविषयत्वं यस्य तस्य शानजर्थता स्यान्न तूभयोः । उभयविवक्षायास्सकृत्कर्तुमशक्यत्वात् । अन्यथा बोध्यते माणवको धर्म इत्यापत्तेः । इष्यते तु माणवको धर्ममिति माणवकं धर्म इति वा । एवं चात्र शानचा किं कर्म ग्राह्यमिति सन्देहे प्राधान्याण्ण्यन्तकर्मण एव ग्रहणमौचित्यात्प्रसज्येत । इष्टमुभयोर्ग्रहणं स्वरसतो न सिद्ध्येत् । सति तु तदर्थेच्छानिरूपितप्रधानकर्मत्वस्य ज्ञापन एव सत्त्वेन प्रकृत्यर्थणिजर्थकर्मणोरिच्छां प्रत्यप्रधानकर्मत्वात्सन्नन्तप्रकृतिकशानचा विनिगमनाविरहादुभयोरपि ग्रहणं सिद्ध्यति । एवं च कृष्णं स्वानुरागं बोधयतीत्यर्थे कृष्णं सखीजनं बोधयतीत्यर्थे वा कृष्णपदाच्चतुर्थी सिद्ध्यतीति ॥ एवं चास्यासत्त्वोक्तिरेवासती । ज्ञाप्यमान इत्युक्ते ण्यन्तकर्मण एव ग्रहणमित्यत्र प्राधान्यस्यैव मानत्वेन प्रकृत्यर्थकर्मणोऽपि ग्रहणस्य सन्स्वारस्येनैव लभ्यत्वात् । स्फुटीकृतश्चैवमाशयः सन्स्वारस्येन प्रकृत्यर्थकर्मणोऽपि तेन पदेन ग्रहणमित्यपिघटितवाक्यं प्रयुञ्जानेनोपाध्यायेन मञ्जूषायाम् । अतस्तत्त्वं सुधीभिराकलनीयमित्याहुः ।

**मूले एषामर्थ इवेति** ॥ पूर्वपदस्य तत्सम्बन्ध्यर्थसदृशलक्षणया न बहुव्रीहिसमासप्रवृत्तिप्रयोजकसामानाधिकरण्यभङ्ग इति सूचयितुमेवमुल्लेखो न तु विग्रहः । समासस्यार्थशब्दद्वयघटितत्वाभावादिति बोध्यम् । ननु क्रुधेरमर्षार्थकत्वे मृष सहन इति धात्वर्थनिर्देशबलात्तस्यासहनरूपत्वेनाक्षमार्थकेनेर्ष्यतिना सहैकार्थत्वादन्यतरोपादानेनैव सिद्धावुभयोपादानं सूत्रकारस्यानर्थकं स्यादत आह ॥ **वाक्चक्षुरादीति** ॥ अन्तस्तम्भितः कार्यानुमेयोऽन्तः करणविकारः कोपः । स एव प्रवृद्धो नेत्रलौहित्याद्युपहितः क्रोधः । अमर्षात्मकेर्ष्यामूलत्वाच्च मूलकारस्यामर्ष इत्युक्तिरिति भावः । ननु द्रुह जिघांसायामिति धात्वर्थदर्शनाद्द्रोहोऽपकार इत्ययुक्तमत आह ॥ **अपकारविषयकेच्छेति** ॥ **धर्मारोपेत्यादि** ॥ उत्कर्षासहनप्रयुक्तनीचधर्मारोपानुकूलव्यापार इत्यर्थः । ईर्ष्या न्यूनीकरणेच्छेत्यन्ये ॥ **गुणविषये इति** ॥ गुणवति दोषारोपानुकूलव्यापार ईर्ष्या, गुणेषु दोषत्वारोपानुकूलव्यापारश्चासूयेति तयोर्विशेष इति बोध्यम् ॥ **धात्ववाच्यत्वादिति** ॥ धात्वर्थतावच्छेदकफलाश्रयस्य कर्मत्वमिह तदाश्रयस्यान्यस्याभावादकर्मकत्वमित्याशयः ॥

**प्राप्तिरिति** ॥ इदमयुक्तमेव । धात्वर्थसङ्गृहीतकर्मकस्थले तद्घटकस्य कर्मणः फलत्वेन तदाश्रयस्य कर्मसंज्ञायाः क्वाप्यदर्शनात् । अन्यथा गगनं शब्दायत इत्यस्याप्यापत्तिः । शब्दाश्रयत्वेन गगनस्यापि कर्मताया उक्तरीत्या दुर्वारत्वादित्याहुः[1] ॥ **अप्रयोज्यत्वादिति** ॥ प्रश्नविषयीभूतशुभादिविषयकपर्यालोचनानुकूलव्यापारस्य धात्वर्थतया ज्ञानविशेषात्मकं पर्यालोचनमेव तत्प्रयोज्यं फलं न तु प्रश्नविषयशुभादिकमिति भावः ।

ननु शंसनप्रयुक्तहर्षानुकूलव्यापारस्य गृणात्यर्थत्वादोधामोद इवेत्यादिरूपप्रतिगरात्मकाध्वर्युकर्तृकव्यापारस्य होतृकर्तृकशंसनप्रयोज्यत्वेन प्रयोजकव्यापारा-

---

१. आहुरिति ॥ वस्तुतस्तु प्रश्नविषयरूपस्य प्रकृतधात्वर्थप्रधानीभूतव्यापाराप्रयोज्यत्वेन कर्मत्वाप्राप्तेरनुपदमेव वक्ष्यमाणत्वेन तद्रीत्यैवास्यायुक्तत्वं वक्तुमुचितम् । अतोऽपूर्वार्थकल्पनेनास्यायुक्तत्वकथनप्रयासो विफलः । किञ्च गगनं शब्दायत इत्यस्यापत्तिर्न घटते । शब्दायतेः शब्दोत्पत्त्यनुकूलव्यापारार्थकत्वेन शब्दस्य तादृशव्यापाराप्रयोज्यत्वेन तदाश्रयस्य कर्मत्वाप्राप्तेरिति बोध्यम् ।

श्रयतया हेतुत्वे प्राप्त इति वक्तव्ये कर्मत्वप्राप्तिकथनमयुक्तमत आह ॥ **शंसितु-रित्यादि ॥ अभेदान्वय इति ॥** शंसितृनिष्ठशंसनविषयहर्षानुकूलव्यापारोऽत्र शंसितृघटितो धात्वर्थः। धात्वर्थघटककर्मसामानाधिकरण्याच्च शोभनं पचतीत्यादिवत्कर्मत्वप्राप्तिरित्याशयः।

इदं तु चिन्त्यम्। क्रियाविशेषणानां कर्मत्वमित्याद्यनुशासनबलेन शोभनं पचतीत्यादौ व्यपदेशिवद्भावलब्धफलाश्रयत्वप्रयुक्तकर्मत्वोपहितासत्त्वभूतधात्वर्थफल-

---

१. **इदं तु चिन्त्यमिति** ॥ परे तु होता प्रथमं शंसति तमध्वर्युः प्रोत्साहयतीति कौमुदीग्रन्थे शंसतीत्यन्तेन होतुः पूर्वव्यापारे कर्तृत्वं तमित्यनेन शंसितुः कर्मत्वं च दर्शितम्। एतदभिप्रायेण मनोरमायां कर्मत्वे प्राप्ते इत्युक्तम्। तदाशयविवरणपरमूलग्रन्थे शंसितुः शंसनविषयकहर्षानुकूलव्यापारलक्षणं प्रोत्साहनं तयोरर्थ इत्युक्तम्। अत्र हर्षानुकूलव्यापार एव धात्वर्थः। न तु शंसितुर्धात्वर्थघटकत्वं विवक्षितम्। हर्षरूपस्य शंसनरूपस्य वा धात्वर्थफलस्याश्रयत्वाच्छंसितुः कर्मत्वम्। धात्वर्थविवरणात्मकमूलवाक्ये "शंसितुरिति कर्मणि षष्ठी। शंसितुः प्रोत्साहने कर्मतया अन्वयः" इति कथनेन तस्य धात्वर्थबहिर्भावः सूचितः। अन्यथा पृथक्पदार्थत्वाभावेन तस्यान्वयकथनासङ्गतेः। नन्वेवमपि होतुः कर्मत्वं कथमिति शङ्कां परिहर्तुं मूले होतुश्शंसतयं-भेदान्वय इत्युक्तम्। न तु होत्रेऽनुगृणातीति वाक्ये तादृशान्वयोऽभिप्रेतः। तस्य सम्प्रदानकारकत्वेन क्रियाकारकभावेन क्रियायामन्वयस्येष्टत्वात्। अत एव मञ्जूषायां होतुर्धात्वर्थशंसनाश्रयस्यापादानत्वमुक्तम्। न तु धात्वर्थशंसनभिन्नस्येति। भवद्रीत्या तु तथा वक्तव्यं स्यात्। एवं च होतुर्मुख्यकर्मत्वमेव मूले विवक्षितमिति तदाशयापरिज्ञानेन अन्यथाशयं परिकल्प्य मूलस्य चिन्त्यत्वोक्तिरयुक्तैव। किं च मनोरमोक्तकर्मत्वप्राप्तिसमर्थनाय मञ्जूषादिसकलग्रन्थविरोधेन केचिदित्यादिना शंसनपूर्वकहर्षानुकूलव्यापारस्य धात्वर्थत्वकथनमयुक्तम्। पूर्वोक्तरीत्या तत्समर्थनसम्भवात्। किं च वस्तुस्थितिपर्यालोचने हर्षे शंसनपूर्वकत्वकथने न किंचित्प्रयोजनं न चेत्यादिग्रन्थविस्तरीकरणातिरिक्तम्। इत्थं हि वस्तुस्थितिः। लोके प्रोत्साहनं स्वाभिलषितेऽन्यस्य प्रवर्तनाय स्वाभिलषितविषयहर्षोत्पादनरूपं दृष्टम्। हर्षेण तद्विषये तस्य प्रवृत्तेः। एवं चाध्वर्युप्रोत्साहनेन हर्षस्तेन शसनं, न तु शंसनोत्तरं हर्षः। उदासीनप्रोत्साहने तथैव दर्शनात्। न ह्युदासीनप्रोत्साहने हर्षस्य स्वाभिलषितपूर्वकत्वं सम्भवतीति ॥ किं च हर्षजन्यक्रियायाः स्वाभिलषितायाः प्रोत्साहनघटकत्वमावश्यकम्। अन्यथा प्रोत्साहनेन क्रियान्तरेऽपि प्रवृत्त्यापत्तेः। तस्मात्प्रशरानन्तरभाविशंसनमेव धात्वर्थत्वेन विवक्षणीयम्। न तु तत्पूर्वभावि। एवं च तस्य शंसनस्य प्रोत्साहनप्रयोजकत्वाभावेन न चेत्यादिशङ्कासमाधाने निर्दले। तस्मादत्रत्यव्याख्याग्रन्थस्सर्वोऽपि मूलाशयानभिज्ञतामूलक एवेति सुधियो विभावयन्त्वित्याहुः।

विशेषणतया प्रयुज्यमानानां शोभनादिपदानां द्वितीयान्तोपपत्तये सामानाधिकरण्यमूलकतया कर्मत्वोपपादनेऽप्यन्याद्दशधात्वर्थसंगृहीतकर्मसामानाधिकरण्येन तदुपपादने मानाभावात् । अन्यथा पराभिभवेच्छार्थकतया धात्वर्थसंगृहीतकर्मकत्वादकर्मकत्वेनाभिमतस्य स्पर्धतेर्योगे धात्वर्थघटककर्मत्वोपहितपरसामानाधिकरण्येन देवदत्तं स्पर्धत इत्याद्यनिष्टप्रसङ्गः । न हि तादृशः प्रयोगः केन चिदिष्यते । तस्मात्प्रागुक्तरीत्या हेतुत्वे प्राप्ते सम्प्रदानत्वमित्येव युक्तम् । याच्ञापूर्वकस्वत्वनिवृत्त्यनुकूलव्यापारवाचकप्रतिश्रृणोतीत्यादियोगेऽप्येवमेवेत्याहुः ॥

केचित्तु शंसनपूर्वकहर्षानुकूलव्यापारस्य धात्वर्थतया हेतोर्हर्षाश्रयत्वेन धात्वर्थतावच्छेदकफलाश्रयतया कर्मत्वप्राप्तिः । न च धात्वर्थघटकशंसनस्य प्रोत्साहनप्रयोजकतया प्रयोजकव्यापाराश्रयत्वप्रयुक्तहेतुत्वेन परत्वात्कर्मत्वं बाध्यत इति वाच्यम् । प्रकृतप्रयोगजन्यबोधविषयशाब्दप्राधान्योपहितफलाश्रयत्वप्रयुक्तस्य कर्मत्वस्य प्राधान्येन प्राबल्यादित्याहुः ।

मूले क्रय इति ॥ स्वस्वत्वनिवृत्तिपूर्वकपरस्वत्वोत्पादनेच्छाप्रयोज्यपरस्वत्वनिवृत्तिपूर्वकस्वस्वत्वोत्पादनेच्छा क्रयणम् । दानपूर्वकनियतकालिकस्वत्वोत्पादनेच्छा परिक्रयणमिति तयोर्भेदः ॥ आदिना दुर्भिक्षेऽन्नमिति ॥ इदं तु न युक्तम् । भृतित्वेनैव सिद्धेः । तस्मात्तवेदं करिष्यामि ममेदं कुर्विति निश्चयविषय उपकारो मधुरवाक्प्रयोगो वात्रादिशब्दार्थ इत्याहुः ॥

उपकारकत्वमिति ॥ ननु तादर्थ्यशब्दात्कथमुपकारकत्वरूपार्थलाभः ।

---

१. इदं तु न युक्तमिति ॥ इदमेवायुक्तम् । मनोरमायां क्रयो धनाद्यर्पणेनेत्यत्र धनशब्दस्य लोके रूप्यकादावेव रूढतया तस्यैव सम्प्रत्यये न्यूनता स्यादिति तत्परिहाराय आदिना दुर्भिक्षेऽन्नादि संगृहीतं मूलकृता । अत्र मनोरमायां शब्दरत्ने वा भृतेः प्रसक्तेरभावेन भृतित्वेनैव सिद्धेरिति हेतोरसिद्धेः । न चैतद्व्याख्यानुरोधेन मनोरमायां क्रयो भृत्याद्यर्पणेनेति पाठान्तरमुन्नेतुं शक्यम् । तदनुरोधी चायं ग्रन्थ इति वाच्यम् । धनादीति शब्दरत्ने प्रतीकदर्शनेन तादृशपाठस्य कल्पयितुमशक्यत्वात् । न च तत्रापि भृत्यादीतीति पाठान्तरं कल्प्यत इति वाच्यम् । परिक्रयणे भृतेर्हेतुत्वेऽप्यात्यन्तिकस्वीकरणात्मके क्रये भृतेरहेतुत्वेन तत्र तादृशपाठस्य कल्पयितुमशक्यत्वात् । अतो युक्तमेव मूलोक्तमिति बोध्यम् ।

यस्य चतुर्थ्यर्थत्वमभ्युपगम्यते । न च चतुर्थ्यन्तस्योपकारकवाचकेनार्थशब्देन तत्पुरुषे ष्यञि निरुक्तार्थलाभ इति वाच्यम् । अनेनैवानुशासनेनात्रोपकारकत्वे चतुर्थ्या वक्तव्यतया समभिव्याहृतेनार्थशब्देनैतदर्थस्याभिधानादुक्तार्थानामिति न्यायेन तत्र चतुर्थीविधानायोगे चतुर्थीतत्पुरुषस्योक्तार्थकेनार्थशब्देन वक्तुमशक्यत्वात् । न च चतुर्थी तदर्थेत्यादिना चतुर्थ्यन्तस्यार्थशब्देन समासारम्भादभिहितेप्युपकारकत्वे चतुर्थी ज्ञाप्यत इति वाच्यम् । अर्थशब्दस्यार्थान्तरवाचकत्वेनापि प्रसिद्धतया वस्तुवाचकेन धनवाचकेन वा समासविधानाय सार्थकतया समभिव्याहृतपदान्तराभिहितेप्युपकारकत्वे चतुर्थीज्ञापनायोगात् । न च चतुर्थ्यन्तोपकारकवाचकप्रकृतिकसुबन्तेन चतुर्थी समस्यत इत्यर्थकेन तदर्थग्रहणेनैवार्थान्तरवाचकेन चतुर्थीसमासस्य सुलभत्वादतिरिच्यमानमर्थग्रहणमभीष्टार्थसाधकमिति वाच्यम् । बलिरक्षितग्रहणेन प्रकृतिविकृतिभावविषय एव कुण्डलहिरण्यं यूपदार्वित्यादौ तदर्थेन चतुर्थीसमासो नान्यत्र अश्वाय घासो रन्धनाय स्थालीत्यादावित्यर्थज्ञापनस्याकरसम्मतत्वेन प्रकृतिविकृतिभावानुपहितवस्त्वादिवाचकार्थशब्देन चतुर्थीसमासस्य तदर्थग्रहणेन वक्तुमशक्यत्वादर्थशब्दस्य तद्विषये समासविधानाय सार्थकतया निरुक्तार्थज्ञापकत्वायोगात् । एवञ्चोपकारकवाचकार्थशब्दयोगे तादर्थ्यचतुर्थ्या दुर्लभत्वेन निरुक्तसमासस्य वक्तुमशक्यतया तत उक्तार्थलाभो दुर्वच एवेति चेत्तर्हि अर्थेन नित्यसमासो विशेष्यलिङ्गता चेत्युपकारकवाचकेनार्थशब्देन चतुर्थ्यन्तस्य समासविधानाय पृथगारब्धेन कात्यायनवचनेन ब्राह्मणार्थस्सूप इत्यादावर्थशब्देनाभिहितेप्युपकारकत्वे चतुर्थीबोधनद्वारा समासविधानात्तथाविधसमासप्रकृतिकेन ष्यञन्तेनोक्तार्थलाभ इत्याहुः ।

केचित्तु उपकारकवाचकार्थशब्दोत्तरपदकादुपकार्यान्यपदार्थकाद्बहुव्रीहेरयं तद्धितः । एवं च तादर्थ्यशब्देनोपकार्यत्वलाभात्तत्रैवानेन वचनेन चतुर्थी विधीयते । ततोऽध्ययनाय वसतीत्यादावध्ययननिष्ठोपकार्यतानिरूपको वास इत्यादिरेव बोधः । ब्राह्मणाय दधीत्यादौ च यथा परेषां चतुर्थ्यर्थोपकारकत्वे भोजनादिद्वारकपरम्परया प्रकृत्यर्थस्य निरूपितत्वेनान्वयस्तथा तदर्थोपकार्यत्वे तादृशपरम्परया प्रकृत्यर्थस्य वृत्तित्वेनान्वयः । ननु चतुर्थ्या उपकारकत्वार्थकत्वे तादृशचतुर्थ्य-

न्तस्योपकारकवाचकेनार्थशब्देन सहप्रयोगायोगादपूर्वतया कात्यायनेनार्थेन नित्यसमास इत्येवं समासविधानं स्वरसत उपपद्यते। उपकार्यत्वार्थकत्वे चतुर्थ्यन्तस्य तथाविधेनार्थशब्देन सह प्रयोगस्य निर्बाधतया समासविधानपरं वार्तिकमनर्थकं स्यादिति चेन्न। सहप्रयोगसम्भवेपि तादर्थ्यचतुर्थ्यन्तस्योपकारकवाचकार्थशब्दस्य च वृत्त्यघटकतया सहप्रयोगस्यासाधुत्वबोधनतात्पर्यकतया वार्तिकारम्भसाफल्यात्। न चैवं चतुर्थी चाशिषीति सूत्रविहितचतुर्थ्यन्तघटितस्य देवदत्तायार्थो भूयादित्यादेरप्यसाधुत्वापत्तिरिति वाच्यम्। तद्विषये देवदत्तोद्देश्यकमाशीर्विषयीभूतमर्थभवनमित्याद्यर्थस्यानुभविकतया तत्रत्यचतुर्थ्या उद्देश्यताबोधकतया तादर्थ्यबोधकचतुर्थ्यन्तविषयककात्यायनवचनबोधितसाधुत्वासाधुत्वयोः प्रवृत्त्ययोगात्। किं चाशीर्विषये तद्विषयतदाश्रययोरुद्देश्यविधेयभावेनान्वयस्य नियतत्वात्समासे च तादृशान्वयस्य दुर्वचतया समासघटकत्वानुपपत्त्या वाक्यप्रयोगस्याप्यनेन वचनेनासाधुत्वे चतुर्थीविधानवैयर्थ्यापत्तिश्चेति चतुर्थी चाशिषीति शास्त्रविषयचतुर्थ्यन्तघटितवाक्यप्रयोगो निर्बाध एवेति न काप्यनुपपत्तिरित्याहुः[1]॥

ननु यागाय यातीत्यादावुपकारकत्वार्थकप्रकृतवार्तिकबोधितचतुर्थीविधानेनैवोपपत्तौ तुमर्थाच्चेति सूत्रं व्यर्थम्। तद्विषयेपि यागोपकारकं गमनमित्यादिबोधस्यैवानुभविकत्वात्। न च तद्व्यापारेच्छाधीनेच्छाविषयव्यापारवत्त्वोपहित एवोपकारकत्वे तादर्थ्यचतुर्थीविभक्तेर्विधानं, ततश्च यत्र ब्राह्मणाय दधीत्यादौ भोजनाद्यधीनस्थापनादिव्यापारः प्रतीयते, तत्रैव तादर्थ्यचतुर्थ्या वार्तिकेन विधानं, यागाय यातीत्यादौ च व्यापारान्तराप्रतीतेरनेन चतुर्थ्या अप्राप्त्या तुमर्थाच्चेति सूत्रमवश्यमारम्भणीयमिति वाच्यम्। तथासत्यध्ययनाय वसति रन्धनाय स्थाली-

---

१. आहुरिति॥ परे तु चतुर्थ्यर्थतादर्थ्यस्य सम्बन्धतया तस्य द्विनिष्ठत्वनियमेनोपकार्योपकारकभावरूपत्वं वाच्यम्। अत एव तादर्थ्यमुपकार्योपकारकभावः सम्बन्ध इत्युक्तं शेखरादौ। ततश्च तेन सम्बन्धेन मुक्तिविशिष्टं भजनमित्येव बोधः। एवं च बहुव्रीहौ तत्पुरुषे वा तदुत्तरभावप्रत्ययेन सम्बन्धस्यैव बोधनीयतया फले विशेषाभावेन बहुव्रीह्यपेक्षया लाघवात्तत्पुरुषाश्रयणमेव युक्तम्। अत एव भाष्ये चतुर्थीसमाससमर्थनाय बहुधा प्रयतितम्। न तु बहुव्रीहिराश्रितः। अत एव मञ्जूषादौ तत्पुरुष एव दर्शितः। एवं चोपकार्यत्वादेः प्रकारतया भानाभावेन नैयायिकवासनया तथा भानमङ्गीकृत्य तत्र प्रसक्तानुपपत्तिपरिहारक्लेशो विफल एवेत्याहुः।

त्यादावनेनाभीष्टायाश्चतुर्थ्या अप्रवृत्तिप्रसङ्गात् । न हि तत्र कश्चिदुपात्तातिरिक्तो व्यापारः प्रतीयते । ततो व्यर्थमेव तुमर्थाच्चेति सूत्रमिति चेत्सत्यम् । तुमुन्विषये प्रतीयमानस्योद्देश्यविधेयभावस्य वाक्यार्थतया तुमुन्प्रत्ययस्याव्ययकृतो भाव इत्यनुशासनबलेन भावार्थकताया निर्विवादत्वेन तुमर्थादित्येव सिद्धावतिरिच्यमानस्य भाववचनपदस्य तद्घटितसूत्रविहितक्रियार्थक्रियोपपदकधातुप्रकृतिकघञाद्यर्थकताया वक्तव्यतया तेनैवोपकारकत्वबोधनेनोक्तार्थानामिति न्यायादनेन तत्र चतुर्थीविधानानुपपत्त्या तद्विषये चतुर्थीसमर्थनाय सूत्रमेतदावश्यकमिति मूल एव स्पष्टम् । न च चतुर्थीविधानं विशिष्य घञ्विधानं च मास्तु, सामान्यविहितभावार्थघञन्तात्तादर्थ्ये चतुर्थ्यैवाभीष्टसिद्धिरिति वाच्यम् । तुमुनादिषु वासरूपविधेर्निषिद्धत्वेन क्रियार्थक्रियोपपदकाद्विशेषविहितेन तुमुना घञो नित्यबाधापत्त्या यागाय यातीत्यादिप्रयोगानापत्तेः । सिद्धान्ते तु विधानसामर्थ्यादुभयोः पर्यायतेति न काप्यनुपपत्तिः । न चाध्ययनाय वसतीत्यादौ क्रियार्थक्रियोपपदकाद्विशेषविहितेन तुमुना ल्युटो बाधापत्त्या तथाविधप्रयोगानुपपत्तिरिति वाच्यम् । नपुंसकत्वाभाववति चरितार्थस्य तुमुनस्तदुपहितभावे परेण ल्युटा बाधात् । अत एव घञोपि प्रकृतस्य तद्विषये प्रवृत्त्यभाव इति सर्वमुपपद्यत इत्याहुः ।

अत्रायं निष्कर्षः । उपकार्यवाचकादेवेयं चतुर्थी न तूपकारकवाचकादर्थशब्देन समासारम्भात् । तादर्थ्यशब्दस्य बहुव्रीहिप्रकृतिकस्वार्थिकष्यञन्ततामाश्रित्य धर्मिण उपकार्यस्यैव चतुर्थ्यर्थत्वं मन्यमानस्योपाध्यायस्य मते मुक्तये हरिं भजतीत्यादौ मुक्त्युपकार्यकं हरिभजनमिति बोधस्य निर्बाधत्वेपि ब्राह्मणाय दधीत्यादौ ब्राह्मणोपकार्यकं दधीत्यादिबोधे ब्राह्मणादेरुपकार्यत्वं भोजनादिद्वारकमाश्रयणीयम् । तत्पुरुषप्रकृतिकसम्बन्धबोधकष्यञन्तत्वाश्रयणेन सम्बन्धात्मकमुपकारकत्वमेव चतुर्थ्यर्थ इति वदतां दीक्षितादीनां मते निरुक्तस्थले मुक्तिनिरूपितोपकारकत्वाश्रयो हरिभजनमित्यादिको बोधः । ब्राह्मणाय दधीत्यादावुपकारकत्वं तु भोजनाद्यन्तर्भावेण । परन्तु हेतुशब्दस्य फलकारणोभयवाचकतया हेताविति सूत्रेण विधीयमानतृतीयायाः तदन्यतरबोधकत्वेनाध्ययनाय वसतीत्यादावध्ययनफलको वासो दण्डेन घट इत्यादौ दण्डकारणको घट इत्येवं धर्मिबोधकत्वमभ्युपगच्छतामिह धर्मबोधकत्वं, स च धर्मोऽन्वयिपदार्थतत्सम्बन्धरूप इति

वैषम्यमेषां दोषः। यदि तु हेतावित्यस्य तत्र वर्तमानात्प्रातिपदिकात्तृतीयेत्यर्थकतामाश्रित्य जन्यत्वं हेतुत्वं वा तृतीयार्थ इति वैशेषिकसरणिराश्रीयते तदा कर्मणि द्वितीयेत्यादिविभक्त्यर्थनिर्णायकसूत्रघटकधर्मिनिर्देशविषयकसूत्रकारशैलीविरोध इत्याहुः॥

इदं तु बोध्यम्। तादर्थ्यशब्दो न केवलमुपकारकवाचकेनैवार्थशब्देन घटितः। किन्तु निवर्तकवाचकेनापकारकवाचकेनापि, ततो निवर्तकत्वापकारकत्वयोरपि तादर्थ्यशब्दाभिधेयतया त्रिविधमिदं तादर्थ्यं सम्पद्यत इति॥

विनिगमनाविरहादिह तन्त्रेणार्थत्रयेपि चतुर्थीविधानमास्थेयम्। तेन मृगोपकारिका वागुरेत्यर्थे मृगेभ्यो वागुरा, मशकनिवर्तको धूम इत्यर्थे मशकेभ्यो धूम इत्यादयः प्रयोगास्साधुत्वेनोपपद्यन्ते। निरुक्तेर्थे मृगार्था वागुरा मशकार्थो धूम इत्यादयो नित्यसमासाः प्रसिद्धा एव। मनुष्येभ्यो हन्तेत्यत्राप्यपकारकत्वबोधिका तादर्थ्यचतुर्थ्येवेति तदर्थं प्रयत्नान्तरानुसरणप्रयासो निष्फल एवेत्याहुः॥

ज्ञानत्वेन परिणमत इति॥ भक्तिर्ज्ञानाय कल्पत इत्यत्र विकृतिवाचकज्ञानशब्दप्रकृतिकचतुर्थ्या अभेदोऽर्थः। तस्य च क्लृपूधात्वर्थभूतरूपान्तरप्राप्त्या-

---

१. आहुरिति॥ परे त्वयं निष्कर्षो न युक्तः। पूर्वोक्तदिशाऽत्रोपकार्योपकारकभावस्य संसर्गतयैव भानमित्युपाध्यायसंमतत्वेन उपाध्यायदीक्षितयोर्मतभेदस्यैवाभावात्। एवं च भेदं परिकल्प्यायं विचारो निष्फल एवेति ध्येयमित्याहुः॥

२. आहुरिति॥ वस्तुतस्तु अत्र तन्त्राश्रयणे न मानं, नापि फलम्। न च मृगेभ्यो वागुरा मशकेभ्यो धूम इत्याद्यनिर्वाह इति वाच्यम्। तत्र मृगपदस्य तद्बन्धनलक्षकतया मशकपदस्य तन्निवृत्तिलक्षकतयाप्युपपत्तेः। अर्थशब्दस्यापकारकनिवर्तकपरतायाः क्वाप्यदर्शनेन तन्त्रेणानिर्वाहाच्च। न चाद्यर्थस्य नेत वार्त्तिकेऽर्थशब्दो निवृत्तिवचन इति तत्र तत्र व्याख्यानं तादृशार्थे मानमिति वाच्यम्। तथा व्याख्यानस्यायुक्तत्वात्। अर्थशब्दस्य निवृत्तिवचनत्वाभ्युपगमेऽपि तद्वाचकस्येत्यर्थस्य लक्षणां विना दुर्लभत्वाच्च। अत एव शेखरेऽर्थनिवृत्त्यर्थस्येति व्याख्यातम्। एवं च सर्वत्रोपकार्योपकारकभाव एकविध एव तादर्थ्यम्। स च साक्षात्परम्परया वा। तेन विप्राय दधीति सिद्धम्। एतेनात्र संस्कार्यसंस्कारकभावस्तादर्थ्यमिति वदन्तः परास्ता इत्याहुः।

त्मकाग्रिमैकदेशेन रूपान्तरेणान्वयः । ततश्च ज्ञानत्वाभिन्नरूपान्तरप्राप्तिर्भक्त्याश्रयिकेति बोधः ॥

केचितु विकृतिवाचकज्ञानादिपदानां न धर्मपरत्वम् । किन्तु ज्ञानादिरूपधर्मिपरत्वमेव, चतुर्थ्याश्चाधेयत्वमर्थः । ततश्च ज्ञाननिष्ठरूपान्तरप्राप्तिरित्यादिको बोध इति वदन्ति ॥

ननु ज्ञानात्मना परिणमत इत्यत्रापि चतुर्थीयं कुतो न प्रवर्तते तत्राह ॥ विकृतिवाचकत्वाभावादिति ॥ विकृतिविषयकशक्तिमत्त्वमेवेह सम्पद्यमानवृत्तित्वं चतुर्थीप्रवृतौ निमित्तम् । न तु विकृतिबोधकत्वरूपं, ततश्च ज्ञानत्वादिलाक्षणिकानामपि ज्ञानादिशब्दानामिदानीं विकृतिबोधकत्वाभावेपि चतुर्थीप्रवृत्तेरविरोधः ।

---

१. वदन्तीति ॥ परे तु अत्र कूपेरभूतप्रादुर्भावरूपोत्पत्तिरर्थः । वार्तिके सम्पद्यमाने इत्यस्य सम्पत्तिकर्तरि वर्तमानादित्यर्थः । तत्र सम्पत्तिरुत्पत्तिरेव । एवं च ज्ञानस्योत्पत्तिकर्तृत्वेनाभिहितकर्तृकत्वात्प्रथमायां प्राप्तायां तदपवादोऽयम् । न च भक्तेरुत्पत्तिकर्तृत्वेन ततोऽपि चतुर्थ्यापत्तिरिति वाच्यम् । सम्पद्यमाने इत्येतन्महिम्ना विकारवाचकादेव तद्विधानात् । तत्र ज्ञाने तत्कारणभक्तिरूपसमारोपाद्भक्तेरभेदेनान्वयः । एवं च भक्तिरूपज्ञानकर्तृकाभूतप्रादुर्भाव इत्येव बोधः । न च भक्तेर्ज्ञानेऽभेदान्वयोऽनुपपन्नः । समानविभक्तिकत्वाभावादिति वाच्यम् । विरुद्धार्थकविभक्तिराहित्यस्यैव तन्नियामकत्वाभ्युपगमेनादोषात् । अत एव नीलघट इत्यत्राभेदान्वयः परेषाम् । स्पष्टं चेदमुद्योते । प्रकृतिविकृत्योर्भेदविवक्षायां तु भक्तेरदाजनिकर्तुरित्यपादानत्वात्पञ्चमीति भक्तेर्ज्ञानं कल्पत इत्येव । ज्ञानस्य कर्तृत्वेन कारकविभक्तेर्बलवत्त्वेन च ज्ञानपदात्प्रथमैवेति कैयटे स्पष्टम् । तत्र भक्त्यपादानिका ज्ञानकर्तृकोत्पत्तिरिति बोधः । भक्तिर्ज्ञानात्मना परिणमतीत्यत्रात्मशब्दस्य धर्मपरत्वेन ज्ञानत्वेनेत्यर्थकतया तस्य विकृतित्वाभावेन न तद्वाचकाच्चतुर्थी । किन्तु प्रकृत्यादित्वात्तृतीयैव । स्पष्टं चेदं मञ्जूषायाम् । भक्तिर्ज्ञानं कल्पत इति त्वनिष्टमेव । अत एव तदुपपादकोद्योते अत्र वदन्तीत्यरुचिबोधकोपक्रमः सङ्गच्छते । सूचितं चेदं "ध्वनितं चेदं हरदत्तेन" इत्युपसंहरतोद्योतकृता । भवतियोगे तु नेयं. सुवर्णं कुण्डले भवत इति पस्पशास्थभाष्यप्रयोगात् । एवं च कल्पते रूपान्तरप्राप्त्यर्थ इति कथनमुद्योतोक्तात्र वदन्तीति मतानुसारेणैव ॥ सूचितं चेदं वदन्तीत्युपसंहरता ग्रन्थकृता । परन्तु अत्र ज्ञानस्याधेयतया रूपान्तरेऽन्वयकथनं तन्मतेनापि विरुद्धम् । तन्मतेऽभेदान्वयेन द्वितीयाबाधकत्वोक्तेः । अत्रत्यशब्दरत्नग्रन्थस्तु उद्योतोक्तात्र वदन्तीति मतानुसारिमनोरमानुसारेणैवेत्याहुः ॥

ज्ञानत्वविशिष्टेति ॥ अभेदस्य संसर्गत्वाभावादितरसम्बन्धानवच्छिन्नविशेषणविशेष्यभावेन रूपान्तरे ज्ञानत्ववैशिष्ट्यमिति भावः ।

केचित्तु संसर्गत्वाभावेप्यभेदस्य प्रकारत्वे बाधकाभावेन प्रकृत्यादिलक्षणतृतीयाया अभेदः प्रकारतया रूपान्तरान्वयी वाच्योऽर्थः । ततश्च ज्ञानत्वाभिन्नरूपान्तरप्राप्तिरित्यादिरेव बोधः । धान्येन धनवानित्यादावप्येवमेवाभेदभानमिति व्यर्थोऽयं वक्रमार्गानुसरणक्लेश इत्याहुः ।

भक्तिर्ज्ञानं सम्पद्यत इत्यादावभेदविवक्षायां तु भक्त्यभिन्नज्ञानाश्रयिका रूपान्तरप्राप्तिरित्येवं बोधः । अत्रेदं तत्त्वम् । प्रकृतिविकृत्योः स्वशब्दोपात्तयोर्यत्र सामानाधिकरण्येन निर्देशः तत्र सुवर्णं कुण्डले भवत इति पस्पशास्थभाष्यप्रामाण्याद्विकृतेरेव कर्तृत्वं न तु प्रकृतेः । अत एवैको वृक्षः पञ्च नौका भवन्तीत्याद्यभियुक्तव्यवहारस्सङ्गच्छते । यत्र त्वारोपितो विकारस्तत्र विकृतेः प्राधान्येनास्फुरणात्प्रकृतेरेव कर्तृत्वम् । अत एवात्वं त्वं सम्पद्यत इत्यादिभाष्यकारीयो व्यवहारः । तेन ब्राह्मणास्सङ्घीभवन्तीत्यादयो निर्बाधकाः प्रयोगाः । अस्त्राय फडित्यादौ च प्रकृतिविकृतिभावमाश्रित्य भवतीत्यध्याहारेण काष्ठं भस्मने भवतीतिवच्चतुर्थ्या उपपत्तिरित्याहुः ॥

ज्ञापकादिति ॥ ननु चतुर्थी चाशिषीति शास्त्रविहितचतुर्थीमादाय हितसुखशब्दयोस्समासस्योपपन्नत्वादनाशिषि तद्योगे चतुर्थीविधानाय कथं समासविधानस्य ज्ञापकत्वमत आह ॥ वृत्तावित्यादि ॥ आशीर्विषये तद्विषयतदाश्रययोरुद्देश्यविधेयभावेनान्वयो व्युत्पत्तिसिद्धः । तादृशान्वयश्च पृथगुपस्थितयोरेव । समासे चैकार्थीभावेनैकैवोपस्थितिर्विशिष्टविषयिणी । ततश्च चतुर्थी

---

१. आहुरिति ॥ वस्तुतस्तु ज्ञानत्वविशिष्टरूपान्तरप्राप्तिर्भक्तिकर्तृकेति मूलग्रन्थः ज्ञानात्मना परिणमत इति मनोरमावाक्यस्यार्थप्रदर्शनपरः । तत्र वाक्यं भक्तिर्ज्ञानायेति कौमुद्युदाहरणवाक्यफलितार्थप्रदर्शनपरम् । न तु ताभ्यां समानाकारो बोधः । एवं च ज्ञानात्मना परिणमत इत्येतद्वाक्यार्थविवरणपरमूलग्रन्थं भक्तिर्ज्ञानायेत्यादिवाक्यार्थविवरणपरत्वेन स्वयं वक्रगत्या व्याख्याय मूलोक्तस्य वक्रमार्गत्वकथनमयुक्तमेव । स्पष्टीभवति चेदं शब्दरत्नग्रन्थाक्षरार्थपरिशीलनशालिनामित्याहुः ॥

चाशिषीति शास्त्रविहितस्याशीर्विषयचतुर्थ्यन्तस्य समासघटकत्वायोगादन्यादृशस्यैव चतुर्थ्यन्तस्य समासविधिविषयतया हितसुखशब्दयोर्योगे चतुर्थीविधायकशास्त्रान्तरानुपलम्भादिदमेव समासविधानं तद्योगे चतुर्थीप्रवृत्तौ प्रमाणमिति भावः ।

**तद्द्योतनादिति** ॥ वस्तुतोऽत्र तुमर्थाच्चेत्यनेनैव चतुर्थी । विघातशब्दस्य भाववचनाश्चेति शास्त्रविहितघञन्ततायाः न्याय्यत्वेन तदंशे घञैव तादर्थ्यस्य द्योतितत्वादन्यानभिहिततादर्थ्यविषयकस्य वार्तिकबोधितचतुर्थीविधानस्याप्रसक्तिः । तुमर्थाच्चेत्यनेन तु भाववचनबोधिततादर्थ्यानुवादकतया चतुर्थी विधीयत इति न तत्प्रवृत्तेर्विरोध इत्याहुः ॥ **तत्राप्राप्तेरिति** ॥ ननु ब्राह्मणाय दधीत्यादौ दध्यादिगततादर्थ्यस्य ब्राह्मणादिनिरूपितत्वाभावेपि तदीयभोजनादिघटितपरम्परया निरूपितं तादर्थ्यमुपादाय चतुर्थीसमर्थनस्य सर्वसम्मतत्वात्पाचको व्रजतीत्यादावपि व्रजनादिगते तादर्थ्ये गुणीभूतपाकादिघटितपारम्परिकस्य कर्तृनिरूपितत्वस्य सुवचतया चतुर्थ्या दुर्वारत्वात्कथं तदप्राप्तिरिति चेत्सत्यम् । तादर्थ्यमुपकारकत्वं तस्य यत्र साक्षादसम्भवस्तत्रोपकारकोपकारकस्याप्युपकारकत्वमाश्रित्य चतुर्थीप्रवृत्तिरिति सिद्धान्तः । ब्राह्मणाय दधीत्यादौ च भोजनादेर्ब्राह्मणाद्युपकारकतया प्रसिद्धत्वेन दध्यादिगतं ब्राह्मणादिनिरूपितं तथाविधमुपकारकत्वमवस्थाय चतुर्थ्या अव्याहतत्वेपि पाचको व्रजतीत्यादौ भोजनादिवत्पाकादेः कर्तुरुपकारकत्वाभावात्तदुपकारके व्रजनादौ कर्तृनिरूपितत्वस्य कथमपि

---

१. **आहुरिति** ॥ अत्रेदं बोध्यम् । द्विषां विघातायेत्यत्र तुमुना तादर्थ्यस्योक्तत्वात्कथं चतुर्थीति वदतां विघातायेत्यत्र भावे घञ्यपि तुमुना तादर्थ्यस्योक्तत्वादित्याशयो वर्णनीयः । तुमुनेत्यक्षरस्वारस्यात् । तदेतद्युक्तमित्याह । मूले उत्तरक्रिययोस्तद्द्योतनेऽपि पूर्वक्रिययोस्तद्द्योतनादिति । अत्र पक्षे मूले एनेनेत्यस्य वक्ष्यमाणहेतुनेत्यर्थः । यदि तु तुमुनेत्यस्य तुमुनर्थेनेत्यभिप्रायं परिकल्प्य विघातायेति भाववचनाश्चेति घञित्याशयस्तदा तुमर्थादित्यस्य मनोरमोक्तदिशा प्रथमापवादतया घञादिबोधिततादर्थ्यानुवादकचतुर्थीविधायकस्य सत्त्वान्न चतुर्थ्यनुपपत्तिरित्याश्रयणे तु मूले एतेनेत्यस्य पूर्वोक्तहेतुनेत्यर्थः । एतत्पक्षाश्रयणेन व्याख्याने वस्तुत इत्याद्युक्तिः, न त्वपूर्वा । मूले तादर्थ्ये चतुर्थीत्युक्तिस्तु प्राचां तुमुनेत्यक्षरस्वारस्याद्भावे घञ्यपि चतुर्थ्युपपादनपरेति न तत्र तस्य निर्भरः । एवं च कस्य घञो न्याय्यत्वमिति विचारस्य नात्र प्रसक्तिरित्याहुः ॥

वक्तुमशक्यत्वेन प्रकृतविषये न चतुर्थीप्रवृत्तिरित्याशयोऽत्र विभावनीय इत्याहुः । इति चतुर्थी ॥

ननु ध्रुवमित्यनेन कथमवधिरूपार्थलाभ इत्याशङ्क्याह मूले ॥ **ध्रु गतिस्थैर्ययोरिति** ॥ **अवधिरेवेति च** ॥ स्थैर्यविशिष्टबोधकेन सामान्यवाचिना ध्रुवशब्देन विशेषरूपोऽवधिरुपलक्ष्यत इति तात्पर्यम् ॥ **तत्यन्तर्भमिति** ॥ प्रकृतधातूपात्तगत्यनाविष्टत्वम् । इदं च ध्रुवग्रहणात्सिद्धम् । तत्र प्रकृतधातूपात्तत्वं प्रत्यासत्तिलब्धम् । तत्त्वं च चिकीर्षितापादानसंज्ञाप्रयोजकविभागविषयकबोधसमर्पकत्वम् । तेन धावतोऽश्वात्पततीत्यादौ नाव्याप्तिः । अन्यथा धावृधातूपात्तगत्याविष्टत्वेन लक्षणघटकगत्यनाविष्टत्वस्य दुर्वचत्वादव्याप्तिः स्पष्टैव ॥ **अपवादस्स्यादिति** ॥ वृक्षात्पततीत्यादाववध्यवधिमतोरुभयोरपि विभागाश्रयत्वेन विशेषणानुपादाने पर्णादीनामवधिमतामेव कर्तृसंज्ञापवादतया प्रकृतसंज्ञा प्रवर्तेत । अवधीनां तु वृक्षादीनां परत्वात्कर्मसंज्ञा स्यादिति भावः । ननु विशेषणांशसमर्पकस्य ध्रुवग्रहणस्याभावे विभागे यत्कारकं तदपादानमित्यर्थकमपायेऽपादानमित्येव सूत्रमिति पर्यवसन्नम् । तत्र द्वयोरप्यवध्यवधिमतोर्विभागाश्रयत्वेपि पुरस्तादपवादन्यायात्कर्मसंज्ञापवादत्वेनावधीनामेवापादानसंज्ञा स्यादवधिमतां तु परत्वात्कर्तृसंज्ञैवेति कथमनिष्टप्रसङ्ग इति चेत्सत्यम् । अवध्यवधिमतोरुभयोरप्यविशेषेण विभागाश्रयतया यदि ग्रहणं स्यात्तदा पुरस्तादपवादन्यायादनन्तरायाः कर्मसंज्ञाया अपवाद इति वक्तुं युज्यते । प्रकृते तु विशेषणानुपादाने प्राधान्यादनुयोगितया विभागाश्रयाणामवधिमतामेव ग्रहणं स्यादिति नास्त्यवधीनां कर्मसंज्ञापवादत्वेनापादानसंज्ञायास्सम्भव इत्याशयोऽत्र विभावनीय इत्याहुः । नन्ववधिरपादानमित्येवास्तु, किमनेन प्रपञ्चेनेति चेन्न । आचारक्विबन्तैः पूर्वपरादिशब्दैर्योगे ग्रामात्पूर्वत्यारामश्चैत्रात्परत्ययं घस्र इत्यादौ देशकालावधेरप्यपादानसंज्ञापत्तेः । न च फलाभावः पञ्चम्यास्तत्र प्रकारान्तरेणाभीष्टत्वादिति वाच्यम् । अपादाने चाहीयरुहेरिति तादृशपञ्चम्यन्तात्तस्प्रत्ययापत्त्या ग्रामतः पूर्वति चैत्रतः परतीत्याद्यनिष्टप्रयोगसम्पादनेन सार्थक्यात् । न च तत्रापादानपञ्चमीं बाधित्वा परत्वाद्दिग्योगपञ्चम्येव स्यादित्यपादानपञ्चम्यन्तनिमित्तकस्य तस्प्रत्ययस्याप्रवृत्तिरेवेति वाच्यम् । सत्यामपादानसंज्ञायामुपपदविभक्तेरिति न्यायेन कारकविभक्तेरपादानपञ्चम्या

एव तत्र प्रवृत्त्या दोषस्य दुर्वारत्वादिति दिक् ॥ **तदुपात्तेति** ॥ चिकीर्षितापादानसंज्ञाप्रयोजकविभागविषयकबोधसमर्पकधातूपात्तेत्याद्यर्थः ॥ **तदनाश्रयत्वादिति** ॥ तद्वृत्त्यनाश्रयत्वादित्यर्थः । विभागानुकूलव्यापारविषयकबोधप्रयोजकधातूपात्ततद्वृत्त्यनाश्रयत्वे सति तद्वृत्तिजन्यविभागाश्रयत्वमत्रापादानत्वम् । प्रतियोग्यनुयोगिभेदाद्विभागो भिद्यते, तद्भेदादाश्रयभेदाच्च तत्प्रयोजकयोर्गत्योर्भेद इत्याशयः ।

ननु परस्परस्मान्मेषावपसरत इत्यत्रोभाभ्यामपि शब्दाभ्यामेक एवार्थोऽभिधीयत इति परया कर्तृसंज्ञया बाधादपादानत्वानुपपत्तिरिति चेदत्र दीक्षितादयः । यद्धर्मावच्छेदेन प्रधानव्यापाराश्रयता तद्धर्मावच्छेदेनैव कर्तृसंज्ञा, प्रत्यासत्तेः । प्रकृते च मेषत्वावच्छेदेनैव प्रधानव्यापाराश्रयता न परस्परत्वावच्छेदेनेति तद्धर्मावच्छेदेन कर्तृसंज्ञाया अप्राप्त्या निर्विवादमपादानत्वम् । न चैवं स्वस्मान्मेषोऽपसरतीति प्रयोगापत्तिः । मेषत्वावच्छेदेन प्रधानव्यापाराश्रयत्वेऽप्यात्मत्वावच्छेदेन तदभावादपादानत्वस्य दुर्वारत्वादिति वाच्यम् । प्रतियोगित्वेन विभागव्यधिकरणव्यापारस्य धात्वर्थतया यादृशप्रतियोगित्वेन विभागवैयधिकरण्यं तादृशप्रतियोगित्वेन विभागान्वयानुपपत्त्या बाधितार्थत्वेन तादृशप्रयोगाप्रसक्तेरतो न काप्यनुपपत्तिरित्याहुः ।

नव्यास्तु आत्मानमात्मना हन्तीत्यादौ शरीराद्यौपाधिकभेदमारोप्य यथा कर्मत्वाद्युपपत्तिस्तथा परस्परस्मान्मेषावपसरत इत्यत्रापि शब्दकृतं भेदमारोप्य कर्तृत्वापादानत्वयोरुपपत्तिरिति वदन्ति । तन्मते स्वस्मान्मेषोऽपसरतीत्याद्यनिष्टं प्राप्नोति तथापि सति नैमित्तिके निमित्तारोप इति न्यायेन भेदारोपनिमित्तिकापादानत्वप्रयुक्तपञ्चम्यन्तप्रयोगस्य प्रमितस्य काप्यदर्शनेनानभिधानाभ्युपगमाददोषः । मेषाभ्यां परस्परमपसरतीत्यस्याप्येषैव गतिरित्याहुः ॥

ननु पतधातोर्विभागविशिष्टाधोदेशसंयोगानुकूलव्यापाररूपक्रिया वाच्योऽर्थस्तस्यां चावधिभूतपञ्चम्यर्थान्वयो न युक्तस्तदंशे साकाङ्क्षत्वाभावादत आह ॥ **सा च क्रियेति** ॥ ननु विभागसंयोगयोरुभयोरपि प्रधानव्यापारप्रयोज्यत्वात्प्रकृतधातूपात्तत्वाच्च तदाश्रये देवदत्तादौ कर्मत्वं दुर्वारमत आह ॥ **कालि-**

केत्यादि ॥ विभागीयफलतावच्छेदकसम्बन्धः प्रतियोगित्वं संयोगांशे चानुयोगित्वं देवदत्तादेः कर्तुरनुयोगित्वेन विभागाश्रयत्वात्प्रतियोगित्वेन संयोगाश्रयत्वाच्च फलतावच्छेदकसम्बन्धेन फलाश्रयत्वाभावान्न कर्मत्वप्रसक्तिः । यद्यपि कर्तृसंज्ञया परया बाधेनैव न प्रकृते कर्मत्वप्रवृत्तिः, तथापि कालिकसम्बन्धप्रयुक्तदोषवारणाय फलतावच्छेदकसम्बन्धनिवेशस्यावश्यकत्वेन तेनैव प्रकृतविषयेऽप्यतिप्रसङ्गभङ्गादुपायान्तरान्वेषणमनावश्यकमित्याशयः ।

अत्रेदं बोध्यम् । अवधित्वमेव पञ्चम्यर्थो नावधिरूपो धर्मी, स्वरूपसम्बन्धविशेषस्यावध्यनतिरिक्तस्यावधित्वस्य शक्यतावच्छेदकत्वे गौरवात् । अवधित्वरूपधर्मस्यैव तदर्थत्वे चावधित्वत्वमखण्डोपाधिरूपं शक्यतावच्छेदकमिति नास्ति गौरवावकाशः । न चावधेश्शक्यत्वेपि अवधित्वमखण्डोपाधिरूपं सर्वावध्यनुगतं शक्यतावच्छेदकमतो न गौरवमिति वाच्यम् । तथा सति पाषाणपतनावधित्वपर्णपतनावधित्वयोरेकत्वेन पर्णावधिकपतनवेलायां पाषाणावधिकपतनविषयकप्रतीत्यापत्तेः । न चावधित्वस्यैव विभक्त्यर्थत्वे पञ्चम्यन्तान्यपदार्थकबहुव्रीहिस्थले तस्यैव प्राधान्यापत्तावुद्धृतौदना स्थालीत्यादौ सामानाधिकरण्येनान्वयानुपपत्त्या नामार्थयोरभेदान्वय इति व्युत्पत्तिविरोध इति वाच्यम् । व्यासस्थले सम्बन्धबोधकत्वेपि षष्ठ्याः षष्ठ्यन्तान्यपदार्थकबहुव्रीहौ वृत्तिस्वाभाव्यात्सम्बन्धिबोधकत्ववदिहापि बहुव्रीहौ धर्मिभूतावधिबोधकत्वाभ्युपगमेनादोषात् । अतो न काप्यनुपपत्तिरित्याहुस्तदाह ॥ अन्यत्र विस्तर इति ॥

केचित्तु अवधित्वस्याखण्डत्वेपि न दोषः । समवायस्यैकत्वेन स्पर्शसमवायवति वायौ रूपसमवायस्यापि सत्त्वेपि रूपप्रतियोगिकत्वावच्छेदेन समवायानुयोगित्वस्य वायावभावाद्रूपवत्ताप्रतीत्यभाववदिहापि पाषाणनिष्ठविभागनिरूपितत्वावच्छेदेनावधित्वस्य वृक्षवृत्तित्वाभावादखण्डत्वेपि तस्य वृक्षनिष्ठपर्णपतनावधित्वमादाय न पाषाणपतनप्रतीतिरिति वदन्ति ॥

---

१. वदन्तीति ॥ परे तु अवधित्वस्याखण्डत्वमयुक्तमेव । तथा सति पाषाणपतनावधित्वपर्णपतनावधित्वयोरेकत्वेन पर्णपतनवेलायां पाषाणपतनप्रतीत्यापत्तेः । समवायदृष्टान्तेनापत्तिवारणं न घटते । रूपप्रतियोगिकत्वावच्छेदेन समवाये वाय्वनुयोगिकत्वाभावेऽपि कदाचिद्वृक्षात्पाषाणपतनस्यापि सम्भवेन वृक्षात्पाषाणः पततीत्याद्यर्नि-

**विश्लेष इति** ॥ सम्बन्धाभाव इत्यर्थः । संयोगपूर्वकस्य तदभावस्यापायपदार्थत्वात्पापादीनां तथाविधापायावधित्वस्य दुर्वचतया सूत्रेणापादानत्वाप्राप्तिरिति वार्तिकारम्भः । भाष्यकारस्तु सम्बन्धपूर्वकस्तदभावोऽत्रापायपदार्थः । स च सम्बन्धो विनिगमनाविरहाद्बाह्यो बौद्धश्च । बुद्ध्या विषयीकृतस्य पापादेरपकारत्वसम्भावनया ततो निवृत्तिरिति बुद्धिसम्बन्धतदभावाभ्यामपायमाश्रित्य सूत्रत एवापादानत्वमुपपाद्य वार्तिकं प्रत्याचख्यौ ॥

केचित्तु सूत्रस्थोऽयमपायशब्दो विभागवाचकस्सम्बन्धाभाववाचकश्च तन्त्रेण निर्दिष्टः । तत्र विभागप्रतियोगिन इव सम्बन्धप्रतियोगिनोप्यवधित्वेन ग्रहणादावृत्त्या द्वयोरपि सूत्रेणापादानत्वसिद्धिरिति प्रत्याख्यातुर्भाष्यकारस्याशय इत्याहुः ॥

**शेषत्वविवक्षयेति** ॥ सूत्रे भयहेतुरित्युक्तेर्हेतुहेतुमद्भावेनान्वयोऽत्रापादानसंज्ञानिमित्तमिति हेतुतृतीयापवादोऽयं न तु शेषषष्ठ्यपवादः । ततो हेतुत्वाविवक्षायां शेषषष्ठ्या कस्य बिभ्यतीति भीधात्वर्थान्वयेपि न दोष इत्याशयः ॥

**न हि धातुं प्रतीति** ॥ तन्मते हि भावनाश्रयः कर्ता, न हि धातोरनुकूलतासम्बन्धेन भावनायां तदाश्रये वान्वयस्सम्भवतीति तदाशयः । स्ववाच्यघटितपरम्परासम्बन्धेन भावनायां तदाश्रये वा धातोरन्वये नार्थसङ्गतिरित्याहुः ॥ **क्रियां प्रत्येवेति** ॥ जनिधातुयोगे धात्वन्तरयोगे वा जनिक्रियां प्रति यः कर्ता तन्निरूपितापादानत्ववतोऽत्रापादानत्वं विधीयत इति भावः । ननु जनिरुत्पत्तिरुद्भव इति कोशादुत्पत्तिरेव जनेरर्थः । अन्यथाभावात्मकः परिणामस्तु ततो भिन्नः । अत एवास्ति जायते वर्धते विपरिणमते अपक्षीयते नश्यतीति षड्भाव-

---

बाधत्वेन पाषाणनिष्ठविभागनिरूपितत्वावच्छेदेनावधित्वस्य वृक्षनिष्ठत्वाभावाभावेन वैषम्यात् । किञ्च पञ्चम्यर्थबहुव्रीहौ सामानाधिकरण्यानुरोधाद्धर्मी पञ्चम्यर्थः । गौरवं तु फलबलात्सोढव्यमित्याहुः ॥

१. **आहुरिति** ॥ परे त्वावृत्त्यार्थद्वयपरत्वं न युक्तम् । वाक्यभेदापत्तेः । न च पापादेरद्रव्यत्वेन विभागासम्भव इति वाच्यम् । गौणस्य बुद्धिपरिकल्पितस्य तत्रापि सम्भवात् । तमब्ग्रहणेन कारकप्रकरणे गौणस्यापि ग्रहणस्य पूर्वमुक्तत्वाच्च । तस्मान्न काप्यनुपपत्तिरित्यलमित्याहुः ।

विकारवादिनामुत्पत्तिपरिणामयोर्भेदेन व्यपदेशस्तथा च परिणामवाचकधातुयोगे "यतः परिणमत्येतज्जगत्सर्वं चराचर" मित्यादावपादानत्वं दुर्लभमिति चेत्सत्यम्। जनी प्रादुर्भाव इत्युत्पत्त्यन्यथाभावसाधारणेन प्रादुर्भावशब्देनार्थनिर्देशादन्यथाभावोपि जनेरर्थः। अत एव ब्रह्मणः प्रजाः प्रजायन्त इत्यस्य परिणामवादिनस्सांख्यास्ततो विपरिणमन्त इत्यर्थमाहुः। कोशस्तूपलक्षणतया योजनीयः। स चान्यथाभावो द्विविधस्तात्त्विकोऽतात्त्विकश्च। तत्र मृदादेर्घटादिरूपस्तात्त्विकोऽन्यथाभावः परिणाम इति व्यवह्रियते। मृगतृष्णादेर्जलादिरूपोऽतात्त्विको विवर्त इत्युच्यते। द्वयोरप्यन्यथाभावाविशेषाज्जनिधात्वर्थत्वेनोत्पत्तिपरिणामविवर्तेषु त्रिष्वप्युपादानस्यापादानत्वमनेन विधीयत इति सिद्धम्। इत्थं च मृत्पिण्डाद्घटो जायते, क्षीराद्दध्नः परिणतिः। ब्रह्मणो जगद्विवर्तत इत्येवं निर्बाधको व्यवहार इति विभावनीयमित्याहुः। **तृजकाभ्यां कर्तरीति**॥ स्वतन्त्रेण सङ्केतितोयं संज्ञाशब्दोऽतिरिक्तो न तृजन्त इति[1] तृजकप्रत्ययप्रकृतिभूतधातूपस्थाप्यक्रियान्वय्यर्थकषष्ठ्यन्तत्वाभावाच्च न समासानुपपत्तिरपीत्याहुः॥ **परे इति**॥[2]

केचित्तु जनिधातुरेवात्र विवक्षितो न तु तदर्थकं धात्वन्तरम्। कर्तृग्रहणात्। अन्यथा हि जनिमत इति जनितुरित्येव वा ब्रूयात्तथा च जनिधातूपात्तक्रियानिरूपितकर्तृत्ववतो यदुपादानं तदपादानमिति सूत्रार्थः। परिणमतीत्यादियोगे च हेतुपञ्चम्येव। न च विधायकाभावात्तदसिद्धिरिति वाच्यम्। विभाषा गुणेऽस्त्रियामित्यत्र वृत्तिकारादिसम्मतेन धूमादित्यादौ पञ्चमीसमर्थनार्थमावश्यकेन योगविभागेन च तत्सिद्धेः। न च जनितुरित्याद्युक्तौ जननाश्रयस्येत्यर्थाज्जन्यर्थकधातुप्रयोगाभावेपि तन्निरूपितोपादानत्ववतस्संज्ञापत्तौ मृदि घटोऽस्तीत्यादावप्यपादानत्वप्रसङ्गः। कर्तृग्रहणे च जन्यर्थक्रियाकर्तृत्वाभावान्निरुक्तस्थले मृदो नापा-

---

१. **न तृजन्त इति**॥ इदमयुक्तम्। अस्य संज्ञाशब्दत्वेऽपि तृजन्तत्वानपायात्। शास्त्रव्युत्पादितानां संज्ञिविशेषे विनियोग इति सिद्धान्तात्। अत एव वृद्धिरादैजित्यादीनां साधुत्वविधायकत्वनिराकरणं तत्र तत्रान्वर्थसंज्ञात्वकथनं च सङ्गच्छते। तथा चात्र समासानुपपत्तिरस्त्येवेत्याहुः।

२. मूले परे इत्युक्त्या धातुनिर्देशपक्ष एव निर्भर इति गम्यते। तत्र हेतुं विशदयति। केचित्त्वित्यादिना।

दानत्वमिति तस्य धातुस्वरूपपरिग्रहप्रयोजकत्वे मानाभाव इति वाच्यम् । प्रकृतिरित्येतन्मात्रोक्तावपि जन्यस्य प्रकृतिरित्यर्थे लब्धे जनितृग्रहणस्याधिकार्थकताया औचित्येन जन्यर्थकधातूपात्तक्रियाश्रयत्वलाभात्तथाविधक्रियाश्रयत्वावच्छिन्ननिरूपकताकोपादानत्ववत एव संज्ञाविधानेनोक्तदोषनिवारणादतिरिच्यमानं कर्तृग्रहणं संज्ञाविधौ धातुस्वरूपपरिग्रहार्थमेवेति वक्तुं शक्यत्वादित्याहुः ॥

**भाष्यसम्मतत्वाच्चेति** ॥ जायमानस्योत्पत्तिपूर्वकविभागमाश्रित्य विभागावधित्वेन ध्रुवमपाय इत्यनेनैव संज्ञासिद्धिरिति सूत्रमेतत्प्रत्याख्यातम् । निमित्तकारणपरत्वे तु तद्विषये निरुक्तरीत्या विभागासम्भवेन प्रत्याख्यानपरं भाष्यमसङ्गतं स्यादित्याशयः ।

ननु भुवः प्रभव इत्यत्र भुव इति कर्तृक्विबन्तमेवास्तु । किं कर्तृग्रहणानुवृत्तिकल्पनया भावक्विबन्तत्वाश्रयणेन । न च तदनुवृत्त्यभावे प्राथमिकप्रकाशाश्रयस्य यः प्रभवः सोऽपादानमित्यर्थे हिमवति गङ्गा विद्यत इत्यत्राप्यधिकरणस्यापादानत्वं प्रवर्तेत । तदनुवृत्तौ च भूधात्वर्थनिरूपितकर्तृत्वोपहितस्य यः प्रभवस्तस्यापादानत्वमित्यर्थादुक्तस्थले भूधातोरभावेन तदुपस्थाप्यक्रियानिरूपितकर्तृत्वस्य गङ्गायामभावान्न दोषः । किञ्च कर्तृग्रहणाभावे यत्र कर्मत्वं हिमवति गङ्गां प्रभावयति भूतेश इति तत्रापि संज्ञाप्रवृत्तिः स्यादतो भावक्विबन्ततामाश्रित्य कर्तृग्रहणमवश्यमनुवर्तनीयमेवेति वाच्यम् । अनुवृत्तिसाधकप्रमाणाभावेनानुवृत्तिकल्पनाया अयुक्तत्वाद्गौरवाच्चेत्यत आह ॥ **व्याख्यानादिति** ॥ **साहचर्याच्चेति** ॥ चकारो हेत्वर्थः । साहचर्यहेतुकव्याख्यानादेव प्रमाणादिह भावक्विबन्तताकर्तृग्रहणानुवृत्तिश्चेति भावः । प्रमितलक्ष्यसंवाद एवात्र प्रधानं प्रमाणमिति तत्त्वम् । **प्रथमप्रकाश इति** ॥ चक्षुस्संयोगाव्यवधायकदेशानन्तरदेशावच्छिन्नं प्राथमिकं ज्ञानमित्यर्थः ॥ **शब्दाज्ञाने इति** ॥ ल्यबन्तरहितवाक्येन समुदायशक्तिमहिम्ना यत्र ल्यबन्तार्थः प्रतीयते तत्र प्रतीयमानल्यबन्तार्थभूतक्रियान्वयिनोः कर्माधिकरणयोः पञ्चमीति वार्तिकार्थः ॥ **वृत्त्येति** ॥ एतद्भाष्यप्रामाण्याद्वाक्यैकदेशस्य सम्पूर्णवाक्यार्थे शक्तिस्वीकारस्यावश्यकत्वादिति भावः ॥ **परिच्छेद्यादिति** ॥ वनाद्ग्रामो योजनमित्यादौ पञ्चम्या अव्यवहितोत्तरत्वमर्थः । योजनादिपदोत्तरविभक्तेश्चाव्यवहितोत्तरदेशवृत्तित्वम् । एवं च वना-

व्यवहितोत्तरयोजनपरिमाणपरिच्छिन्नदेशाव्यवहितोत्तरदेशवृत्तिर्ग्राम इत्यादिको बोधः। कार्तिक्या आग्रहायणी मास इत्यादौ तु कार्तिक्यव्यवहितोत्तरमासपरिमाणपरिच्छिन्नकालाव्यवहितोत्तरवृत्तिराग्रहायणीत्येवं कालघटितस्स[1] एव बोधः ॥

सिद्धत्वादितीति ॥ पञ्चमी विभक्त इत्यत्र विभक्तशब्दस्य भेदपरत्वेन यदवधिकं निर्धारणं तस्मान्निर्धार्यमाणनिर्धारणावध्योर्भेदे पञ्चमीत्यर्थात् माधुराः पाटलीपुत्रकेभ्य आढ्यतरा इतिवदस्मादितर इत्यादावपि निर्धारणावधिवाचकात्पञ्चम्या अभीष्टतया नीचार्थवाचकेतरशब्दयोगेपि पञ्चमी सिद्ध्यतीति न तद्विषये पञ्चमीविधानार्थमितरग्रहणं, किन्त्वर्थनिर्देशपरेणान्यशब्दग्रहणेनैवेष्टसिद्धेः प्रपञ्चकता मूलोक्ता युक्तैवेति भावः।

इदन्तु बोध्यम्। ईदृशविषये पञ्चम्या अवृत्तित्वमर्थः। तस्य च पदार्थैकदेशेतरत्वादावन्वयः। इत्थं चैतदवृत्तीतरत्ववानित्यादिरिह बोधः। केचित्तूत्कर्षः पञ्चम्यर्थः। एतदवधिकोत्कर्षविशिष्टेतरत्ववानित्यादिको बोध इति वदन्ति।

नन्वेवंरीत्यास्मादधिक इत्यादावधिकशब्दयोगेपि पञ्चम्या उपपन्नत्वाद्यस्मादधिकमित्यादिनिर्देशमूलकस्य पञ्चमीविधायकस्य वचनान्तरस्यानुसरणं व्यर्थमिति चेन्न। देवदत्तादधिको यज्ञदत्त इत्यादौ देवदत्तनिरूपितवृत्तित्वाभाववद्धर्मविशिष्टो यज्ञदत्त इत्यादिबोधवैलक्षण्यस्यानुभविकत्वेनाधिकशब्दस्य वृत्तित्वाभाववद्धर्मवदर्थकतया पञ्चम्या निरूपितत्वार्थकत्वेपि निरुक्तप्रकारेणावृत्तित्वार्थकत्वाभावात्पञ्चमी विभक्त इत्यस्याप्रवृत्त्या वचनान्तरस्यावश्यकत्वात्।

---

१. स एव बोध इति ॥ इदमयुक्तम्। आग्रहायण्यां कार्तिक्यव्यवहितोत्तरमासपरिमाणपरिच्छिन्नकालाव्यवहितोत्तरवृत्तित्वस्य बाधात्। परं तु कार्तिक्या इति पञ्चम्याः स्वावयवकत्वमर्थः। एवं च कार्तिक्यवयवकमासपरिमाणपरिच्छिन्नकालाव्यवहितोत्तरवृत्तिराग्रहायणीत्येव बोधो वक्तव्यः। वस्तुतोऽयं बोधो वार्तिकरीत्या। भाष्यरीत्या तु आद्यवाक्यस्य वनान्निसृत्य योजने गते ग्रामः प्राप्य इति वाक्यैकदेशरूपतया वनावधिकविभागानुकूलव्यापारसम्बद्धे योजने गते ग्रामः प्राप्य इति बोधः। योजनमिति प्रथमान्तत्वे गतं चेदित्यध्याहारेण बोधो वर्णनीयः। कार्तिक्या इत्यादेरपि कार्तिक्याः प्रभृति मासे गते आग्रहायणीत्येवार्थं इति स्पष्टं मञ्जूषायाम्। विशेषस्तु शेखरादितोऽवसेयः।

नन्वन्यार्थकशब्दयोगेपि कुतो न पञ्चमी विभक्त इत्यस्य प्रवृत्तिः । घटादन्य इत्यादौ घटनिरूपितवृत्तित्वाभाववद्धर्मवैशिष्टयस्य निर्बाधत्वादित्यत आह ॥ **निर्धारणत्वाभावादिति** ॥ निर्धारणावधिव्यावृत्तधर्मपुरस्कारेण निर्धार्यमाणस्य यत्रोपादानं तत्रैव तत्सम्भव इति भावः ॥ **व्याख्यातत्वादिति** ॥ भाष्यकृतेति शेषः । इदमेव व्याख्यानं कार्यकारणभावापन्नयोर्विभागभेदयोरभेदोपचारे बीजमिति तत्त्वम् ॥ **घटादेक इति** ॥ अन्यग्रहणस्यार्थपरत्वमनभ्युपगच्छतो भाष्यकारस्य मते त्वन्येतरशब्दयोर्योगे सूत्रेण पञ्चमीसिद्धावप्यन्यार्थकैकशब्दयोगे पञ्चमी न सिद्धयतीति तदर्थं प्रमाणान्तरमन्वेष्टव्यम् । फलति पुरुषाराधनमृते इत्यत्रान्येभ्योपि दृश्यत इति वार्तिकस्थदृशिग्रहणबलात्प्रवर्तमानाया द्वितीयायाः प्रतियोगित्वमर्थः । परमपुरुषाराधनप्रतियोगिकाभावप्रयोज्यः कर्मफलाभाव इत्यखण्डार्थः । चैत्रं यावच्छीतमित्यत्र तु द्वितीयाया अवध्यवधिमद्भावोऽर्थस्तस्यैव द्योतकोऽसौ यावच्छब्दः । चैत्रशब्दश्च चैत्रानन्तरितचैत्रलाक्षणिकः । इत्थं च चैत्रानन्तरितचैत्रावधिकं शीतमिति बोधः ॥ **अवधिमादायेति** ॥

केचित्तु अवधीकरणं तदर्थः । तद्योगे कर्मत्वविवक्षायां द्वितीया । तदविवक्षायां तु पातञ्जलभाष्यप्रयोगबलात्पञ्चमीति युक्तम् । धात्वर्थघटकैतादृशकर्मसामानाधिकरण्येन कर्मत्वमिति त्वयुक्तमेव । कर्मत्वविवक्षाविवक्षाभ्यां धातोरनेकार्थत्वकल्पनाया अन्याय्यत्वादित्याहुः ।

प्रभृतिशब्दयोगे परिकल्प्यमानायाः पञ्चम्या उपक्रमोपसंहारबलेन पञ्चम्य-

---

१. आहुरिति ॥ परे त्ववधीकरणं तदर्थ इति न युक्तम् । तथासति मेरुपृष्ठस्यान्तरिक्षलोकाद्बहिर्भावापत्तेः । अवधिमादायेत्यर्थे तु अवधौ मेरुपृष्ठस्याभेदेनान्वयान्मेरुपृष्ठमवधिं स्वीकृत्येत्यर्थे पर्यवसन्ने तस्य तल्लोकघटकत्वमुपपद्यते । अस्मिन्नर्थे भाष्यादिप्रयोगाद्यनुमितवचनबलात्पञ्चमी । आरभ्येत्यस्य स्वीकृत्येत्यर्थे तु कर्मत्वाद् द्वितीयैव । एवं चारभ्येत्यस्यार्थभेदेन प्रयोगव्यवस्था । न त्वेकत्रार्थे पर्यायेण विभक्तिद्वयम् । प्रभृत्यर्थयोगे तु पञ्चम्येव । न तु द्वितीयार्थमादाय द्वितीया । तस्य धात्वर्थत्वाभावेन कर्मत्वाप्राप्तेः । स्पष्टं चेदं मञ्जूषायाम् । एवं च धात्वर्थघटकावधिरूपकर्मण्यभेदान्वयाद्द्वितीयेत्याशयं मूलस्य परिकल्प्य धात्वर्थघटककर्मसामानाधिकरण्यात्कर्मत्वमित्ययुक्तमिति यदुक्तं तन्मूलाशयानभिज्ञतामूलकमेव । मदुक्ताशयस्य मञ्जूषादौ स्फुटत्वादित्याहुः ।

न्ततया निश्चितस्य कार्तिक्याः प्रभृतीति भाष्यकारीयप्रयोगस्यैव साधकत्वाद्या-दृशार्थकस्तत्र प्रभृतिशब्दस्तादृशार्थकत्व एव समभिव्याहृतप्रभृतिशब्दस्य तत्कल्पनं नान्यत्रेति भावः ।

**हेतुतृतीयेति** ॥ ननु क्रियाकारकभावेन कर्तृविशेष्यकत्वेन वा बोधे तृतीया, हेतुहेतुमद्भावेन हेतुविशेष्यकत्वेन वा बोधे पञ्चमीति विभिन्नविषयत्वादेव पञ्चम्या अप्रवृत्तौ व्यर्थमकर्तरीति चेन्मैवम् । अनुर्लक्षण इत्येतत्सूत्रारम्भबलात्-द्योतकतापक्षावलम्बेन हेताविल्यस्य तत्र वर्तमानात्प्रातिपदिकात्तृतीयेत्यर्थस्यावश्य-कतया प्रकृतेपि तथैव न्याय्यत्वेन प्रकृत्यर्थे हेतुत्वस्य प्रकारतया भानमात्रेण कर्तृ-विशेष्यकबोधेपि परत्वात्पञ्चमीप्रवृत्तिरित्यकर्तरीत्यनेनैव तन्निवृत्तिरित्याशयात् ।

केचित्तु हेतुशब्देन प्रकृतशास्त्रीयसङ्केतविषयः कर्तृप्रयोजकः कारणमात्रं चेत्युभयं गृह्यते । कृत्रिमाकृत्रिमन्यायप्रतिबन्धकतया सङ्केतविषयेषूभयगतेरभ्युप-गमात् । इत्थं चर्णव्यतिरिक्ते हेताविल्यनेन कर्तृकरणयोरित्यनेन वा तृतीयाविधाने विशेषाभावेपि प्रकृतविषये सङ्केतविषयस्य कर्तृत्वानैयत्येन कर्तृविशेष्यकबोधेपि पर-त्वात्प्रसक्तायाः पञ्चम्याः परिहारार्थमकर्तरीत्यावश्यकम् । अत एवान्नस्य हेतो-र्बन्धित इत्यादौ सङ्केतविषयेपि षष्ठीप्रवृत्तिरित्याहुः ॥

**अभिमान इति** ॥ हरदत्तमते धूमादिशब्दानां जातिप्रवृत्तिनिमित्तक-द्रव्यवाचकत्वेन तदतिरिक्तधर्मपरत्वाभावाद्गुणबोधकत्वाभावेन पञ्चम्या अप्रवृत्तिरिति योगविभागः ।

केचित्तु गुणशब्देनाप्रधानतया ज्ञाप्याश्रयनिष्ठो ज्ञापकोपि गृह्यत इति तद्बोधकादपि पञ्चमी योगविभागमन्तरापि सुवचा । परन्तु पञ्चम्यर्थ ईदृशेषु

---

१. आहुरिति ॥ परे तु लौकिक एवात्र हेतुः । उभयगतिरितिन्यायात् । शास्त्रीये लौकिकमपि हेतुत्वमस्त्येव । व्यापकत्वात्तस्य । एवं चात्र विषये क्रियाकारक-भावेनान्वयाभावात्कर्तृतृतीयायाः प्राप्त्यभावेन हेतुतृतीयापवादत्वमेवास्य युक्तम् । अन्यस्यासम्भवात् । किञ्च तयोरविशेषकथनमपि न सम्यक् । भवद्रीत्या बोधवैलक्षण्यस्य सत्त्वात् । सङ्केतविषयेऽपि लौकिकहेतुत्वसत्त्वादकर्तरीत्यावश्यकम् । अत एवान्नस्य हेतोर्बन्धित इत्यस्य नानुपपत्तिः । क्रियाकारकभावेनान्वये तु तृतीयैव, कारकविभक्ते-र्बलवत्त्वादित्याहुः ।

ज्ञाप्यत्वम्। इत्थं च पर्वतो वह्निमान् धूमादित्यादौ धूमज्ञानजन्यज्ञानविषयीभूतवह्न्याश्रयः पर्वत इत्यादिको बोध इत्याहुः[1]॥

उभयोस्समुच्चय इति॥ समुच्चयार्थकान्यतरस्यांग्रहणेन मण्डूकानुवृत्त्या व्यवहितायाः पञ्चम्यास्सन्निहितायाश्च द्वितीयायाः प्रकृते सम्बन्धः। पञ्चम्यपेक्षया सन्निहितायाः षष्ठ्यतसर्थप्रत्ययेनेति षष्ठ्यास्तु न सम्बन्धो द्वितीयाविधायकेनैनपा द्वितीयेत्यनेन विच्छेदात्। षष्ठीद्वितीयाविधायकयोस्तु न पञ्चम्यास्सम्बन्धः। समुच्चयार्थकनिपाताभावाद्विशेषतो निर्दिष्टाभ्यां बाधाच्च मण्डूकानुवृत्तिः पञ्चम्याश्चोत्तरार्थमवश्यमाश्रयितव्या। ततश्च पञ्चमीद्वितीययोरुभयोरप्यत्र समुच्चय इति भावः॥ व्याख्यानादिति॥ पृथगादिषु पञ्चमी विधेयेति वार्तिकारम्भो लक्ष्यानुरोधश्चात्र बीजम्। उभयसमुच्चयो भाष्यानारूढत्वादप्रामाणिक इत्याह॥ सामर्थ्यादिति[2]॥ षष्ठ्यतसर्थप्रत्ययेनैनपा द्वितीयेति सूत्रद्वये विच्छेदेपि समुच्चयार्थकान्यतरस्यांग्रहणात्मकप्रयत्नवशादिह मण्डूकप्लुत्यादिना पञ्चम्यास्सम्बन्धो भविष्यतीति पृथक् पञ्चमीविधानाय वार्तिकारम्भो व्यर्थ इति तदर्थः। द्वितीयाया अपि समुच्चये तु तदीयसमुच्चयबोधनेनोपक्षीणत्वात्सामर्थ्यवर्णनमयुक्तं स्यादिति भावः। नन्वेवं विना वातमित्यादिप्रयोगाणामसाधुत्वप्रसङ्ग इत्यत आह॥ अन्यत्रापि दृश्यत इति॥

---

१. आहुरिति॥ परे तु सत्त्वे निविशतेऽपैतीति लक्षितस्य गुणस्य ग्रहणे वार्तिकप्रयोगाद्योगविभाग इति हरदत्तः। योगविभागस्य भाष्येऽदर्शनाद्गुणेऽस्त्रियामिति प्रायिकमित्यन्ये। प्रायिकत्वेऽपि स एव वार्तिकप्रयोगो मूलम्। गुणशब्दोऽत्राप्रधानपर इति न युक्तम्। तथा विवक्षणेन धूमादग्निमानित्यस्य सिद्धावपि नास्ति घटोऽनुपलब्धेरित्यस्य सिद्धये अस्त्रियामित्यस्य प्रायिकत्वाश्रयणस्य तवाप्यावश्यकत्वादित्याहुः।

२. सामर्थ्यादितीति॥ यद्यप्येतदादिशरणमितिस्थितमित्यन्तस्य ग्रन्थस्य मूलभूतः शब्दरत्नग्रन्थ इदानीमुपलभ्यमानपुस्तकेषु नोपलभ्यते, तथापि प्रकृतव्याख्यानबलाद्व्याख्यानादिति बोध्यमित्यनन्तरं सप्तम्यपीतीति प्रतीकात्प्राक् "वस्तुतस्तु पृथगादिषु पञ्चमी विधेयेति वार्तिकप्रत्याख्यानाय प्रवृत्तादन्यतरस्याङ्ग्रहणसामार्थ्यात्पञ्चमी भविष्यतीति भाष्यात्पञ्चम्येव समुच्चीयते। न द्वितीया। विना वातमित्यादिप्रयोगास्तु अन्यत्रापि दृश्यत इत्यनेन निर्वाह्या इति बोध्यम्" इत्यर्थकः शब्दरत्नग्रन्थेऽधिकः पाठोऽस्तीत्यनुमातुं शक्यते। भावप्रकाशादिव्याख्यानपर्यालोचने तु एतत्पाठाभाव एव निश्चेतुं शक्यते।

एवं च यत्र द्वितीयारूपोपपदविभक्तिविधायकशास्त्रान्तरानुपलम्भस्तत्र द्वितीयाविधानाय ततोऽन्यत्रापि दृश्यत इति वार्तिककारवचनमेव शरणमिति स्थितम् ॥

**मूले आवसथस्य दूरे इति** ॥ दूरादावसथादित्यनयोस्सामानाधिकरण्यभ्रमनिरासार्थमेतद्विवरणमिति बोध्यम् ॥ **अनुवृत्ते त्विति** ॥[1] अधिकरणे तेभ्यो विभक्तिचतुष्टयविधानाय परिकल्पिते वाक्ये इति शेषः ।

अत्रायं निष्कर्षः । सप्तम्यधिकरणे चेत्यत्र समुच्चयार्थकचकारेण पञ्चमीतृतीयाभ्यामनुवर्तमानाभ्यां सह दूरान्तिकार्थेभ्यो द्वितीयेत्यस्य सम्बन्धः । दूरान्तिकार्थेभ्य इति चावर्तते । तत्र सामान्येनाधिकरणे सप्तमीविधायकमेकं वाक्यम् । आवर्तिते दूरान्तिकार्थेभ्य इत्यत्र पूर्वसूत्रादसत्त्ववचनस्येत्यस्य प्रकृतसूत्रस्थसप्तमीग्रहणस्य च सम्बन्धादसत्त्ववाचिभ्यस्तेभ्यः प्रातिपदिकार्थमात्रे सप्तमीविधायकमपरं वाक्यम् । पञ्चमीतृतीयानुवृत्तिसहिते दूरान्तिकार्थेभ्य इत्यत्र च सप्तम्या अधिकरणे इत्यस्य च सम्बन्धादधिकरणेऽपि तेभ्यो विभक्तिचतुष्टयविधायकं तृतीयं वाक्यमित्थं च दूरान्तिकार्थेभ्यः प्रातिपदिकार्थमात्रे अधिकरणे च चतस्रो विभक्तयस्सम्पद्यन्त इति वदन्ति ॥

**तत्समानाधिकरणविशेषणत्वादिति** ॥ असत्त्वभूतक्रियाविशेषणत्वेन स्तोकं पचतीत्यादिवाक्यघटकस्तोकादिपदार्थानामसत्त्वरूपत्वमिति तदर्थः । ननु भावकृदन्तविषये त्यागो राग इत्यादौ लिङ्गसंख्याद्यन्वयसत्त्वेन दृष्टान्तासङ्गतिरत आह ॥ **वैधर्म्ये इति** ॥ घञादिकृत्प्रत्ययाभिहितक्रियारूपार्थस्य यथा लिङ्गादिसम्बन्धस्तथा तिङ्समभिव्याहृतधातूपस्थाप्यस्य तस्य लिङ्गादिसम्बन्धाभावादसत्त्वरूपत्वं तत्सम्बन्धाभावस्यैवासत्त्वरूपत्वादिति भावः । ननु कृदभिहितभावस्य क्त्वाद्यन्तविषये लिङ्गादिसम्बन्धराहित्येनासत्त्वरूपताया निर्विवादतया साधर्म्यदृष्टान्तोपपादनं न समञ्जसमत आह ॥ **यद्वेति** ॥ पदार्थानां सत्त्वरूपत्वमसत्त्वरूपत्वं च तत्तच्छब्दशक्तिवैचित्र्याधीनम् । केन चिच्छब्देन सत्त्वरूपतया

---

१. अनुवृत्ते त्वितीति । मूले सप्तम्यधिकरणे चेत्यस्य स्थाने सप्तम्यधिकरणे चेत्यत्रानुवृत्ते त्विति साम्प्रदायिकः पाठः । अनुवृत्ते दूरान्तिकार्थेभ्य इत्यत्रेति तदर्थः । एतत्पाठानुरोधीदं प्रतीकमिति बोध्यम् ।

प्रतीयमान एवार्थश्शब्दान्तरेणासत्त्वरूपतया प्रतीयते । यथा कर्मादिपदबोध्यकारकशक्तीनां सत्त्वरूपत्वेपि विभक्तिबोध्यतायामसत्त्वरूपता । ततश्च घञाद्यभिहितस्य भावस्य सत्त्वरूपता । तुमुनाद्यभिहितस्य तस्यासत्त्वरूपतेत्यनुभवानुरोधिनी व्यवस्था न विरुद्ध्यतीति बोध्यम् । ननु कर्तृकर्माधिकरणानां यथा तत्तत्क्रियाश्रयत्वमेवं करणस्य व्यापारवत्तानियमेन सम्प्रदानापादानयोरपि प्रतिग्रहानुमत्यवधिभावोपगमादिभिः क्रियाश्रयत्वाविशेषात्कथं क्रियानाधारतया करणादिपरिग्रहोऽत आह ॥ **धात्वर्थेति** ॥ स्वनिष्ठकारकत्वव्याप्यतत्तच्छक्तिनिरूपकधात्वर्थानाश्रयैरिति तदर्थः । नन्वेवमपि यजेतेत्यादिविषये यागादौ करणत्वदर्शनेन करणत्वादिराहित्यमपि दुर्निरूपमत आह ॥ **पदान्तरवाच्येति** ॥ यागादीनान्तु स्ववाचकपदवाच्यक्रियानिरूपितं करणत्वमिति भावः । हन्तीति पलायत इत्यादौ तु हरिं नमेच्चेत्सुखं यायादित्यादाविव हेतुहेतुमद्भावो न तु करणत्वमिति बोध्यम् । वस्तुतो लिङ्गशून्यत्वे सत्यपादानत्वसम्प्रदानत्वरूपकारकशक्तिराहित्यमसत्त्वरूपतेति निराक्षेपः पन्था इत्याहुः । **इति पञ्चमी** ॥

**संसर्गविधयैवेति** ॥ संसर्गताख्यविषयतयैवेति तदर्थः । प्रकारतया भानं तु संसर्गान्तरसापेक्षतया गुरुभूतं भाष्यकाराद्यसम्मतं चेति न युक्तमिति भावः ॥ **प्राधान्यापत्तेरिति** ॥ नन्वाख्यातवाच्यकर्तृकर्मणोः प्रकृत्यर्थक्रियांप्रत्यप्राधान्यदर्शनाद्विभक्तिवाच्यसंख्यायाः प्रकृत्यर्थविशेषणत्वदर्शनाच्च प्रत्ययार्थप्राधान्यनियमस्य व्यभिचरितत्वेन प्रकृतेपि विशेष्यवाचकपदोत्तरविभक्तिवाच्यसम्बन्धस्य प्रकृत्यर्थनिरूपितमप्राधान्यं सुवचमिति चेन्मैवम् । भावप्रधानमाख्यातमिति यास्कमुनिवचनबलेनाख्यातविषये प्रकृतन्यायसङ्कोचकल्पनेप्यन्यत्र तत्सङ्कोचेन प्रत्ययार्थस्याप्राधान्यकल्पनायां मानाभावेन संख्याविषये प्रकृतन्यायविरोधादेव विभक्तीनां द्योतकतापक्षस्य व्यवस्थापितत्वेन च प्रकृते षष्ठीवाच्यसम्बन्धस्य प्रकृत्यर्थविशेषणताया निर्युक्तिकत्वात् ॥ **राजसम्बन्धीति** ॥ स्वत्वसम्बन्धेन राजविशिष्टः पुरुष इति राजनिरूपितस्वत्ववान् पुरुष इति वा बोधादित्युचितम् । संसर्गतावादस्यैव व्यवस्थापिततया सम्बन्धत्वेन तद्भानस्यायुक्तत्वादिति वदन्ति ॥

---

१. **वदन्तीति** ॥ परे तु षष्ठ्यर्थः सम्बन्धत्वेन तत्तद्रूपेण च सम्बन्ध इत्यव-

**तेषां सप्तसूत्रीति** ॥ द्विरहर्भोजनमित्यादावभीष्ट एव समास इति भावः ॥ **अनुवादायेति** ॥ इत्थं च वार्तिकं सूत्रकाराभिप्रेतमेव न त्वपूर्वमिति सिद्धम् ।

ननु हरिस्मरणमित्यादौ कारकषष्ठ्या समासे तस्य भावल्युडन्तोत्तरपदकतया गतिकारकोपपदादित्यस्य प्रवृत्तौ लित्स्वरेणोत्तरपदस्याद्युदात्ततया प्रकृतिस्वरे मध्योदात्तत्वं समासस्य, शेषषष्ठ्या समासे तु समासस्येत्यन्तोदात्तत्वमिति भवतु वैजात्यम् । इह तु परत्वाद्गतिकारकादित्येतद्बाधित्वा कारकात्परमनप्रत्ययान्तभावकर्मवाचकमुत्तरमन्तोदात्तमित्यर्थकस्यानो भावकर्मवचन इत्यस्य प्रवृत्तेर्न्याय्यतया वैजात्यस्य दुर्वचत्वान्मूलग्रन्थासङ्गतिरत आह ॥ **करणल्युडन्तस्मरणादिशब्दैरिति** ॥ **अप्राप्तिरिति** ॥ भावकर्मवाचकत्वाभावादिति बोध्यम् ॥ **विषय एव नेति** ॥ अत्रापि प्रकरणेऽनभिहिताधिकारसम्बन्धादनभिहितकर्मादीनां शेषत्वविवक्षायामेव षष्ठीविधानादिति भावः ॥ **अपास्तमिति** ॥ ननु मातुः स्मृतमित्यत्रादिकर्मबोधकात्कर्तरि निष्ठेत्ययुक्तम् । "अवदत्तं विदत्तं च प्रदत्तं चादिकर्मणि । सुदत्तमनुदत्तं च निदत्तमिति चेष्यत" इति भाष्यप्रामाण्यात्प्रशब्दवदवादीनामपि प्रादीनामादिकर्मद्योतकताप्रतीत्या तत्समभिव्याहारदशायामादिकर्मणि निष्ठाप्रत्ययोपपत्तावपि प्राद्यसमभिव्याहृतस्य प्रकरणाधीनतद्बोधकताप्रतिज्ञानेन कर्तृनिष्ठाविषयत्वे मानाभावादेवं विधस्य क्वाप्यदृष्टत्वाच्चेत्यत आह ॥ **कर्मणश्शेषत्वेनेति** ॥

**नपुंसकत्वं दुर्लभमिति** ॥ विशेष्यभूतेऽर्थशब्दे तत्समानाधिकरणे किम्शब्दे चेत्यर्थः । आद्यं सामान्ये नपुंसकत्वम् । **लक्षणाभाव इति** ॥ ननु केनार्थः किमर्थस्तं किमर्थमिति तृतीयान्तेन समासे स्वीक्रियमाणे तृतीया तत्कृतार्थेनेत्यस्य

---

इयमभ्युपेयम् । न तु तत्तद्रूपेणैवेति नियमः । मातुः स्मरतीत्यादौ क्रियाकारकभावस्य तद्रूपेण भाने द्वितीयाप्रवृत्त्या सामान्यरूपेण भानस्यावश्यकत्वात् । तद्ध्वनयन्नग्रे मूले वक्ष्यति कर्मादीनां सम्बन्धसामान्येनान्वयविवक्षायामपीति । स्पष्टं चेदं मञ्जूषायाम् । अत एव राज्ञो दारपुत्रधनादिकमित्युपपद्यते । द्वितीयस्योदाहरणं राज्ञः पुत्र इति । एवं च राजसम्बन्धीति बोधस्यानौचित्यकथनमयुक्तमेव । संसर्गतया भासमानस्यापि ग्रामकर्मकं गमनमित्युल्लेखवत् राजसम्बन्धीत्युल्लेखो नानुचितः । एवमेव राजस्ववानिति भवदीयबोधाकार उपपादनीय इत्याहुः ॥

प्रवृत्त्या कथं समाससाधुताबोधकशास्त्राभावः । किञ्च तृतीयेति योगविभागेन सुप्सुपेत्यनेन वा समास इत्यपि वक्तुं शक्यमित्यत आह ॥ **अर्थासङ्गतिरिति** ॥ निमित्तपर्यायाणां सर्वनाम्नश्च सामानाधिकरण्येन विशेषणविशेष्यभावे विभक्तिविधानमिह प्रकृतम् । निरुक्तसमासाश्रयणे च तद्वैकल्यमिति तदर्थः । कर्मधारये तु पुनरपि सामान्ये नपुंसकत्वमेवाश्रयणीयमिति क्लेशस्तदवस्थ इत्याह ॥ **कोर्थ इत्यादि** ॥

ननु निमित्तकारणहेतुषु सर्वासां प्रायदर्शनमित्यस्य सर्वनामासर्वनामसाधारणत्वे सर्वनामसंज्ञासूत्रस्थभाष्यविरोधः । तत्र हि भवच्छब्दस्य हलन्तस्य सर्वनामत्वे प्रयोजनाभावः । स्मैप्रभृतीनां सर्वनामकार्याणामवर्णान्तलक्षणत्वादित्युद्भाव्य सर्वनाम्नस्तृतीया चेति तृतीयाप्रवृत्तिः प्रयोजनमित्युक्तम् । असर्वनाम्नोपि वार्तिकेन षष्ठीतरविभक्तिसाधुत्वबोधने तदसङ्गतिः स्पष्टैवेत्यत आह ॥ **यत्त्वित्यादि** ॥ **सूत्रमते इति** ॥ वार्तिकमनालोच्य प्रवृत्तमिदं भाष्यम् । अथवा सूत्रकृतो वार्तिकापरिज्ञानात्तदनुरोधादिमे शङ्कासमाधाने भाष्यकारस्येत्याशयः ॥

**सार्वविभक्तिक इति** ॥ एवञ्च नायं प्राग्दिशीयः पञ्चम्यन्तप्रकृतिकस्तसिः किन्तु वार्तिकबोधितोयमाद्यादित्वप्रयुक्तः षष्ठ्यन्तप्रकृतिक इति नेदं भाष्यं पश्चाच्छब्दसमवधाने पञ्चमीसाधकमिति तदाशयः । नन्वेनपा द्वितीयेत्यनेन योगविभागादिना द्वितीयाषष्ठीमात्रविधानाभ्युपगमे स्त्र्यधिकारात्परेणेत्यभियुक्तप्रयोगासङ्गतिरत आह ॥ **परेणेति तृतीयेति** ॥ ततश्च नायमेनपा द्वितीयेत्यस्य विषयः । किन्तु स्त्र्यधिकारादित्यत्रान्यारादिति शास्त्रबोधितदिक्छब्दयोगनिबन्धना पञ्चमी । परेणेति तु वृद्धो यूनेति सूत्रकारीयनिर्देशबलकल्पितवचनबोधिता सहार्थकशब्दसमभिव्याहारानपेक्षा तदर्थप्रतीतिमात्रसापेक्षा तृतीया । स्त्र्यधिकारावधिकपरत्वविशिष्टशास्त्रप्रतियोगिकसाहित्योपहितवासरूपविध्यभाव एतच्छास्त्राधिकरणक इत्यर्थोऽत्र विवक्षित इत्याशयः । नन्वेवमपि ततः परेण नानुवर्तत इति प्रयोगानुपपत्तिस्तदवस्थैव, परेणेत्यस्याधिकरणार्थकैनबन्तत्वमन्तरेणार्थसाङ्गत्याभावादत आह ॥ **सार्वविभक्तिक इति** ॥ इत्थं च तत इत्यस्य षष्ठ्यन्तत्वादेनबन्तयोगे योगविभागेन षष्ठ्या अपि साधुत्वबोधनान्न सूत्रविरोध इत्याशयः ॥

ननु मूले पञ्चमी समुच्चीयत इत्युत्तरं न तु षष्ठीत्यादिकथनेन षष्ठ्यादयस्तिस्रोपि विभक्तयो न समुच्चीयन्त इति प्रतीयते तच्चायुक्तं, षष्ठ्याः प्रकृतसूत्र एव निर्देशात्। अत आह॥ **न विधीयन्त इति**॥ नन्वेवमपि प्रकृते षष्ठीविधानस्याभीष्टत्वात्तिसृणामत्र विधानाभाव इत्ययुक्तं तत्राह॥ **समुदायविधानाभावे इति**॥ एकसत्त्वेपि द्वयं नास्तीति प्रामाणिकप्रतीतेः षष्ठ्या विधाने सत्यपि षष्ठीद्वितीयातृतीयानां विधानाभाव इत्याशयः॥

अत्रेदं बोध्यम्। स्वरितत्वाभावात्पृथग्विनेत्यत्र विच्छिन्नत्वाद्दूरान्तिकार्थेभ्य इत्युत्तरसूत्रे द्वितीयाग्रहणाच्च न द्वितीयायास्समुच्चयस्तथा दूरान्तिकार्थैरित्येतत्सूत्रानन्तरसूत्रे तेभ्य इत्येव सिद्धौ पुनरपि दूरान्तिकार्थेभ्य इत्युक्तेरुत्तरसूत्रे षष्ठ्याः प्रकृतसूत्रे द्वितीयायाश्च सम्बन्धाभाव इत्येवमात्मकवैजात्यसूचनादिह तृतीयाया अपि न समुच्चयः, किन्त्वन्यतरस्यांग्रहणबोधितसमुच्चयबलाद्व्यवहिताया अपि पञ्चम्यास्सम्बन्धादनेन सूत्रेण षष्ठीपञ्चम्योरेव विधानं न तु सन्निहितयोरपि द्वितीयातृतीययोरिति वदन्ति॥

ननु दिवस्तदर्थस्येत्यत्र शेषग्रहणसम्बन्धेपि शेषत्वेन विवक्षिते कर्मण्यनेन सूत्रेण विधीयमानायाः षष्ठ्याः प्रतिपदविहितत्वादुपसर्गानुपसर्गसाधारण्येन नित्यं समासाभावस्य प्रसक्तावुपसृष्टस्य दिवेः कर्मणि शेषत्वेन विवक्षिते प्रतिपदविधानायास्तस्या वैकल्पिकत्वे पाक्षिकतया प्रसक्तां सामान्यभूतशेषषष्ठीमादाय समासलाभाय विभाषोपसर्ग इत्युत्तरसूत्रमावश्यकम्। तथा शेषत्वेन विवक्षिते कर्मणि द्वितीयाविधायकसूत्रान्तराभावाद्ब्राह्मणे तथाभूते कर्मणि द्वितीयाविधानाय तदुत्तरमपि सूत्रमावश्यकम्। तस्मात्कथमेतत्सूत्रद्वयवैयर्थ्यपरिहारः प्रकृतसूत्रे शेषग्रहणसम्बन्धाभावे प्रमाणं स्यादत आह॥ **अयं भाव इति**॥ **नोपसर्ग इति न्यासेनेति**॥ अनन्तरस्येति न्यायात् षष्ठी शेष इत्यस्य न निषेध इत्याशयः। तदाह॥ **शेषषष्ठ्यां समासविकल्पेनेति**॥ दिवस्तदर्थस्यानुपसृष्टस्येति तु नोक्तम्। उत्तरसूत्रेप्यनुपसृष्टग्रहणसम्बन्धे गां प्रति दीव्यन्तीत्यत्र द्वितीया-

---

१. येन द्वितीयातृतीययोस्समुच्चय इति शेखरे ब्रुवतो नागेशस्याशयं विवृणोति। अत्रेदं बोध्यमित्यादिना।

नापत्तेः । न च कर्मणि द्वितीयेत्यनेनैव तत्सिद्धिरिति वाच्यम् । प्रकृतसूत्रे शेषग्रहणसम्बन्धे केवले कर्मणि द्वितीयाया निर्विवादतया सूत्रवैयर्थ्यापत्त्या तत्रापि शेषग्रहणसम्बन्धस्यावश्यकत्वेन तथाविधे कर्मणि प्रकारान्तरेण द्वितीयाया दुर्वचत्वात् ॥ **अयुक्तत्वादिति** ॥ ननु सूत्रसार्थक्याय मण्डूकानुवृत्तिराश्रीयते । तत्राह ॥ **वक्ष्यमाणोदाहरणे इति** ॥ **न प्रवर्तत इति** ॥ ब्राह्मणे कृदन्तोदाहरणानां समासयोग्यानामनुपलम्भादित्याशयः । नन्वसर्वदर्शिनामस्मदादीनां शेषत्वेनाप्रतीतिरुदाहरणानुपलम्भो वा कथं त्रिसूत्र्यामस्यां शेषग्रहणं प्रतिबध्नीयादित्यत आह ॥ **अत एवेति** ॥ प्रतिदीव्यन्तीत्यादिसमासयोग्यताविरहवतां तिङन्तानामुदाहरणेन शेषग्रहणसम्बन्धपूर्वकसमासप्रतिबन्धकीभूतप्रतिपदविधानषष्ठीविधायकत्वाभावस्त्रिसूत्र्या भाष्यकारेण सूचित इत्याशयः ।

ननु तिङन्तप्रकृतिकत्वेन विधीयमानकल्पबाद्यन्तप्रकृतिकसुबन्तानां प्रेष्यकल्पमित्यादीनां समासयोग्यतया कथं तत्प्रसक्त्यभाव इत्यत आह ॥ **न प्रैषेः प्रयोग इति** ॥ प्रसिद्ध इति शेषः । ततश्च प्रयोगप्रसिद्ध्यभावमूलकोयं समासप्रसक्त्यभाव इति बोध्यम् ।

ननु कृतपूर्वी कटमित्यादौ कृतादेरविवक्षितकर्मकत्वप्रयुक्तेनाकर्मकत्वेन भावक्तान्तत्वमिति यद्युच्यते तर्हि पश्चादपि कर्मसम्बन्धालाभादुक्तोदाहरणासम्भवेन व्यावर्त्यालाभः । यदि च कर्मक्तान्तघटित एवायं प्रयोग इत्युच्यते, तदाप्यनभिहिताधिकाराद्द्वितीयाया अनुपपत्तिः षष्ठ्याश्चाप्रसक्तिरिति कथमिदं कृद्ग्रहणस्य प्रयोजनं स्यात्तत्राह ॥ **तद्धितवृत्तेः पूर्वमिति** ॥ पूर्वमविवक्षा पश्चात्तु तद्विवक्षा, जातसंस्कारस्य तु न निवृत्तिरकृतव्यूहपरिभाषात्र शास्त्रे नास्त्येवेति भावः । नन्वेवं घटं क्रियत इत्यादयोपि प्रयोगास्साधुत्वेन व्यवह्रियेरन्नित्यत आह ॥ **एतद्वृत्तिविषय एवेति**[1] ॥ भाष्यानुग्रह एवात्र शरणम् । ननु नपुंसके

---

१. **एतद्वृत्तिविषय एवेतीति** । इदानीन्तनपुस्तकेषु तद्धितविषय एवेति पाठो दृश्यते । तत्पाठेऽधीती व्याकरणे इत्यादेरपि सङ्ग्रहस्सुलभः । भावप्रकाशपर्यालोचनायां त्वेतद्वृत्तिविषय एवेत्येव पाठ इति प्रतीयते । तत्पाठेऽधीती व्याकरणे इत्यादेस्सङ्ग्रहायैतादृशवृत्तिविषय इति व्याख्येयम् । अत एव शेखरे ईदृशवृत्तिमात्रविषयताया भाष्यसम्मतत्वं प्रतिपादितम् । वृत्तावीदृक्त्वं च दृश्यमानप्रयोगकत्वमिति बोध्यम् ।

भावे क्त इत्यस्य श्रान्तं देशमित्यादिप्रयोगदर्शनेन सकर्मकाकर्मकसाधारणतया तेन सिद्धे पूर्वमविवक्षितस्य पश्चाद्विवक्षेति क्लिष्टकल्पना न युक्ता तत्राह ॥ **अकर्मकेभ्य एवेति** ॥ सकर्मकेभ्यः कर्मण्यकर्मकेभ्यो भाव इत्यर्थके तयोरेव कृत्यक्तखलर्था इत्यत्र निष्ठेति विहितस्य नपुंसके भावे क्त इति विहितस्य चाविशेषाद्ग्रहणमिति भावः । एवं स्थिते श्रान्तं देशमित्यत्र क्तप्रत्ययोपपत्तिं दर्शयति ॥ **चेन तस्य भावेपि विधानादिति** ॥

ननु कर्तृकर्मणोः कृतीत्यस्य कृदन्तोपस्थाप्यक्रियान्वयिनोः कर्तृकर्मणोः षष्ठीत्यर्थः । एवं च कृतपूर्वी कटमित्यादावपि कटादिकर्मणां कृतादिपदार्थान्वयितया कृदन्तोपस्थाप्यक्रियान्वयित्वाविशेषात्कथमिह कृद्ग्रहणेन षष्ठीव्यावृत्तिः । न च सति कृद्ग्रहणे कर्तृकर्मणोरित्यस्य कृदन्तमात्रपर्याप्तशक्तिजन्योपस्थितिविषयक्रियान्वयिनोः कर्तृकर्मणोरित्यर्थकतया कृतपूर्वीत्यादौ तद्धितान्तपर्याप्तशक्तिजन्योपस्थितिविषयक्रियान्वयसत्त्वेपि षष्ठीप्रवृत्तिप्रयोजकतथाविधक्रियान्वयाभावेन कृद्ग्रहणस्य षष्ठीव्यावर्तकत्वे बाधकाभावः । नापि न लोकेति निष्ठान्तत्वप्रयुक्तनिषेधस्याप्यवकाशः । निष्ठान्तपर्याप्तशक्तिजन्योपस्थितिविषयक्रियान्वयिनोरेव कर्तृकर्मणोर्निषेधविषयत्वादिति वाच्यम् । निरुक्तरीत्या पर्याप्तिनिवेशे तण्डुलानां पाचकपुत्रः पाचकतर ओदनानामित्यादौ समासतद्धितान्तविषये कृदन्तमात्रपर्याप्तशक्तिजन्योपस्थितिविषयक्रियान्वयाभावेनाभीष्टायाः षष्ठीप्रवृत्तेर्व्याघातात् । न च शेषत्वविवक्षया तादृशे विषये षष्ठी शेष इति सामान्यशास्त्रेणैव षष्ठीप्रवृत्त्या निर्वाह इति वाच्यम् । कर्मत्वविवक्षया षष्ठी शेष इत्यस्य पर्याप्तिनिवेशेन कर्तृकर्मणोरित्यस्य चाप्राप्तौ द्वितीयान्तघटितस्य तण्डुलान् पाचकपुत्रः पाचकतर ओदनानीत्याद्यनिष्टप्रयोगस्य दुर्वारत्वादिति चेत्सत्यम् । भावक्तान्तानां कृतादिशब्दानामेतादृशवृत्तिघटकताव्यतिरेकेणान्यत्र क्वापि कर्मान्वययोग्यक्रियोपस्थापकत्वेन प्रयोगादर्शनाद्वृत्तिघटकानां तेषां तथाविधक्रियोपस्थापकशक्तिकल्पनायां मानाभावेन समुदायगतैकार्थीभावात्मकशक्तेरेव कर्मान्वयोपयोगिक्रियोपस्थापकताकल्पनाया औचित्येन कृदन्तोपस्थाप्यक्रियान्वयाभावादेव सति कृद्ग्रहणे कर्तृकर्मणोरित्येतत्सूत्रविधेयभूतषष्ठ्याः प्रसक्त्यभाव इति युक्तमेव कृद्ग्रहणस्य षष्ठीनिवर्तकत्वम् । पर्याप्तिनिवेशे तु न मानम् । प्रामाणिकप्रयोग-

विरोधश्च, न लोकेत्यत्रापि निष्ठान्तोपस्थाप्यक्रियान्वयिनोः षष्ठी नेत्येवार्थो न तु पर्यासिघटितः । अत एव कटं कृतवत्पुत्र इत्यादावपि निषेधप्रवृत्तिर्निर्बाधा । निषेधस्य पर्यासिघटितत्वे विधेरपि कृदन्तपर्यासशक्तिजन्योपस्थितिविषयक्रियान्वयिनोरेव कर्तृकर्मणोष्षष्ठीविधायकतया प्रकृतविषये कर्मणि द्वितीयेति परमोत्सर्गस्य निश्शङ्कं प्रवृत्त्या निर्वाह इति त्वयुक्तमेव, तण्डुलानां पाचकपुत्र इत्यादौ सर्वानिष्टस्य द्वितीयान्तप्रयोगस्य वारयितुमुपायाभावात् । न चैतादृशेषु क्रियायाः पदार्थैकदेशतया वृत्त्यघटककर्मसम्बन्धस्य तत्र दुर्वचत्वात्कथं षष्ठ्याः प्रसक्तिरिति वाच्यम् । देवदत्तस्य गुरुकुलमित्यादिप्रयोगानुरोधादेकदेशान्वयदोषस्य सनिरूपकपदार्थातिरिक्तविषयतया क्रियात्वस्य कारकांशे नित्यसाकाङ्क्षत्वेन निरूपकतया तादृशान्वयस्य दूषणाधायकत्वायोगादतो न काप्यनुपपत्तिरिति विभावनीयमित्याहुः ॥

न काप्यनुपपत्तिरिति ॥ लक्ष्यानुसारिणा शास्त्रानित्यत्वेन द्वितीयासमर्थनमपेक्ष्य अध्याहारेण तत्समर्थनमेव युक्तमित्याशयः । ननु तदर्हमित्ययं व्यस्त एव प्रयोग इत्यत्र यदि किञ्चित्प्रमाणमुपलभ्येत तदा तन्निर्देशोपपत्तिसमर्थनायावश्यकमनित्यत्वं ज्ञापयितुं शक्यते, प्रमाणाभावाच्च समस्त एवायं प्रयोग इति सामासिकलुका निर्वाहसम्भवात्कथमुक्तार्थज्ञापकत्वमत आह ॥ अयं भाव इति ॥ बोधनार्थ इति ॥ एवं चासमस्तत्वानित्यत्वयोरुभयोरप्ययमेव निर्देशः प्रमाणमिति भावः ॥ निरस्त मिति ॥ ननु योगविभागमूलकेनानेन न्यासेन सम्भावितस्य गौरवस्य कथमसमस्ततायां प्रामाण्यं स्यात्, यत इदं पदगौरवाद्योगविभागो गरीयानिति परिभाषाविरुद्धं, तत्राह ॥ अत एवेति ॥ विरुध्यत इति ॥ किञ्चार्थनिर्देशेषु समासनिर्देशस्सूत्रकारशैलीविरुद्ध इति न तन्निरासाय प्रमाणान्तरापेक्षितत्वम् ॥ न दृश्यत इति ॥ इदमेवाभिसन्धाय धायैरामोदमिति भट्टिश्लोकं गृहीत्वेत्यध्याहारमाश्रित्य जयमङ्गलाकारो व्याचख्यौ । सौत्रत्वादेव निर्देशोपपत्तिरनित्यत्वेन समर्थनीयस्य प्रामाणिकप्रयोगस्यान्यत्रानुपलम्भश्चेति तदाशयः ॥

वार्तिकादिति ॥ इदं च वार्तिकं निष्ठातयोगे न लोकेति कारकषष्ठ्याः प्रतिषेधात् क्तस्य च वर्तमान इति सूत्रे कात्यायनेनारब्धम् । यदि तु प्रतिषेधविषयेऽपि शेषत्वविवक्षया षष्ठी प्रवर्तेत तदा वार्तिकारम्भवैयर्थ्यं स्पष्टमेव । ततश्च

कारकषष्ठीप्रतिषेधविषये शेषलक्षणाया अपि षष्ठ्याः प्रतिषेध इत्यर्थे वार्तिकमिदं ज्ञापकमित्याशयः । ननु वार्तिकारम्भस्योक्तार्थज्ञापकत्वे प्रत्याख्यानदशायां ज्ञापकसामग्र्यभावेन निषेधाभावात्प्रतिषेधविषयेपि शेषषष्ठ्याः प्रवृत्तेरव्याघातादारम्भप्रत्याख्यानयोः फलवैजात्येन भाष्यकारीयं प्रत्याख्यानमनुपपन्नं स्यादत आह ॥ **प्रत्याख्याने त्विति** ॥ आरम्भप्रत्याख्यानयोस्समानफलकतासम्पत्त्यर्थमुक्तविषयादन्यत्र शेषलक्षणायाष्षष्ठ्याः अनभिधानमाश्रयितव्यमतो न प्रत्याख्यानपरं भाष्यमनुपपन्नमिति तात्पर्यम् । क्तस्य च वर्तमाने इत्यस्याधिकरणवाचिनश्चेत्यस्य च शेषलक्षणां षष्ठीमाश्रित्य न प्रत्याख्यानसम्भवः । तत्तत्क्रियाकर्तृत्वविषयकबोधं निर्वोढुमस्य सूत्रद्वयस्यावश्यकत्वात् । न च कर्तृत्वाविवक्षायां सम्बन्धसामान्यबोधोपपादिका पाक्षिकी शेषलक्षणापि षष्ठी प्रवर्तेतेति वाच्यम् । इष्टापत्तेः । अत एवोत्तरसूत्रशेषे भाष्ये सतोप्यविवक्षातश्शेषलक्षणा षष्ठी यदि प्रवर्तेत तदा चातुरशब्द्यं प्राप्नोत्यधिकरणनिष्ठायामिदमहेः सृतं, कर्तृनिष्ठायामहिस्सृतो, भावनिष्ठायामहिना सृतं, सम्बन्धसामान्यविवक्षायामहेस्सृतमित्युद्भाव्य प्रतिपादितमिष्यत एव चातुरशब्द्यमिति ॥ न च नपुंसके भावे क्तस्य योगे षष्ठ्या उपसंख्यानमिति वार्तिकस्यापि कर्तृत्वविषयकबोधनिर्वाहार्थमावश्यकत्वेन शेषषष्ठ्या तत्प्रत्याख्यानमप्यनुपपन्नमिति वाच्यम् । भाष्यप्रामाण्येन तद्विषये कर्तृत्वविषयकबोधस्यानिष्टतया वार्तिकारम्भेपि कथं चिच्छेषग्रहणसम्बन्धेन प्रकारान्तरेण वा शेषत्वेन विवक्षित एव कर्तरि षष्ठ्या विधेयत्वेनारम्भप्रत्याख्यानयोर्बोधवैलक्षण्यस्य दुर्निरूपतया प्रत्याख्याने बाधकाभावात् । न च शेषत्वेन विवक्षित एव कर्तरि वार्तिकेन षष्ठीविधाने तस्याः प्रतिपदविधाना षष्ठी न समस्यत इत्येतन्निषेधविषयतया समासाभावार्थमावश्यकस्य तस्य वार्तिकस्य प्रत्याख्यानमनुपपन्नमेवेति वाच्यम् । धातुविशेषोपस्थापिततत्तत्क्रियानिमित्तककारकविशेषे शेषत्वविवक्षायां विधीयमानाया एव तस्याः प्रतिपदविधानषष्ठीत्वेन प्रकृतविषये तदयोगात् । न च निषेधोऽयं शेषलक्षणायाः षष्ठ्यास्सामान्यसूत्रेणैव सिद्धौ तत्तच्छास्त्रवैयर्थ्यमूलकतया प्रकृतविषयेपि तद्रीत्या वैयर्थ्यस्य सूपपादत्वेन समासनिषेधविषयताया निर्विवाद इति वाच्यम् । तत्तच्छास्त्रवैयर्थ्यस्योपसञ्जातविराधन्यायेन लुगभावकल्पकत्वेपि समाससंज्ञाप्रवृत्तिविघातकत्वे मानाभावेन निषेधस्यापूर्वतया ज्ञोऽविदर्थस्येत्यादिप्रकरणविषयस्य प्रकृतवार्तिकांशे समासनिषे-

धबोधकत्वे मानाभावात् । अतः कृदन्तयोगनिमित्तकत्वेन विधीयमानषष्ठीविषयेण कृद्योगा च षष्ठी समस्यत इति वार्तिकेन बोधितस्य समासस्य पाक्षिकतया प्रवृत्तौ बाधकाभावेन निष्फलस्यास्य वार्तिकस्य प्रत्याख्यानं युक्तमेवेत्याशयः ।

नन्वधिकसङ्ग्रहार्थमेवेदं प्रत्याख्यानं वार्तिककारीयाज्ञानकल्पनायाः प्रत्याख्यानविषये सर्वत्रैव क्लृप्ततया प्रकृतविषयादन्यत्रानभिधानकल्पनापेक्षया तस्या एव कल्पनाया युक्तत्वान्नोक्तार्थज्ञापनसम्भव इत्यत आह ॥ ध्वनितमिति ॥ तत्र हि भाष्ये सति किमुदाहरणं, ब्राह्मणस्य पक्ष्यन् ब्राह्मणस्य पक्ष्यमाण इत्युक्त्वा कारकषष्ठ्याः प्रतिषिद्धत्वाच्छेषलक्षणायां च तस्यामोदनादिपदार्थान्तरसापेक्षतया सामर्थ्याभावात्समासाप्रसक्त्या नेदमुदाहरणमित्युक्तम् । धातूपस्थाप्यक्रियायां सम्बन्धसामान्येन पदार्थान्तरान्वयसमर्पकतया तदंशे शेषलक्षणषष्ठीसद्भावे च सामर्थ्यस्य सुवचतया भाष्यमसङ्गतमेव स्यादतः कारकषष्ठीप्रतिषेधविषये शेषलक्षणाया अपि षष्ठ्याः प्रतिषेधं भाष्यकारो ध्वनयतीत्याशयः ।

केचित्तु नेदं भाष्यं कारकषष्ठीप्रतिषेधविषये शेषषष्ठीप्रतिषेधबोधनपरं, किन्तु ब्राह्मणस्य पक्ष्यन् ब्राह्मणस्य पक्ष्यमाण इत्यनयोस्संदंशविषयकनिषेधोदाहरणत्वाभावप्रतिपादनपरम् । तथा हि पक्ष्यन् पक्ष्यमाण इत्यत्र विक्लित्तिरावर्जनं वा पचेरर्थः । तत्र विक्लित्तौ ब्राह्मणस्य कर्मत्वमयुक्तम् । प्रतिषेधाङ्गीकारान्यतरात्मके चावर्जने तत्सम्भवेपि न लोकेति षष्ठ्याः प्रतिषेधः सम्बन्धसामान्यविवक्षायां च विक्लित्तौ ब्राह्मणस्यौदनादिद्वारकः, प्रतिषेधाङ्गीकारयोश्च गुणक्रियाद्वारक एव प्रसिद्ध इत्यसामर्थ्यात्समासाप्रसक्तेर्नेदमुदाहरणमित्येव भाष्यतात्पर्यम् । न तूदाहरणान्तराभावे । अत एव सङ्ग्रहणं न कर्तव्यमिति न प्रत्याख्यातम् । अत एव प्रकृतनिषेधविषयतया ब्राह्मणस्य कुर्वन् कुर्वाण इत्यादिकः प्रामाणिकः प्रयोगः । न च शेषलक्षणषष्ठ्यन्तपदार्थस्य स्वान्वययोग्यनामार्थे सम्भवत्यसत्त्वभूतक्रियान्वयस्याव्यु-

---

१. ध्वनितमितीति ॥ सा नेत्यनन्तरं "अत एवेत्याहेत्यन्तग्रन्थस्थाने पूरणगुणेति सूत्रे ध्वनितमिदमित्यस्वेराह" इति पाठः क्वचिद्दृश्यते । तदनुरोधेनेदं व्याख्यानम् । अयमेव पाठस्साम्प्रदायिकः, व्याख्यातृसम्मतश्च । इदानीन्तनशब्दरत्नग्रन्थेष्वयं पाठो नोपलभ्यते ।

त्पन्नत्वमस्माद्भाष्यादेव गम्यते, ततश्च कुर्वन् कुर्वाण इत्यादौ कृदन्तरूपनामार्थे षष्ठ्यन्तपदार्थसम्बन्धप्रयोज्यसमासनिषेधविषयतया निरुक्तप्रामाणिकप्रयोगोपपत्तेस्साक्षात्क्रियान्वये शेषलक्षणषष्ठ्याः प्रतिषेध इत्येव कुतो न कल्प्यत इति वाच्यम्। नाग्निस्तृप्यति काष्ठानां नापगानां महोदधिः। न जातु कामः कामानां न पुंसां वामलोचना, इत्यादिप्रामाणिकप्रयोगविरोधस्य दुर्वारत्वात्। पक्ष्यन् पक्ष्यमाण इत्यत्रापि कृदन्तरूपनामार्थान्वयेन प्रसक्तसमासनिषेधविषयतया तदीयोदाहरणत्वसम्भवेनोदाहरणत्वाभावोपपादनपरभाष्यासाङ्गत्यपरिहारासम्भवाच्च। तस्मात्पक्ष्यन् पक्ष्यमाण इत्यनयोश्शेषत्वेन साक्षात्क्रियायां शतृशानजन्तार्थे वा षष्ठ्यन्तपदार्थान्वयस्यानभिधानमित्येव भाष्याशयो न तु कारकषष्ठीप्रतिषेधविषये शेषषष्ठ्याः प्रतिषेध इति॥ सर्वत्र प्रतिषेधविषये शेषषष्ठ्या अनभिधानकल्पनापेक्षया तावन्मात्रकल्पनायास्समञ्जसत्वाच्चेति वदन्ति[1]॥

ननु स्फुटोपममित्यत्रोपमाशब्दस्योपमानवाचकतया सहार्थयोगनिमित्तकत्वेन तृतीयायां शम्भुनिरूपितसाहित्यविशिष्टस्फुटोपमानसम्बन्धीत्यर्थस्य लाभादभीष्टमुपमानत्वं शम्भोर्न प्रतीयेतेत्यत आह॥ भावसाधन इति॥ सादृश्यार्थक इत्यर्थः। इत्थं च शम्भुनिरूपितसाहित्यविशिष्टसादृश्यसम्बन्धीत्यर्थे शम्भुनिरूपितसादृश्यसम्बन्धीत्यर्थस्यैव फलविधया भासमानत्वेन शम्भोरेव समुचितमुपमानत्वं प्रकृते प्रतीयत इत्यभीष्टसिद्धिरित्याशयः॥ इति षष्ठी॥

आधारोधिकरणमित्यधिकरणसंज्ञाविधायकमनुशासनम्। तत्र कस्यायमाधार इत्याकाङ्क्षायां कारकाधिकारबलात्क्रियाया इत्यस्य लाभेपि फलव्या-

---

१. वदन्तीति। परे तु ब्राह्मणस्य कुर्वन्नित्यादेः स्वोत्प्रेक्षितार्थे प्रामाणिकत्वमभ्युपेत्य तद्बलेन भाष्योदाहृतयोस्तन्मात्रतात्पर्यकत्वकल्पनमयुक्तम्। कुर्वन्नित्यस्य पक्ष्यन्नित्यतो विशेषाभावात्। अत एवाग्रे भाष्ये ब्राह्मणस्य कृत्वेत्यत्र या श्रूयते षष्ठी सा बाह्यमर्थमपेक्षते कटमिति। तत्रासामर्थ्यान्न समास इत्युक्तं सङ्गच्छते। एतदभिप्रायेणैव शेखरे भाष्यपङ्क्तिकां विहाय पक्ष्यन्नित्यत्र कुर्वन्निति, ओदनमित्यत्र कटमिति च विन्यस्य न चोदाहरणमादरणीयमिति न्यायमभ्युपेत्य भाष्यमर्थतः प्रदर्शितम्। भाष्योक्तोदाहरणद्वयमात्रतात्पर्यकत्वे तदसङ्गतिः स्पष्टैव। किञ्च प्रमाणानां सामान्ये पक्षपातात्सङ्कोचकल्पनमयुक्तम्। यत्र तु प्रयोगदर्शनं तत्र शेषषष्ठ्यर्थान्वययोग्यपदार्थान्तरसम्बन्धौचित्यस्य मनोरमायां सूचितत्वेन सामान्येनानभिधानमयुक्तमेवेत्याहुः॥

पारान्यतररूपायास्तस्यास्साक्षादाधारस्य कर्तृत्वकर्मत्वयोरभिधानात्पारम्परिकमाधारत्वमत्राश्रयणीयम् । ततश्च कर्मद्वारा फलाधारः कर्तृद्वारा व्यापाराधारश्चाधिकरणमिति पर्यवस्यति ॥ कारकान्तरद्वारकक्रियाश्रयत्वं तु नाधिकरणसंज्ञाप्रयोजकम् । "कर्तृकर्मव्यवहितामसाक्षाद्धारयत्क्रियाम् । उपकुर्वत्क्रियासिद्धौ शास्त्रेऽधिकरणं स्मृत"मिति हर्युक्तेः । अत एव ग्रामे ब्राह्मणेभ्यो ददाति रथ्यायां वृक्षात्प्रचलतीत्यादौ ग्रामरथ्यादीनां न प्रधानक्रियानिरूपितमधिकरणत्वम् । किन्त्वध्याह्रियमाणविद्यतिक्रियाद्वारकमेवेत्यभियुक्ताः । तस्य चाधिकरणस्य कर्तृकर्मद्वारकपरम्परया क्रियायामेवान्वयः । कारकत्वात् । क्रियान्वयित्वमेव हि कारकत्वम् । अक्षशौण्ड इत्यादौ च दध्योदनादाविवान्तर्भूतक्रियाद्वारकसामर्थ्यमूलकस्समास इति प्राञ्चः ।

नव्यास्तु यस्य यद्द्वारा कारकत्वं तस्य तद्द्वारैव क्रियान्वयस्य न्याय्यत्वादधिकरणकारकस्य कर्तृकर्मणोरेवान्वय इति मन्यमाना अक्षशौण्ड इत्यादावक्षविषयकशौण्डत्ववानित्याद्यर्थस्यैव सर्वानुभवसिद्धतया क्रियान्तराध्याहारमूलकसामर्थ्यकल्पनाप्रयासो विफलः । भूतले घटो नास्तीत्यादौ भूतलवृत्तिर्यो घटस्स नास्तीत्येवार्थ इति वदन्ति ॥ परन्त्वेतन्मते ह्रदे वह्निर्नास्तीत्यादौ वह्न्यादेर्ह्रदादिनिरूपितवृत्तित्वबाधादप्रामाण्यप्रसङ्ग इत्याहुः[1] ।

सोयमाधारस्त्रिधेति परममूलोक्तं सप्रमाणमित्याह ॥ **मूले एतच्च संहितायामिति सूत्रे इति** ॥ आधारतानिरूपकभेदादाधारस्य त्रैविध्यमिति तत्रत्या भाष्यप्रवृत्तिः । तत्र हि भाष्ये अधिकरणं त्रिप्रकारं व्यापकमौपश्लेषिकं वैषयिकं चेत्युक्तम् । व्यापकं सर्वावयवावच्छेदेन व्याप्तिमत् । यथा तिलेषु तैलं, दध्नि

---

१. **आहुरिति** ॥ परे तु शाब्दिकनये बौद्धपदार्थाङ्गीकारेणाप्रसिद्धप्रतियोगिकाभावबोधाङ्गीकारान्न ह्रदे वह्निर्नास्तीत्यत्र बोधानुपपत्तिः । परेषां तदनभ्युपगमेऽपि भ्रमात्मिका आहार्यभ्रमात्मिका वा प्रतियोगिप्रसिद्धिरवश्यमभ्युपगन्तव्या । अत एव नान्तरिक्षे जुहोतीति वाक्याद्बोध उपपद्यते । स्पष्टं चेदं मञ्जूषायाम् । प्रतियोगिज्ञानस्य भ्रमत्वेऽभावज्ञानस्य प्रमात्वमर्थादवगम्यते । अत एव नान्तरिक्षे जुहोतीत्यस्य प्रामाण्यम् । तत्रान्यथाबोधो वर्णयितुमशक्यः । एवं प्रकृते ह्रदाधिकरणकवह्निसत्ताबुद्धेः भ्रमात्मकत्वेऽपि तदभावबुद्धेः प्रमात्वमव्याहतम् । तस्मात्परकीयवासनया वैयाकरणसिद्धान्ते न्यूनतापादनं वैयाकरणानां ह्रदये पदं नादधातीत्यलं सिद्धान्तविरुद्धार्थलेखनप्रयासेनेत्याहुः ॥

सर्पिरिति ॥ व्याप्तिश्च संयोगेनेव समवायेनाप्यविशेषात्ततश्च पृथिव्यां गन्धो जले स्पर्श इत्याद्यप्यस्यैवोदाहरणमिति वदन्ति ॥ उपश्लेषस्समीपवृत्तित्वं, तत्र भवमौपश्लेषिकम् । अध्यात्मादेराकृतिगणत्वाद्भवार्थकोयं ठञ्प्रत्ययः । एतदुदाहरणं तु कूपे गर्गकुलं वटे गावश्शेरत इत्यादि ॥ किञ्च श्लेषो निरन्तरसम्बन्धस्तस्य समीपमुपश्लेषम् । यत्किञ्चिदवयवसम्बन्धः, तत्कृतमौपश्लेषिकम् । एवञ्च स्थाल्यां तण्डुलं पचति कटे आस्ते देवदत्त इत्याद्यप्यस्यैवोदाहरणम् । अतोऽन्यद्वैषयिकम् । सविषयकपदार्थस्य कर्तृत्वेन कर्मत्वेन वा विवक्षायामिदम् । यथा मोक्षे वाञ्छा शास्त्रे ज्ञानं जनयतीति ॥ सविषयकपदार्थकधातुप्रकृतिकाख्यातयोगे तु नेदं, परया कर्मसंज्ञया बाधात् । तेन मोक्षमिच्छति घटं जानातीत्याद्येव साधु । क्वचिद्विषयस्यापि कर्तृत्वकर्मत्वान्यतरविवक्षायामधिकरणत्वं ज्ञाने परिसमाप्यते गुरौ वसतीति । तदभिप्राये वसतीति हि तदर्थः । यद्वा सामीप्यरूप उपश्लेष एव तत्राधारतानिरूपकश्शिष्येष्वन्तेवासीति व्यवहारस्वरसात् । आतपे तिष्ठतीत्यादौ तदवच्छिन्ने देशे तिष्ठतीत्यादिरर्थ इत्यलम् ॥

**यत्क्तान्तनिरूपितेति** ॥ इदमभिधायकत्वेनान्वेति ॥ एवञ्च यदर्थाभिधायकैकार्थीभावरूपवृत्त्याश्रय इन्नन्तस्तथाभूतस्य क्तान्तस्य कर्मणीत्यादिरर्थः ॥ **षष्ठीतत्पुरुषोपीति** ॥ बहुव्रीहिणा निरुक्तार्थसमर्थने क्लेश इत्याशयः ।

केचित्तु अनन्यभाव एवायं विषयशब्दः । अधीतीत्यादौ सकर्मकधातुप्रकृतिकक्तप्रत्ययान्तानां कर्मप्रधानताया औचित्येन तदर्थस्येष्टादिभ्यश्चेति विधीयमानेन्प्रत्ययार्थेन कर्त्रा सम्बन्धायोगादिन्प्रत्ययविधानबलेन कर्माविवक्षया क्तप्रत्ययस्य भावार्थकत्वकल्पनाया आवश्यकत्वेन भावार्थकक्तप्रत्ययान्तस्येन्प्रत्ययाधीनतया क्तान्तस्येन्मात्रगोचरस्य कर्मणि सप्तमीत्यर्थो वार्तिकस्य न्याय्य इत्याहुः । मूले आहुरित्यनेनारुचिस्सूचिता । तद्बीजन्तु हत इत्यस्य निखात इत्यर्थकत्वे मानाभाव इति वदन्ति ॥

**कालो देशस्येति** ॥ एवं च तत्तच्छब्दबोध्यत्वेन विवक्षितमेव ज्ञापकत्वं ज्ञाप्यत्वं वा प्रकृतशास्त्रप्रवृत्तौ बीजम् । न तु मानान्तरसाध्यतया भूयो दर्शनाधीनमिति भावः ॥ **अस्तीति** ॥ चक्षुर्मात्रग्राह्यत्वे सति गुणत्वमित्यादावस्ती-

त्यध्याहार इति तात्पर्यम् । ननु यस्येति यच्छब्देन कर्तृकर्मणोर्ग्रहीतव्यतया तदाश्रययोरित्यत्र तच्छब्देनापि तयोरेव ग्रहीतुमौचित्यादर्थासङ्गतिरत आह ॥ **क्रियाश्रययोरित्यर्थ इति** ॥ एवं च तदाश्रययोरित्यत्र तच्छब्दस्य तदीयक्रियापर्यन्तं लक्षणेति भावः ॥ मूले **विश्राम्यतीति** ॥ गवादीनां लक्षकत्वायोगादिति भावः । ननु लक्षकत्वं क्रियाविशेषणमेव किं न स्यादिति तु न युक्तम्, एकदेशान्वयायोगात् । तदाह ॥ **विशिष्टवेषेणैवेति** ॥

अत्र केचित् । इह ब्राह्मणेष्वधीयानेषु गत इत्यादौ धातुसम्बन्ध इत्यनेन लट्प्रत्ययः । धात्वर्थयोः परस्परसम्बन्धे प्रतीयमाने प्रत्यय इति तदर्थात् । सम्बन्धश्च समानकालिकत्वादिः । यथा वसन्ददर्शेत्यादौ समानकालिकवासकर्तृकर्तृकं भूतानद्यतनपरोक्षं दर्शनमित्याद्यर्थसम्प्रत्ययात् । समानकालिकत्वमिह वासे लकारेण बोध्यते । एवंविधमपि वर्तमानत्वं भविष्यत्वं च लकाराणां प्रवृत्तौ प्रयोजकमनुशासनबलात् । वत्स्यन् ददर्शेत्यादावुत्तरकालिकत्वम् । उत्तरकालिकवासकर्तृकर्तृकमित्याद्यर्थात् । वसन् द्रक्ष्यतीत्यादौ तु समानकालिकत्वमेव । तथा ब्राह्मणेष्वधीयानेषु गत इत्यादौ समानकालिकत्वमेव । तच्च लकारेण बोध्यमानमेव द्योतकत्वेन सप्तम्यानूद्यते । तस्य प्रकारतयैव भानम् । इत्थं च समानकालिकाध्ययनकर्तृभूतब्राह्मणविशिष्टभूतकालिकगमनकर्माभिन्नश्चोर इत्यादिको बोधः । यद्वा सप्तमीप्रकृत्यर्थस्य समभिव्याहृतपदार्थान्वये संसर्गस्समानकालिकत्वादिः । अध्ययनकर्तृभूतब्राह्मणसमानकालिकभूतकालिकगमनकर्माभिन्न इत्यादिरर्थः । अध्येष्यमाणेषु गत इत्यादौ चोत्तरकालिकत्वम् । अनुभवबलाच्चैवंविध एवार्थः । लक्ष्यलक्षणभावस्तु वस्तुभूत एव सप्तमीप्रवृत्तौ निमित्तम् । न तु शाब्दबोधीयविषयतामपेक्षते । अस्तु वा पाश्चात्यस्तदीयो मानसो बोधः । सर्वथा लक्ष्यलक्षणभावो न सप्तम्यर्थ इत्याहुः[1] ।

---

१. आहुरिति ॥ वस्तुतस्तु सप्तम्यर्थस्य लक्ष्यलक्षणभावस्य संसर्गतया भानाभावेऽधीयाने ब्राह्मणकुले गत इत्यत्र ब्राह्मणकुलशब्दस्य विभक्त्यर्थप्राधान्याभावेन सत्त्वप्रधानत्वापत्त्या नपुंसकह्रस्वापत्तिः । तस्य संसर्गतया भाने तन्निरूपितप्राधान्यस्य कुले सत्त्वेन सत्त्वप्रधानप्रातिपदिकत्वाभावान्न ह्रस्वः । तस्मात्सप्तमीवाच्यत्वं तस्यावश्यमभ्युपेयमित्याशयेनाह ॥ अन्ये त्वित्यादिना ॥

अन्ये तु लक्ष्यलक्षणभाव एवेह सप्तम्यर्थः । भावलक्षणमिति सूत्रस्वरसात् । समानकालिकत्वादिकं तु लकारद्योत्यं प्रकृत्यर्थघटकक्रियाविशेषणम् । ततश्च समानकालिकाध्ययनानुकूलव्यापाराश्रयीभूतब्राह्मणोपलक्षितभूतकालिकगमनाश्रयाभिन्नश्चोर इत्यादिरीत्या बोध इत्याहुः ॥

**न तु शब्दान्तरेति** ॥ निर्धारणावधिनिष्ठसामान्यधर्मानाक्रान्तत्वमेव भेद इत्याशयः । गवां कृष्णेत्यादौ तु गोत्वाक्रान्ता स्वेतरावृत्तिबहुक्षीरत्ववती कृष्णा बहुक्षीरेत्याद्याकारकस्य बोधस्यानुभविकतया निर्धारणावधिनिष्ठसामान्यधर्माक्रान्तत्वमितरावृत्तिधर्मवत्त्वं च षष्ठीसप्तम्योरर्थ इति पूर्वसूत्रविषये द्रष्टव्यम् । प्रकृते तु तथाभूतसामान्यधर्मानाक्रान्तत्वमितरावृत्तिधर्मवत्त्वं च पञ्चम्यर्थः । ततश्च माथुराः पाटलीपुत्रकेभ्य आढ्यतरा इत्यादौ पाटलीपुत्रकत्वानाक्रान्ताः पाटलीपुत्रकावृत्त्याढ्यतरत्ववन्तो माथुरा इत्याद्याकारको बोधः ।

इदन्तु बोध्यम् । माथुराणां पाटलीपुत्रकाणां च माथुरा आढ्यतरा इत्यादौ न पञ्चमी, चकारबलेन निर्धारणावधिभूतानां निर्धार्यमाणानां च साहित्याश्रयत्वेनैकबुद्ध्युपारूढत्वप्रतीत्या भेदाभावस्यापि निर्धारणोपजीव्यतया माथुरा अपाटलीपुत्रकाश्चाढ्यतरा इत्याद्याकारकस्यानैयत्येन भेदमात्रस्फूर्त्यभावात् । सूत्रे हि भेदग्रहणेनैव सिद्धे विभक्तग्रहणबलात्पञ्चमीविधेर्भेदमात्रप्रतीतिविषयतायास्सर्वसम्मतत्वादिति वदन्ति ॥

---

१. **वदन्तीति** ॥ वस्तुतस्तु माथुरपाटलिपुत्रकसमुदायावधिकपाटलिपुत्रकव्यावृत्ताढ्यत्वकरणकनिर्धारणविषयाः तादृशसमुदायावयवाः माथुरा आढ्यतरा इत्येवं तत्र बोधः । तत्र समुदायोऽवयवेभ्यो भिन्नाभिन्न इति सिद्धान्तात् माथुराणां समुदायाभेदस्यापि सत्त्वेन भेदमात्रनिबन्धनपञ्चमी अत्र नेति तत्त्वम् । स्पष्टा चेयं रीतिर्मञ्जूषायामित्याहुः ॥

**इति शिवम् ।**

सुब्रह्मण्यकृता चित्रप्रभाया लघुटिप्पणी ।
बालापादार्पिता विद्वन्मुदमातनुताच्चिरम् ॥

**ओं तत्सत् ।**



ननु साधुशब्दस्य सूत्रे प्रथमोपात्तत्वात्तस्यैव प्रत्युदाहर्तव्यतया तदनन्तरोपात्तस्य निपुणशब्दस्य प्रत्युदाहरणं मूलकारस्यायुक्तमित्यत आह ॥ **मूले साधुशब्दप्रयोगे इति** ॥ एवञ्चार्चायामनर्चायां च साधुशब्दप्रयोगे सप्तम्यभीष्टेवेति भावः । नन्वेवं साधुनिपुणाभ्यामित्यत्र साधुशब्दोपादानं व्यर्थमर्चायामनर्चायां च साध्वसाधुप्रयोगे चेत्यनेनैव तद्योगे सप्तम्यास्सिद्धत्वादत आह ॥ **अर्चायामित्यादि** ॥ **निषेधार्थमिति** ॥ अप्रतेरिति प्रसज्यप्रतिषेधः । एवञ्च प्रतिशब्दसमवधानदशायामर्चायां साध्वसाधुप्रयोगे चेत्यनेन प्राप्ताया अपि सप्तम्या प्रतिषेध इत्याशयः ।

ननु प्रसितशब्दो यदि षिञ् बन्धन इत्यतो निष्ठायां निष्पन्नस्तदा बद्ध इत्यर्थः । यदि तु षोन्तकर्मणीत्यतो निष्ठायां, तदा नष्ट इत्यर्थ इति कुतोसौ तत्परार्थकत्वनियम इत्यत आह ॥ **रूढत्वादिति** ॥ समुदायशक्तिजन्यपदार्थोपस्थितेरवयवशक्तिजन्यपदार्थबोधं प्रति प्रतिबन्धकत्वमानुभविकम् । तदुच्यते योगाद्रूढिर्बलीयसीत्यभियुक्तैरित्याशयः । अयं च न्यायो वक्तृतात्पर्यानुमापकसामग्र्यन्तरासत्त्वे । तत्सत्त्वे तु तत्तात्पर्यविषयो यौगिकोप्यर्थो बोद्धृबोधोपयोगी, वक्तृतात्पर्यगोचरपदार्थबोधस्यैव प्रवृत्तिनिवृत्त्यन्यतरात्मकाभीष्टप्रयोजनसाधकत्वादिति सर्वमनवद्यमित्याहुः ॥ **इति सप्तमी** ॥ श्री परदेवतार्पितमस्तु ॥

श्लो ॥ श्री काशिनाथविबुधाङ्घ्रिसरोजसेवासम्प्राप्तबुद्धिबलशाणकृतोरुयत्ने ।
चित्रप्रभा समुदपद्यत शब्दरत्ने सैषा चिरं वितनुतां विदुषां प्रमोदम् ॥ १ ॥

वर्णाम्नायसुधावृतः पणियुवापत्योक्तसूत्रावली
कल्लोलप्रचुरः कतप्रसववाक्यावर्तजालान्वितः ।
गोनर्दीयनिगूढवाक्यरचनावेलासमुज्जृम्भितः
शश्वद्व्याकरणाम्बुधिः कलयतादानन्दचन्द्रोदयम् ॥ २ ॥

इति श्रीमन्महाराजाधिराजश्रीमदानन्दगजपतिराजमहाराजसंस्थान-
पण्डितेन श्रीकाशीनाथविद्वन्महोपाध्यायचरणकमलसेवासमधि-

गतविद्याविशेषोपहितेन, भागवतोपनामकभास्करसूरि-
तनूजन्मना हरिशर्मणा विरचितायां शब्दरत्न-
व्याख्यायां चित्रप्रभाख्यायां कारकप्रकरणं
सम्पूर्तिमगमत् । श्रीः श्रीः श्रीः ॥



इति श्रीमद्विजयनगरमहाराजसंस्थापितसंस्कृतमहापाठशालाप्रधानोपाध्यायेन
श्रीविजयनगराधीशपूषवाडन्वयपयः पारावारराकासुधाकर श्रीमदलक-
नारायणगजपतिराजमहाराजसम्मानितेन महामहोपाध्यायपद-
लाञ्छनेन गुरुवरश्रीरामलक्ष्मणपादसेवासमासादित-
बुद्धिवैभवेन तातोपनामकसूर्यनारायणसूनुना
सुब्रह्मण्यशास्त्रिणा आन्ध्रसर्वकलापरि-
षत्प्रेरणया विरचितायां चित्रप्रभा-
लघुटिप्पण्यां कारकप्रकरणं
सम्पूर्तिमगमत् ।
ओम्

# शुद्धिपत्रम् ।

| पृष्ठम् | पङ्क्तिः | अशुद्धम् | शुद्धम् |
|---|---|---|---|
| १३० | ६ | निवाहः | निर्वाहः |
| १३१ | २६ | जन्ते | टजन्ते |
| ,, | २७ | टङीबापादन | ङीबापादन |
| १३२ | १ | सामथ्या | सामर्थ्या |
| २६४ | २६ | पारहारः | परिहारः |
| ३०७ | १३ | प्रग्घातोः | प्राग्घातौः |